# श ब्दा र्थ चि न्ता म णि : को श :

श्रीसुखानन्दनाथेन विरचित :

(ॱ—|॰|—ॱ)

राज्यन्तेखिलदिव्यसिद्धिसहितखड्गप्रतापोज्ज्वलच्छ्रीवैभवमस्तुतेविरतर
पौरन्दरीयस्परम् धर्म. श्रीयशसैधता मनुदिन नीरोग दीर्घायुषा
श्रीमत्सज्जनसिंहवीरनृपतेश्रीशम्भुतुष्ट्यासदा ॥ १ ॥ गर्वाडम्बर
मयुतादरिगणान्मानसमुत्तारयन् तत्पत्नीहृदिशोकशोकमनिश
सस्थापयन्दुष्करम् ॥ नम्रीभावयुतेसुहृज्जनगणेमानसमावेश
यन्नभूयात् सज्जनसिंहभूपतिवकोविख्याततामावनी ॥ २ ॥
आयत्तेनिकटमयान्तिमनुजाश्चयापश्चार्थिनो मन्यते
हृदयेनदीनसभयानव्यक्तोव्यवान्मानभृशम् ॥
प्रोत्साहेत्वरमेव दातृपदवीसम्यक्चरन्तीवर
श्रीमत्सज्जनसिंहवीरनृपतेर्दान
दातुर्धनम् ॥ ३ ॥

ॱ—ॱ॰॰|॰॰ॱ—ॱ

तृतीयोभाग पवर्गीय .

श्रीमन्महाराजाधिराजरविकुलावतंसमहीमहेन्द्रयावदार्यकुलकमल
दिवाकर मेदपाटदेशे श्री१०८ श्रीसज्जनभूपशिरोमण्याज्ञया षाष
राजिराजप्रेरणयाएकोनविंशत्यधिकचत्वारिंशत्तमे १९ ४० वैक्रमे
ऽब्देराजधान्युदयपुरे श्रीसज्जनयन्त्रालये वाजपेयियशोधरप्रबन्ध
त श्रीमेद पाटेश्वरकोशधनव्ययान्मुद्रित •

श्रीमदेकलिंगोविजयते







प : पुं० पकारे ॥ वाते । पवने ॥ अंडे ॥ पूते ॥ पर्णे ॥ पाने ॥ पातरि ॥

पक्कण : पुं० शवरालये । भिल्लग्रामे ॥ पचति । पचे : क्विप् । कणन्ति कण शब्दे पचाद्यच् । पच : कणायच । पाकावागराद्येव प्रधानंतवनान्यत्

पक्तापीडः पुं० पक्वौडा इ० भा० प्र० वृ० त्रि० पंचकात्ये । वदने ॥ इति रा० नि० ॥

पक्तव्य. त्रि० कर्त्तुरनायासेनस्वयंपक्के । पचेरिमे ॥ पचेस्तव्यः ॥

पक्ति स्त्री० गौरवे ॥ पाके ॥ फलोत्पत्तौ ॥ पचनम् । डुपचष्पाके । वा० क्ति : ॥

पक्तिशूलम् न० परिणामशूले । पाकजे ॥ इ० रा० नि० ॥

पक्ता पुं० पावके ॥ त्रि० पाचके । पाककर्त्तरि ॥ पचति । डुपचष् ० । पचुत्तृचावितितृच् ॥

पक्तृम् न० गार्हपत्याग्नौ ॥ पच्यतेऽनेन डुपचष्० गुधृवीपचिवचीत्यादि नात्रः ॥ तेजसि ॥

पक्त्रिमः त्रि० पाकिमे । पाकजे ॥ डुपचष्० भावे । ड्वितःक्त्रिः । पाकेन निर्वृत्तम् त्रेर्मम्नित्यम् ॥

पक्वः त्रि० परिणते । पक्का० इ० भा० विनाशाभिमुखे ॥ पच्यतेस्म, डुपचष् ० क्तः । पचोवइति निष्ठातस्यवः ।

निष्ठाप्राप्ते । सुहृदृढ०यावत् । पक्का० इ० भाषा । निवृत्ते ॥ यथा, कषायै कर्मभिः पक्वै० इति ॥

पक्वकृत् पुं० निम्बवृक्षे ॥ पक्वंकरोति कृञ्० । क्विप् । त्रि । पाककर्त्तरि ॥

पक्वरस. पुं मद्ये ॥ इतिशब्दरत्नावली ॥

पक्ववटिका । स्त्री० । पकौडी० इ०भा० प्र० वेसनवटिकायाम् ॥ वटिका येननस्यापि कथितार्थां निरूपिता ॥ कृष्णा निष्पाभ वन्दनी यन्त्रा पुष्टिकरी स्मृता ॥

पक्वातिसारं न० कार्श्यैः पक्व स सन्

वारि च ॥ पक्वजले ॥

पक्वाधानम् न० पक्वाशये ॥

पक्वान्नम् न० कृतपाकतण्डुलादौ ॥ यथा । यतीच ब्रह्मचारीच पक्वान्नस्वामिनावुभौ । तयो रन्न मदत्त्वा तु भुक्त्वा चान्द्रायणं चरे दिति सदाचारः आमंशूद्रस्य पक्वान्नं पक्व मुच्छिष्ट मुच्यते । इतितिथितत्त्वम् ॥

पक्वाशयः पुं० नाभ्यधःस्थले ॥ पक्वाशयस्त्वधोनाभेरूर्द्ध्वमामाशयः स्मृतः ॥ पक्वस्य आशयः ।

पक्षः । पुं० मासार्द्धे ॥ पच्यते० परिच्छिद्यतेदेवकार्यार्थे पितृकार्यार्थेवायःकालविशेषः पक्षः । सचशुक्लकृष्णभेदाद् द्विविधः । शुक्लपक्षेतिथिर्ग्राह्या यस्यामभ्युदितोरविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः ॥ पक्षपरिग्रहे । कर्मणिघञ् ॥ पक्षयति । पक्ष्यतेवा । अच् । घञ्वा ॥ यद्वा । पच्यते चन्द्रस्यपञ्चदशानां कलानामापूरणं क्षयोवायत्रेतिसः ॥ एकोवापक्षशब्दोविभक्तोमासस्यैकमर्द्धं ब्रूते ॥ यद्वा । पक्षते । पण० । अधिपण्योर्दकौचेतिसः धातोः कान्तादेशः ॥ पार्श्वगृहे ॥ साध्ये ॥ विरोधे ॥ केशादेः परतोवृन्दे ॥ मित्रबले ॥ सहायबले ॥ चुल्लीरन्ध्रे ॥ पतत्रे ॥ पक्षिपक्षे । गरुति ॥ राजकुञ्जरे ॥ पार्श्वे । पाखाडइतिभाषा ॥ वर्गे ॥ देहाङ्गे ॥ सहाये ॥ यथा । श्रुतिशिरः पक्षः समाश्रीयतामित्यु- : पदेशः ॥ शरपक्षे । वाजे ॥ भित्तौ ॥ एकतरकोटौ ॥ सन्दिग्धसाध्यवति ॥ यथा० धूमवत्त्वे हेतौपर्वतः ॥ सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः । यथा । महानसेधूमवन्ह्योः सम्बन्धे तत्पूर्वकं पर्वतेवह्निज्ञानम् ॥

पक्षकः । पुं० पार्श्वद्वारे खड्किकायाम् खिड़कीद्वारइ० भा० ॥ पार्श्वभागे ॥ पक्षइव । इवेप्रतिकृताविति कन् ॥ स्वार्थेकोवा ॥ सहाये ॥

पक्षघातः । पुं० पक्षाघाताभिधवातरोगे

पक्षचरः । पुं० चन्द्रे । विधौ ॥ यूथभ्रष्ट पृथक्चारिगजे ॥

पक्षच्छिद्रम् । न० तिथिविशेषे ॥ अष्टमी द्वादशी चैव चतुर्थी च चतुर्दशी ॥ अमावास्याच मुनिभिः पक्षच्छिद्र मुदाहृतम् ॥

पक्षजः । पुं० चन्द्रमसि ॥ पक्षेजातः । जनी० डः ॥ त्रि० । पक्षजन्मनि ॥

पक्षजन्मा । पुं० चन्द्रे ॥ पक्षेजन्मास्य ॥ त्रि० । पक्षजाते ॥

पक्षता । स्त्री० अनुमित्साविरहविशिष्टासिद्ध्यभावे ॥ इयमनुमितिकारणम् तच्च । पर्वतेवह्न्यनुमितौ अनुमित्साविरहविशिष्टपर्वतधर्मिकवह्निनिश्चयाभावः । यथा । सिषाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति । सपक्षस्तत्र पक्षत्वं

ज्ञानादनुमितिर्भवेदिति ॥ भाषापरिच्छेदः ॥

पक्षतिः । स्त्री० पक्षमूले ॥ प्रतिपत्तिथौ पक्षस्यमूलम् । पक्षात्तिः ॥

पक्षद्वारम् । न० पक्षके ॥ पक्षेपार्श्वेद्वारम् ॥

पक्षधरः । पुं० सुधांशौ ॥ इन्दौ ॥ यज्ञपत्युपाध्यायकृतार्थे । चिन्तामणेश्लोककारे । मिश्रे ॥ चि । पक्षधारणकर्त्तरि ॥

पक्षधर्म्मता । स्त्री० व्याप्यस्यपर्वतादिवृत्तित्वे ॥

पक्षपातः । पुं० आसक्तिविशेषे ॥ अन्याय्यसाहाय्यकरणे ॥ पक्षेपातः ॥ पक्षिणांज्वरे ॥ पक्षपातःपतङ्गानामित्युक्तेः ॥

पक्षपातिता । स्त्री० सहायतायाम् ॥

पक्षपालिः । स्त्री० खडकिकायाम् ॥

पक्षभागः । पुं० गजस्यपार्श्वभागे ॥ पक्षयत्यनेन । पक्ष० । चु० । पुंसीति घः । पक्षस्यपक्षएववाभागः ॥

पक्षमूलम् । न० पक्षतौ । डानक० इ० गौड़० भा० ॥ पक्षस्यमूलं ॥

पक्षवाहनः । पुं० खगे । विहगे ॥

पक्षः । न० पक्षे । गरुति ॥ पक्षति । इपचम् । पचिवचिभ्यांसुट्चेत्यसुन् । पक्षसीतुस्मृतौपक्षाविनिशुभाङ्कः ॥ त्वनीकाधिकरणेपूर्वोत्तरेद्वे पक्षसी इतिशबरस्वाम्यादयः ॥ माधवस्तु पक्षपरिग्रहइत्यस्मादसुन् । पक्षशुद्धिः संवत्सरार्द्धेस्यात् ॥

पक्षसुन्दरः । पुं० लोध्रे ॥ इतिहारावली ॥

पक्षाघातः । पुं० अर्धाङ्गइतिख्याते भावप्रकाशोक्तवातजन्येरोगविशेषे ॥ पक्षेयाहननम् ॥

पक्षान्तः । पुं० द्वयोः पक्षदशयोः ॥ अमायाम् ॥ पूर्णिमायाम् ॥ पक्षस्यअन्तः ॥

पक्षाभुः । पुं० पक्षिणि ॥ इतिशब्दचन्द्रिका ॥

पक्षावसरः । पुं० पूर्णिमायाम् ॥ अमायां ॥

पक्षिणी । स्त्री० पूर्णिमायाम् ॥ खग्याम् । विहग्याम् ॥ शाकिनीभेदे ॥ आगामिवर्त्तमानाहर्युतायांनिशि ॥ आगामिवर्त्तमानेअहनीयुक्ता यस्यां सारात्रिः पक्षिणी । यथा । द्वेपक्षी एकरात्रिश्च पक्षिणीत्यभिधीयते । इति । रात्रिरित्युपलक्षणम् । तेन पूर्वोत्तररात्रियुतंदिनमपिपक्षिणी । पूर्वापरदिनेरात्री वा पक्षाविवसौ यस्याम् । अत इनिः ॥

पक्षी । पुं० खगे । विहगे । शकुन्तौ ॥ पक्षी । इतिपंक्षी० इतिचभा० ॥ पक्षावस्यस्तः । अतइनिठनावितीनिः ॥ धान्याङ्कुरचरायेन्तेषांमांसंलघूत्तमम् । आनूपजलजन्मांसंस्निग्ध

गुरुतरंस्मृतम् ॥ पक्ष्मविशेषं विष्किरे ॥ लिङ्गदेहे ॥ पंचमाचिकास्य द्वितीयप्रभेदे ऽ । ऽ वाणे ॥

पक्षिपानीयशाला । स्त्री० ( चुरुटीह

पक्षिपानीयशालिका । स्त्री० ( तालवालि । पक्षिजलपानस्थाने ॥

पक्षिराजः । पुं० सम्पातौ ॥ पक्षिणां राजा । टच् ॥ शलभरूपेशिवे ॥

पक्षिलः । पुं० वात्स्यायनमुनौ ॥

पक्षिशाला । स्त्री० कुलायिकायाम् । नीडे ॥

पक्षिसिंहः । पुं ताक्ष्र्ये । गरुडे ॥ पक्षीसिंह इव पक्षिणांसिंहोवा ॥

पक्षिस्वामी । पुं० गरुडे ॥

पक्षीन्द्रः । पुं० जटायौ ॥ ताक्ष्र्ये ॥

पक्ष्मगुः । त्रि० पाककर्त्तरि । मक्कारि ॥ पचेःकुरितिवोपदेवः ॥

पक्ष्म । न० सूत्रादिसूक्ष्मांशे ॥ किञ्जल्के । कुसुमच्छदे ॥ नेत्रलोमनि ॥ क्षणीयसि । गरुति ॥ पच्यतेऽनेनवा ॥ पच० । कर्मकरणादौमनिन् ॥

पङ्कः । पुं० न० पापे ॥ कर्द्दमे ॥ पङ्कोदाहापपित्तार्त्तिशोथघ्नःशीतलःसरः ॥ पञ्च्यतेऽसमनेन । पचिव्यक्तीकरणे रुन्यर्थे रिफश्च घञ् । कुत्वम् । पञ्च्यतेवा । पचिविस्तारे । कर्मणिघञ् ॥

पङ्ककर्पटः पुं० दलाढ्ये । कलसुक्तपङ्के । दगदल० इ० भा० ॥

पङ्ककीरः । पुं० कोयष्टिखगे ॥

पङ्कगडः । पुं०
पङ्कगडकः । पुं० } पाकाख्य० इ० गौ० भा०

पङ्कगतिः । स्त्री० मत्स्ये ॥ ब्रह्म्याम् ॥

पङ्कग्राहः । पुं० मकरे ॥ इ० हारावली ॥

पङ्कजम् । न०
पङ्कजन्म । न० } पद्मे । सामले ॥ इति राजनिर्घण्टः ॥

पङ्कजिनी । स्त्री० पद्मसमूहे ॥ जलजाकरे ॥ पङ्कजानिसन्त्यस्याम् । पुष्करादिभ्योदेशेइतिइनिः ॥

पङ्कधूमः । पुं० नरकभूभेदे ॥ पङ्कइव धूमोऽस्मिन् ॥

पङ्कप्रभा स्त्री० कर्द्दमयुक्तनरकभि० ॥

पङ्कमण्डूकः पुं० शम्बूके । जलडिम्बे ॥

पङ्कवल्ली ॥ स्त्री० वृत्तविशेषे ॥ पादकुसुमरवगन्धमनोहरनायकयुगलकरूपमधाकर । नागन्नमतिवरभापितसुदा तिवृत्तमसलमिहपङ्कजलीतिहि ॥ यथा । शारदविशदनिशामथिनिन्दतिसम्प्रतिहृदयभिदामपिविन्दति । मन्मथविशिखभयेननिमीलतिमाधवतवविरहेणविषीदतीति ॥

पङ्कवासः । पुं० कर्कटे ॥ इ० रा० नि ॥

पङ्कशुक्तिः । स्त्री० सिशालिकायाम् । दुर्नामायाम् ॥

पङ्कशूरणः । पुं० शालूके ॥ इ० त्रि० ॥

पङ्कारः पुं० शैवले ॥ सेतौ ॥ सोपाने ।

जलकुक्कुटे ॥ इतिमे० ॥

पङ्किलः । त्रि० सजम्बाले । पङ्काढ्ये ॥ पङ्कोऽस्मिन्नस्ति । पिच्छादित्वात् इलच् ॥

पङ्किलत्वम् । न० आर्द्रतायाम् ॥

पङ्केजम् । न० पद्मे ॥ पङ्केजातम् । जनी० । सप्तम्यामितिडः । तत्पुरुषत्वलुक् ॥

पङ्केरुहम् । न० पद्मे ॥ पङ्केरोहति । रुह० । इगुपधेतिकः । तत्पुरुषे कृतीत्यलुक् ॥

पङ्क्तिः ॥ स्त्री० सजातीयसंस्थानविशेषे । वीथ्याम् । श्रेण्याम् ॥ पङ्क्तिसाङ्कर्य्ये दोषा यथा । नसंवसेत्पतितैर्नचाण्डालैर्नपुक्कशैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥ एकशय्यासनंपङ्क्ति भाण्डपक्वान्नमिश्रणम् । याजनाध्यापनेयोनि स्तथैवसहभोजनम् ॥ सहाध्यायस्तु दशमः सहयाजनमेवच ॥ एकादशसमुद्दिष्टा दोषाः साङ्कर्य्यसंज्ञिताः ॥ समीपे चाप्यवस्थानात् पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेन साङ्कर्य्यं परिवर्ज्जयेत् ॥ पङ्क्तिसाङ्कर्य्यदोषनिवारणोपायो यथा । एकपङ्क्त्युपविष्टायेनस्पृशंतिपरस्परम् । भस्मनाकृतमर्यादा नतेषां सङ्करोभवेत् ॥ अग्निनाभस्मनाचैव यद्भिः पङ्क्तिर्विभिद्यते । इतिकूर्म्मेपञ्चदशाध्यायः ॥ सामान्यवीथ्याम् ॥ पञ्चनम् । पचिव्यक्तीकरणे । क्तिन् ॥ यद्वा । पच्यते । पचिविस्तारे । क्तिच् ॥ दशाक्षरच्छन्दसि ॥ दशसंख्यायाम् ॥ सुप्रतिष्ठाभेदे । पञ्चाक्षर पादच्छन्दोभेदे । यथा । भूगौगितिपङ्क्तिः ॥ यथा । कृष्णसनाथा तर्णकपङ्क्तिः । यामुनकच्छे चारुचचार ॥ क्षितौ ॥ सङ्ख्येये ॥ पञ्चमात्रयम् पञ्चपदानि मा परिमाणमस्य । पङ्क्तिविंशतित्रिंशदिति निपातनात्प्रकृतेः पञ्चन् शब्दस्य टिलोपः तिप्रत्ययः । चोः कुरितिकुत्वम् । पदशब्दोत्रपादपर्य्यायः । रूढिशब्दोयम् । तथाचावनोवयवार्थोऽभिनिविष्टव्यम् । पङ्क्तिशब्दोऽनेकार्थः । पङ्क्तिक्रमसन्निवेशे यथा ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । पङ्क्तिचदशसङ्ख्यायाम् । क्रतवान्पङ्क्तिरथोविसङ्घयदिति दशरथइत्यर्थः पङ्क्तिश्छन्दोविशेषे यथा । पञ्चपञ्चाक्षराः पादाः । तथाचच्छन्दोविशेषएवार्थइतिबोध्यं ॥

पङ्क्तिग्रीवः । पुं० रावणे ॥

पङ्क्तिचरः । पुं० कुररपक्षिणि । कुरज०भा० ॥

पङ्क्तिदूषकः । पुं० अपाङ्क्तेये । मन्वादिस्मृत्युक्तश्राद्धभोजनानर्हब्राह्मणे ॥

पङ्क्तिपावनः । पुं० श्राद्धभोजनार्हब्राह्मणे ॥ पञ्चाग्निप्रभृतौ ॥ यथाह

हारीत : । पवन: पावनस्त्रेतायस्य पञ्चाग्नयोगृहे । सायस्रात :प्रदीव्य न्तीसविप्र : पङ्क्तिपावन : ॥ इति अगस्त्या : सर्वेषुवेदेषुसर्वप्रवचनेषुच योनियान्वयजाश्चैवविज्ञेया : पङ्क्तिपावना : ॥ इत्यादिनामनूक्तेपुत्रा श्रमेषु ॥

पङ्क्तिरथ : पुं ० दशरथनृपे ॥

पङ्क्तिबीज : पुं ० बर्बूरवृक्षे ॥

पङ्गु : । पुं ० शनैश्चरे ॥ परिव्राजि ॥ यथा भिक्षार्थंगमनंयस्यविण्मूत्रकरणायच । योऽशनान्नपरंयातिसर्वथापङ्गुरेवस : ॥ त्रि० योगे । जङ्घावैकल्येनचलनाक्षमे । जङ्घाहीने ॥ खनतिपन० वा० गुः ॥

पङ्गुग्राह : । पुं ० शनैश्चरग्रहे ॥

पङ्गुल : । पुं ० सितकाचाभघोटके ॥ इतिहेमचन्द्रः ॥

पङ्गुल्यहारिणी । स्त्री० शिम्बीवृक्षे ॥

पङ्गू :-। स्त्री ० विकलजङ्घायाम ॥ पङ्गोश्चेत्यूङ् ॥

पच :। त्रि० पाककर्त्तरि ॥ पचति । डुपचष् । पचाद्यच् ॥

पचक : । पुं० पचे ॥ स्वा० क : ॥

पचत् । त्रि० पचमाने ॥ पचति । लट : शत्रितिपचे : शत ॥

पचत : । पुं० चन्द्रे ॥ सूर्ये ॥ वह्नौ ॥ पचति । डुपचष्० । भृमृदृशियजि-पर्विपच्यमितमिनमिहर्यिभ्योतच् ॥

पचत्पुट : । पुं० सूर्यमणिवृक्षे ॥

पचन : । पुं० अग्नौ ॥ न० पाके ॥ त्रि० पाककर्त्तरि ॥

पचनी । स्त्री० वनबीजपूरके ॥

पचन्ती । स्त्री० पाककर्त्र्याम् ॥

पचमान : । पुं० वह्नौ ॥ त्रि० पाककर्त्तरि ॥ पचति । पचते । डुपचष्० । लट : शत्शानचावितिशानजादेश :। आनेमुक् ॥

पचम्पचा । स्त्री० दार्व्याम् । दारुहरिद्रायाम् । पचति । पचे : पचाद्यच् । पु० ॥ ...

पचा । स्त्री० पाके । पचनम् । पचे : षित्वादङ् ॥ टाप् ॥

पचि : । पुं० अग्नौ ॥ पचति । डुपचष्० । सर्व ० इन् ॥

पचेलिम : । पुं० सूर्ये ॥ अग्नौ ॥ पचति । पचएलिमच् । त्रि० पक्तव्ये । यथापचेलिमा : शालय : पक्तव्या इत्यर्थ : पच्यते । पचे : कर्मणि केलिमरत्ययसङ्ख्यानं ॥

पचेलुक : । पुं० पाचके । सूदे । इति त्रिकाण्डशेष : ॥

पच्छ : । अ० पादस्यार्थमित्यर्थे ॥

पच्यमान : । त्रि० वर्त्तमानपचनकर्मताश्रये । वर्त्तमानपाकविशिष्टतण्डुलादौ ॥

पज्र : । पुं० शूद्रे पद्ो जात : । कर्त्तरि० । र : ॥

पञ्झटिका । स्त्री० मात्राछन्दोभेदे ॥

यथा । प्रतिपद्यमर्कितपोडशनाथा नवमगुरुत्वविभूषितगात्र । पञ्चाटिकायाएपविवेक : कापिनमध्यगुरुर्गणएक: ॥ यथा । तरलवतंसाश्रिष्टस्कन्धथलतर पञ्चटिका कटिबन्ध: । मौलिचपलशिखिचन्द्रकहन्द: कालियशिरसिनर्त्तमुकुंद : ॥

पञ्चकम् । न० धनिष्ठादिपञ्चनक्षत्रेषु ॥ पञ्चकनिमित्तत्वणकाष्ठहरणेदोषो यथा । अग्निचौरभयंरोगो राजपीडा धनक्षति : । सङ्ग्रहे तृणकाष्ठानां कृतेवस्वादिपंचके ॥ त्रि० पंचसङ्ख्यापरिमाणविशिष्टे ॥ पंचसङ्ख्यापरिमाणमस्य । तदस्यपरिमाणमित्यनुवृत्तौसङ्ख्याया : संज्ञासंघसूत्राध्ययनेष्विति पञ्चसङ्ख्यापरिमितिमंघार्थे कन् प्रत्यय : ॥ पञ्चभि : क्रीते ॥ संख्यायाअतिशदन्तायाकन् ॥ पञ्चानांनिमित्तंसंयोगउत्पातोवा ॥

पञ्चकपाल : । पुं० पञ्चसुकपालेषु संस्कृतेपुरोडाशे ॥ संस्कृतंभक्ष्याइत्यणोद्विगोर्लुगनपत्यइतिलुक् ॥ न० ॥ पंचानांकपालानांसमाहारे ॥

पञ्चकर्म । न० पञ्चप्रकारशारीरंकचिकित्साविशेषे ॥ यथा । वमनं रेचनं नस्यं निरूहश्चानुवासनम् । पञ्चकर्मेदमन्यश्च कारणतृक्षेपणादिकम् ॥ इति श० च० ॥

पंचकषाया : । पुं० मराख्यानीयपंचप्रकारकषायद्रव्ये ॥ यथा । जम्बूशाल्मलिवाट्यालं बकुलंबदरंतथा । कषाया : पंचविज्ञेया देव्या :प्रीतिकारा: शुभा: ॥ पंचपंचतिकषायाश्च ॥

पञ्चकारुकी । स्त्री० कुलालकर्मारवर्द्धकिनापितरजकेषु ॥

पञ्चकृत्य : पुं० महामोहे ॥ न० ॥ सृष्ट्यादिषु ॥ यथा । यस्मिन्सृष्टिस्थितिध्वंसपिधानानुग्रहात्मकम् । कृत्यंपञ्चविधंशश्वद्भासतेतंनुम :शिवमिति ॥

पञ्चकोलम् । न० पञ्चौषधी । पाचनविशेषे ॥ यथा । पञ्चकोलंकणामूलचव्यचित्रकनागरै : । पञ्चकोलं रसेपाकेकटुकंरुचिकृन्मतम् ॥ तीक्ष्णोष्णंपाचनंश्रेष्ठंदीपनंकफवातनुत् गुल्मप्लीहोदरानाहशूलघ्नंपित्तकोपनम् ॥ इतिभावप्रकाश : ॥

पञ्चकोषा: । पुं० अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु ॥ कोषा इवात्माच्छादकत्वात्कोषा : । पञ्चपञ्चकोषाश्च ॥ यथाहुर्विचारशास्त्रगुरव: पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैवर्द्धते । देह :सोऽन्नमयोनात्माप्राक्चोर्द्धंतदभावत : ॥ १ ॥ पूर्वोदितेवलंयच्छन्नचारयन्वै प्रवर्त्तक : । वायु:प्राणमयोनासावात्माचैतन्यवर्जनात् ॥ २ ॥ अहन्तांममतांदेहगृहादौचकरोतिय: । कामाद्यवस्थयाभ्रा

न्तो नासायात्मामनोमय: ॥ ३ ॥ लीनासुप्तौविमुर्वोधे व्याप्तुयादानखाग्रगा चिच्छायोपेतधीर्नानात्मा विज्ञानमयशब्दभाक् ॥ ४ ॥ काचिदन्तर्मुखावृत्तिरानन्दप्रतिबिम्बभाक् ॥ पुण्यभोगेभोगशान्तौनिद्रारूपेणलीयते ॥ ५ ॥ कादाचित्कत्वतोनात्मास्यादानन्दमयोप्ययम् ॥

पञ्चक्लेशा: । पुं॰ अविद्यास्मिता रागद्वेषाभिनिवेशेषु ॥ पंचसंक्लेशाश्च ।

पंचक्षारगण: । पुं॰ क्षारपंचके । पंचलवणे ॥ क्षारैस्तुपंचभि: प्रोक्त: पंचक्षाराभिधोगण: । काचसैन्धवसामुद्र-विट्सौवर्चलकै: समै: ॥ स्यात्पंचलवणंतच्च क्रमोपेतंपञ्चाख्यम् ॥

पंचगणयोग: । पुं॰ विदारिगन्धा वृहती पृश्निपर्णीनिदिग्धिका: ॥

पञ्चगव्यम् । न॰ गोर्दध्यादिपञ्चसु ॥ यथा । पञ्चगव्यंदधिक्षीरघृतगोमूत्रगोमये रिति ॥ तन्मानं यथा । पलमात्रंदुग्धभागं गोमूत्रं तावदिष्यते । घृतंचपलमात्रंस्याद् गोमयंतोलकत्रयम् ॥ दधिप्रसृति मात्रंस्यात् पञ्चगव्यमिदंस्मृतम् । अथवा पञ्चगव्यानां समानोभागइष्यतइति गौतमीयतन्त्रम् ॥ अपिच । गोशकृद्द्विगुणंमूत्रं पय: स्यात्तच्चतुर्गुणम् । घृतंतद्द्विगुणंप्रोक्तं पञ्चगव्ये तथादधीति ॥

पञ्चगुप्त: । पुं॰ चार्वाकदर्शने ॥ कमठे ॥

पञ्चगुप्तिरसा । स्त्री॰ स्पृक्कायाम् ॥

पञ्चचामरम् । न॰ षोडशाक्षरपादे छन्दोविशेषे ॥ यथा ॥ प्रमाणिकापदद्वयम् वदन्तिपञ्चचामरम् ॥ यथा । सुरद्रुमूलमंडपे विचित्ररत्ननिर्मिते लसद्वितानभूषिते सलीलविभ्रमालसम् । सुराङ्गनात्तवल्लवी करप्रपञ्चचामरस्फुरत्समीरवीजितं सदाच्युतं भजामितमिति ॥

पञ्चचीर: । पुं॰ मञ्जुघोषे ॥

पञ्चचूडा । स्त्री॰ अप्सरोविशेषे ॥

पंचजन: । पुं॰ नरे । पुरुषे ॥ पंचभिर्भूतैर्जन्यते । जनी॰ । घञ् । जनिवध्योश्चेतिनवृद्धि: ॥ यद्वा । पञ्चजना उत्पादकायस्य ॥ संज्ञादपुर्वे दैत्यविशेषे ॥ गन्धर्वा: पितरोदेवा असुरारक्षांसिपञ्चजनपदवाच्यानिभवन्ति ॥ निषादपञ्चमावर्णाश्च ॥

पंचजनीन: । पुं॰ भाण्डे ॥ त्रि । पञ्चजनहिते ॥ रथकारपंचमाश्चत्वारो वर्णा: पञ्चजना: । दिक्संख्ये संज्ञायामिति॰ समास: । पञ्चजनेभ्योहितम् । पञ्चजनादुपसङ्ख्यानमितिख: । उपसङ्ख्यानस्यकर्मधारयविषयत्वात् । षष्ठीसमासात्पञ्चजनीयमिति ॥ दिक्संख्ये ... पंचजनीयम् ॥

न० मैथुने ॥ त्रि० । पंचानांपूरणे ॥ रुचिरे ॥ दक्षे ॥ पंचानांपूरणः । तस्यपूरणेडट् ॥ नान्तादितिमट् ॥

पंचमवेदः । पुं० भारते ॥

पञ्चमहायज्ञाः । पुं० गृहस्थकर्त्तव्येषुपंचविधनित्यकर्मसु ॥ यथा । पाठोहोमश्चातिथीनांसपर्यातर्पणंबलिः । एतेपंचमहायज्ञाब्रह्मयज्ञादिनामकाः । तथाचमनुः पंचसूनागृहस्थस्यचुल्लीपेषण्युपस्करः । कण्डनीचोदकुम्भश्चवध्यतेयास्तुवाहयन् ॥ तासांक्रमेणसर्वासां निष्कृत्यर्थंमहर्षिभिः । पंचक्लृप्तामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ अध्यापनंब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोऽतिथिपूजनम् इति ॥ वध्यतेहन्यतेऽस्यर्थः पापंत्वात् । अथवावध्यतेहिंसाजनितदुरितेनसम्बध्यतेजन्तुरितिचार्थः । वाहयन् प्रवर्त्तयन् ॥

पञ्चमारः । पुं० बलदेवस्यपुत्रे ॥

पञ्चमास्यः । पुं० कोकिले ॥ पञ्चमोरागः स्वरोवाआस्येयस्य ॥

पञ्चमी । त्रि० पञ्चमासादिकेवत्सादौ ॥ पञ्चमोमासोवर्षोवाअस्य । वयसिपूरणादितीनिः ॥

पञ्चमी । स्त्री० द्रौपद्याम् ॥ तिथिवि० । साचन्द्रस्यपञ्चमकलाक्रियारूपा । तदुपलक्षितकालश्च । अस्यांजातस्यफलम् । यथा । भूपालमान्योमनुजः सुगात्रः कृपासमेतोविदुषांवरेण्यः । वाग्मीगुणीबन्धुजनैकमान्यः प्रसूतिकालेयदिपञ्चमीस्यात् ॥ इमि० ॥ व्यास० ॥ व्यस० ॥ ह० ॥ विभक्ति ॥ पञ्चानांपूरणी ॥ डट् । मट् । ङीप् ॥ विद्याविशेषे ॥ रागिणीविशेषे । वसन्तरागभार्यायाम् ॥ तस्याध्यानं यथा । सङ्गीतगोष्ठीषुगरिष्ठभावसमाश्रिता गायनसम्प्रदायैः । स्वर्णाङ्गिनीनूपुरपादपद्मासापंचमीपंचमवेदवेत्रीतिसङ्गीतदर्पणः ॥

पंचमुखः । पुं० शिवे ॥ पञ्चमुखानियस्य ॥ सिंहे । मृगेन्द्रे ॥ पञ्चति । पचि० । अच् । पञ्चंविस्तृतं मुखमस्य । यद्वा । मुखंपादाश्च पञ्चमुखानीयस्य ॥

पंचमुखी । स्त्री० सिंहभार्यायाम् ॥ वासके ॥ जवापुष्पविशेषे ॥ शिवायाम् इति शब्दाम्बुधिः ॥

पञ्चमीव्रतम् । न० माघशुक्लपञ्चमीमारभ्यवर्षपर्यन्तं प्रतिमासीयशुक्लपञ्चम्यांभविष्यपुराणोक्तस्त्रीकर्त्तव्येनियमविशेषे ॥

पञ्चमुद्रा । स्त्री० सन्न्यासिनांत्रिदण्डकमण्डलुशिक्यपात्रजलपवित्ररूपेलिङ्गे ॥ पूजायामावाहन्यादिषु ॥

पञ्चसूत्रम् । न० गौतमादिमहर्षिप्रणीतधर्मसूत्रे ॥ पञ्चानांसूत्राणां

समाहार : ॥

पञ्चमूर्त्तिः । पुं० सदाशिवे ॥ सृष्टिस्थितिसंहारनिरोधानुग्रह पंचकृत्यसिद्ध्यर्थं मीशानतत्पुरुषाघोरवामदेवसद्योजातरूपाः पञ्चमूर्त्तयोयस्य ॥

पञ्चमूलम् । न० स्वनामप्रसिद्धौषधविशेषे ॥ तत्त्रिविधम्यथा । श्रीफल : सर्वतोभद्रापाटलागणिकारिका । स्योनाक : पञ्चभिश्चैतैः पञ्चमूलंमहन्मतम् ॥ पंचमूलंमहत् तिक्तकषायंकफवातनुत् । मधुरंश्वासकासघ्नमुष्णंलघ्वग्निदीपनम् ॥ ✽ लघुपञ्चमूलन्तु । शालपर्णीपृश्निपर्णीवार्ताकीकण्टकारिका । गोक्षुर : पञ्चभिश्चैतैः कनिष्ठंपञ्चमूलकम् ॥ पञ्चमूलंलघुस्वादुबल्यंपित्तानिलापहम् । नात्युष्णंबृंहणंग्राहिज्वरश्वासाश्मरीप्रणुत् ॥ ✽ तृतीयत्तृणाख्यंतत्तु । कुश : काशः शरोदर्भइक्षुरितितृणोद्भवम् । पित्तकृच्छ्रहरंपञ्चमूलंवस्तिविशोधनमिति ॥

पञ्चमूली । स्त्री० लघुपंचमूलपाचने ॥ पञ्चानांमूलानां समाहार : । द्विगोरितिङीप् ॥

पञ्चरक्षक : । पुं० पक्षमोरवृक्षे ॥

पञ्चरत्नम् । न० कनकादिरत्नपञ्चके ॥ यथा । कनकंहीरकंनीलं पद्मरागश्च मौक्तिकम् । पंचरत्नमिदंप्रोक्तमृषिभि : पूर्वदर्शिभि : ॥ रत्नानामप्यभावेतुस्वर्णंकर्षार्धमेववा । सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैरितिहेमाद्रिः ॥ पञ्चानांरत्नानांसमाहार : ॥

पञ्चरसा । स्त्री० आमलक्याम् ॥

पंचरात्रम् । न० ग्रन्थविशेषे ॥ यथा । रात्रञ्चज्ञानवचनंज्ञानंपंचविधंस्मृतम् । तेनेदंपञ्चरात्रंचप्रवदन्तिमनीषिण : ॥ तत्सप्तविधंयथा । पञ्चरात्रंसप्तविधंज्ञानिनांज्ञानदंपरम् । ब्राह्मंशैवंचकौमारंवाशिष्ठंकापिलंपरम् ॥ गौतमीयंनारदीय मिदंसप्तविधंस्मृतम् । इतिनारदपञ्चरात्रेप्रथमरात्रम् ॥ एतद्व्यतिरिक्तानिहयशीर्षपृथुभृग्वादिपञ्चरात्राणिसन्ति ॥ पञ्चमुनिशास्त्रम् ॥

पञ्चलक्षणम् । न० पुराणे ॥ यथा । सर्गश्चप्रतिसर्गश्च वंशोमन्वन्तराणिच । वंशानुचरितंचैव पुराणंपञ्चलक्षणमिति ॥ पुं० । पुरुषविशेषे ॥

पञ्चलवणम् । न० सैंधवादिपञ्चसु ॥ यथा । सैंधवंरुचकंचैवविडंसामुद्रकंगुडमिति । पञ्चानांलवणानां समाहार : ॥

पञ्चलाङ्गलकम् । न० महादान विशेषे ॥

पञ्चलोहम् । न० सौराष्ट्रकलौहेइति हेमचंद्र : ॥ स्वर्णरूप्यताम्रसीसकारकूटेषु ॥

पञ्चलोहकम् । न० स्वर्ण रजत ताम्र

वह्निभागेषु ॥

पञ्चवक्त्रः । पुं॰ शिवे ॥ पञ्चवक्त्राणियस्यसः । तानियथा । विभाव्यमुखपञ्चंहि शिवस्यवरवर्णिनि । सद्योजातंवामदेवमघोरंचततः परम् ॥ तत्पुरुषंतथेशानंपञ्चवक्त्रंप्रकीर्त्तितम् ॥ सद्योजातंचवैशुक्लं शुद्धस्फटिकसन्निभम् । पीतवर्णंतथासौम्यंवामदेवंमनोहरम् ॥ कृष्णवर्णमघोरंच सर्वभीमविमर्दनम् । रक्तंतत्पुरुषंदेविदिव्यमूर्त्तिमनोहरम् ॥ श्यामलंचतथेशानं सर्वदेवशिवात्मकम् । चिंतयेत्पश्चिमेभागेद्वितीयंचतथोत्तरे ॥ अघोरंदक्षिणेदेविपूर्वेतत्पुरुषंतथा । ईशानंमध्यतोज्ञेयंचिन्तयेत्भक्तितत्परइति निर्वाणतन्त्रे षष्ठःपटलः ॥ सिंहे ॥

पञ्चवटः । पुं॰ उरस्कटे । कौटिङ्के । यालयज्ञोपवीतके । तीर्थविशेषे ॥

पञ्चवटी । स्त्री॰ दण्डकारण्यान्तर्भूतस्थलविशेषे ॥ पञ्चानांवटानां समाहारः । द्विगोरितिङीप् । तदुपलक्षितत्वात् । पञ्चवटीत्यभिधिस्त्रतः प्रसिद्धोऽयमुच्यते ॥ तपःकरणार्थपञ्चप्रकारवृक्षविशेषे ॥ यथा । अश्वत्थोबिल्ववृक्षश्चवटोधात्रीअशोककः । वटीपञ्चकमित्युक्तंस्थापयेत् पञ्चदिक्षुच ॥ अश्वत्थंस्थापयेत्प्राचि बिल्वमुत्तरभागतः । वटंपश्चिमभागेतुधात्रींदक्षिणतस्तथा ॥ अशोकं वह्निदिक्स्थाप्यंतपस्यार्थंसुरेश्वरि । मध्येवेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम् ॥ प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरंशिवे । अनन्तफलधात्री सा तपस्याफलदायिनी ॥ इयंपञ्चवटीप्रोक्तावृहत्पञ्चवटींशृणु । बिल्ववृक्षंमध्यभागेचतुर्दिक्षुचतुष्टयम् । वटवृक्षंचतुष्कोणे वेदसंख्यंप्ररोपयेत् । अशोकंवर्त्तुलाकारंपञ्चविंशतिसम्मितम् ॥ दिग्विदिक्ष्वामलकींच एकैकंपरमेश्वरि । अश्वत्थंचचतुर्दिक्षु वृहत्पञ्चवटीभवेत् ॥ यः करोति महेशानि साक्षादिन्द्रसमोभवेत् । इहलोके मन्त्रसिद्धिः परेचपरमागतिः ॥ इति हैमाद्रीयव्रतखण्डधृतस्कन्दपुराणवचनानि ॥

पञ्चवर्गः । पुं॰ कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मके राज्ञांपञ्चविधेचारवर्गे ॥ यथा । तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात्कापटिकः । तंसत्य विनमर्थमानाभ्यामुपगृह्यरहसिराजा ब्रूयात्त्वस्तुष्टं यच्चपश्यसितत्तदानीमेवमयिवक्तव्यमिति ॥ १ ॥ प्रव्रज्याप्रत्यवसित उदास्थितः । स लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं हस्त्यर्थिनं ज्ञात्वारहसिराजापूर्वपद्

ब्रूयात् । वह्न्युत्पत्तिकमठे स्थापयेत् ० प्रचुर सस्योत्पत्तिकं भूम्यन्तरंच तद्वृत्त्यर्थमुपकल्पयेत् सचान्येषामपिप्रव्रजितानां राज चारकर्मकारिणां ग्रासाच्छादनादिकंदद्यात् ॥ २ ॥ कर्षक : क्षीणवृत्ति : प्रज्ञाशौचयुक्तोगृहपतिव्यञ्जनः ॥ तमपि पूर्ववदुक्त्वास्वभूमौकृषिकर्मकारयेत् ॥ ३ ॥ वाणिजक : क्षीणवृत्तिर्वैदेहिकव्यञ्जनः । तंपूर्ववदुक्त्वाधनमानाभ्या मात्मीकृत्य वाणिज्यङ्कारयेत् ॥ ४ ॥ मुण्डोजटिलोवार्त्ताकामस्तापसव्यञ्जन : । सोपिक्वचिदाश्रमेव सन् बहुमुण्डजटिलान्तर कपटशिष्यगणस्तोगुप्तराजोपकल्पितवृत्तिस्तान्पर्य्यकुर्यात् । मासद्विमासान्तरितंप्रकाशं यदरादि मुष्टिमश्नीयात् । रहसितुराजोपकल्पितं यथेष्टमाहारंकल्पयेत् । शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयु : तेनबहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वकार्यं मकार्यंच पृच्छन्ति चन्याग्न्यादकुक्रियादिकं कथयन्ति ॥ ५ ॥ एवंपञ्चवर्गं प्रकल्पनेन राज्ञ : प्रतिराजस्य चात्मीयानां चामात्यादीनां मनुरागविरागज्ञानं भवति ॥ पञ्चानां वर्गा : ॥

पञ्चवल्कलम् । न० त्वक्पञ्चके ॥ यथा । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र संयुक्तै : पंचवल्कलमुच्यते ॥ अपिच । न्यग्रोधोदुम्बराश्वत्थ प्लक्षपिप्पल पीतना : । चीरिवृक्षास्तु पञ्चैषां वल्कलं पञ्चवल्कलम् ॥ पञ्चैते चीरिणो वृक्षास्तेषां त्वक्पञ्च लक्षणम् । त्वक्पञ्च कंटिमं ग्राहि व्रणशोथविसर्पजिदितिराजनिर्घण्ट : ॥



पंचबाणः पुं ० कामदेवे । स्मरे ॥ पंचबाणा : द्रावणाद्याश्च । तेच । द्रवणं शोषणं बाणं तापनं मोहनाऽभिधम् । उन्मादनंचकामस्यबाणा : पंचप्रकीर्तिता : ॥ अपिच अरविन्दमशोकंच चूतंचनवमल्लिका । नीलोत्पलंचपञ्चैते पंचबाणस्यसायका : ॥ पंचानां बाणानां समाहारे ॥ त्रि० । पंचबाण विशिष्टे ॥

पंचवायव : । पुं० प्राणापानव्यानोदान समानाख्येषु ॥ पंचचते वायवः ॥

पंचविधकार्त्स्न्यम् । न० जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तिषु ॥

पंचविपर्ययभेदा : । पुं ० अविद्यास्मिता रागद्वेषाभिनिवेशेषु यथाक्रमं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकेषु ॥ विपर्यय प्रभावानामस्मितादीनां विपर्यय स्वभावत्वात् ॥ यद्वा । यदविद्याविषयेण यथार्थतो वस्तु अस्मिता इव

सात्त्वभावाः सन्तस्तदभि निविशन्ति । अतएव पंच पर्वा अविद्येत्याह वार्षगण्यः ॥

पंचशर : । पुं० कामे । मकरध्वजे ॥ पंचशराश्चास्य । ते च उन्मादनतापनश्च शोषणस्तम्भनस्तथा । सम्मोहनश्च कामस्यपंचबाणाः प्रकीर्तिताः ॥ पञ्चेन्द्रियार्थाःशराः अस्येत्यन्ये ॥

पंचशलाका । स्त्री० विवाहोपयोगिविधविशेषे ॥

पञ्चशस्यम् । न० धान्य मुद्गतिल यव श्वेतसर्षपरूपे शस्यपञ्चके ॥ सर्षपस्थाने माषोपीतिदुर्गोत्सव पद्धतिः ॥

पञ्चशाखः । पुं० गये । मापी । हस्ते ॥ पञ्च शाखा इव यद्गुलयोऽस्य ॥ न० पञ्च शाखानां समाहारे ॥ त्रि० । पञ्च शाखा विशिष्टे ॥

पंचशिख : । पुं० सिंहे ॥ धर्मस्य हिंसाभार्यायां जातमुनिविशेषे ॥ यथोक्तं वामन पुराणे ५ अध्याये । धर्मस्यभार्याहिंसाख्या तस्यां पुत्र चतुष्टयम् । सम्प्राप्तं मुनि शार्दूल योगशास्त्रविचारकम् ॥ ज्येष्ठः सनत्कुमारोभूद्द्वितीयश्च सनातनः । तृतीयः सनकोनाम चतुर्थश्च सनन्दनः ॥ साङ्ख्य वेत्तारमपरं कपिलस्वोढु मासुरिम् । दृष्ट्वा पञ्च शिख श्रेष्ठं योगनिष्ठं तपोनिधिम् । ज्ञानयोगंनते दद्युर्ज्यायांसो पिकनी यसामिति ॥

पंचशूरण : । पुं० पंचप्रकारशूरणे ॥ यथा । अल्पम्लपर्णीकाण्डीर माला कन्द द्विशूरणैः । शूरोभवतियोगोयं पञ्चशूरणसंज्ञक : । इतिराजनिर्घण्टः शूरणः श्वेतशूरणश्चेति शूरणद्वयम् ।

पञ्चशैरीषकम् । न० शिरीषस्यत्वगादि पंचमु ॥ त्वक्पत्रफलमूलानिकुसुम श्चैवपंचमम् ॥

पंचषा : । त्रि० पंचवाषट्वापरिमाणंयेषां तेषु ॥ बहुवचनान्तोयम् ॥

पंचसिद्धौषधय : । पुं० पंचप्रकारौषधिविशेषे ॥ यथा । तैलकन्द सुधा कन्द क्रोडकन्द रुदन्तिकाः । सर्प नेत्रयुताः पंच सिद्धौषधिकसंज्ञकाः ॥

पञ्चसुगन्धकम् । न० पंचप्रकार सुगन्धद्रव्ये ॥ यथा । कर्पूरकक्कोल लवङ्गपुष्प गुवाकजाती फलपंच केन । समांशभागेनप्रयोजितेन मनोहरं पंचसुगन्धकंस्यात् ॥

पंचसूना । स्त्री० पंचप्रकारप्राणिवधस्थाने । यथा । पंचसूनागृहस्थस्य चुल्लीपेषण्युपस्कर : । कण्डनीचोद कुम्भश्च बध्यते यास्तुवाहयन् ॥

पंचसूरणम् । न० पंचशूरणे ॥

पंचस्कन्धी । पुं० रूपविज्ञानादिस्कन्धानांसमुदाये ॥

पंचस्रोत : । पुं० शैवशास्त्रे ॥

पंचस्वरा । स्त्री० ज्योतिर्ग्रन्थविशेषे ॥

पंचस्वरोदयः । पुं० ज्योतिःशास्त्रविशेषे ॥

पंचाग्निः । पुं० अग्निहोत्रिणि ॥ गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्याः पंचाग्नयोयस्यतथोक्तेऽरुहे ॥ पवनः पावनस्तेतावस्य पंचाग्नयो गृहे । सायंप्रातः प्रदीप्यन्ते सविप्रः पङ्क्तिपावनः ॥ चतुर्णान्यपृथिवीषु सपयोपित्सु अग्निहृष्टिंय : कुरुते । सोऽग्निहोत्रादिकारीवापंचाग्निः ॥

पंचाङ्गः । पुं० पुष्पिताश्वे । पंचभेदे ॥ कूर्मे ॥ प्रणामविशेषे ॥ यथा । बाहुभ्यांचैवजानुभ्यां शिरसावचसा दृशा । पंचाङ्गोयंप्रणामः स्यात्पूजासुप्रवरावुभौ ॥ राज्ञांनये ॥ यथा । सहायाः साधनोपायाविभागोदेशकालयोः । विनिपातप्रतीकारः सिद्धिः पंचाङ्गइष्यतेइति ॥ न० । वृक्षत्वगादिषु ॥ यथा ॥ त्वक्पत्रंकुसुमंमूलं फलमेकस्यशाखिनः । एकत्रमिलितश्चैतत्पंचाङ्गमितिसंज्ञितम् ॥ अधिकरणे । यथा ॥ विषयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेतिपंचाङ्गंशास्त्रेधिकरणंस्मृतमिति ॥ देवाराधनाङ्गस्तोत्रादिषु ॥ यथा ॥ स्तोत्रंच कवचं चैवपद्धतिः पटलंतथा । नामसहस्रमित्येतत्पंचाङ्गंतन्त्रवेदिन इति ॥ तिथिवारादात्मकेपत्रे । यथा । तिथिर्वारंचनक्षत्रंयोगः करणमेवच । पंचांगस्यफलंश्रुत्वागङ्गास्नानफलंलभेदिति ॥ अपिच । वारोहरतिदुःस्वप्नंनक्षत्रंपापनाशनम् । तिथिर्भवतिगङ्गायायोगः सागरसङ्गमः ॥ करणंसर्वतीर्थानियूयतेवनपंचिकेति ॥

पञ्चाङ्गगुप्तः । पुं० कमठे । कच्छपे ॥

पञ्चाङ्गप्रणामः । पुं० भक्तिश्रद्धातिशययुक्तैर्गुर्वादिप्रणतिविशेषे ॥ यथा । जानुभ्यांचसपाणिभ्यां सुरसाशिरसागिरा । पंचाङ्गताप्रणामस्यपूजायांप्रवरामतेति ॥

पंचाङ्गुलः । पुं० मण्डे । एरण्डे ॥ शुक्लैरण्डे ॥ त्रि । पंचाङ्गुलिमिते ॥ पंचाङ्गुलयोस्य । तत्पुरुषस्याङ्गुलेरित्यच् । अङ्गुलिसदृशावयवेधान्यादिविक्षेपकेकाष्ठे ॥ पञ्चाङ्गुलयोयस्य । अङ्गुलेर्दारुणीतिषच्समासान्तः ॥

पंचाङ्गुली । स्त्री० सकाराक्षुपे ॥ इ० राजनि० ॥

पंचातपा । स्त्री० तपस्या विशेषे ॥ यथा । चर्या पंचातपाचिन्ताशाम्भवी शाम्भवो जपः । पत्निर्ये दारुभिः शुष्कैश्चतुर्दिक्षुचतुष्कृतम् । वह्नि संस्थापनं ग्रीष्मे तीव्रांशुमान् मध्यमः । हस्तान्तरे चतुर्वह्नीन् कृत्वावैश्वानरैर्दिना ॥ तन्मध्यस्था सूर्यविम्बं वीक्षती पङ्कजांशुके

त्रिकालिका पुराणम् ॥

पञ्चात्मकः । त्रि॰ पाञ्चभौतिके ॥

पञ्चाननः । पुं॰ शिवे । पञ्च आननान्यस्य ॥ सिंहे ॥ पञ्चं विस्तृत माननं यस्य सः ॥ यद्वा । मुखं पादाश्च पञ्च आननानीव यस्य सः ॥ अद्भुते ॥

पंचाप्सरः । न॰ दण्डकारण्यस्थे तटाक विशेषे ॥ पंचाप्सरसोऽत्र निवसन्त्यत्र ॥

पञ्चामरा । स्त्री॰ पञ्चप्रकारामरलतासु ॥ यथा । एकातु अमरा दूर्वा तस्याप्यन्यां समानयेत् । अन्या तु विजया देवी त्रिविधा सरस्वती । अन्यातु विल्वपत्राख्या शिव सन्तोषकारिणी । अन्यातु योग सिद्ध्यर्थे निर्गुण्डी चामरालता ॥ अन्यातु काल तुलसी श्री विष्णोः प्रियतोषिणी । एताः पञ्चामरा श्रे या: योगसाधनकर्मणीति रुद्रयाम लोत्तर खण्डे ७६ पटलः ॥

पञ्चामृतम् । न॰ दुग्धादि पञ्चसु । यथा । दुग्धं सशर्करं चैव घृतं दधि तथा मधु । पञ्चामृत मिदं प्रोक्तं विधेयं सर्व कर्मसु ॥ पञ्चानाममृतानां समाहारः ॥

पञ्चामृतयोगः । पुं॰ गुडूच्यादि पञ्चानां योगे ॥ यथा । गुडूची गोक्षुरश्चैव मुसलीमुण्डिकास्तथा । शतावरीति पञ्चानां योगः पञ्चामृताभिध इ॰ राज॰ नि॰ ॥

पञ्चाम्नायः । पुं॰ शिव पञ्चमुख निर्गत पञ्चप्रकार शैवशास्त्र विशेषे ॥ ॥ यथा ॥ पूर्वाम्नायः पूर्वमुखः पश्चिमः पश्चिमा मुखः । दक्षिणोद क्षिणस्तद्वदुत्तरश्चोत्तरः परः । निरुत्तरतयाचोर्द्ध्वं सिद्धान्तागमरूपिणम् । ऊर्द्ध्वाम्नायपरिज्ञानं नाल्पस्यतपसः फलम् ॥ पूर्वाम्नायः शब्दरूपो दक्षिणः कर्णरूपकः । पश्चिमः प्रश्नरूपः स्यादुत्तरश्चोत्तरस्तथा ॥ ऊर्द्ध्वाम्नायस्तत्त्वबोधः केवलानुभवात्मकः इति भैरव तन्त्रादि ॥

पंचाम्रवापी । स्त्रि॰ पंचानामाम्रसशिरानां हस्तविशेषाणां समारोपके ॥ यथा । अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजाती: । द्वे द्वे तथा दाडिम मातुलुङ्गे पञ्चाम्रवापी नरकं नयाती तिवाराहपु॰ ॥

पंचाम्लम् । न॰ अम्लवेतसादिपञ्चसु ॥ यथा । अम्लवेतसवृक्षाम्ल छस्नाम्बी रनिम्बुकैः । चतुरम्लं हि पंचाम्लं बीजपूरयुतैर्भवेत् ॥

पंचारी । स्त्री॰ शारिफलायाम् ॥ इतिशब्दरत्नमाला ॥

पंचार्चिः । पुं॰ बुधग्रहे । इ॰ त्रि॰ ॥

पंचालः । पुं॰ वर्णसंकरभेदे ॥ यथा । वार्थेनर्दैन पंचालमाग्याषि ॥ यथा । शर्माग्निशर्माधि । देशानि

कट्टाणि ॥ पुंभूम्नि । पंचाला : । नीवृद्विशेषे । कान्यकुब्जादिच्छवाभि धदेशेषु ॥ पंचते । पचिविस्तारे । तमि विशि विङीत्यादिना कालन् ॥ पंचाला : क्षत्रिया : तेषांनिवासो जनपद : पंचाला : । निवासे ऽ योजनपदे लुप् । लुपियुक्तवद्व्यक्ति वचने ॥ पुराणोक्ता व्युत्पत्तिस्तुहर्य श्वात्मुद्गल सृञ्जय बृहदिषु यवीनर काम्पिल्यसंज्ञा : पंचानामेतेषां विष याणां रक्षणायालमेतेमत्पुत्रा इति पुत्रा ऽ भिहिता इति पंचाला : । ` वि॰ पु॰ ४ अंशे १८ अध्याय: ॥ कुरुक्षेत्रात् पश्चिमेतु तथाचोत्तर भागत : । इन्द्रप्रस्थात्महेशानि दश योजनकद्वये ॥ पञ्चालदेशो देवेशि सौन्दर्यगर्वभूषित इति तन्त्रशास्त्रम्॥

पञ्चालिका । स्त्री ॰ वस्त्रादिकृत पुत्तिकायाम् ॥ गीतिविशेषे ॥ पञ्च भिर्वर्णैरल्यते । अलभूषणादौ । अच् । स्वार्थिकन् । टाप् । प्रत्ययस्था दितीत्त्वम् ॥ संज्ञायामितिण्वुला ॥ संज्ञापूर्वकत्वान्नवृद्धि : ॥

पंचाली । स्त्री ॰ पंचालिकार्थे ॥ शारि शृङ्खलायाम् ॥

पंचावटम् । न॰ उरस्कटे । चालोपवीते ॥

पंचावयव : । पुं ॰ अनुमाने ॥ पंच अवयवा अस्य । तेचयथा । प्रति ज्ञाहेतूदाहरणोपनयनिगमनानि पं चावयवा : । यथा । पर्वतोवन्हिमा निति प्रतिज्ञा ॰ धूमवत्वादिति हेतु: योयोधूमवान् ससोग्निमान् यथाम हानसम् इत्युदाहरणम् तथाचाय मित्युपनय : तस्मात्तथेति निगमन म् ॥

पञ्चावस्थ : । त्रि॰ मृते । शवे ॥

पंचावस्था : । स्त्री॰ भूम्नि । कौमारं पंचमाब्दंस्यात्पौगण्डंदशमावधि । कैशोरमापंचदशाद्यौवनंचतत : परम् । वार्द्धकंचततःप्रोक्तं पंचाव स्था : प्रकीर्त्तिता : ॥ त्रि ॰ । पंचावस्थायुक्ते ॥

पंचाशत् । त्रि॰ सङ्ख्याविशेषे ॥ पंच दशत : परिमाणमस्य । पङ्क्तिविं शति त्रिंशदित्यादिना निपातनात् प्रकृतेपंचाभाव : शत्प्रत्यय : ॥ सङ्ख्येये ॥

पंचास्य : । पुं॰ सिंहे ॥ पंचते । पचि च्छच् । पंचंविस्तृतमास्यमस्य यद्वा । मुखं पादाश्च पञ्चास्यानीयस्यास: ॥ शिवे ॥ पञ्चशास्यान्यस्य ॥

पञ्चिका । स्त्री॰ द्यूतविशेषे ॥ सतुपंच भिरक्षै : पंचभि : कपर्द्दै : पंचभि शलाकाभिर्वाभवति । तत्रयदा सर्वे उत्ताना : पतन्ति अवाची वा तदा पातयिता न्यं जयति । तस्यै वान्यथापाते सतिपातयिताऽन्येन जीयते ॥

पंचवारणम् । न० आकाशादिसूक्ष्मभूतानां परस्परव्यवहर्त्तुं प्राणिनिकाय व्यवहार निर्वाहकतदीय धर्माधर्मापेक्षपरमेश्वर सान्निध्यादि निमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तौ ॥ तत्प्रकारस्तु । आकाशादिषु पञ्चसु एकैकं द्विधासमंविभज्य तेषु दशभागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्द्धासमंविभज्यतेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभाग परित्यागेन भागान्तरेषुयोजनमिति । तदुक्तम् । द्विधाविधायचैकैकं चतुर्द्धाप्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतेति ॥ स्वार्द्धेषु स्वेतरार्द्धानां षाट्शो योजनन्तुतद्दिति च ॥ अपिच । द्विधाकृतस्यभूम्यादेरर्द्धमेकञ्चतुष्कृतम् । स्वान्यद्वितीयपार्द्धेषु संयुक्तंपञ्चतामतम् ॥ एवमर्द्धद्विभूतानामितराष्टमभागकम् । स्वांशाधिक्येनभूम्यादि व्यपदेशोचसंस्फुट इति ॥

पञ्चेन्द्रियम् । न० श्रोत्रादिषु । श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियमतम् । पञ्चानामिन्द्रियाणांवै शुभेश्रवणदर्शने । श्रवणात्स्तुविज्ञानं दर्शनाच्चित्तरञ्जन मिति भागवतम् ॥ वागादिषु ॥ वाक् पाणि पाद पायू पस्थाख्य कर्मेन्द्रियं मतमित्युक्तः ॥

पञ्चेषु : । पुं० मदने ॥ पञ्चइषवोऽस्य ॥

पञ्चोपविषम् । न० उपविषाणां पंचके ॥ यथा । स्नुह्यर्कौ करवीराणि लाङ्गली विषमुष्टिका । एतान्युपविषाख्याहुः पंचपांडित्यशालिन इ० रा० नि० ॥

पञ्चोषणम् । न० पञ्चकोले ॥

पञ्चोष्माणः । पुं० भुक्त आहारपाचक शरीरस्थ पञ्चाग्निषु ॥ यथा ॥ भौमाऽऽप्याग्नेय वायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहार गुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥ पार्थिवाः पार्थिवानेव शेषाः शेषांश्चदेहगान् ॥ इति सारकौमुदी ॥

पञ्जरः । पुं० शरीरे ॥ देहास्थि समूहे । काङ्काले ॥ कलियुगे ॥ गवां नीराजनाविधौ चेति सारस्वताभिधान मिति राधाकान्तः । न० । कायास्थिवृन्दे । शरीरास्थिपञ्जरे ॥ शाखारे । मध्यादिपक्ष्यगृहे । पिंजरा० इ० भा० ॥

पिंजराखेट : । पुं० पोली ० इ० गौ० भाषा प्रसिद्धे पलवे । मत्स्यमारणोपाये ॥

पञ्जुल : । पुं० कोलकंदे ॥

पञ्जि : । स्त्री० सूचनालिकायाम् । पादस० इ० गौ० भा० ॥ पञ्जि

कायाम् ॥

पञ्जिका । स्त्री० तूलनालिकायाम् । पांइल० गौ० भा० ॥ टीकाविशेषे ॥ यथा । टीकानिरन्तर व्याख्या पञ्जिकापद भञ्जिकेति हेमचन्द्र : ॥ आयस्यास्थाम् ॥ पञ्जाङ्ग । यथा ह० भा० । तिथिवारादि बोधकपत्रे ॥ आयव्यय लेखनार्थपत्रे । बहो० खाता ह० भा० ॥ सकलपदव्याख्यायाम् ॥ पिञ्ज्यव्यतेऽर्थोऽस्याम् । पिजिर्भाषार्थः । गुरोश्च हल इत्य : । पृ० । इकारस्याकार : । स्वार्थेक : ॥ पिञ्जयतिवा । वु न् ॥

पञ्जिकारकः । पुं० कायस्थजातौ ॥ त्रि० । टीकाकारके ॥

पञ्जी । स्त्री० तिथ्यादिज्ञापके पत्र विशेषे । तिथिपत्र० ह०प्र० । पञ्जिकायाम् ॥ यथा । य : शूद्रदैवज्ञ मुखेन पञ्जीं शृणोति राजा नरकं प्रयाति । दैवज्ञ वक्त्रेण शृणोति पञ्जीमनन्त । चयाति शशीव कृष्णे ॥ज्योतिः० ॥ टीकायाम् ॥

पञ्जीकार : । पुं० कायस्थे । पञ्जिकाकृति ॥

पट : । पुं० चायालद्रुमे ॥ पुरस्कृते ॥ न० । चालि । पटले । छदिषि ॥ पुं० सुचेलके । शोभनवस्त्रे ॥ वस्त्रे ॥ चित्रपटे । पच० ह०भा० ॥ पटति । पटगतौ० पटविस्तारे वा । पचाद्यच् ॥ यद्वा । पच्यतेऽनेन पटभासने । खनोघचेतिघ : घित्वादन्यस्मादपि ॥ हलश्चेतिघञ् संज्ञा पूर्वकत्वाद् वृद्ध्यभाव : । क्वचित् घवाद् विषयेऽप्युत्सर्गोभिनिविशतीतिघञ् विषये पुंसीतिघोवा ॥

पटक : । पुं० सेनानिवेशे । शिबिरे ॥

पटकार: । पुं० तन्तुवाये ॥ चित्रकरे ॥ चाले रा० ह० भा० ॥ पटंशोभनवस्त्रं चित्रपटंवा करोति । कृञ् । कर्मण्यण् ॥

पटकुटी । स्त्री० वस्त्र वेश्मनि । दूष्ये । गुणाख्यनिकायाम् । तंबू । ह० भा० ॥

पटच्चरम् । न० जीर्णवस्त्रे ॥ पटते । पट० वा० चत् । भूतपूर्वपटत् । भूतपूर्वचरट् ॥ यद्वा । पटत्वृत्य व्यक्तं शब्दं चरति करोति । चष् ॥ यद्वा । पटइवाचरति । सर्वप्रातिपदिकेभ्य : क्विप् । चाचारक्विपिश चन्ताचरट् ॥ पुं० । चौरे ॥

पटवस्त्र : । पुं० पटका वृतिस्त्रीकटिवस्त्रधि० पटस्यवस्त्र : ॥

पटभवनम् । न० उपकार्यायाम् । पटमण्डपादिराजसदने ॥

पटमठ : । पुं० अंशुकालये ॥

पटमण्डप : । पुं० पटभवने । दूष्ये ॥

पटमयम् । न० वस्त्रालये । दूष्ये ॥ शांब्याम् । पटवासे ॥

पटरकः । पुं० गुन्द्रवृक्षे । पटेरा इ०भा०

पटलम् । न० पिटके ॥ परिच्छदे । परिवारे ॥ छदिषि । गृहाच्छादने । छानिइ०भा० तिलके ॥ दृष्टयोगे । दृष्टेरावरके । चोखकापड़दा इ० भा० यथा । प्रथमे पटलेदोषो यस्यद्दष्ट्यांव्यवस्थितः । अव्यक्तानिसरूपाणि कदाचिदथपश्यति । दृष्टयांपत्वारि पटलानिसन्ति रसरक्ताश्रयवाह्यम् द्वितीयंमांससंश्रयम् । तृतीयमेदःसंश्रितम् चतुर्थंकालकाश्रितम् । तथा चसुश्रुतः । तेजोजलाश्रितंबाह्यं तेष्वन्यत्पिशिताश्रितम् । मेदस्तृतीयंपटलमाश्रितत्वस्थिचापरम् ॥ पञ्चमांशसमंदृष्टे स्तेषांबाहुल्यमिष्यते०इति० ॥ अपरोक्तः शब्दैनरत्नम् अथ शब्देभरतोव्याख्यातः । तेषुपटलेषु वाह्यादिभेदेनाधिष्ठानविशेषप्रभावात् दोषाणां लिङ्गविशेषमाह प्रथमे पटले इत्यादि । प्रथमेपटलेसर्वाण्यनारेनतुवाह्ये ०इ० विजयरक्षितः ॥ स्त्री०न० । ग्रन्थे । वृन्दे । सञ्चये । पुं० न० ग्रन्थप्रभेदे ॥ पटंविस्तारंलाति । ला० । आतोनुपेतिकः ॥ पटलुदकंवा । पटगतौबाहुः । वृषादित्वात्कलच् ॥

पटलप्रान्तम् । न० वलीकनीध्रे । परी

खी इति० परावली इतिच भाषा० ॥ पटस्य छदिषः प्रान्तम् ॥

पटली । स्त्री० छदिषि ॥ गौ० ङीष् ॥

पटवापः । पुं० अंशुकालये ॥ चूर्णविशेषे । पटस्यवासः ॥ पटोवास्यते येनवा । वास० । चु । घः ।

पटवासकः । पुं० चूर्णवि० । पिष्टातै । बुक्का इ० भा० ॥ पटोवास्यते येन । वासउपसेवायाम् । चु० । घः । स्वा० कन् ॥ पटंवासयतिवा । कर्मण्यण् । कन् ॥ ॥

पटहः । पुं० समारम्भे । आरम्भे ॥ युद्धेवाद्यमानढक्कायाम् । आडम्बरे ॥ पटहोदुन्दुभिरितिस्वामी । हिंसने ॥ पुं० । न० । आनके । ढोल इ० भा० ॥ पटंहन्ति । हन्० । अन्येभ्योपीतिडः ॥ पटेतिशब्दं जहाति । ओहाक्त्यागे । आतोनुपेतिकः ॥

पटाकः । पुं० पक्षिविशेषे ॥ पटति । पट० । पिना० काकः ॥

पटाका । स्त्री० पताकायाम् ॥ टाप् ॥ इतिशब्दरत्नावली ॥

पटालुका । स्त्री० जलौकायाम् ॥

पटि : । स्त्री० पटविशेषे ॥ वागुजौ ॥ कुम्भिकाद्रुमे ॥ इतिमेदिनी ॥

पटिका । स्त्री० वस्त्रे ॥

पटिमा । पुं० पटुतायाम् । पाटवे ॥ पटोर्भाव . । पृथ्० इमनिच् ॥

पटिष्ठ : । त्रि० पटुतमे ॥ अयमेषा

मतिशयेनपटु : । अतिशायनेतम-
विष्ठनाविति० इष्ठन् ॥

पटी । स्त्री० तिरस्करिण्याम् । यव-
निकायाम् ॥ वस्त्रविशेषे ॥ गौरा-
दित्वान्ङीष् ॥

पटीयान् । त्रि० पटुतरे ॥ अयमनयो-
रतिशयेनपटु : । द्विवचनविभज्यो
पपदेतरबीयसुनौ ॥ स्त्री० । उगित
श्चेतिङीपि० पटीयसी ॥ समर्थतरे
चिकित्स : ॥

पटीर : । पुं० पाटीरार्थेषु ॥ पटति
पटगतौ । कृशपृकटिपटिशौटिभ्य-
ईरन् ॥

पटु : । पुं० पटोले । कारवेल्ल लता
याम् ॥ कारवेल्ले ॥ चौरके ॥ पटोल
पत्रे ॥ न० । छत्रायाम् ॥ लवणे ॥
पांशुलवणे ॥ त्रि० । दक्षे ॥ चतुरे ॥
मधुरे ॥ नीरोगे । रोगविहीने ॥
तीक्ष्णे ॥ स्फुटे ॥ निर्दये ॥ निष्ठुरे ॥
धूर्ते ॥ पाटयति । पटगतौ । अन्त-
र्भा : । फलिपाटीच्छु: पटादेशश्च ॥

पटुक : । पुं० पटोले ॥

पटुतम : । त्रि० पटिष्ठे ॥ अयमेषाम-
तिशयेनपटु: । अतिशायनेतमप् ॥

पटुत्वचकम् । न० लवणालवणे ॥

पटुपत्रिका । स्त्री० क्षुद्रचञ्चुचुपे ॥

पटुपर्णिका । स्त्री० चौरिणीलवणे ॥

पटुपर्णी । स्त्री० स्वर्णक्षीर्याम् ॥ हैम
वत्याम् ॥ पटूनिपर्णान्यस्या : ॥
पाककर्णेतिङीप् ॥

पटोटजम् । न० छत्राके ॥

पटोल : । पुं० औषधि विशेषे । कर्क
शच्छदे । तिक्तके । परवर इ० पलवल
इतिचभा० ॥ पटोलं पाचनं हृद्यं
वृष्यंलघ्वग्निदीपनम् । स्निग्धोष्णं
हन्तिकासास्त्र ज्वरदोषत्रयक्रमीन् ॥
पटोलस्यभवेन्मूलं विरेचनकरंसुखा
त् । नालंश्लेष्महरंपत्रं पित्तहारिफ
लंपुन : । दोषत्रयहरंप्रोक्तं तद्वत्ति
क्तापटोलिका ॥ अपिच । पटोलप
त्रंपित्तघ्नं मूलंतस्यविरेचकम् । फलं
तस्यत्रिदोषघ्ननाडीतस्यकफापहा ॥
पटति । पट ० । अन्तर्भावितण्यर्थो
वा । कपिगडिगण्डीत्योलच् ॥ न०
वस्त्रान्तरे ॥

पटोलक : । पुं० शुक्तौ ॥

पटोलपत्रम् । न० पलवलपत्तीतिप्रसि
द्धशाके ॥ पटोलपत्रंपित्तघ्नं दीपनं
पाचनंलघु । स्निग्धं वृष्यं तथोष्णञ्च
ज्वरकासक्रमिप्रणुत् ॥

पटोलिका । स्त्री० ज्योत्स्न्याम्पचैडा
० इ० प्र०दीर्घफले । पटति । पट०
। ओलजन्तात् ० स्त्रा ० कन्० ।
टाबित्वञ्च ॥

पटोली । स्त्री० ज्योत्स्न्याम् । चर्चेडा०
पंडोल० इ० भा०प्र० दीर्घफले ॥
जातेरिति० गौरादित्वाद्वाङीष् ॥

पट्ट : । पुं० पेषणपाषाणे । शिल० इ

तिभाषा ॥ व्रणादीनांबन्धने । पट्टी हू॰ भा॰ ॥ चतुष्पथे । चौवाटा॰हू॰ भा॰ राजादिशासनवि॰ पट्टा॰हू॰ भा॰ ॥ पीठे । पट्टा इति पटड़ा॰ इतिच भा॰ ॥ फलके । ढाल॰ इ तिभाषा॰ ॥ शाकप्रभेदे ॥ कौपेये ॥ नृपादीनां किरीटविशेषे ॥

पट्टक : । पुं॰ पट्टार्थे ॥

पट्टजम् । न॰ वस्त्रान्तरे । पट्टवस्त्रे ॥

पट्टदेवी । स्त्री॰ महाराज्ञ्याम् । पटरानी॰ हू॰ भाषा॰ ॥

पट्टनम् । न॰ पत्तने ॥ पटन्तिजनायत्र पटगतौ ॥ धा॰ तनन् ॥

पट्टनी । स्त्री॰ पत्तने ॥

पट्टरञ्जम् । न॰ पतङ्गे । पतङ्ग॰ हू॰भा

पट्टरञ्जनकम् । न॰ पट्टरङ्गे ॥

पट्टलक्षणम् । न॰ नृपादीनां किरीट विशेषस्वरूपे ॥ यथा । विस्तरशोनि र्दिष्टं पट्टानां लक्षणं यदाचार्यैः । तत्सङ्क्षेपः क्रियते मयात्रसकला र्थसम्पन्नः ॥ पट्टः शुभदोराज्ञो म ध्येष्टावङ्गुलानि विस्तीर्णः । सप्तन रेन्द्र महिष्याः षड्युवराजस्य नि र्दिष्टः ॥ चतुरङ्गुल विस्तारः पट्टः सेनापते र्भवतिमध्ये । द्वेचप्रसाद पट्टः पञ्चैते कीर्तिताः पट्टाः ॥ सर्वेद्विगुणा यामा मध्यादर्द्धेन पा र्श्व विस्तीर्णाः । सर्वेच शुद्धकांचन विनिर्मिताः श्रेयसो वृद्ध्यै ॥ पञ्चै व शुभाशुभज्ञानमाह । क्रियमाणं यदिपत्रं सुखेन विस्तारमेति पट्टस्य । वृद्धिजयौ भूमिपतेस्तथा प्रजानांच सुखसम्पत् ॥ जीवितराज्य विनाशं करोति मध्ये व्रणः समुत्पन्नः । मध्ये स्फुटितस्त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः ॥ अशुभेलक्ष णे दृष्टे किञ्चुयांदित्याह । अशुभ निमित्तोत्पत्तौ शास्त्रज्ञः शान्तिमा दिशेद्राज्ञः । शस्तनिमित्तः पट्टो नृपराष्ट्रविवृद्धये भवति ॥

पट्टशाकम् । न॰ नाडीचे । नालिता शाक॰ हू॰ गौ॰ भा॰ । नालीकाशा क ॥ हू॰ दे॰ भा॰ ॥

पट्टारोहा । स्त्री॰ पट्टदेव्यां ॥ पट्टं आ रोहोयस्याः सा ॥

पट्टाढी । स्त्री॰ पट्टदेव्याम् ॥

पट्टिका । स्त्री॰ अल्पविस्तारेपट्टवस्त्र विशेषे ॥ पट्टी॰ हू॰ प्र॰ वस्त्रे ॥ भितस्थिविस्तारेवस्त्रे ॥ पट्टिकाख्य लोध्रे ॥

पट्टिकाख्य : । पुं॰ क्रमुके । रक्तलोध्रे ॥ पट्टिका आख्यायस्य ॥

पट्टिकालोध्र : । पुं॰ क्रमुके । लाचाप्र सादने । रक्तलोध्रे ॥

पट्टी । पुं॰ रक्तलोध्रे । पट्टिकाख्ये ॥ त्रि॰ । पट्टविशिष्टे ॥ पट्टोस्यास्ती ति । मतद्धनि : ॥

पट्टिल : । पुं॰ पूतिकरज्जे ॥

पट्टिश : पुं० खड्गविशेषे । अस्त्रविशेषे ॥

पट्टिस : । पुं० परशु : पट्टिशोनाम सएवचपरश्वध इतिभरत : ॥

पट्टी । स्त्री० ललाट भूषायाम् ॥ पट्टिकालोध्रे ॥ तलसारके । अश्ववक्षोबन्धनरज्जौ ॥ ग्रामवृत्तौ ॥ क्षिजस्मात्पट्टिरव्दात्ङीष् ॥

पट्टोलिका । स्त्री० व्यवस्थापत्रे ॥ पट्ट इ० भा० प्र० इ० केचित् ॥

पट्टु : । पुं० रणे ॥ भूलोके ॥ पण्यते पटगती । सर्वनिघृष्वरिष्वेति साधु : ॥

पठक: । पुं० पठनकर्त्तरि ॥ पठति । पठ० । अच् । स्वा ० क: ॥

पठनम् । न० वाचने ॥ यथा । भूतप्रेतपिशाचानांपठनादेवनाशनमिति ॥

पठमञ्जरी । स्त्री० श्रीरागस्यचतुर्थरागिण्याम् । अस्यालक्षणंयथा । वियोगिनीकान्तवितीर्णपुष्पा सर्वाङ्गम्लीवपुषातिमुग्धा । आश्वासमानाप्रियायाचसख्याविधूसराङ्गीपठमञ्जरीयमितिदामोदर: ॥

पठसमञ्जरी । स्त्री० रागिणीविशेषे ॥ इतिहलायुध : ॥

पठि : । स्त्री० पठने ॥ इ० शब्द० ॥

पठित: । त्रि० वाचिते । अधीते । कृतपाठे । यथा । मयान पठिताचण्डीस्वयानापिचिकित्सितम् । अकस्मान्नगरोपान्ते कथंधूमा यतीतिवितिरा सार्णव : ॥

पठितव्य: । त्रि० पठनीये । पाठ्ये ॥

पड्वीशशब्द : । पुं० अश्वस्य पादवन्धनरज्जौ ॥ पद्भ्यतशीला: पादा: । तेपांसंइति : पड्वी । तस्यार्ड्शो नियामक पड्वीश : वर्णविकारश्छान्दस : । सवासौशब्द श्चेतिवैदिकोयम् ॥

पण: । पुं० वराटकानांविंशतिगण्डके ॥ मूल्ये ॥ कार्षापणे ॥ ग्रामभाषा ट्रिकायाम् । विक्रय्यशाकादिमुष्टौ ॥ व्यवहारे ॥ भृतौ ॥ धने ॥ द्यूतादुत्सृष्टे ॥ इतिहेमचन्द्र: ॥ पणनम् पणस्तै ऽ भेनवापण० । नित्यंपण: परिमाणे इत्यप्पुंसीति वोधा । ग्लहे तिपतञ्जा । संज्ञापूर्वकत्वान्नवृद्धि: । गौरादिङीष् ॥ पणितव्य तुवेतने ॥ ग्लहे । पौड इतिभाषा ॥ पण्यते उत्सृज्यते । इ०स० ॥ द्यूते ॥ पणौ ग्लहो ऽस्त्यस्मिन् । अर्शआद्यच् ॥

पणग्रन्थि : । पुं० हट्टे ॥

पणनम् । न० विक्रये ॥

पणफरम् । न० लग्नाद्द्वितीय पंचमाष्टमैकादशलग्नेषु ॥

पणवन्ध : । पुं० संधौ ॥ फलसिद्धौ ॥

पणव : । पुं० वाद्यविशेषे ॥ गायन पटहे ढोलकी० इ० प्र० ॥ करताल इ० ख्याते ॥ मुखवाद्यवि० । नेपालेषुजंरेच भूकार इ० नाम्ना प्रसिद्धे द्रव्ये ॥ करतालइ० भाषा० प्र०

इत्यादौ ॥ पणं वाति० गच्छति । आत इ० क :॥ पणायति व्यनाक्त न्वोक: पणरइति स्वामी ॥

पणवा । स्त्री० पणव वादौ ॥ इतिद्वि० ॥

पणस :। पुं० पनसे । पणद्रव्ये ॥ पणायतेरस । पणाव्यवहारेस्तुतौच । वल्यविचमीत्यसच् ॥

पणाङ्गना । स्त्री० वेश्यायाम् ॥ इ० हे०

पणाया । स्त्री० क्रय विक्रयरूपे व्यवहारे ॥

पणायित: । त्रि० ईड़िते । स्तुते ॥ पणाव्यतेस्म । पण० । क्त : । आयादय आर्द्धधातुकेवा ॥

पणास्थि । न० वराटके ॥ पणस्यास्थि ॥

पणास्थिकम् । न० वराटके । कपर्दके ॥

पणि : । पुं० चौरे ॥

पणित : । त्रि० पणायिते । स्तुते ॥ पणाव्यतेस्म । पण० । क्त : । आयाभाव : ॥

पणितव्य :। त्रि० विक्रेयद्रव्ये ॥ स्तोतव्ये ॥ व्यवहार्ये ॥ पण्यते। पण०। तव्यत्तव्यानीयर : ॥

पण्ड : । पुं० क्लीबे । नपुंसके ॥ पंडाते । पडिगतौ । अच् ॥ यद्वा पणते ॥ पण० । अमन्ताड्ड : ॥ त्रि० । निष्फले ॥

पण्डक : । पुं० पण्डे ॥ भिक्षौ । परिव्राजि ॥ यथा । अद्यवाता यथा नारीतथा षोड़श वार्षिकीम् । शतवर्षांच योहृष्ट्वा निर्विकार : सपण्डक इति०॥

पण्डा । स्त्री० धियि । बुद्धौ ॥ पण्डयवेऽनया । पडि० । गुरोश्चेत्य : । टाप् । तत्त्वानुगायां बुद्धौ ॥ निर्णयात्मज्ञाने ॥

पण्डापूर्वम् । न० फलजनकापूर्वे ॥ त्रि० । तद्विशिष्टे ॥

पण्डित : । पुं० विदुषि । दोषज्ञे । सद्धायति । कवौ । धीरे । निषेवते प्रशस्तानि निन्दितानिन सेवते । अनास्तिक : श्रद्दधान एतत् पण्डित लक्षणम् ॥ पठकाः पाठकाश्चैव येचान्ये शास्त्र चिन्तका : । सर्वे व्यसिनोमूर्खाय: क्रियावान् सपण्डित इत्युक्तलक्षणं महाभारते वनपर्वण्युक्तम् ॥ सम्यग्दर्शिनि । समदर्शिनि । ज्ञानिनि विचार बन्यात्म तत्त्वज्ञानवति ॥ शास्त्रकुशले ॥ उपदिष्टार्थवहरणसमर्थे ॥ पण्डाजाता अस्य ता० । इतच् ॥ यद्वा ॥ पण्डतेऽस्मात् पडि० । गत्यर्थेसिक्त: । इट् ॥ नानाः परत्रलौकिकचिदाद्यर्थमहं तमात्पुत्रदारगृहासक्त : पण्डित : परिणीतेत्रे ॥ सिल्हके ॥

पण्डितमन्य :। त्रि० आत्मानंपण्डितंमन्यतेयस्तस्मिन् ॥

पण्डितमानी । त्रि० पण्डिताभिमानिनि ॥

पण्यम् । त्रि० विक्रेये । विक्रयक्रिया कर्मणि । पणितव्ये ॥ पण्यते । पण० अवद्यपण्य वर्य्यागर्ह्यपणितव्याऽनिरोधेष्विति साधु ॥ व्यवहर्त्तव्ये ॥ स्तुत्यर्हे ॥

पण्यवीथिका । स्त्री० विपणौ ॥ पण्या नां वीथी । स्वार्थेकन् । वाथीआवीथीइतिवजार०इतिचभाषा ॥ आपणः पण्यवीथीचद्वयंवीथीतिसंज्ञितमितिशाश्वत: ॥

पण्यवीथी । स्त्री० विपणौ । हट्टशून्ये विक्रयस्थाने ॥ क्रयविक्रयस्थाने ॥ हट्टमार्गे ॥ पण्यानांवीथी ॥

पण्यशाला । स्त्री० हट्टे । विक्रयगृहे ॥ पण्यानांशाला ॥

पण्यस्त्री । स्त्री० वेश्यायाम् ॥

पण्या । स्त्री०ज्योतिष्मत्याम् । मालकाँगणी० इ० भा० ॥ टाप् ॥

पण्याङ्गना । स्त्री० वेश्यायाम् ॥

पण्याजीवः । पुं० क्रयविक्रयिकि । वणिजि ॥ पण्यमाजीवोस्य ॥

पण्याजीवकम् । न० हट्टे ॥

पण्यान्धा । स्त्री० तृणविशेषे । कङ्गुनी पत्रायाम् ॥ दीर्घामध्यातथाक्रस्वाप ण्यान्धात्रिविधास्मृता । रसवीर्यविपाकेषुमध्यमा गुणदायिकेतिराजनिर्घण्टः ॥

पतम् । न० पत्रे ॥

पतगः । पुं० पक्षिणि ॥ पतेनपक्षेणगच्छति । गम्लृ० । ड: ।

पतगोत्तमः । पुं गरुडे ॥ पतगेषुउत्तमः ॥

पतङ्गः । पुं० शलभे ॥ शालिप्रभेदे ॥ पक्षिणि ॥ सूर्ये ॥ कन्दुके ॥ योसौत्वयावतरसरोरुहतः पतङ्गइतिलक्ष्यम् । अलमधूके ॥ पतति । पतृ० । पतेरङ्गच्पक्षिणि । बाहुलकात्पक्षान्तरेप्यङ्गच् । न० । सूते । पारदे ॥ पटरञ्जनके । वक्रम्० इ० भा० प्र० । पतङ्ग मधुरंशीतंपित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् ॥

पतङ्गिका । स्त्री० पुत्तिकायाम् । मधुमक्षिकाप्रभेदे ॥ पक्षजन्यात्पतति : स्वार्थेकन्संज्ञायांवा ॥

पतञ्चिका । स्त्री० धनुर्ज्यायाम् ॥ इ० शब्द० ॥

पतञ्जलिः । पुं० गोनर्दीये ; योगशास्त्रे । महाभाष्यकारमुनौ ॥ वररुचौ० इतिशब्दरत्नावली ॥

पतत् । पुं० खगे ॥ त्रि० । पातुकि । पतनशीले ॥ पतति । पतृ० । लट: शत्रादेश: ॥

पततपतिः । पुं० चरुडजमरुडलिङ्गत्वे । गरुडे ॥ पततां पति: ॥

पतत्रम् । न० पक्षिपक्षे । पंख० इ० भा० ॥ पतन्त्यनेनत्रायते । वैङ् । चातोनुपेतिक: ॥ पतत्यनेनवा ।

पतेर्वाहुलकादचन् ॥ पतति । पतॢ० । अमिनक्षीत्यचन् वा ॥
पतत्रिः । पुं० खंगे । पक्षिणि ॥ पतति । पतॢ० । पतेरत्रिन् ॥
पतत्री । पुं० विहंगे । पक्षिणि ॥ पतत्रमस्त्यस्य । अतइनिः ॥
पतद्ग्रहः । पुं० कटकोले । प्रतिग्राहे । प्रोगद्रे । निष्ठीवनपात्रे । पीकदानी इति भा० ॥
पतत्पतद्गृह्णाति । ग्रह० । विभाषाग्रह इतिपचेऽच् ॥ पतती ग्रह इतिवा ॥
पतनम् । न० पाते । पडना० इ० भा० ॥ यथा । पतनेः पतनेनवेदना पतनस्थान मतीवदुःसहमिति ॥ पापे ॥ यथा । अकुर्वन्विहितं कर्म निन्दितञ्चसमाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति ॥ पतेर्ल्युट् ॥
पतयालुः । त्रि० पातुके । पतनशीले ॥ पतयति ॥ पतगतौ । चु० । अदन्तः । स्पृहिगृहीत्यालुच् ॥
पतसः । पुं० पक्षिणि ॥ पक्षिविशेषे ॥ पतंगे ॥ चन्द्रे ॥ पतति । पतॢ० । अत्यविचमीत्यादिनाऽसच् ॥
पताका । स्त्री० ध्वजाञ्चले । वैजयन्त्याम् । केतने ॥ शोभमाना ध्वजाग्रेयापताकासा प्रकीर्तिता ॥ पततिपक्ष्यतेज्ञायतेयोधभेदोऽनया वा । पतॢ० । बलाकादयश्चेति साधुः ॥ ध्वजे ॥ सौभाग्ये ॥ नाटकाङ्गे ॥ कीर्तौ ॥
पताकिकः । त्रि० पताकावति ॥ पताकास्त्यस्य ॥ त्री० ठन् ॥
पताकी । त्रि० पताकासंयुक्ते । वैजयन्तिके ॥ पताकास्त्यस्मिन्नी० इनिः । रिष्टारिष्ट बोधके ज्योतिर्विदां चक्रविशेषे ॥
पताकिनी । स्त्री० सेनायाम् ॥ नान्तलक्षणोङीप् ॥
पतिः । पुं० कान्ते । धवे । प्रिये । भर्त्तरि । विधिनापाणिग्राहके । भर्तार० इ० भा० ॥ अनुकूल दक्षिणधृष्टशठभेदात् पतिश्चतुर्विधः ॥ परमेश्वरे ॥ यथा । सर्वपतिः स्यादकुतोभयः स्वयम् समन्ततः माति भयातुरंजनम् । सएवएवेतरथामिथोभयंनैवात्मलाभादधि मन्यतेपरमिति ॥ मूले ॥ गतौ ॥ त्रि० । ईशे ॥ स्वामिनि ॥ पाति । पारक्षणे । पातेर्डतिः ॥
पतिम्वरा । स्त्री० स्वयम्वरायाम् । स्वेच्छया पतिकृति कन्यायाम् ॥ पतिं वृणोति । वृञ० । संज्ञायांभृतवृजीत्यादिना खचिपूर्वं पदस्यमुम् ॥ पतिंवृणोतीवा । वृद्धसक्ताती ॥ कृष्णजीरके ॥ इ० श० चं० ॥

पतिघ्नी । स्त्री॰ पाणिरेखाविशेषे ॥ पतिं हन्ति । हन॰ । अमनुष्यकर्तृके चेतिटक् ॥ स्वामिहन्त्र्याम् ॥ लक्षणे जायापत्योष्टक् । उपधालोपः कुत्वम् ॥

पतितः । त्रि॰ महापातकिनि । स्वधर्मच्युते । पातित्यविशिष्टे ॥ स्वधर्मंयः समुच्छिद्य परधर्मंसमाश्रयेत् । अनापदि स विद्वद्भिः पतितः परिकीर्त्तितः ॥ गलिते । पतनाश्रये । प्रस्कन्ने । पद्मा॰ इ॰ भा॰ ॥ पत्लृ॰ । क्तः । द्वितीयाश्रितातीतपतित इतिनिपातनादिट् ॥ पतितागुरवस्त्याज्या नतुमाताकदाचन । गर्भधारण पोषाभ्यां तेभ्यो माता गरीयसी ॥

1 पतिदेवता । स्त्री॰ पतिव्रतायाम् ॥ पतिरेव देवतायस्याः ॥

पतिवान्धवः । पुं॰ पत्युर्मातृ प्रभृतिषु ॥ यथा । पत्युर्माता पिताभ्राता पत्युर्भ्रातुः स्वसुः सुता । पत्युः पितुः सोदराश्च विज्ञेयाः पतिवान्धवाः ॥ इतिमहानिर्वाणतन्त्रम् ।

पतिवत्नी । स्त्री॰ सधवायाम् । सभर्तृकायाम् ॥ पतिर्विद्यते यस्याः । मतुप् । अन्तर्वत्पतिवतोर्नुगित्यनेन निपातनात् वत्वं नुगागम विधानञ्च । ततस्त्रियां ङीप् ॥

पतिव्रता । स्त्री॰ सुचरित्रायाम् । सत्याम् । साध्व्याम् । पतिशुश्रूषा व्रतायाम् ॥ पत्यौव्रतं नियमोऽस्याः । पतिव्रतमस्यास्तिवा । पतिशब्दः पतिसेवायां लाक्षणिकः ॥ यथा । आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृतेम्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥ अपिच । सुप्ते पश्चाच्छयाशेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते साध्वीज्ञेया पतिव्रतेति ॥ धर्मार्थकामेषु मनोवाक् काय कर्मभिः पतिरेव मया परिचरणीय इति व्रतंयस्याःसा ॥

पत्तेरः । पुं॰ खगे ॥ पक्षिणि ॥ त्रि॰ । गन्तरि । गमनशीले ॥ पतति । पत् लृ॰ । पतिकठिकुठीत्येरन् ॥

पत्तङ्गम् । न॰ रक्तचन्दने ॥ पक्षम्॰ इ॰ भा॰ प्र॰वृषवि॰ ॥ पतङ्गे । रक्तकाष्ठे । सुरङ्गदे ॥ पत्तङ्गम्नुरक्तसारं सुरङ्गं रञ्जनं तथा । पटरञ्जन माख्यातं पत्तूरंचकुचन्दनम् ॥ पत्तङ्गं मधुरंशीतं पित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्ज्ञेयंविशेषाद्दाहनाशनम् ॥

पत्तनम् । न॰ नगरे । पुटभेदने ॥ पत्तन्तिजनायत्र ॥ पत्लृ॰ । विपतिभ्यां तनन् ॥ यत्रराजातत्परिचारकाश्च तिष्ठन्तितत्पत्तनम् ॥ महत्यांपुर्याम् ॥ मृदङ्गे ॥

पत्तनवणिक् । पुं॰ स्वाध्यायिनि । नगरवणिजि ॥ इतित्रिकाण्डशेषः । पत्त

नस्यवणिक् ॥

पत्तनम् । न० अधनदुग्धे ॥ इति प्राप्तकशब्दाम्बुधिः ॥

पत्तिः । पुं० पदगे । पदातिके ॥ भ्यते । पद० । बाहुलकात्तिः । क्तिज्वा ॥ वीरसार्थे ॥ चतुर्मासिकस्य चतुर्थभेदे ॥ स्त्री० । गतौ ॥ सेनाविशेषे ॥ एकेभैकरथात्यश्वापत्तिः पंचपदातिभिस्त्युक्ते : ॥ अपिच । एको रथोगजश्चैकोनरा : पंचपदातयः । चयस्तुरगास्तत्ज्ञैः पत्तिरित्यभिधीयते ॥ समस्तसङ्ख्यया पत्त्वा दशते परिकीर्त्तिता : ॥ पततिपद्यतेवा पत्छ० । क्तिन् ॥ पद्यते, पद० स्त्रियांक्तिन् । क्तिजुवा ॥

पत्तिकः । पुं० पत्तिपतौ ॥ हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्यः सपत्तिकउच्यते ॥

पत्तिसंहतिः । स्त्री० पादाते । पत्तीनां संहति : ॥

पत्तूरः । पु० शालिञ्चशाके । लोहमारके ॥ म० । पत्तङ्गे । कुचन्दने ॥

पत्नी । स्त्री० द्वितीयायाम् । पाणिगृहीत्याम् । सहधर्मिण्याम् ॥ पतिव्रता रूपवती स्वाचारासंयतेन्द्रिया । पत्नीयदातदावेहि नाल्पस्यतपसःफलम् ॥ पत्युर्यज्ञसंयोगो ययादम्पत्योः सहाधिकारात् पत्युर्नीयज्ञसंयोगे० इ० नकारान्ता देशोङीप्च ॥

सर्वावयवसंपूर्णा सुहृत्तामुद्वहेन्नरः । क्रयक्रीताचयानारी पत्नीसानविधीयते ॥

पत्नीसंयाजः । पुं० यागविशेषे ॥

पत्न्याटः । पुं० वासागारे । भोगगृहे । निष्कुटे ॥ इ० चि० शे० ॥

पत्मा । पुं० अन्तरीक्षे ॥ पतन्ति पक्षिणोऽस्मिन् । अन्येभ्यो० इ० पततेर्मनिन् ॥

पत्रम् । पुं०। न० अश्वादिवाहने । यानमात्रे ॥ पलाशे । पर्णे । दले ॥ शरपक्षे ॥ पक्षिपक्षे ॥ छुर्याम् ॥ पतन्त्यनेनेत्यर्थे दामनीशसित्यादिनाकरणेष्ट्रन् ॥ पततिपरा । पत्छ० । सर्वधातुभ्य : ष्ट्रन् ॥ तेजपत्रे । तमालपत्रे । पत्रके । लेखनाधारे । पत्रा० इ० भा० ॥ यथा । धातुमासिकेतुसमाप्ते भ्रान्ति : सञ्जायतेयत : । धातुन्तराणि सृष्टानि पत्रारूढान्यत : पुरा ॥ धातुमय पत्राकृति द्रव्ये । पत्तर० इ० भा० ॥ दूरदेशस्य सुहृदादीनां वार्ताबोधकलिपिविशेषे । चिठ्ठी० पत्री० इ० भा० ॥ अथ पत्ररञ्जनम् । सुवर्णरूप्य रङ्गाद्यै रञ्जयेत् पत्रमुत्तमम् । सामान्योत्तम मध्यानां पत्ररञ्जनमीरितम् ॥ अथ पत्रप्रमाणम् । षडङ्गुलाधिकं हस्तं पत्रमुत्तममीरितम् । मध्यमं हस्तमात्रं स्यात् सा

मान्यं मुद्रिहीनकम् ॥ अथ पत्रम
द्रप्रकार : । पत्रन्तु त्रिगुणी कृत्य
ऊर्द्ध्वे तु द्विगुणं त्यजेत् । शेषभागे
लिखेद्वर्णान् गद्यपद्यादि संयुतान्
॥ अथ पत्रस्वरचनक्रम : । राजले
खकमाहूय नृपो ब्रूयात् प्रयत्नतः ।
पत्रं कुरुयथाऽयोग्यं गद्यपद्यादिसंयु
तम् ॥ पण्डितद्वय मानीय लेख
कोरहसिस्थित : । यथायोग्यानु
सारेणपत्रं कुर्यात् मनोरमम् ॥ द्विन
द्वयंत्रयंचापि विचार्यपण्डितैनवै । स्व
भक्तिर्दूपणंज्ञात्वा विलिखेत्पत्रपुस्त
के ॥ सामान्यपत्रं संलिख्य रहसिश्राव
येन्नृपम् । नृपाज्ञयाशुभेपत्रे विलि
खेद्राजलेखकः ॥ अथ लेखनप्रका
र : । अङ्कुशं प्रथमं दद्यात् मङ्ग
लार्थं विचक्षण : । मध्ये बिंदु समा
युक्त मध : सप्ताङ्क संयुतम् ॥
तदूर्ध्व : स्वस्ति विन्यस्य ततोगद्यं
सुशोभनम् । तत : श्रीशब्दरूपाणि
पदन्यासक्रमंलिखेत् ॥ भाषयासंस्कृ
तेनैव कुशलंविलिखेत्सुधीः । ततः
शुभाशुभांवार्ता संस्कृतै : प्राकृतै
स्तथा ॥ तत : प्रसारसंदेशं ततोवा
र्तांनियोजयेत् । कीर्तिप्रीतियुतंपद्यं
तत : किमधिकादिकम् ॥ पत्राग्रे
पक्षशोर्ध्वंच चन्द्रमासादिसंयुतम् ।
सर्वेषामेव पत्रेषु लिखनं चैवमीरि
तम् ॥ सर्वेषामेव पत्राणां विधिंज्ञा

पत्रम्

त्वालिखेत्तु य : । स्वदेशे कीर्तिमा
प्नोति तथा देशान्तरेष्वपि ॥ एवं
शास्त्रक्रमंज्ञात्वा योलिखेत्राजपत्र
कम् । सराज मन्त्रिभि:सार्धं यश :
प्राप्नोत्यनुत्तमम् ॥ शास्त्रसन्दर्भम
ज्ञात्वा योलिखेद्राजपत्रकम् । स
राज मन्त्रिभि : सार्द्धं दुर्यशोमवाप्नुयात्
प्नुयात् ॥ ॥ अथ पत्रनयनक्रमः ।
राजपत्रं नयेन्मूर्ध्नि ललाटेमन्त्रिणां
मतम् । गुरुपत्रं नयेन्मूर्ध्नि ब्राह्मणा
नांतथैवच ॥ यतिसन्न्यासिनांचै
व स्वामिनस्तथैवच । सोदरेणैव
तेन तथासूत्रं निधारयेत् ॥ भार्यापु
त्रसमित्रस्य हृदयेधारयेत्सुधी : ।
प्रवीराणांकण्ठदेशे पत्रधारणमीरि
तम् ॥ एतेषांचैवपत्राणा मुक्तंधार
णलक्षणम् । अन्येषामपिपत्राणां नि
यमोनात्रदर्शित : ॥
अथपत्रपठनप्रकार : । पत्रं धृत्वान
मस्कृत्य नृपाग्रेस्थापयेत्सुधी : । द्
विजार्थे वासदसि नृपाग्रेराजलेख :
। पत्रं वितत्यसदसि द्विवारंमनसा
पठेत् । स्फुटंपश्चात्प्रवक्तव्यसद्योभो
राजलेखक : ॥ रहसिश्रावयेत्पत्रं
शुभंचायदिवाऽशुभम् । पत्रंश्रुत्वावि
दित्वार्थं सभायांश्रावयेत्तत : ॥
रहस्यपत्रं रहसि नृपाग्रेश्रावयेत्द्विजः
। अशुभंनैवसदसि शुभंपत्रं नृपाज्ञ
या ॥ एवंक्रमेणपत्रार्थं श्रावयित्वा

पत्रम्

द्विजोत्तम : ॥ नृपते : सन्निधौस्थि
त्वा नृपाज्ञामनुवर्त्तते ॥
अथ पत्रचिह्नानि । ऊर्द्ध्वं षडङ्गुलं
त्यक्त्वा वर्त्तुलं चन्द्रबिम्बवत् । कस्तूरी
कुङ्कुमैः कुर्यात् राजपत्रं सुचिह्नितम् ॥
मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्द
नैः । गुरूणां चन्दनेनैव सिंदूरेणैव
स्वामिनः ॥ भार्यायाश्चाप्यलक्तेन च
मदनैः पितृपुत्रयोः । सन्यासिनां चन्द
नेन यतीनां कुङ्कुमेन च ॥ रक्तचन्दन
पंकेन भृत्यस्य समुदीरितम् ॥ श्रोचि
तेनैव शत्रूणां पत्रचिह्नं प्रकल्पयेत् ॥
एतेषां चैव सर्वेषां यथायोग्यानुसार
तः । पत्रस्योर्द्ध्वं तु मतिमान् कुर्यात्
चिह्नं सुवर्त्तुलम् ॥ अथ राजपत्रस्य को
णच्छेदनप्रकारः । दक्षिणे पत्रकोणस्य
चाधस्ताच्छेदयेत् सुधीः ॥ एकाङ्गुलप्र
माणेन राजपत्रस्य वै वहि ॥ अथ राज
पत्रादि: पदन्यासः । महाराजाधिरा
जस्य दानशौण्डं तथैव च । तथा सच्चरि
तयोश्च कल्पवृक्षादिकं न्यसेत् ॥ य
थायोग्यानुसारेण तथैव गुणभेदतः ।
राजपत्रेषु सर्वेषु पदन्यासक्रमविद्धि ॥
अथ मन्त्रिपत्रस्य । प्रवरं गुणभेदेन त
थासच्चरितादिकम् । विन्यस्य विलि
खेत् प्राज्ञो मन्त्रिपत्रे पदक्रमम् ॥ अथ
पण्डितस्य । सद्भावहृद्वन्दितपदं शा
स्त्रार्थनिपुणादिकम् । पण्डितानां च
पत्रेषु विलिखेद्वै पदक्रमम् ॥ अथ

पत्रम्

गुरुपत्रस्य । साङ्ख्यसिद्धान्तनिपुणं सन
मस्कारकं पदम् । विन्यस्य विलिखेत्
प्राज्ञो गुरुपत्रे पदक्रमम् ॥ ० ॥ अथ
स्वामिपत्रस्य । प्रवर्यं सनमस्कारं प्रा
णप्रियादिकं पदम् । विन्यस्य विलिखे
द्धीमान् स्वामिपत्रे पदक्रमम् ॥ ०
अथ भार्या पत्रस्य । प्राण प्रियापदं
साध्वी तथा सच्चरितादिकम् । भार्या
पत्रे लिखेद् विद्वान् पदक्रममनुत्तम
म् ॥ ० ॥ अथ पुत्रस्य प्राणपुत्रपदं
तद्वत्तथा सच्चरितादिकम् । भार्यैव
चनसंयुक्तं पुत्रपत्रे पदक्रमम् ॥
। अथ पितृपत्रस्य । प्रभुवर्यं नमस्कारं
तथा सच्चरितादिकम् । विन्यस्य वि
लिखेत् पुत्र : पितृपत्रे पदक्रमम् ॥
अथ सन्न्यासियतिपत्रस्य । सर्वथा
क्षाविनिर्मुक्तं सर्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्च पद
क्रमम् ॥ सामान्यस्य । सामान्य
भृत्य शत्रूणां विनियोज्याशुकां प्रति । य
स्यावशेषितपदं छागतुल्यादिकं तथा
॥ एतेषामेव पत्रेषु यथायोग्यानुसा
रत : । विन्यस्य विलिखेत् प्राज्ञ :
पदक्रममनुत्तमम् ॥ अथ श्रीशब्द
विन्यास सङ्ख्या षड्गुरोः स्वामि
नः पञ्च द्वे भृत्ये चतुरो रिपौ ।
श्रीशब्दानां च मित्रे एकैकं पुत्रभा
र्ययो : ॥ अथ राज्ञ : प्रशस्ति : । स्व
स्तिश्रीर्वा च चंचूडामणि राजिराचि

पत्रम्

चुम्बितचन्द्रचूडचरणनखेन्दुवृन्दच
न्द्रिकासंदोहास्वादचतुरचेतश्चकोरव
रविषमसमरसञ्चरत्प्रबलतरतुरगखु
रपुटपटलदलितभूपृष्ठोत्थितद्भूयिष्ठ
धूलिधाराधूसरितसकलहरिदन्तरप्र
चण्डभुजदण्डभ्राजमानखरतरासि
विलासितप्रत्यर्थिपृथ्वीपतिसार्थप्रा
र्थितानुकम्पासुधासम्पातानवरतवि
द्दारिद्र्यविद्रावणद्रविणराशिवि
श्राणनसमुपार्जितोर्जितयशोमराला
वलिकवलितवलिदधीचिसञ्चितोय
श्रीमद्वालजालभूपालकुलतिलकश्री
युतमहाराजाधिराजेषु ॥ १ ॥
स्वस्तिप्रचण्डदोर्दण्डखण्डखण्डिता
रिमण्डलमुण्डोन्मुक्तमुक्तावलीमंडि
तसङ्ग्रामाङ्गनरङ्गमाणानेकवारण
वाणादिनायकांडमञ्जतरनक्रचक्रच
ङ्क्रमणदुरतिक्रमणीयापगापतिप्रभू
तयशश्चन्द्रचन्द्रिकाधौतविद्योतिता
खिलजगन्मण्डलविविधद्रविणार्पणास
न्तोषितसूरिसंमूहस्तूयमानावदात
कीर्तिनर्तकीनर्तनलीलावलेपितगी
तिधुरीणोर्वश्यादिवेश्याजनसविला
सगीयमानगुणश्रवणान्दोलिताखंड
श्रवणकुंडलपरितःप्रसर्पितप्रतापात
पनोतापितारातिसमध्यासितनि
कुञ्जकुञ्जप्रसूनसौन्दर्यगाथामुदितश्री
मन्नारायणचरणकिङ्करश्रीयुतमहारा
जदानशौण्डेषु ॥ २ ॥

पत्रम्

अथमन्त्रिप्रशस्तिः । स्वस्तिश्रीमत्स
मस्तसामन्तसेवक निर्वाहकेषु को
शगोकृषिकृषीवल गजवाजिगृहपरि
वारहर्षहेतुनीतिसेतुरक्षणनिपुणेषु
अस्मद्विश्वासैकनिकेतनेषु श्रीश्रीमन्त्रि
प्रवरेषु आशीराशिनिवेदनपूर्वोऽयं
वर्णभूतोऽत्रत्यं भव्यमावेदयन् तत्र
त्यं भव्यसव्याहृत मनुदिनमनुचर्यं
पृच्छतिस्म ॥ ॥
अथगुरुप्रशस्तिः । स्वस्तिश्रीनाराय
णपदपाथोरुहनिस्सरन् मकरन्दमधु
पायमानमानसेषु । विविधविद्या
विद्योतिताखिलगुणगणा लंकृत
वेदवेदाङ्ग पारग [illegible] स्वाश्रमोचिताचार
सम्पन्नपरमहंसपरिव्राज[illegible]काचार्यसेव्य
मान श्रीगोविन्दस्वरूपगुरुचरणारवि
न्देषु कोटिशः प्रणामाः ॥
अथभार्यायाः स्वामिप्रशस्तिः । स्व[illegible]
श्रीमदुद्दाम प्रेमभूषिताखण्डा
दिभक्तजनेषु । कार्ययोरधिष्ठानेषु ।
नेत्रयोरधिदैवतेषु । कामसुखपरि
णामेषु । चतुर्वर्गप्रदायकेषु । स
मावरूपेषु । श्रीमत् स्वामिचरणा
रविंदेषु । गोविंदकुंवेंरिरायाः
शङ्करस्य गिरिजायाः महेन्द्र इव
पुलोमजायाः प्रतिदिनं वर्द्धमाना
समाराधना प्रणामपूर्वमास्ताम् ॥
० ॥ अथभ[illegible]प्रशस्तिः ।
स्व[illegible]

पत्रम्

मूर्त्तौप्रियतमायां नेत्रयुग्मस्यकनी
निकायामिव चन्द्रस्यचन्द्रिकायामिव
कमलाकरस्य कमलिन्यामिव पथि
कस्य छायायामिवतृषातुरस्य शीत
लाम्बुधारायामिव ममसप्रेमनिवे
दयन्ती पत्नीशुभाशीराशीन् विवेद
यतुसर्वदा ॥ ७ ॥ अथपुत्रस्यपितरं
प्रतिप्रशस्तिः । स्वस्तिश्रीमदभिन
वपरशंसद्वित्तचित्तस्वीयानुरागा
नुरञ्जितानुगृहीतस्वपक्षवर्गेषु ।
निजचरणसरोजरंजितपरागसंरक्षा
स्वदादि भालस्थलविशालभाग्य सं
भावुकेषु । श्रीयुतपितृचरण सरो
रुहेषु । अकिञ्चनकरकिंकरस्यमम
अशक्य समुपुटस्यावनीपृष्ठलग्नाः
साष्टाङ्गप्रणामाः सहस्रमवसं वि
ज्ञाप्यन्त ॥ ८ ॥ अथपितुः पुत्रं
प्रति प्रशस्तिः । सुस्तिश्री विश्वे
श्वरचरणसरोरुहानुग्रहसमासादि
तातिविस्तृतानवद्यविद्याविलासपी
यूषपरम्पराभावुकानुपममाधुरीधु
रीणविविधगुणालङ्कृतनिजवंशा
वतंससकलविश्वासनिधाननिजकु
लपवित्रीकृतात्मप्रायेषु । श्रीयुत
शुद्धाचारपरिपूरितपुत्रेषुशुभाशिषां
राशयः सन्तुविज्ञाप्यञ्च ॥ ९ ॥ अथ
सन्न्यासियतिप्रशस्तिः । सुस्तिश्री
मत्परमहंसपरिव्राजकाचार्यकरख-
निपुणतामराङ्मुखेषु । विषमविष

पत्रम्

यदोषदर्शनदूषितप्रपञ्चरचनाविभा
वेषु । वेदवेदान्तसाङ्ख्यसिद्धान्त
वद्वदेवप्रकृतिपुरुषविवेकज्ञानशीले
षु । सङ्ख्यावन्मुख्यवन्दितचरणा
रविन्दस्वाश्रमोचिताचारपरिपालन
पवित्रीकृतधरित्रीतलेषु । सकलभू
देवपूजितश्रीयुतगोस्वामिचरणारवि
न्देषु । ममावनीसंलग्नसाष्टाङ्गप्र
णामसहस्रमजस्रमोंनमोनारायणाये
तिमन्त्रेणाकलितमस्तु ॥ १० ॥ अथ
भृत्यप्रशस्तिः । स्वस्तिभगवच्चरणप
रायणसफलद्रव्याधिरत्नकोमहि
ष्यादिप्रतिपालकनिखिलवंशानुसेव
कावशंवदासुखभृत्यंप्रति ॥ ११ ॥
॥ ६ ॥ अथारिप्रशस्तिः । सुस्ति
समराङ्गनभ्रष्टप्रतिभटयशः परि
पूरितसकलसामन्तराजधानीविजृ
म्भितवीरजस्यावशेषितनिजवंशानु
रञ्जकसततपरिचरणशरणागतामुकं
प्रति ॥ १२ ॥ ६ ॥ अथविवेकिनांप्र
शस्तिः । सुस्तिश्रीभगवत्पदपङ्कज
पूजनोपर्जितपुण्यपुञ्जपवित्रीकृता
न्तः करणदिग्विलासिनीविस्तरधम्
मिल्लमिलन्मल्लीमालाकलायशोनु
वन्धिनिरवधिवसुवितरणनाधरीकृ
तसुरपुरभूमिरुहेषु । सुस्तिश्रीमत्
परमेश्वरपादपाथोरुहाम्बुदचतुर
चित्तचञ्चरीकभूवृन्दारकवृन्दानन
न्दितामितयशः पटीरपङ्कपट

लालङ्कृतदिगङ्गनागण्डस्तनतटप्र वलप्रतापौर्वखर्वीकृतप्रत्यर्थिसार्थंग वांकूपारपारेषु ॥ इतिवररुचिकृता पत्रकौमुदी ॥ ० ॥ ० ॥ ० ॥ पत्र पात्रेत्यादिलिङ्गानुशासनात्पुंस्त्वम पिज्ञेयम्

पत्रकम् । न० याताशे । तेजपत्ते । सि अपात्० इ० भा० ॥ पत्रकं मधुरं किंचित् तीक्ष्णोष्णं पिच्छलं लघु । निहन्तिकफ वातार्शो हल्लासा रुचि पीनसान् ॥ मलावल्याम् ॥ पुं० । मार्जिचपाकै ॥

पत्रकाहला । स्त्री० पत्रशब्दे । भिल्ली लायां ॥

पत्रकृच्छः । पुं० पर्णकृच्छ्रव्रते ॥ यथा । पर्णोदुम्बरराजीव बिल्वपत्र कुशोद कैः । प्रत्येकं प्रत्यहं पीतैः पर्ण कृच्छ्रउदाहृतः इति याज्ञवल्क्यः ॥ पलाशोदुम्बरारविन्दश्रीवृक्षपर्णा नामेकैकेन क्वथितमुदकं प्रत्यहंपिबे त् कुशोदकंचैकस्मिन्नहनीति पत्राह साध्यः पर्णकृच्छ्र इतिमिताक्षरा ॥

पत्रगुप्त : । पुं० स्नुहीभेदे । त्रिकण्टे ॥ ।

पत्रधना । स्त्री० सातलायाम् ॥

पत्रङ्गम् । न० पत्राङ्गे । रक्तचन्दने ॥

पत्रभङ्गार : । पुं० रायभाटी० इ०गौ ० भा० प्रसिद्धे ॥ पुरोटी ॥

पत्रणा । स्त्री० शरपत्र रचनायाम् ॥ शराणां पत्ररचना पत्रणापरिकीर्त्ति ते तिहारावली ॥

पत्रतण्डुली । स्त्री० यवतिक्तायाम् ॥

पत्रतरु : । पुं० दुर्गखदिरे ॥

पत्रलयम् । न० वर्वरादिषु ॥ वर्वरा तु लसी बिल्वं पत्रल यमुदाहृतम् ॥

पत्रदारक : । पुं० करपत्रे । क्रकचे ॥

पत्रद्रुम : । पुं० तालीदलतरौ ॥

पत्रनाडिका । स्त्री० पत्रशिरायाम् ॥

पत्रपरशु : । पुं० स्वर्णकारादिनां स्वर्णा दिच्छेदिकायाम् । व्रश्चने । छेनी इ० भाषा० ॥ पत्रमिवपरशु : ॥

पत्रपा । स्त्री० अपत्रपायाम् । लज्जाय म् ॥ इ० शब्द० ॥

पत्रपाल :। पुं० आयततायांछुरिकाया म् ॥

पत्रपाली । स्त्री० कर्त्तर्याम् । कैंची० इ० भा० ॥

पत्रपाश्या । स्त्री० सुवर्णादि रचिते ल लाटाभरणे । ललाटिकायाम् ॥ पाशा : नां समूह: पाश्या । पत्रमिवपाश्या ॥

पत्रपिशाचिका । स्त्री० टीका० इ० गौ० भा० प्र० । मूर्द्धखोले । इ० वि० जलवायाम् । खर्परे । वारिला याम् । शिरसिपलाशपत्राणां बंध ने । बंध: पलाश पत्राणां शीर्षेपत्र पिशाचिके तिहारावली ॥

पत्रपुष्प : । पुं० रक्ततुलस्याम् ॥

पत्रपुष्पक : । पुं० भूर्जपत्रे ॥

पत्रपुष्पा । स्त्री० तुलस्याम् ॥ क्षुद्रपत्र

तुलस्याम् ॥

पत्रबंधः । पुं० पुष्प रचनायाम् ॥ यथा रचनाच परिष्यन्द : पत्रबंध इति त्रयम् । पत्रभङ्ग प्रसूनादि रचनायां निगद्यते ॥ इतिशब्द रत्नावली ॥

पत्रबाल : । पुं० तुलाघटेदांड इति गौ० भा० ॥

पत्रभंगः । पुं० स्तनकपोलादौ कस्तूरिकादि रचित पत्रावल्याम् । पत्रलिखायाम् ॥

पत्रभङ्गिः । पुं० )
मालभंङ्गे ॥
पत्रभङ्गी । स्त्री० ) ॥

पत्रयौवनम् । न० नवीनपर्णे । पल्लवे किसलये ॥ नवोद्गते किसलयं किसलं पत्रयौवनम् ॥ इतिजटाधर : ॥

पत्ररथ : । पुं० गरुडे । पक्षिणि । पत्रंरथइवयस्य ॥

पत्रलम् । न० घनदधिनि इति हेमचन्द्र : ॥

पत्रलेखा । स्त्री० पत्रभंगे । स्तनादौकस्तूरिकादिनारचिते तिलकविशेषे । पत्राङ्गुल्याम् ॥ पत्राकारा लेखा । शा० ॥

पत्रवल्ली । स्त्री० पत्रभंगे । पलाशीलतायाम् ॥ रुद्रजटायाम् ॥

पत्रवाहः । पुं० वाणे । पक्षिणि ॥ त्रि० । लिपिवाहके ॥ पत्रस्यवाहोरयो मनुष्यादिर्वा । पत्रापिवहतिवा । अण् ॥

पत्रशाक : । पुं० षड्विध शाकान्तर्गत पत्रात्मकशाके ॥

पत्रशिरा । स्त्री० पत्रनाडिकायाम् । मात्रां ॥

पत्रश्रेणी । स्त्री० द्रवन्त्याम् ॥ पर्णपङ्क्त्याम् ॥

पत्रश्रेष्ठः । पुं० बिल्वे । द्रू० रा० नि० ।

पत्रसूचिः । पुं० कण्टके । श० नि०

पत्रहिमम् । न० हिमदुर्दिने ॥

पत्राख्यम् । न० तेजपत्रे । तालीश पत्रे ॥ हरितालप्रभेदे ॥ यथा ॥ स्वर्णवर्णं गुरुस्निग्धं सपत्रं चाभ्रपत्रवत् ॥ पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनं ॥

पत्राङ्गम् । न० रक्तचन्दने ॥ भूर्जे ॥ पद्मके ॥ रक्तचन्दनसदृशे काष्ठविशेषे । वक्रम् - पतङ्ग० इभा० ॥ पत्रमेवा ङ्गमस्य ॥ पत्रे पुष्पङ्गतिवा । अगिगतौ । अच् ॥

पत्राङ्गुलिः । स्त्री० भङ्ग० । स्तनकपोलादौकस्तूरिकादि रचितपत्रावल्याम् ॥ पत्रार्थमङ्गुलि : अङ्गुलिव्यापारः ॥

पत्राञ्जनम् । न० मस्यां ॥

पत्राढ्यम् । न० पिप्पलीमूले ॥ पर्वततृणे । तृणप्रिये ॥ तालीशे ॥

पत्रान्त्रम् । न० पत्राङ्गे ॥

पत्राम्ला । स्त्री० चुक्रिकायाम् । चूका०

द्रु०भा० ॥

पत्रालुः । पुं० इक्षुदर्भायाम् ॥ कासालौ ॥

पत्रावलिः । स्त्री० गैरिके । पत्रश्रेण्याम् ॥

पत्रावली । स्त्री० पत्रलेखायाम् ॥ नवदुर्गासम्प्रदानमधुमिश्रितयवचूर्णयुक्त नवाश्वत्थपत्रेषु ॥ यथा । अमायां निगिसङ्घेतु पत्रेष्वाश्वत्थसंज्ञके । क्रमात्पत्रावलीदेयं मधुनायवचूर्णकाम् ॥ देवादिसन्निधौसन्दिग्ध वस्तुनोरेकतराय धारणार्थकानाह्मस वा लक्षीरोधितसप्तसन्दे हक्षोटिलिखित पत्रसमूहे ॥

पत्राहारः । त्रि० तपोविशेषाल्लब्ध संज्ञे तापसविशेषे । दीर्घपत्राशने ॥

पत्रिका । स्त्री० लघुपत्रे । चिट्ठी इ० भा० ॥ पत्र्याम् । लिपौ ॥

पत्रिनाख्यः । पुं० कर्पूरविशेषे ॥ त्रि० पत्रिकानामके ॥

पत्रिणी । स्त्री ० पल्लवे ॥

पत्री । पुं० श्येने ॥ पत्ररथे । खगे ॥ काण्डे बाणे ॥ द्रुमे ॥ रथिके ॥ पर्वते ॥ रथे ॥ तालद्रुमे ॥ श्वेतकिकिणिकायाम् ॥ गङ्गापत्र्याम् ॥ पाठ्याम् ॥ पत्राणि संनूत्यस्यमतद्वनिठनाविती नि : ॥ पतिशयितम् ० प्रगल्भेयापत्रमस्येति वा ॥ त्रि० । पत्रयुक्ते ॥

पत्री । स्त्री० पत्रे ॥ लिपौ ॥ यथा । चन्मपत्री ॥

पत्रोपस्करः । पुं० कासमर्दे ॥

पत्रोर्णः । पुं० शोणके । स्योनाकवृक्षे । अरलू० इ०भा० ॥ न० । धौतकौषेयवाससि । मुकटा० इ०भा० ॥ पत्रे ऊर्णाऽस्य । पत्रेषुकृमिजातोर्णवत्तन्तु वाहिपत्रेषुकृमिभिरूर्णायाः कृतत्वात् । पत्रोर्णाऽस्त्यच । अर्शआद्यच् ॥

पत्सलः । पुं० पथि ॥ पतति । पत्लृ० पतेरथलक्०सरः ॥

पथः । पुं० मार्गे ॥ पथति । पथेगतौ । प० अच् । वाट: पथश्चमार्गश्चेतिस भूतिचन्द्रपुरुषोत्तमौ । पथः पथीति द्विरूपेषुविश्वश्च ॥

पथकः । पुं० पथिकुशले ॥ तत्रकुशलःपथ इतिवुन् ॥

पथरथः । पुं । अध्वरथे ॥

पथिकः । त्रि० अध्वनीने । अध्वगे ॥ पन्थानंगच्छति । पथःष्कन् ॥

पथिकसन्तति : स्त्री० )
पथिकसंहति : स्त्री० ) द्वयौ । पथिक समूहे ॥

पथिका । स्त्री० कपिलद्राक्षायाम् ॥

पथिकी । स्त्री ० अध्वगायाम् ॥ पन्थानं गच्छति । पथःष्कन् । षित्वात् ङीष् ॥

पथिद्रुमः । पुं० श्वेतखदिरे ॥

पंथाः । पुं ० अयने । वर्त्मनि । मार्गे । अध्वनि ॥ शाविमावय पन्थानौयत्र

वेदाः प्रतिष्ठिता : । प्रवृत्तिलक्षणो धर्मोनिवृत्तीचविभावित : ॥ पथंते ऽनेन । पथि० । पथिमथिभ्यामिनिः ॥ पतन्त्यनेनवा। पतेःस्थश्चेतिइनिः । थान्तादेशश्च ॥ पन्थादेयोत्राह्मणायस्त्रियैराज्ञे ह्यचक्षुषे । वृद्धायभारयुक्तायरोगिणेदुर्बलायच ॥ यथाह मनुः । चक्रिणोदशमीस्थस्यरोगिणोभारिणःस्त्रियाः । स्नातकस्यचराज्ञश्च पन्थादेयो वरस्यच ॥ तेषान्तु समवेतानांमान्यौ स्नातक पार्थिवौ । राजस्नातकयोश्चैव स्नातको नृपमानभा गिति ॥ गमनगुणाः । पन्थामेदः कफस्थौल्यसौकुमार्यविनाशनः । यतुचङ्क्रमणंनातिदेहपीडाकरंभवेत् ॥ तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ उपाये॥ यथा । एषपन्था अमृतत्वप्राप्तये यदेतदात्मज्ञानमिति ॥

पथिप्रज्ञः ॥ पुं० मार्गाभिज्ञे ॥ पन्थानम् प्रजानाति । प्रेहाज्ज्ञस्तिकः ॥

पथिलः । त्रि० पथिके ॥ पन्थानोऽस्येन । पथि० । मि० इलच् ॥

पथिवाहकः । पुं० निष्ठुरे ॥ शाकुनिके ॥

पथ्यः । पुं० हरीतकीवृक्षे ॥ न० । सैन्धवे ॥ त्रि० । हिते । चिकित्सादौ हितकारके ॥ यथा । धर्मोत्ते-नाभनाग्रान्नं पयःपानंनवाःस्त्रियः । एतद्वोमानवाःपथ्यं स्निग्धमल्पञ्चभोजनम् ॥ मानवाः इतिसम्बोधनम् ॥ विनापिभेषजैर्व्याधिःपथ्यादेवनिवर्तते । नतुपथ्यविहीनस्यभेषजानांशतैरपि ॥ न० । शुभावहवचने॥ शास्त्रीयात्पथोऽनपेतः । धर्मपथ्यर्थेत्यादिनायत् ॥ भूयोपिपथ्यंवक्तव्यमेवमादृशैरतैरपि ॥

पथ्यशाकः । पुं० तण्डुलीयशाके ॥

पथ्या । स्त्री० हरीतक्याम् । अभयायाम् ॥ विजयारोहिणीचैवपूतनाचामृताभया । जीवन्तीचेतकीचेति पथ्यायाः सप्तजातयः ॥ अलाबुवृत्ता विजयावृत्तासारोहिणीस्मृता । पूतनास्थिमती सूक्ष्मा अमृतामांसला स्मृता ॥ पञ्चरेखाभयाप्रोक्ता जीवन्तीस्वर्णवर्णिनी । त्रिरेखाचेतकीज्ञेया सप्तानामियमाकृतिः ॥ विजया सर्वरोगेषु रोहिणीव्रणरोहिणी । प्रलेपेपूतनायोज्या शोधनार्थेऽमृताहिता ॥ अक्षिरोगेऽभयाशस्ता जीवन्ती सर्वरोगहृत् । चूर्णार्थेचेतकीशस्ता यथायुक्तं प्रयोजयेत् ॥ वंध्याकर्कोटक्याम् ॥ सगेवारो ॥ चिर्भिटायाम् ॥ पथोनपेता । धर्मपथ्यर्थ न्यायादनपेते०इ०यत् । टाप् । चतुर्दशाक्षरच्छन्दः प्रभेदे । यथा ॥ सजसायलोचमहगेनपथ्यामता ॥ यथा । म्यगयनृत्यसूः शमितचारावार्तस्वराः

पदार्थः

पिण्डस्य कौमार यौवनाद्यवस्था भेदेपिसएवा यमित्यभिन्न प्रत्यय निमित्ता डित्थत्वादिकाजातिर्वाच्या क्रियास्वपि जातिर्विद्यते सैवधातु वाच्या पठति पठतः पठन्तीत्यादेर भिन्नस्य प्रत्ययस्यसद्भावात् तन्निमित्तजात्य भ्युपगमः ॥ व्यक्तिवादिनस्त्वाहुः शब्दस्य व्यक्तिरेवाभिधेया जातिस्तु प्रलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशइतिकैयटः ॥ पदानां घटपटादीनां योऽर्थोऽभिधेयः पदार्थः ॥ द्रव्य गुणकर्म सामान्य विशेष समवाया भावेषु सप्तसु ॥ यथा । द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम् । समवाय स्तथा भावः पदार्थाः सप्त कीर्त्तिताः ॥ एतेवैशेषिक प्रसिद्धाः पदार्था नैयायिकानामप्य विरुद्धाः ॥ गौतमीयाः षोडश पदार्थास्तु । यथा । प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्ताऽवयव तर्कनिर्णयवादजल्प वितण्डा हेत्वाभासच्छल जाति निग्रह स्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ एषां लक्षणानि॰ यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ १ ॥ आत्मशरीरेन्द्रियार्थ बुद्धि मनः प्रवृत्तिदोषप्रेत्यभावफल दुःखापवर्गास्तु प्रमेयम् ॥ २ ॥ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपल

पदार्थः

ब्ध्यनुपलब्ध्यव्यवस्थातश्चविशेषापेक्षो विमर्शःसंशयः ॥ ३ ॥ यमर्थमधिकृत्य प्रवर्ततेतत्प्रयोजनम् ॥ ४ ॥ लौकिकपरीक्षकाणांयस्मिन्नर्थेबुद्धिसाम्यं सदृष्टान्तः ॥ ५ ॥ प्रतिज्ञा हेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ७ ॥ अविज्ञाततत्त्वेऽर्थेकारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ८ ॥ विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणंनिर्णयः ॥ ९ ॥ प्रमाणतर्कसाधनोपालम्भःसिद्धान्ताविरुद्धःपञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहोवादः ॥ १० ॥ यथोक्तोपपन्नश्छलजातिनिग्रहस्थानोपालम्भोजल्पः॥ ११ ॥ सतुप्रतिपक्षस्थापनाहीनोवितण्डा ॥ १२ ॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालात्ययापदिष्टाहेत्वाभासाः ॥ १३ ॥ वचनविघातोर्थविकल्पोपपत्त्याछलम् ॥ १४ ॥ साधर्म्यवैधर्म्याभ्यांप्रत्यवस्थानंजातिः ॥ १५ ॥ विप्रतिपत्तिरप्रतिपत्तिश्चनिग्रहस्थानमिति ॥ १६ ॥ + ॥ अनेकान्तवादिनांजीवाजीवादिसप्तसु ॥ यथा । तत्रसप्तपदार्थाः स्युर्जीवाजीवास्रवास्त्रयः । संवरो निर्जरश्चैव बन्धमोक्षावुभावपीति ॥ + ॥ शैवानांपतिपशुपाशेषु त्रिषु ॥ ■ ॥ अध्यात्मवादिनां पदार्थो द्विविधः आत्मा अनात्मा चेति । तत्रापिआत्मापिद्विविधः । ईश्वरोजी

वर्त्ते तिएतावपिशुद्धाशुद्धभेदाद्द्वि
विधौ । तत्राशुद्धो मायाविद्योपाधि
त्वेन भेदव्यवहारहेतु । शुद्धोत्व
भेदव्यवहारहेतु । अनात्मापि वि
विधः । कारण सूक्ष्म स्थूलभेदात्
एतदेव शरीरत्रय मिति व्यवह्रियते
पद्स्यार्थः पदार्थः । सद्विविधः
शाक्तिको लाक्षणिकश्चेति ॥ धर्मा
र्थकाममोक्षेषु ॥ यथा । द्वावेवस्तः
पदार्थानांद्वावेवनिधनङ्गतौ । प्रथम
श्चतुरीयश्च त्रिपुलोकेषुदुर्लभौ ।
अर्थकामौ प्रशस्तौहौ सर्वेषां सम्म
तौ प्रियौ । धर्माधर्मेति वाम्यादो
दृश्योयं महतामपि ॥ पश्चात्ताप
वचन मेतद्दृष्टासुरमर्धमुनीनाम् ॥

पदार्थाभिनयः । पुं० नृत्ये ॥ पदार्था
भिनयोनामक्ते योवाङ्गकसत्त्वजः । वृ
त्तिभरतः । सत्त्वमत्रा : करणम् ॥

पदासनम् । न० पादपीठे ॥

पदिकः । पुं० पदातौ ॥ पादाभ्यां
चरति । पर्या० इन् । ठस्येकः । वृ
त्तिभरतावितिपदादेशः ॥

पद्गः । पुं० पदातिके ॥ पद्भ्यांगच्छ
ति । गमुस्तृ० । अन्येष्वपि० डः ।
पादेनसमानार्थः पच्छब्दः ॥

पद्धतिः । स्त्री० पङ्क्तौ ॥ वर्त्मनि ।
। पथि ॥ अनुष्ठानक्रमेग्रन्थे ॥ ग्र
न्थार्थबोधकेग्रन्थे ॥ पादाभ्यांहन्यते
। हन्० । क्तिन् । हिमकापिहतिषु

चेतिपद्भावः ॥

पद्धती । स्त्री० पद्धतौ ॥ वह्वादिभ्यश्चेति
ङीष् ॥

पद्मिमम् । न० पादशीतलतायाम् ॥

पद्मः । पुं० नागराजविशेषे ॥ दाशरथौ
॥ द्वादशजिनचक्रवर्त्यन्तर्गत चक्र
वर्ति विशेषे । पद्मोत्तरात्मजे ॥
बलदेवे । रतिबन्धविशेषे ॥ यथा
हस्ताभ्याञ्च समालिङ्ग्य नारींपद्मा
सनोपरि । रमेद्गाढंसमाकृष्य ब
न्धोयंपद्मसंज्ञकः ॥ पुं० । न० । नलि
ने । अरविन्दे । कमले । तामरसे ।
राजीवे ॥ वसन्तेशीतभीतास्य कौ
किलस्यवनेरुतम् । अन्तर्जलगताः
पद्माः श्रोतुकामाइवोत्थिताइति ॥
पद्मके । हस्तिमुखबिन्दुवृन्दे । व्यूह
विशेषे । निधिप्रभेदे । दशार्बुदे
१०००००००००० पद्मकाष्ठौषधौ
॥ न० । पुष्करमूले ॥ सीसके
॥ चित्रकाव्यभेदे ॥ पद्माकाष्ठमौर
क्षिप्रसि । अर्शआद्यच् ॥ पद्मले ।
पद्० । वर्त्तिसुस्थितिमम् ॥

पद्मकम् । न० बिन्दुजालके । हस्त्या
ननादिस्थबिन्दुवृन्दे ॥ पद्मकाष्ठे ।
पद्माकइतिमानाइतिचभाषा ॥
ऋषभाद्रिसमुद्भवे पद्मदलसमानवर्णे
चन्दनविशेषे ॥ पुं० सुगंधिपुष्पे वृ
क्षविशेषे ॥ पद्मकंतुवरंतिक्तंशीतलं
वातलंलघु । विसर्पदाहविस्फोटकुष्ठ

जलदास्तडित्तुलितकांतकार्तस्वराः। जगतीरिहस्फुरितचारुचामीकराः सवितुः क्वचित् कपिशयन्तिचामी कराः ॥ * ॥ आर्याप्रभेदेपि ॥ यथा। प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तितापथ्या ॥ यथा। जय जयजगदीशविभोकेशवकंसान्तमाधवानन्त। कुरुकरुणामितिभणितिः पथ्याभवरोगदुःस्थानाम् ॥ *

पथ्यादिगुग्गुलुः। पुं० भावप्रकाशोक्तौषधविशेषे ॥

पथ्यापथ्यम्। न० रोगाणांहिताहितकारकद्रव्येषु। तत्प्रतिपादकग्रन्थे॥

पथ्यावक्त्रम्। न० विषमवृत्तविशेषे॥ यथा। युजोश्चतुर्थतोजेन पथ्यावक्त्रं प्रकीर्त्तितम् ॥ यथा। रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे। आसीद्गोपस्त्रगाक्षीणां पथ्यावक्त्रं मधुस्रुति रिति ॥

पत्०द्। पुं० चरणे। पादे॥ पदाते। पदगतौ। क्विप् ॥ स्वामीतुदान्तं नमन्यते। पद्भिस्त्यादेशविधानात् ज्ञापकात्। अन्येतुपदादेशएवायमित्याहुः। प्रभृतिग्रहणस्यप्रकारार्थत्वेनप्रसादानंतमूलेपितत्प्रवृत्तेः सम्भवात्। अतएवश्रौद्र: प्रध्वंकादोपधौ इति भाष्योदाहरणं सङ्गच्छते ॥

पद:। पुं० किरणे ॥ न० व्यवसितौ। व्यवसाये ॥ त्राणे ॥ स्थाने ॥ शास्त्रस्थितौ ॥ लक्ष्मणि। चिह्ने ॥ चङ्घ्रौ। पादे ॥ पादचिन्हे ॥ वस्तुनि ॥ अङ्के ॥ प्रदेशे ॥ श्लोकपादे ॥ वाक्ये ॥ शब्दे ॥ विभक्त्यन्ते ॥ पदंविधान्तोसुप्तिङ्भ्यामव्ययं तद्विवर्जितम् ॥ चत्वारिपदजातानिनामाख्यातउपसर्गनिपाताश्चेति नैरुक्ता:। चत्वारिपदजातानिनामाख्यातोपसर्गनिपाताश्चेतिमहाभाष्यम् ॥ भिये। व्याजे ॥ पदनीये आत्मतत्त्वे। आनन्दरूपे। ब्रह्मणि। स्वरूपे ॥ पदति प्रत्ययेयोगादिसाधनैः सर्वैर्मुनिभि:प्राप्यतेवा। पदस्थैर्ये० पदगतौवा। पचाद्यच्। भावकर्मकरणेषुवाघञ्। संज्ञापूर्वकत्वाद्वृद्ध्यभाव:। खनोघचेतिघित्करणादन्यतोप्ययमिति ज्ञापनाद्वा ॥

पदक:। पुं० पदग्रन्थाभिज्ञे ॥ पदमधीतेवेदवा। क्रमा० वुन्। त्रि० पदज्ञातरि ॥ देवपदचिह्नादियुक्तेस्वनामाप्रसिद्धेकण्ठभूषणे ॥

पदग:। पुं० पदातौ ॥ पादाभ्यां गच्छति। गमल्ट०। अन्येभ्यो०ड:। पादस्यपदाज्यातिगोपहतेष्वितिपादस्यपदइत्यदन्तादेश: ॥

पदजातम्। न० पदसमूहे। परापश्यन्तीमध्यमावैखरीरूपाणीतिवि

चरणकारा : ॥

पदनीय : । त्रि० गमनीये ॥ पदेरनी यत् ॥

पदन्यास : । पुं० गोक्षुरे ॥ पदवि न्यासे ॥

पदभञ्जनम् । न० निरुक्ते । गूढार्थपदव्याख्यायाम् ॥

पदभञ्जिका । स्त्री० पञ्जिकायाम् । व्याख्यायाम् ॥ पदानांभञ्जिका ॥

पदवाक्यप्रमाणज्ञः । त्रि०व्याकरणमीमांसातर्काभिज्ञे ॥

पदविः । स्त्री० पदव्याम् । मार्गे ॥ पदवीऽ नया । पदगतौ । पदटिभ्यामविः ॥

पदवी । स्त्री० अयने । वर्त्मनि । पथि । सृतौ ॥ कृदिकारादक्तिनः॰ ङीप् ॥

पदमाला । स्त्री०मोहनशीलायाम् विद्यायाम् ॥ इतिदेवीपुराणम् ॥

पदष्ठीवम् । न० पादौचष्ठीवन्तौच॰ तयोः ॥ अचतुरविचतुरेति निपातनात् टिलोपः पद्भावश्च ॥

पदाङ्कः । पुं० क्रमाङ्के । पादचिह्ने ॥

पदाङ्गी । स्त्री० हंसपद्याम् ॥

पदाजिः । पुं०पत्तौ । पदगे । पादातिके ॥ पादाभ्यामजति । अज० अज्यतिभ्यांपादेचेतीण् । पादस्यपदाजीतिपदादेशोऽजेर्व्यभावश्च ॥

पदातिः । पुं० पदगे । पादातिके । पत्ते ॥ पादाभ्यामतति । अत० । अज्यतिभ्यांपादेचेतीण् । पादस्यपदाज्यातिगोपहतेष्विति पदादेशः । चतुर्मांचिकसान्तिमप्रभेदे ॥

पदातिकः । पुं० पत्तौ । पदगे ॥ स्वा० कन् ॥

पदानुप्रासः । पुं० शब्दालङ्कारविशेषलाटानुप्रासे ॥ पदानामनुप्रासः ॥

पदारः । पुं० पादधूलौ ॥ पादालिन्दे ॥

पदार्थः । पुं० भावे । धर्मे । तत्त्वे । वस्तुनि ॥ ॥ किंपुनराकृतिः पदार्थं आहोस्विद्द्रव्यम् । कथंज्ञायते । उभयथाह्याचार्येणसूत्राणि प्रणीतानि । आकृतिंपदार्थं मत्वाजात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते। द्रव्यं पदार्थं मत्वा सरूपाणामेकशेष आरभ्यतेइतिभाष्यम्। तत्रजातिवादिनआहुः । जातिरेवशब्देनप्रतिपाद्यते। व्यक्तीनामानन्त्यात् सम्बन्धग्रहणासम्भवात् ॥ साजातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते । तत्र गवादयःशब्दाभिन्नद्रव्यसमवेतां जातिमभिदधति ॥ तस्यांप्रतीतायां तदावेशात्तदवच्छिन्नंद्रव्यंप्रतीयते ॥ शुक्लादयः शब्दागुणसमवेतांजातिमाचक्षते गुणेतुसत्तासम्बन्धात्प्रत्ययः । द्रव्ये सम्बन्धि सम्बन्धात् संज्ञाशब्दानामप्युत्पत्ति प्रभृत्याविनाशात्

र्श्चास्रपित्तहृत् । गर्भसंस्थापनं स च्चं वमिव्रणतृषाप्रणुत् ॥ पद्ममिव । द्रवेप्रतिकृतावितिकन् ॥

पद्मकन्दः । पुं० शालूके । पद्ममूले ॥

पद्मकर्कटी । स्त्री० पद्मबीजे ॥

पद्मकर्णिका । स्त्री० पद्मकर्णिकायाम् ॥ पद्मस्यकर्णिकातिक्ताकषाया मधुराहिमा । मुखवैशद्यकृल्लघ्वीतृष्यास्रकफपित्तनुत् ॥

पद्मकाष्ठम् । न० पद्मके । पीतके केदारजे । पाटलापुष्पसन्निभे ॥

पद्मकी । पुं० कृष्णपद्मके । भूर्जवृक्षे ॥

पद्मकेसरः । पुं० । न० किञ्जल्के ॥

पद्मखण्डम् । न० पद्मसमूहे ॥ तस्य समूहइत्यधिकारे खलगोरथादिभ्यःखण्डः ॥

पद्मगन्धि । न० पद्मके । पद्माकृतिः पाजा० इंरितभा० ॥ पद्मस्यगन्ध इवगन्धोऽस्य । उपमानाच्चेतीत्त्वम्

पद्मगर्भः । पुं० ब्रह्मणि ॥ पद्मोगर्भः जन्मकारणमस्य ॥ हरौ ॥ पद्मस्य हृदयाख्यस्यमध्येउपास्यत्वात् ॥

पद्मचारिणी । स्त्री० उत्तरापथभवस्य नामख्यातवृक्षविशेषे । पद्मया-यायाम् । अतिचरायाम् । चारिण्याम् ॥ स्थलपद्मिन्याम् ॥ पद्मचरितुशीलमस्याः । सुपीतिणिनिः ॥

पद्मजः । पुं० चतुरानने । मधुविशेषे । पद्मोजातः । जनीडः ॥



पद्मतन्तुः । पुं० मृणाले ॥

पद्मदर्शनः । पुं० श्रीवासे । धूपविशेषे ॥

पद्मनाभः । पुं० मधुरिपौ । विष्णौ ॥ पद्मं नाभौयस्य । अच्प्रत्यन्ववेत्यचाजितियोगविभागाद्च् । पद्ममिवसुवर्त्तुलानाभिरस्यवा ॥ यद्वा । पद्मस्यहृद्यपद्मस्यनाभौमध्येप्रकाशनात्

पद्मनाभः । पुं० साधुः ॥ भाविजिनविशेषे ॥

पद्मनाभिः । पुं० पद्मनाभे । विष्णौ ॥ पद्मंनाभौयस्य । अजितियोगविभागस्यासार्वत्रिकत्वाम्नाच् ॥

पद्मनालम् । न० मृणाले ॥ इतिहेमचन्द्रः ॥

पद्मपत्रम् । न० पुष्करमूले ॥ पद्मस्येवपत्रमस्य ॥ पद्मदले ॥

पद्मपर्णम् । न० पद्मपत्रे ॥

पद्मपाणिः । पुं० ब्रह्मणि ॥ सूर्ये ॥ बुद्धे ॥ त्रि० । कमलहस्ते ॥ पद्मंपाणौयस्य ॥

पद्मपुराणम् । न० पाद्मे ॥ तत्संख्या श्लोकायथा । पञ्चपञ्चाशत्साहस्रं पद्माख्यंविपुलंमतमिति ॥

पद्मपुष्पः । पुं० कर्णिकारे । पिक्षाद्भपचिणि ॥

पद्मप्रभः । पुं० वृत्तार्हद्विशेषे ॥ त्रि० । पद्मसमानप्रभायुक्ते ॥

पद्मप्रिया । स्त्री० लक्ष्म्याम् ॥ जरत्कारुमुनेःपत्न्याम् । मनसादेव्याम् ॥

पद्मानिप्रियाणियस्याः ॥

पद्मबन्धः । पुं॰ चित्रकाव्यविशेषे ॥

पद्मबन्धुः । पुं॰ सूर्य्ये । पद्मानांबन्धुः ॥ भ्रमरे ॥ पद्माबंधवोऽस्य ॥

पद्मभूः । पुं॰ ब्रह्मणि ॥

पद्ममुखः । त्रि॰ पद्मसमानमुखयुक्ते ॥

पद्ममुखी । स्त्री॰ दुरालभायाम् । फञ्जिकायाम् ॥ पद्मतुल्यास्यविशिष्टायां ॥

पद्मयोनिः । पुं॰ धातरि । द्रुहिणे । ब्रह्मणि ॥ पद्मंयोनिरुत्पत्तिस्थानंयस्य ॥

पद्मरजः । न॰ पद्मरेणौ । पद्माख्यद्रव्ये ॥

पद्मरागः । पुं॰ रक्तवर्णमणिविशेषे । शोणरत्ने । लोहितके । माणिक्ये । माणक. इ॰ भा॰ ॥ पद्मस्येवरागोऽस्य ॥ पद्मंकमन्येतिसमासः ॥ अस्योत्पत्त्यादयोयथा ॥ सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसम्भूतिः । सौगन्धिकजाभ्रमराञ्जनाब्जजम्बूरसद्युतयः ॥ कुरुविन्दभवाः शबलामन्दद्युतयश्चधातुभिर्विद्धाः । स्फटिकभवाद्युतिमन्तोनानावर्णाविशुद्धाश्च ॥ स्निग्धः प्रभानुलेपीस्वच्छोर्चिष्मानगुरुः सुसंस्थानः । अन्तः प्रभोतिरागोमणिरत्नगुणाः समस्तानाम् ॥ कलुषामन्दद्युतयोलेखाकीर्णाः सधातवः खण्डाः । दुर्विद्धानमनोज्ञाः सशर्कराश्चेति मणिदोषाः ॥ सर्वेमणेर्लक्षणम् भ्रमरशिखिकण्ठवर्णोदीपशिखासप्रभोभुजङ्गानाम् । भवतिमणिः किलमूर्द्धनियोऽनर्घ्यःसविज्ञेयः ॥ यस्तंबिभर्त्तिमनुजाधिपतिर्नतस्य दोषाभवन्तिविषरोगकृताः कदाचित् ॥ राष्ट्रेचनित्यमभिवर्षतितस्यदेवः शत्रूंश्चनाशयतितस्यमणेः प्रभावात् ॥ ६ ॥ षड्विंशतिसहस्राण्येकस्यमणेः पलप्रमाणस्य । कर्षत्रयस्यविंशतिरुपदिष्टानिपद्मरागस्य ॥ अर्द्धपलस्यद्वादशकार्षस्यैकस्यषट्सहस्राणि । यच्चाष्टमाषकधृतंतस्यसहस्रत्रयंमूल्यम् ॥ माषकचतुष्टयंदशशतक्रयंद्वौतुपञ्चशतमूल्यौ । परिकल्प्यमन्तरालेमूल्यंहीनाधिकगुणानाम् ॥ वर्णन्यूनस्यार्द्धंतेजोहीनस्यमूल्यमष्टांशम् । अल्पगुणोवहुदोषोमूल्यात् प्राप्नोतिविंशांशम् ॥ आधूम्रंव्रणबहुलंस्वल्पगुणंचाप्नुयाद्द्विशतम् । इतिपद्मरागमूल्यंपूर्वाचार्य्यैः समुद्दिष्टम् ॥ ११ ॥ इत्यवैकोलाशीसियांख्याम् ॥ विशेषोयुक्तिकल्पतरौद्रष्टव्यः ॥

पद्मलता । स्त्री॰ मृणालिन्याम ॥

पद्मलाञ्छनः । पुं॰ ब्रह्मणि । वेधसि ॥ भास्करे । रवौ ॥ धनदे ॥ राज्ञीश्वरे ॥ बुद्धभेदे । लोकेश्वरे ॥

पद्मलाञ्छना । स्त्री॰ तारायाम् ॥ लक्

पद्मा

स्याम् । श्रियाम् ॥ वाग्देवतायाम्। सरस्वत्याम् ॥ पद्मंलाञ्छनंयस्याः पद्मवर्णकम् । न० पुष्करमूले॥ त्रि० पद्मसमानवर्णवति ॥

पद्मवासा । स्त्री० लक्ष्म्याम्-॥ पद्मे वासोस्याः ॥

पद्मबीजम् । न० गालोड्ये। पद्माचे। क मलबीजइतिकमलगट्टा० इतिचभा षा ॥ पद्मस्यबीजम् ॥ पद्मबीजं हिमंस्वादुकषायंतिक्तकंगुरु ॥ विष्ट म्भिवृष्यंरक्तघ्नं गर्भसंस्थापकंपरम् ॥ कफवातकरंबल्यं ग्राहिपित्तास्रदाह नुत् ॥

पद्मबीजाभम् । न० मखान्ने । मखाना इ० भा० प्र०भा शीयफले ॥

पद्मव्यूहः । पुं० पद्माकृतौव्यूहविशेषे॥ सम्मविस्तृतपरिमण्डलो मध्येप्रविष्ट जिगीषुः पद्मव्यूहः॥ तेनराजापुरान्नि र्गच्छसर्वदा कपटनिवेशमंकुर्यात् ॥

पद्महस्ता । स्त्री० श्रियि। लक्ष्म्याम् ॥ प द्मंहस्तेयस्याः॥ त्रि० पद्मविशिष्टकरे॥

पद्मा । स्त्री० फञ्जिकायाम् । भार्ग्यादि पद्माभंपुष्पमस्त्यस्याः॥ श्रियि । रमा याम्॥ चारुण्याम्। पद्मचारुण्याम्॥ पद्मानुष्णाकटुस्तिक्ता कषायाकफवा तजित् । मूत्रकृच्छ्राश्म शूलघ्नी श्वा सकास विषापहा ॥ मनस्याम् । मनसायाम् । जरत्कारुमुनेः पत् न्याम् ॥ हर्त्रार्हन्मातरि ॥ कल्किदे

पद्मावतीका

वेनविवाहितायामृहद्रथराजकन्या याम् ॥ कुसुम्भ पुष्पे ॥ पद्ममस्त्य स्याः । अर्शआद्यच् ॥ यद्वा । पद्यते पद्० । अस्मिन्सुखिमिमन् । टाप् ॥

पद्माकरः । पुं० तडागे । कासारे। सप द्मागाधजलाशये॥ योग्यतयानिष्पद्मे चमहाजलाशये ॥ पद्मानामाकरःउ त्पत्तिस्थानम् ॥ क्वचित्पद्मशून्येपि योग्यतयाप्रयोगः ॥

पद्माक्षम् । न० पद्मबीजे॥ त्रि० । पद्म लोचने ॥

पद्माख्या । स्त्री० पद्माह्वायाम् ॥

पद्माटः । पुं० चक्रमर्द्दे । उरयाबे। पवाड० इ० भा०॥ पद्ममिवपद्मा वाद्मपत्रमूरुंवा अटति अटगतौ । कर्मण्यण् ॥

पद्मालया । स्त्री० लक्ष्म्याम् । कमला याम् ॥ पद्ममालयोऽस्याः ॥

पद्मावतिका । स्त्री० मात्रावृत्तविशेषे ॥ यथा । यदाष्टचतुष्कलगणनिर्मित पदकरपदकर्णद्विजविहिता सापद्मा वतिकाविबुध सुमहिता जगणविर हिता सुकविहिता । वृद्धयत्रवसुभु वनैर्भवति विरामः सकलामिमल फलावरदाफणिनायकपिंगलभणि त सुमहल रसिकमनः संविहितम दा ॥ यथा । विधुरेवविधुरयतिमर्म निकृन्ततिजनयतिशर्मनमर्मसदः चन्दनवन पवनोविकलयतिमनो द

जयतिमदनोद्धृदयमदः। प्रियसखि
ममनयनंपङ्कजनयनंकीर्त्तिसिन्धुर
घीरमयंयदिमिलतिविशालं भवति
तदालं विरहपयोनिधिसन्तरणम् ॥
पद्मावती। स्त्री० जरत्कारुमुनेः प
त्न्याम्। मनसादेव्याम्। नदीप्रभे
दे। पद्मा० पु० गौ० भा० ॥ पद्
मचारिण्योषधौ ॥ पद्मावतिका
वृत्तेः ॥ जयदेवकवेः पत्न्याम् ॥
पद्मावतीप्रियः। पुं० जरत्कारुमुनौ ॥
पद्मासनम्। न० योगिनामासनविशेषे
॥ यथा। वामोरूपरिदक्षिणं नियम
तः संस्थाप्य वामंतथा दक्षोरूपरि
पश्चिमेनविधिनाधृत्वाकराभ्यां धृत
म्। अङ्गुष्ठं हृदयेनिधायचिबुकंना
साग्रमालोकयेदेतद्व्याधिविकारना
शनकरंपद्मासनंप्रोच्यते इति ॥ अ-
पिच। वामोरुपरिविन्यस्तसव्यपाद
तलेशुभे। अङ्गुष्ठौचनिबध्नीयाद्धस्ता
भ्यांव्युत्क्रमात्ततः ॥ पद्मासनमि
ति प्रोक्तं योगिनां हृदयङ्गममितिदे
वीगीता ॥
पद्मासनः। पुं० ब्रह्मणि। कमला
सने ॥
पद्मासना। स्त्री० लक्ष्म्याम्। पद्म
मासनंयस्याः ॥
पद्माह्वयम्। न० पद्मके। पद्मा
ख्य० वै० सा० ॥
पद्माह्वा। स्त्री० पद्मचारिण्योष
धौ ॥
पद्मी। पुं० हस्तिनि ॥ पद्मंबिंदु
जालकमस्त्यस्य। इनिः ॥ हरौ
॥ पद्मंहस्तेऽस्य ॥
पद्मिनी। स्त्री० पद्मसङ्घाते ॥
नलिन्याम्। बिसिन्याम् ॥ मूल
नालदलोत्फुल्लफलैः समुदितापुनः
। पद्मिनीप्रोच्यतेप्राज्ञैर्बिसिन्या
दिपदास्पदम् ॥ पद्मिनीमधुरा
तिक्ता कषाया शिशिरा परा। पि
त्तकृमिशोषवान्तिभ्रान्तिसन्ताप
शोपहृत्। इतिराजनिर्घण्टोक्ता अस्
यगुणाः। अन्यत्रापि गुणायथा।
पद्मिनी शीतलागुर्वी मधुरालवणा
चसा। पित्तासृक्कफनुद्रूक्षावात
विष्टम्भकारिणी ॥ सरोरुहे ॥ सरस्या
म् ॥ पद्मयुक्तदेशे ॥ पद्मानिस
न्त्यस्य। पुं० इनिः ॥ स्त्रीविशेषे
॥ यथा। भवति कमलनेत्रा नासि
काक्षुद्ररन्ध्रा अविरलकुचयुग्मा
दीर्घकेशीकृशाङ्गी। मृदुवचनसुशीला
नृत्यगीतानुरक्ता सकलतनुसुवेशा
पद्मिनीपद्मगन्धा ॥ हस्तिन्याम्
मृणाले ॥ पद्मे ॥ सरोवरे ॥
पद्मिनीकण्टकः। पुं० पद्मकांटा
इति गौडप्रसिद्धे ॥ भावप्रकाशो
क्तक्षुद्ररोगविशेषे ॥
पद्मिनीकान्तः। पुं० रवौ ॥
पद्मिनीखण्डम्। न० पद्मिनीनां

णम् ॥ इतिराजवल्लभः ॥ काष्टके ॥ वानरविशेषे ॥ पनाय्यतेस्तूयते । पन० घात्वविचमितमीत्यादिना असच् ॥

पनसतालिका । स्त्री० पनसफले॥

पनसा । स्त्री० रोगप्रभेदे ॥ राक्षसीविशेषे ॥ वानरीविभेदे । नदीविशेषे ॥

पनसिका । स्त्री० भावप्रकाशोक्तैकर्णमध्यजातसवर्णक्षुद्ररोगविशेषे ॥

पनायित : । त्रि० श्लस्ते ॥ पनाय्यते स्म । पण । पनच । क्त : । आयादयआर्धधातुकेवा ॥

पनित : । त्रि० ईडिते । पनायिते ॥ पन० । क्त : । आयाभाव : ॥

पन्थक : । त्रि० पथिजाते ॥ पथः पन्थ चेतिवुन् ॥

पन्न : । पुं० अधोगमने । नीचैर्गतौ ॥ पनैः कृद्बकृतीतिमन् ॥ त्रि० । च्युते । गलिते । पतिते ॥ पद्यतेस्म । पद० । क्त : । गत्यर्थेति कर्त्तरिवाक्त : ॥

पन्नग : । पुं० नागेम्योभिन्नेपवनाशने । सर्पे ॥ पन्नं गच्छति । गमल्ड० सर्वत्रपन्नयोरुपसङ्ख्यानमितिडः ॥ पद्भ्यांनगच्छतीतिवाविग्रहः ॥ पद्मकाष्ठे ॥

पन्नगकेशर : । पुं० नागकेशरपुष्पे ॥ पन्नगाख्यःकेशर : ॥

पन्नगाशन : । पुं० गरुडे । वैनतेये ॥ पन्नगान्अश्नातिअश० । ल्युः ॥ पन्नगाअशनंयस्येतिवा ॥

पन्नगी । स्त्री० सर्पिण्याम् ॥ सर्पिणीक्षुपे । मनसादेव्याम् ॥

पन्नद्धा । स्त्री० चर्मपादुकायाम् ॥

पन्नद्धी । चर्मपादुकायाम् ॥ पनद्धा पनद्धी० इतिचभाषा ॥

पमी : । पुं० सोमे । चन्द्रे । सूर्ये ॥ पातिलोकमुपिबतिवा । पा० । या पो : किद्द्वेचेतिई : ॥

पपु : । पुं० पालके ॥ स्त्री० । धात्र्याम् ॥ पाति । पा० । कुर्भ्रेचेतिचकारादन्यतोपिकुर्वतीदेच ॥

पमरा । स्त्री० सत्तुकी० इ० गौ० भा० प्र० गंधद्रव्यविशेषे ॥

पम्पा । दण्डकारण्याभ्यन्तरसरोविशेषे ॥ ऋष्यमूकपर्वतसमीपवर्तिन्यां पुष्करिण्याम् ॥ यथा । पश्यलक्ष्मणपम्पायांवक : परमधार्मिकः । शनैःशनैःपदंधत्तेजीववधविशङ्कया ॥ वक: किंवर्ण्यते रामयेनाहंनिष्कुलीकृतः । सहवासी विजानाति चेष्टितंसहवासिनामिति ॥ चोडदेशस्थनदीविशेषे ॥

पय : कन्दा । स्त्री० क्षीरविदार्याम् ॥ पय : कन्दोयस्या : ।

पयःखल : । पुं० चतुष्पदपदनीयेजलाहरणार्थेचर्मपुटविशेषे । दृतौ । प

खालङ्कृतिभा० ॥
पयः पूरः । पुं० अपांसमूहे ॥
पयः प्रसादि।न० कतके।पङ्कानिर्म ली० इ० भा० ॥
पयःफेनी । स्त्री० । दुग्धफेनीक्षुपे ॥
पयश्चयः । पुं० अपांसमूहे । पूरे ॥ पय सांचयः ॥
पयः । न० क्षीरे । दुग्धे ॥ नीरे । जले ॥ पय्यते०पयतेवा । पयगतौपीङ्० पानेवा । सर्वधातुभ्यइत्यसुन् ॥
पयस्यः । पुं० मार्जारे ॥ त्रि० । पयःपान कर्त्तरि ॥ पयः पिबति । पा० । सुपीतिकः ॥
पयस्पाशम् । न० कुत्सितेपयसि ॥ याप्ये पाशप् । पाशकल्पककाम्ये ष्विति विसर्गस्सः ॥
पयस्यः । त्रि० पयोजाताद्यदध्यादौ ॥ पयोहिते ॥ पयसोविकारः । गोपय सोर्यत् ॥
पयस्या । स्त्री० दुग्धिकायाम् ॥ क्षीर काकोल्याम् ॥ स्वर्णक्षीर्याम् ॥ सूर्य वल्ल्याम् ॥ कुटुम्बिनी क्षुपे ॥ आ मिक्षायामितिहेमचन्द्र ॥
पयस्वान् । त्रि० पयस्विनि ॥ पयोस्य स्यमतुप् ॥
पयस्वला । स्त्री० छाग्याम् ॥ पयोस्य स्याम् । सन्त्रेभ्योपीतिवलः ॥
पयस्विनी । स्त्री० नद्याम् ॥ भारतवर्ष स्यविशेषनद्याम् ॥ धेनौ ॥ विभा वर्य्याम् ॥ रजन्याम् ॥ काकोल्याम् ॥ दुग्धफेन्याम् ॥ क्षीरविदार्याम् ॥ ॥ छाग्याम् ॥ जीवन्त्याम् ॥ पयो स्त्यस्याम् ॥ अस्मायामेधेतिविनिः ङीप् ॥
पयोगडः । पुं० हिमे ॥ घनोपले ॥
पयोघनः । पुं० घनोपले ॥ इ० हा० ॥
पयोजन्मा । पुं० घने । मेघे ॥ पयसोज न्मयस्मात् ॥
पयोदः । पुं० मेघे ॥ पयोददाति॥ कुदा ञ० । कः ॥
पयोदवान्तम् । न० अम्भःकणे
पयोधरः । पुं० कुचविशेषे । कोषकारे ॥ नारिकेले ॥ स्त्रीस्तने । कुचे ॥ यथा । याथांसुधामधुरबाधुर्यरसाधुरासीत् सैवालकाद्रसतामधुनाविभर्त्ति यत्रो प्रसर्पति समीरितनीति स्त स्नीमाय : पयोधरसमुन्नतिरचक्रेतु रिति ॥ कशेरुणि ॥ मेघे ॥ धर ति । धृञ्० । अच् । पयसोधरः ॥ गुरुमध्यगतचतुर्मात्रिकाप्रभेदे ॥ क र्णिकारतरौ दुरितमन्दाम्बुधिः ॥
पयोधाः । पुं० समुद्रे ॥ जलाधारे ॥ पयोदधाति । डुधाञ्० । पयसिचे ति धात्रोऽसिः ॥ मेघे ॥
पयोधिः । पुं० समुद्रे ॥ पयांसिधीयन्ते ऽत्र । डुधाञ् । कर्मण्यधिकरणेचे तिकिः ॥
पयोधिकम् । न० समुद्रफेने ॥

पयोनिधि : । पुं० समुद्रे ॥ क्षीराब्धौ ॥ पयांसिनितरांधीयन्तेऽत्र । डुधा ञ्० । घ्वधिकरणेकिः ॥

पयोमुक् । पुं० मेघे ॥ पयोमुञ्चति ॥ मुच्लृ०क्विप् ॥

पयोलता । स्त्री० क्षीरविदार्याम् । पय सीलतेव ॥

पयोव्रतः । पुं० पयोमात्रपानरूपव्रत विशेषे । हादशाहसाध्ये विष्णु व्रतवि० ॥

पयोष्णिजाता । स्त्री० सरस्वतीसरि ति ॥

पयोष्णी । स्त्री० तीर्थविशेषे ॥ विन्ध्या चलादक्षिणेप्रसिद्धायांनद्याम् ॥ पयो ष्णी सलिलंरम्यंमविघं पापनाशन म् । सर्वपापहरं सौख्यमलकान्ति प्रदंलक्ष्मितिराजनिर्घण्टः ॥

परः । पुं० देहाद्यव्यतिरिक्तात्मनि ॥ ब्र० ह्मणआयुषि ॥ यथा । कालसङ्ख्या समासिनपूर्वार्धद्वयकल्पिता । सएव स्यात्परः कालस्तस्न्तेपरिपूर्यते ॥ निजेनतस्यमानेन चायुर्वर्षशतंस्मृ तम् । तत्पराख्यंतदर्धंचपरार्धम भिधीयते ॥ कपिच । श्रौतिकल्य शतानिस्युस्तथा पद्धिर्द्विजोत्तमाः ॥ ब्रह्मणः कथितंवर्षंपराख्यंतच्छतंपद म् ॥ इ० कूर्मपुराणे ५ अध्यायः ॥ मायातीतेपरमेश्वरे ॥ न० । यथा हाविनिकार्ये ॥ न० ॥ कैवल्ये मोक्षे ॥ यथा ॥ यस्यवाङ्मनसी स्यातांसम्यक्प्रणिहितेसदा । तप स्त्यागश्चसत्यञ्चसवै परमवाप्नुयादि ति ॥ सत्तायाम् । परमात्मनि ॥ ब्रह्मणि ॥ वि० । प्रकृष्टे । श्रेष्ठे ॥ निरतिशये । उत्कृष्टे । प्रकृतिगु णासंस्पृष्टे । अप्रामाण्यशङ्काकलङ्क शून्ये ॥ यथा एकाक्षरंपरम्ब्रह्म प्राणायामःपरंतपः । सावित्र्यास्तु परंनास्तिमौनात् सत्यं विशिष्यत इतिमनुः ॥ बहुकालीने ॥ अरौ । शत्रौ ॥ दूरे । अन्यस्मिन । व्यति रिक्ते । स्वस्मादितरस्मिन् ॥ उत्तर स्मिन् ॥ विपर्सिरोषम्०पूर्वैसै०ऽमै नवा । पृ० । म० । कठोरम्० पु सीतिघोवा ॥

परःशताः । वि० शतात्परस्मिन्सङ् ख्येये । शताधिके ॥ शतात्परः । पञ्चमीतियोगविभागात्समासः । राजदन्तादिः । पारस्करादित्वात् सुट् ॥ परः शताद्यास्तेयेषांपरासङ् ख्याशतादिकात् ॥

परःसहस्राः । वि० सहस्रात्परस्मिन् । स हस्राधिके ॥ सहस्रात्परं । पञ्च मीति योगविभागात्०स०राजदन्ता दिः । पारस्० सुट् ॥

परकीयः । वि० परसम्बन्धिनि ॥ पर स्येदम् । गहादिषुकुक् जनस्यपरस्य चेतिच्छः ॥

परकीया । स्त्री॰ नायिका भेदे ॥

परकृतिः । पुं॰ पुरुषविशेषनिष्ठमिथोवि रुद्धकथने । अर्थवादविशेषे ॥

परचर्मन् । न॰ परभूमौ ॥ यथा । वृ षायेहिपरचर्मशादायातिलेचरघ्नकः । इति ॥ परपत्न्याम् ॥ परश रीरे ॥

परग्रन्थिः । पुं॰ पर्वावधौ । अङ्गुलि पर्वणि ॥ इ॰ हा॰ ॥

परच्छिद्रम् । न॰ परदोषे ॥ नोचः सर्ष पमात्राणिपरच्छिद्राणिपश्यति । आ त्मनो बिल्वतुल्यानिपश्यन्नपिनपश्य ति ॥ इ॰ ग॰ पु॰ ॥

परजातः । पुं॰कोकिले ॥ त्रि॰ । परा श्रिते । परैधिते ॥ परस्माज्जातः परपोषितत्वात् ॥

परजितः । त्रि॰ प्राप्तापराजिते ॥

परञ्जः । पुं॰ तैलयन्त्रे ॥ क्षुरिकाफ ले ॥ फेने ॥ असौ ॥

परञ्जनः । पुं॰ वरुणे ॥ इ॰तिशेष चन्द्रः ॥

परञ्जयः । पुं॰ वरुणे ॥ त्रिकाण्ड शेषः ॥ त्रि॰शत्रुजयकर्त्तरि ॥

परतन्त्रम् । न॰परकीयशास्त्रे ॥ व्यक्ते ॥ यथा । बुद्ध्यादिसकार्यैरहङ्कारं जनयितव्येप्रकृत्यापूरोऽपेक्ष्यते अन्य थाचोगासरोगालमहङ्कारंजनयितु मितिस्थितिः । एवमहङ्कारादि भिरपिस्वकार्यजनने प्रकृत्यापूरम पेक्ष्यते । तेनप्रकृतिंपरामपेक्ष्यमाणं कार्यमपि कार्योपजनने परतन्त्रं भवति । त्रि॰ । परवशे । पराधीने ॥ परस्तन्त्रंप्रधानंयस्य ॥ परेषां तन्त्रम् ॥

परतः । अ॰ परस्तादर्थे ॥ परस्मिन्पर स्मात्परस्मात्परस्याः परः परावा । पञ्चम्यागतोरसर्थोर्वा । विभाषाप रावराभ्यामित्यतसुच् । तद्धितश्चा- सर्वविभक्तिरित्यव्ययत्वम् ॥

परत्र । अ॰ परलोके ॥ परस्मिन् । स- प्तम्यास्त्रल् ॥

परत्रभीरुः । त्रि॰ धार्मिके । परकाल- भयशीले ॥

परत्वम् । न॰ परतायाम् । प्रव्यव- हारकारणे ॥ तद्द्विविधम् । दिक्- कृतङ्कालकृतञ्च । दूरस्थेदिक्कृतं परत्वम् । ज्येष्ठेकालकृतंपरत्वमि ति ॥

परदारः । पुं॰ परभार्यायाम् ॥ तद्ग- मनेदोषोयथा । परदाररतायैवपर द्रव्यहरायवै । अधोधीनरकेघान्ति पोड्यन्तेयमकिङ्करैरिति ॥

परदुःखम् । न॰ अन्यजनपीडायाम् ॥

परदेवता । स्त्री॰ परमात्मनि । परब्र- ह्मणि ॥

परद्वेषी । त्रि॰ विद्वेषके । परद्वे- ष्टरि ॥

परधर्मः । पुं॰ स्वप्रत्यविहिते ॥ पर-

स्वपरेषांवाधर्म्मः ।

परध्यानम् । न॰ ध्यानविशेषे ॥

परन्तपः । पुं॰ परतापिनि । शत्रुतापने ॥ जितेन्द्रिये ॥ परेषांकामक्रोधलोभादिशत्रूणांतापजनके । अज्ञानशत्रुदमने ॥ परंशत्रुंकामक्रोधादिरूपंशत्रुगणंशौर्य्यवलवता विवेकेनतपसाचभानुरिवतापयतीतिविग्रहेतपस्तस्माच्च दृश्यस्मात्स्व-न्तात्परिकर्मण्युपपदेद्विषत्परयोस्ता-पेरितिखच्प्रत्ययः । खच्चिद्ध्रस्वः । मुम् ॥

परन्तु । अ॰ प्रागुक्तवैपरीत्यार्थे ॥

परमपदम् । न॰ मुक्तौ ॥ श्रेष्ठस्थाने परस्वतत्पदञ्च ॥

परपाकनिवृत्तः । पुं॰ परोद्देश्यकपाकरहिते । पञ्चयज्ञाकर्त्तरि ॥ यथा । गृहीत्वाग्निंसमारोप्यपञ्चयज्ञान्न-निर्वपेत् । परपाकनिवृत्तोऽसौमुनिभिः परिकीर्तितः ॥ इतिमिताक्षरा ॥

परपाकरतः । पुं॰ परपाकरुचौ ॥ प्रातः पञ्चयज्ञान्निर्वर्त्त्यपरान्नभोजिनि ॥ यथा । पञ्चयज्ञान्स्वयंकृत्वापरान्नमुपजीवति । सततंप्रातरुत्थायपरपाकरतस्तुसः ॥ परपाकनिवृत्तस्यपरपाकरतस्यच । अपचस्यचभुक्त्वान्नंद्विजश्चान्द्रायणंचरेत् ॥ इतिमिताक्षरायांप्रायश्चित्ताध्यायः ॥

परपिण्डादः । त्रि॰ परान्ने । परान्नजीविनि ॥ परस्यपिण्डः । तमत्ति ॥ अद॰ । कर्मण्यण् ॥

परपुरुषः । पुं॰ विष्णौ ॥ परश्चासौ पुरुषश्च ॥ अन्यपुंसि ॥ उपनायके ॥

परपुष्टः । पुं॰ अलकंठे । कोकिले ॥ परेणवायसेनपुष्टः पालितः ॥ त्रि॰ । अन्यपालिते ॥ परेण पोषिते ॥

परपुष्टमहोत्सवः । पुं॰ आम्रे ॥ परपुष्टानांमहोत्सवोयस्मिन् ॥

परपुष्टमहोत्सवा । स्त्री॰ वेश्यायाम् ॥ परपुष्टे महोत्सवोयस्याः ॥

परपुष्टा । स्त्री॰ पण्याङ्गनायाम् । वारनार्य्याम् ॥ परैः पुष्टा ॥

परपूर्व्वा । स्त्री॰ पुनर्भ्वाम् । स्वैरिण्याम् । परोऽन्यःपूर्वोभर्तायस्याः सा । परपूर्वाःस्त्रियस्त्वन्याःसप्तप्रोक्तायथाक्रमम् । पुनर्भूस्त्रिविधातासां स्वैरिणीतुचतुर्विधेति नारदः । पतिंहित्वाऽपकृष्टंस्वमुत्कृष्टं यानिषेवते । निंद्यैवसाभवेल्लोकेपरपूर्व्वेतिचोच्यतेइतिमनुः ॥

परप्रतिनप्ता । स्त्री॰ (इतिहेम

परप्रपौत्रः । पुं॰ वृद्धप्रपौत्रे ॥ (चन्द्रः ॥

परभाषा । स्त्री॰ अपशब्दे । म्लेच्छिते ॥

परभागः । पुं॰ गुणोत्कर्षे ॥ सुसम्पदि ॥ शेषांशे ॥ शोभातिशये ॥

॥ परभागोभवेद्वर्णदयसंसर्गजारुचिः

परभुक्ता । स्त्री० अन्यपुरुषसंभोगविशिष्टायाम् ॥ परभुक्ताङ्गकान्ताञ्च योभुङ्क्ते सनराधमः । सपच्यते कालसूत्रे यावचन्द्रदिवाकरौ ॥ इत्यादिनाब्रह्मवैवर्तेश्रीकृष्णजन्मखण्डे १८ ५ ध्यायेविशेषोद्रष्टव्यः ॥

परभृत् । पुं० काके ॥ परंबिभर्तिडुभृञ्० । क्विप् ॥

परभृतः । पुं० कोकिले पिके ॥ परेणकाकेनभृतः ॥ त्रि० ॥ परपोषिते ॥

परम् । अ० नियोगे ॥ केवले ॥ किन्त्वर्थे ॥ श्रेयसि ॥

परमः । पुं० प्रणवे ॥ त्रि० । परे । उत्कृष्टे ॥ अवसरे ॥ प्रथमे ॥ अन्यादे ॥ प्रकृष्टे । उत्पत्तिविनाशशून्यस्वप्रकाशपरमानन्दरूपे । निरतिशयपुरुषार्थपर्यवसायिनि ॥ प्रधाने ॥ पराङ्गत्कृष्टामायस्यसः ॥

परमगतिः । स्त्री० मुक्तौ ॥ त्रि० मोक्षरीतौ ॥ यांयिप्राःसर्वतः शाखाविगुणाज्ञाननिश्चयाः । गतिगच्छन्तिसत्सम्प्राप्ताः परमांगतिमितिमोक्षधर्मः ॥

परमन्तप : । न० इन्द्रियजये ॥ मनसर्वे न्द्रियप्रापत्वैकाग्र्यंपरमंतपः । प्राणायामाज्ञामायम्यवधोविविधिधरतःकृताः । व्याहृतिप्रणवैर्युक्ता विद्येयं परमंतपः ॥ आलोचने ॥

परमपदः । पुं० न० श्रेष्ठस्थाने ॥ परदेवताचरणे ॥ पदतिज्ञानिभिः प्राप्यते इति पदः परमश्चासौपदश्चेति

परमब्रह्म । न० परमेश्वरे । नारायण ॥

परमम् । अ० अनुज्ञायाम् । अनुमतौ । शां० प० भा० ॥ परंमिमीतेमिनोतिमीनातिवा । डम् ॥

परमर्षिः । पुं० भेलाद्युषिविशेषे ॥ सप्तर्षिषु ॥

परमहंसः । पुं० आत्मा नात्मविवेकिपरिव्राजिब्राह्मणे । संवर्तकारुणिश्वेतकेतुदुर्वासाऋभुनिदाघजड़भरतदत्तात्रेयरैवतकप्रभृतौ ॥ मुखज्ञानामयंधर्मो यद्विष्णोलिङ्गधारणं । बाहुजातोरुजातानामयंधर्मो नविद्यते ॥ ० ॥ चतुर्विधायभूतेषुतुरीये ॥ यथा । चतुर्णामवधूतानां तुरीयोहंसउच्यते । त्रयोन्ये भोगयोगाढ्या मुक्ताः सर्वेशिवोपमाः ॥ हंसोनकुर्यात् स्त्रीसङ्गनवाधातुपरिग्रहम् । प्रारब्धमश्नन्विहरेद्विविधविधिवर्जितः ॥ लक्षितस्तुजातिचिह्नानि वाश्रमादिसमेधिनाम् । तुरीयोविचरेत्पृथ्व्यां निःसंकल्पोनिरुद्यमः । सदात्मध्यानसंतुष्टः शोकमोहविवर्जितः । निर्निकेतस्तितिक्षुः स्यान्निःशंकोनिरुपद्रवः ॥ नार्चनंभक्षणेयानंनतत्र्यानधारणम् :

सोविरक्तोनिर्द्वन्द्वोहंसाचारपरोयति
रिति महानिर्वाणतन्त्रम् ॥

**परमगति :** । स्त्री० साक्षान्मोक्षेइति
॥ यथा । कृपयपरमि: कर्मभिस्तर
न्तुपरमागतिरिति ॥

**परमाणु :** । पुं० परिमण्डले । परमोणो
। यतोऽणुर्नास्ति सपरमाणुरित्यर्थ:
॥ जालान्तरगतेभानौयत्सूक्ष्मंदृश्य
तेरज : । तस्य : षष्ठकोभाग: पर
माणु : सउच्यते ॥ * । सोपाधि
कादिमतेचतुष्टयेचपृथिव्यादिपरमा
णव: खरस्नेहोष्णेरणस्वभावा: । तथा
हि कठिनस्वभावा:पृथिवीपरमाणव:
। स्नेहस्वभावा:अपांपरमाणव: । उष्ण
स्वभावास्तेजस : परमाणव: । ईर
णस्वभावावायुपरमाणव : इति ॥
परमस्यासावणुश्च ॥ * । पृथिव्या
दिभूतचतुष्टयानांद्व्यणुकानामवय
व : परमाणु : । सचनित्योनिरवय
वश्च : सूक्ष्ममपिनास्ति । यथा ।
नित्याऽनित्याचसाद्वेधा नित्यास्यात्
णुलक्षणा । अनित्यातुतदन्यास्यात्
सैवावयवयोगिनी ॥ पारिमाण्डल्य
नामकतत्परिमाणन्तु नकस्यापिक
रणम् । यथा । पारिमाण्डल्यभिन्ना
नांकारणत्वमुदाहृतम् ॥ जलादिप
रमाणुरूपस्यनित्यत्वम् । पार्थिवपर
माणुरूपस्याऽनित्यत्वम् । यथा ।
जलादिपरमाणौतन्नित्यमन्यत्सहेतु

कम् । इ० भा० प० ॥ तैरेवपरमा
णुभिराद्युपादानैर्द्व्यणुकत्रसरेण्वा
दिक्रमेणस्थूलचितिजलतेजोमरुत:
सृजतिपरमेश्वर : । यथा । अयोन
न्तंपरमाणुकर्मतथाचसर्गाद्यकालीनं
द्व्यणुकारम्भकपरमाणुकर्मयत्नजन्य
प्रयत्नवदात्मसंयोगजन्यंवाकर्मत्वाद
स्मदादिशरीरकर्मवदिति कुसुमाञ्ज
लि : ॥ प्रलयेऽतिस्थूलस्थूलनाशान
न्तरंपरमाणुक्रियाविभागपूर्वसंयोग
नाशादिक्रमेणद्व्यणुकनाशान्तरंतिष्ठ
न्तिपरमाणवएवेति । यथा । दोषूच
मानास्तिष्ठन्तिप्रलयेपरमाणव : । इ
ति प्राचीनकारिका ॥ तस्यमहत्त्वा
भावादतीन्द्रियत्वम् । यथा ॥ मह
त्त्वंषड्विधेहेतुरिति० भा० प० । *
कालविशेषे ॥ यथा । सकाल : पर
माणुर्वैयोभुङ्क्तेपरमाणुताम् । सतो
विशेषभुग्यस्तुकाल : सपरमोमहा
न् ॥ चरमोंपरमाणुस्यात्त्रसरेणु
स्त्रय : स्मृत : । जालार्करश्म्यवग
त : खमेवानुपतन्नगात् ॥ इ० श्री
भागवते ३स्कन्धे ११ अध्याय : ॥
अस्यार्थ : । सत : प्रपञ्चस्यपरमाणु
तांपरमाणववस्थांयोभुङ्क्तेसकाल :
परमाणु : तस्यैवाविशेषंसाकल्यंयो
भुङ्क्तेसपरममहान् । अयमर्थ : ।
ग्रहर्क्षताराचक्रस्थद्वल्यादिनायत्सूर्य
पर्यटनंवच्यति तत्रसूर्योयावतापर

माणुदेशमतिक्रामतितावान्काल:
परमाणु : । यावताचद्वादशराश्या
त्मकंसर्वंभुवनकोषमतिक्रामति ।
सपरममहान्संवत्सरात्मक: तस्यैवा
वृत्त्यायुगमन्वन्तरादिक्रमेणद्विपरार्द्धा
न्तत्वमिति।तथाच पञ्चमेसूर्यगत्यैव
कालादिविभागंवक्ष्यति । इदानीं
द्व्यणुकादित्रसरेणुपूर्वकंमध्यमकाला
वस्थांकथयतिद्वौपरमाणूअणु : स्या
त्त्रयोणवस्त्रसरेणु: सतुगवाक्षप्रवृत्त्या
र्कप्रकाशार्केति । गवाक्षप्रविष्टप्वर्काँ
शिष्ववगत : कोसौयोतिलघुत्वेन
खमेवानुपतन्नगात्वगत: । नगामि
तिपाठेखमेवानुपतन्नवगत: नतुगां
पृथ्वीम् । इति श्रीधरस्वामिन : ॥

परमाणुभङ्ग : । पुं॰ विष्णौ ॥

परमात्मा । पुं॰ चिदात्मनि । स्वप्रका
शज्ञानस्वभावात्मनि । कार्यकारण
विलक्षणेनित्यशुद्धबुद्धमुक्तस्वभावे ॥
देहादिषुद्रष्ट्टणामविद्ययात्मत्वेन
कल्पितानांपरम: प्रकृष्टतमद्रष्ट्टत्वा
दिविशेषणविशिष्टआत्मा ॥ अन्नम
यप्राणमयमनोमयविज्ञानमयानन्द
मयेभ्य : पञ्चभ्योऽविद्याकल्पितात्म
भ्य : परम : प्रकृष्टोऽकल्पितोब्रह्म
पुच्छंप्रतिष्ठेत्युक्त: प्रत्यगात्मा एवंभूता
नांप्रत्यक्चेतन : । उत्तम : पुरुषस्त्व
न्य : परमात्मेत्युदाहृत : । परात्मा
मायातीत यदिगम्यत : । भवति
सर्वंव्याप्नोतीत्यात्मा । परमश्चासा
वात्माचेतिवा ॥ परमात्मातत्पदा
र्थ : सर्वोपाधिविवर्जित : ॥ अन्यो
क्तं श्रीदेवीभागवते । याशक्ति : पर
मात्मासौयोसौसापरमात्मता । अ-
न्तरंनैतयो : कोपिसूक्ष्मं वेदयनार
देति । अंतरंभेद : सूक्ष्ममपिनवे
द । अस्याध्यानं यथा । हृत्पद्ममध्ये
पुरुषंपुराणं सत्वात्मकंसर्वंजगत् स्व
रूपम् । ध्यायामिनित्यंपरमात्मसंज्ञं
चिद्रूपमेकंवचसामगम्यमिति ॥

परमाद्वैत : । पुं॰ विष्णौ ॥ मतविशेषे
॥ यथा । निर्गुणंवामभागेचसव्यभा
गेऽद्भुतानिजा । मध्येनाथ : स्वयं
ज्योतिस्तज्ज्योतिर्मेतमोहरमिति ॥

परमानन्द : । पुं॰ अधिनाशिनिरति
शयत्वाभ्यामुत्कृष्टे सुखविशेषे ॥ पर
मश्चासावानन्दश्च । अतिशयाह्लादे
॥ ब्रह्मानन्दे ॥ सार्वभौमादिहि
रण्यगर्भान्तानन्दानामुत्तरोत्कर्षपर
मावधित्वात् ॥

परमान्नम् । न॰ क्षीरिकायाम् ॥ पायसे
। क्षीर इ॰ भा॰ ॥ परमश्च तदन्नञ्च
॥ यद्वा । परमाणामुत्तमानांदेवादी
नामन्नम् ॥

परमायत्त : । त्रि॰ अतिश्रान्ते ॥ पर
मश्चासौ आयत्तश्च ॥

परमायु : । पुं॰ विंशत्यधिके वर्षशते
। श्रीधिनफार्ने ॥ यथा । गरांयपां

चिविंशत्यानिशाभि : पञ्चभि : स
ह । परमायु रिदंप्रोक्तं नराणांकरि
णामिह। चन्द्रादानि शत्स्त्रानाश्वनां
द्वादशवत्सरा : । पञ्चविंशतिवर्षाणि
खरस्यकरभस्यच॥ चतुर्विंशतिरब्दा
नांवृषस्यमहिषस्यच । मृगशूकरय
स्यादिपशूनांषड्दशान्विता : ॥ इ०
शब्दमाला ॥

परमायुष : । पुं० असनद्रुमे ॥

परमार : । पुं० पवांर इ० भाषा० प्र०
क्षत्रियजातिविशेषे, ॥

परमार्थः। पुं० सत्ये । एकरूपेणावस्थि
तेर्थे ॥ परमार्थोद्विधाप्रोक्तो मयाद्दे
स्वर्गवासिनः । एकः स्वभावत : सा
क्षात्परमार्थ : सदैवतु ॥ सशिव:
सत्यचैतन्यसुखानन्तसलक्षणः। अपर:
कल्पित : साक्षात् ब्रह्मण्यध्यस्तमा
यया ॥ व्यावहारिकसत्यार्थे साक्षात्
सत्यार्थविद्वचनं । उभयंवस्तिवेदस्तु
मार्गेणैवंवदन्तिहि ॥ इत्युक्तं ब्रह्म
गीतायांब्रह्मणाब्रह्मदर्शिना ॥ २ ॥
अध्याये ॥ चतुर्वर्गेषूत्कृष्टे मोक्षे ।
यथार्थे ॥ प्रपञ्चोयदिविद्येत निवर्त्ते
तनसंशय : । मायामात्रमिदंद्वैतम
द्वैतंपरमार्थत : ॥ परमश्चासावर्थश्च
॥ स्वर्गादिषुधर्मादिषुवापरमोमोक्षो
र्थ : परमार्थ : ॥

परमार्थवित्। त्रि०।तत्त्वदर्शिनि ॥ अप्रव
मेघशरासहस्रास्यप्रकृतेवज्ञपातस्य
चापि । परमार्थविन्नपुरुषो नैचपापै
र्लिप्यतेविमल: ॥

परमार्हत: । पुं० जैनराजर्षिविशेषे ॥

परमाशक्ति: । पुं०साम्यावस्थमायोपा
धिकब्रह्मरूपिण्याम् ॥ यदाहगीता
सु । अपरेयमितस्त्वन्यांप्रकृतिंवि
द्धिमेपराम् । जीवभूतांमहाबाहोय
येदंधार्यतेजगदिति ॥

परमृत्यु : । पुं०काके । वायसे ॥ परे
भ्योमृत्युरस्य ॥

परमेश: । पुं० परशिवे॥ परमात्मनि ॥
परमश्चासावीशश्च । परमात्इन्द्रादि
भ्योप्युत्कृष्टाब्रह्मादय:तेषामीश: ।

परमेश्वर: । पुं०महेश्वरे । शिवे ॥ पर
मात्मनि । सर्वजडवर्गसत्तास्फूर्ति
प्रदत्वेनबाध्यबाधकभावशून्ये । सर्व
दोषानस्कंदिते । परमश्चासावीश्वर
श्च । परमउत्कृष्ट:ईश्वरेभ्योहिरण्य
गर्भादिभ्य: मचासावीश्वरश्च ।

परमेश्वरी । स्त्री । दुर्गायाम् । परदेव
तायाम् । परात्मायाम् ॥ परमा
चासावीश्वरीच । यद्वा । परमाणां
ब्रह्मादीनामीश्वरीनियन्त्री ॥

परमेष्ठी। पुं० धातरि। पितामहे। अब्ज
योनौ ॥ परमेव्योम्निचिदाकाशेब्रह्म
पदेवातिष्ठतिष्ठा० । परमेस्थ:कोदि
तीनि: । तत्पुरुषेहृतीत्यलुक् । स्था
स्थिन्स्थूणामितिपत्वम् ॥ गुरुविशेषे ।
यथा । आदौसर्वत्रदेवेशिमन्त्रद:पर

मोगुरुः । परापरगुरुस्त्वंहिपरमेष्ठी त्वहंगुरुरितिहृच्नीलतन्त्रे २ पटलः ॥ मन्त्रदातागुरुःप्रोक्तोमन्त्रस्तुपर मोगुरुः । परापरगुरुस्त्वंहिपरमेष्ठि गुरुस्त्वहमितितन्त्रान्तरम् ॥ शाल ग्रामविशेषे ॥ यथा ॥ परमेष्ठीचशु क्लाभः पद्मचक्रसमन्वितः । विघा क्वृतिस्तथापृष्ठे शुषिरस्यातिपुष्कल म् ॥ परमेष्ठीलोहिताभश्चक्रमेकंतथा युतम् । विम्बाकृतिस्तथा रेखाशुषि रस्यातिपुष्कलमितिब्रह्मपुराणम् ॥ अपिच । परमेष्ठीत्वशुक्लाभश्चक्रपद्मस मन्वितः ॥ समसुलक्षथापीतः पृ ष्ठेचशुषिरंध्रुवमिति पुराणसंग्रहः ॥ परमेष्ठीतुरक्ताभश्चक्रपद्मसमन्वितः । विधाकृतस्तथापृष्ठे शुषिरस्त्रापिव र्तुलम् ॥ भौतयर्थंयुतोवापिभुक्तिमुक्ति वरप्रद इति वैश्वानरसंहिता ॥ जिने । बुधे ॥

परमेष्ठिनी । स्त्री॰ ब्राह्म्याम् । क्षामन ष्टीं । इ॰ गौ॰ भा॰ ॥ परमेष्ठि नः शक्तौ ॥

परमेष्वासः । पुं॰ उत्कृष्टधनुषि ॥ त्रि॰ महाधनुर्धरे ॥

परम्परः । पुं॰ मृगविशेषे ॥ तनयस्य प्रपौत्रे इतिमेदिनी ॥ प्रपौत्राद्यापि ति हेमचन्द्रः ॥

परम्परा । स्त्री॰ परिपाट्याम् । अनुक्र मे ॥ वधे । हिंसायाम् ॥ अन्वये । स न्ताने ॥ परम्पराशब्दोऽव्युत्पन्नं प्रा तिपदिकम् ॥ यद्वा । परंपिपर्ति । पृ॰ । अच् । खपचनाद्दरेतिवत् । सत्पुरुषैकतीति बहुलग्रहणादमोलु क् । पु॰ ॥

परम्पराकम् । न॰ इज्यायांपशुघाते । श- मने । मीघये ॥ परम्परायाअकनं । अक॰ । भावेघञ् । यज्ञेतिघञ् वा ॥ यद्वा । परमतिशयेऽव्ययम् । परंपरः । श्रेष्ठः । आकोऽस्मात् ॥

परम्परीणः । त्रि॰ परम्पराप्राप्ते ॥ परांश्चपरतरांश्चअनुभवति । परोवर परम्परेत्यादिनाखः । प्रकृतेः पर म्परभावोनिपातनात् ॥ सम्मीपरम्प रीणांत्वंपुत्रपौत्रीणतांनयेतिभट्टिः ॥

परवीणम् । न॰ पर्वणि ॥ पर्वन्तरसि ॥ पर्णसिरायाम् ॥ इतकाण्डे ॥ इतिहेमचन्द्रः ॥

परशः । पुं॰ केशराजे । महतोदरे ॥

परलोकः । पुं॰ स्वर्गादिलोकान्तरे । मरणजन्मे ॥ परश्चासौलोकश्च ॥

परलोकगमः । पुं॰ मृत्यौ ॥

परवञ्चनम् । न॰ परस्यव्याजेनवशी करणे ॥ परस्यवञ्चनम् ॥

परवान् । त्रि॰ पराधीने ॥ परः स्वामीभृत्यस्यास्ति । तदस्यास्त्यस्मिन्नि तिमतुप् । मादुपधायाश्चमतोर्वोऽ यवादिभ्यइतिवत्वम् ॥

परवशः । त्रि॰ अस्वतन्त्रे । परायत्ते

। पराधीने ॥ परस्ववश : ॥

परवश्य : । त्रि॰ पराधीने । परस्वाधीनताङ्गते ॥

परवाणि : । पुं॰ धर्माध्यक्षे ॥ वत्सरे । वर्षे ॥ कार्तिकेयस्यवाहने ॥

परवैराग्यम् । न॰ फलभूतवैराग्ये ॥ तत्परमपुरुषख्यातेर्गुणवैतृष्ण्यमितियोगसूत्रम् ॥ १६ ॥ तत् वैराग्यं परम् उत्कृष्टम्प्रथमंवैराग्यं विषयविषयम् । द्वितीयन्तुगुणविषयमुत्पन्नगुणविवेकख्यातेरेवभवति । निरोधसमाधेरनुकूलत्वात् । प्र॰ भोज : ॥ सम्प्रज्ञातसमाधिपाटवेन गुणत्रयात्मिकात् प्रधानाद्विविक्तस्य पुरुषस्यख्याति : साक्षात्कारस्तस्यातेतत्त्वाशेषगुणत्रयव्यवहारेषु वैतृष्ण्यं यद्भवतितत्परंश्रेष्ठंफलभूतंवैराग्यम् । तत्परिपाकनिमित्ताच्चित्तोपशमपरिपाकादविलम्बेनकैवल्यमिति ॥ परस्तद्वैराग्यंच ॥ संसारमेवनिस्सारंदृष्ट्वासारदिदृक्षया प्रव्रजन्त्यकृतोद्वाहा: परंवैराग्यमाश्रिता : इति विविदिषासन्न्यासपरंवाक्यम् ॥

परव्रत : । पुं॰ धृतराष्ट्रे ॥

परशम् । न॰ रत्नविशेषे ॥

परशव्यम् । त्रि॰ परशवेहिते । उगवादिभ्योयत् ॥

परशु: । पुं॰ सुधितौ । कुठारे ॥ परंशृणाति ॥ शृहिंसायाम् । आङ्परयो : खनिशृभ्योडिच्चेतिकु : ॥

परशुधर : । पुं॰ गणेशे । लम्बोदरे । धरति । धृञ्॰ । अच् । परशोर्धर: । त्रि॰ परशुधारिणि ॥

परशुराम : । पुं॰ जामदग्न्ये । भार्गवे ॥ अवतारेषोडशमेपश्यन्ब्रह्मद्रुहोन्नृपान् । त्रि : सप्तकृत्व : कुपितोनि : क्षत्रामकरोन्महीम् । परशुनाराम : । अयंनृतांयुगादावतीर्ण : । अस्योत्पत्त्यादिकमुक्तंकालिकापुराणे ८५ अध्याये यथा । मार्कण्डेयउवाच अथकालेव्यतीतेतु जमदग्निर्महातपा : । विदर्भराजस्य सुतांप्रयत्नेनविताःस्वयम् । भार्यार्थेप्रतिजग्राहरेणुकांलक्षणान्विताम् । सातस्मात् सातस्मात् सुषुवेपुत्रांश्चतुरो वेदसंमताम् । कथयत्नांसुमेणस्य विश्वावसुंतथा । पश्चात्तस्यां स्वयंजज्ञेभगवान्मधुसूदन : । कार्तवीर्यवधायाशुशक्राद्यै : सकलै : सुरै : । याचित : पञ्चम : सोभूत्तेषांरामइतिश्रुत : । भारावतरणार्थाय जात . परशुनासह । सहज : परशुस्तस्य नंजहातिकदाचन ॥ अयंनिजपितामह्या चरुभुक्तिविपर्ययात् । ब्राह्मण : क्षत्रियाचारोरामोभूत् क्रूरकर्मकृत् ॥ सवेदान खिला

न्नात्त्वाधनुर्वेदांश्चसर्वश : । सता तात्क्रतक्रत्योभूत्वेदविद्याविशारद इति ॥ विशेष : पाद्मोत्तरखण्डे द्रष्टव्य : ५० अध्याये ॥

परशुरामक : । पुं० भृगूणांपतौ । जामदग्न्ये ॥ सूर्यक : ॥

परश्वध : । पुं० कुठारे । आरसा० पू० भा० । परश्वधनम् । टुओश्वि ० । अन्येष्वपीतिड : । परश्वधस्येति । घेट् ० । आतोनुपेतिक : ॥

परश्वान् । पुं० दन्दशूकविशेषे ॥

परश्व : । अ० श्व : परस्मिन्दिने । आगामिद्विनात्परदिने । परश्वो पू० भा० ॥ परहततश्वश्च । श्व:परश्वो । राजदन्तादि : ॥ अतिक्रान्ते पूर्वतरेदिने परश्वोभूत इति प्रयोगोगौण : ॥

परसंज्ञक : । पुं० आत्मनि ॥

परस्तात् । अ० परस्तोर्थे ॥ परस्मिन् परस्याम्परस्मात्परस्या:पर:परावा वसस्यागतोरमणीयंवा । विभाषा परावराभ्यामितिपरशब्दस्तातिः ॥

परस्परम् । अ० अन्योन्यार्थे ॥ परस्परं विप्रानमेति । कर्मव्यतिहारेसर्वना म्नोद्वे वाच्ये । असमासवद्भावे पूर्वप दस्थस्य : सुर्वक्तव्य : । कस्कादित्वात्विसर्जनीयस्य स : ॥

परस्परपराहतम् । न० सद्भुखे । क्लिष्टे ॥ विरुद्धे वाक्ये । मातामेवन्ध्येति विरुद्धार्थवचने ॥ परोघाति । हन्ते : कर्मणिक्त : । परस्परेणपराहतम् ॥

परस्मैपदम् । न० तङानौवर्जयित्वा लादेशेषु तिप्० तस् झि । सिप् थस् थ० । मिप् वस् मस् एतेषु० शतृक्वसु० इत्येतयोश्च ॥ साद्‌र्थ्ये चतुर्थीति योगविभागात् समास : ॥ परस्मैइतिचतुर्थ्याअलुक् ॥

परस्वध : । पुं० परश्वधे । कुठारे ॥ परस्वसंदधाति । काष्ठदण्डधारकत्वात् । डुधाञ्० । आतोनुपेति क: ॥

परा । अ० विमोचे ॥ प्राधान्ये ॥ प्रातिलोम्ये ॥ धर्षणे ॥ आभिमुख्ये ॥ भृशार्थे ॥ विक्रमे ॥ गतौ ॥ वधे ॥ इ० मेदिनी ॥ अपिच । वधेगतौ दर्शनेच विक्रमाभि मुखेभृशे । अधीनमोक्षणप्रातिलोम्यकेषु परामतः ॥ यथा । वधेपराहत : । गतौ परागत: । दर्शने परादृष्ट: । विक्रमे पराक्रान्त: । अभिमुखेपरावृत्त: । भृशे पराजित: । अधीने पराधीन : । मोक्षणे पराकृत : । प्रातिलोम्ये पराङ्मुख इति ॥

परा । स्त्री० वन्ध्याकर्कोटक्याम् ॥ नाभिरूपसूत्राधारात् प्रथमोदितनादस्वरूपत्वे । सूत्राधारात् प्रथमद्वितीयस्तुतार : परा‌ख्य : । इत्य लङ्कारकौस्तुभे १ किरण : ॥

पराक : । पुं० खड्गे । क्षुद्रे । रोग

विशेषे । जन्तुभेदे ॥ व्रतविशेषे ॥ यथाहमनुः । यतात्मनोप्रमत्तस्य द्वादशाहमभोजनम् । पराकोनाम कृच्छ्रोयंसर्वपापापनोदनइति ॥ द्वादशाहोपवासेनपराकः सर्वपापहा । एकैकंग्रासमश्नीयाद्व्यहंशुक्लेयुत्तचह्वास येदिति म० पु० ॥ पराकव्रतम्बेन च । पराकस्यप्राशायरत्वपक्षतुल्य त्वात् ॥

पराकरणम् । न० पराक्रियायाम् । प-राङ्मुखकरणे ॥

पराकृत : । त्रि० प्रत्याख्याते । परा कारि । कृञ् । क्तः ।

पराक्पुष्पी । स्त्री० अपामार्गे ॥ परा क्पुष्पाण्यस्याः ॥

पराक्रम : । पुं० विक्रमे ॥ सामर्थ्ये ॥ सहसि । बले । शौर्ये ॥ उद्योगे ॥ प्रमियोगे ॥ निष्क्रमणाविति यम् ॥ —पराक्रमणम्० पराक्रम्यते अनेनवा । क्रमु० । इलश्चेति० घञ् । नोदा त्तोपदेशस्ये तिनवृद्धिः । नसामरस्य या गुणायकल्पते नदानभर्णोपचिते पुवर्त्तते । नभेदसाध्यावलदर्पिताज नाः पराक्रमस्त्वेवमसेइरोचते इति रामायणम् ॥

पराक्रिया । स्त्री० पराकरणे ॥ तथाच कूर्मेदान्तविद् : । योविधिज्ञातिवैरा न्यादन्यदगृत्वभिमन्यते । कौशल्या तृतंपराकुर्यात् विप्रनाशिपराङ्मुख म् ॥ व्याख्योहमिति भान्त्याप्टस्य तिसवादिषु । प्रवसोलभतेजन्म स्थे यैवास्यपराक्रियेति ॥

पराग : । पुं० सुमनोरजसि । कुसुमरेणौ ॥ धूलौ ॥ स्नानीये ॥ गिरिप्रभेदे ॥ विख्याती । उपरागे ॥ चन्दने ॥ परागच्छति । गम्० । अन्येष्वपी- तिडः । स्वच्छन्दगमने इति शब्द० ॥

परागति : । स्त्री० मोक्षे । यद्गत्वानिवर्तन्ते सैवप्रोक्तापरागतिः । स्वर्गे ॥ कर्मफले ॥ प्रकृष्टायाङ्गती ॥ परा चासौगतिश्च ॥

परागृद्धी । त्रि० पराभिध्याने ॥

पराङ्ग : । पुं० शिवे ॥

पराङ्ग : । पुं० समुद्रे ॥

पराङ्मुख : । त्रि० विमुखे । प्राचीने ॥ पराञ्चति० । अनभिमुखोभवति । अञ्चु० । ऋत्विगित्यादिना क्विन् । पराङ्मुखमस्य ॥

पराक् । त्रि० प्रतिलोमगमनाश्रये ॥ परा० अञ्चति । अञ्चु । क्विन् ॥ प्रत्यगर्थे ॥

पराचित : । पुं० कोकिले ॥ त्रि० । औदासीन्येनपरपुष्टे । परिस्कन्दे । परैश्चितः । परेणचाचितः : । चि ञ० । क्तः ॥

पराचीन : । त्रि० विमुखे । पराङ्मुखे ॥ पराञ्चति अनभिमुखोभवति ।

अस्तु० । चर्तिगादिनाक्विन् ततः स्वार्थेविभाषाप्टेरदिक् स्त्रियामिति ख: ॥

पराजयः । पुं० रणेभंगे । पराभवे । पराजयनम् ॥ विपरिभवे । पराजयनम् एरच् ॥ सर्वचलयमन्विच्छेत् पुत्रादेकंपराजयमित्यत्रोक्तार: ॥

पराजितः । त्रि० पराभूते । निर्जिते । जिते ॥ पराजीयतेस्म परैराजी यतेस्मवा । जिपरिभवे । क्त: ॥ पराजिते ॥ परेषामाजीयतेस्म। जि० । क्त: । यहा । परेषामाज: क्षेप णंजातमस्य । ता० । इतच् ॥

पराज्ञः । पुं० परस्मार्थे ॥

पराङीनम् । न० पक्षिणः पराङ्गमनगमने ॥

परात्परः । त्रि० श्रेष्ठतमे ॥ विष्णा त्मनि॥ परात्ब्रह्मादेरपिपरः श्रेष्ठः । दूरार्थकत्वात् पञ्चम्याः स्तोकादि भ्यइत्यलुक् ॥

परात्प्रियः । पुं० तृणविशेषे ॥ त्रि० प्रियोत्तमे ॥

परात्मा । पुं० प्रत्यगभिन्नेब्रह्मणि ॥उक्ता र्थनात्मनः सर्वान्वयव्यतिरेकतः ।प्रत्यक्प्रधानसाहस्त्यानिधात्मानम वेत्परम्॥परश्चासावात्माच । परमा त्मा ॥

परादनः । पुं० पारसीकाश्वे ॥ इति त्रिकाण्डशेष: ॥

पराधीनः । त्रि० परवशे । परतन्त्रे । नाथवति ॥ परस्मिन्नधि सप्तमीशौ ण्डैरितिसमास: । अषडक्षेतिख: ॥ स्वाधीनत्वर्त्त: साफल्यंनपराधी नत्वसिता । येपराधीनकर्माणोजीव न्तोपिचतेमृता: । इति गरुड़पुरा णे ११३ अध्याय: ॥

परानन्दः । पुं० निरतिशयसुखस्वरूपे ॥ परश्चासावानन्दश्च ॥ परानन्दा वाप्तिस्तागमाचार्यात्मानुभवप्रत्ययत्र यस्यैकविषयत्वेनभवति । यथाहु रागमविद: । शास्त्रडहिर्गुरोर्वाक्यं तृतीय: स्वात्मनिश्चय: । निरन्त रानुसन्धानंपरानन्दाप्तिहेतव इति ॥

परानसा । स्त्री० चिकित्सायाम् ॥

परान्तकालः । पुं० दिसरार्द्धवसानेपर स्यकार्यब्रह्मण: अन्तकाल: विना शकाल: ॥

परान्नम् । अन्यस्वामिकभक्तपिष्टकादौ ॥ परस्यअन्नं ॥ परान्नंपरवासश्च निन्द्यंधर्मरतस्त्यजेत् ॥ त्रि० । पर पिण्डादे । परान्नेनोपजीविनि ॥ परस्यअन्नम् । परान्नंनित्यमस्य । अर्शआदिभ्योऽच् ॥

परापम् । त्रि० परेषे ॥ परागताआपो ऽस्मिन् । अवर्णान्तात्तेतिपदे अपईं द्भाव: ॥

परापरम् । न० परूषके ॥ त्रि० परस्मि न्नपरस्मिंश्च ॥

परापरगुरुः । पुं॰ गुरुविशेषे ॥ पार्वत्यां ॥

परापरज्ञः । त्रि॰ विद्याविद्याविभागज्ञे ॥

पराप्रकृतिः । स्त्री॰ अपराप्रकृतेर्भिन्नायांप्रकृतौ ॥ अपरेयमितस्त्वन्यां प्रकृतिंविद्धिमेपराम् । जीवभूतां महाबाहोययेदंधार्यतेजगत् ॥ चेत नालक्षणायाम्॰ पराशक्तौ ॥

पराभवः । पुं॰ तिरस्कारे । न्यक्कारे । तिरस्क्रियायाम् । परिभवे ॥ यथा । विश्वेश्वरमर्दवंजगतः प्रभवाव्ययम् । भजंतियेपुष्करार्चनतेयान्तिपराभवमिति ॥ आत्मस्याऽपथ्यभाषणफलंपराभव इति विवरणकारः ॥ विनाशे ॥ पराजये ॥ विपदि ॥ चत्वारिंशत्स ङ्ख्यकेवत्सरे ॥ यथा । पार्थिवेन्द्रपसैन्यैश्चसमस्तैः खण्डमण्डले । प्रपीड्यन्ते जनाः सर्वेभयभीताःपराभवे ॥

पराभिध्यानः । त्रि॰ परागृद्धिनि ॥

पराभूतिः । स्त्री॰ पातालादिकालान्ताधूवर्त्ति विचित्रैश्वर्य्य सम्पन्नतत्तद्भुवनाधिपत्ये ॥

पराभूतः । त्रि॰ जिते । प्राप्ताभिभवे । पराजिते । पराभूयतेस्म । भू॰ । क्तः ॥

परामर्शः । पुं॰ विवेचनायाम् । युक्तौ । वितर्के । विमर्षणे । तर्के । ऊहे ॥ स्मरणज्ञाने ॥ व्याप्तिविशिष्टपक्षधर्मताज्ञाने ॥ यथा । व्याप्यस्यपक्षधर्मत्वधीः परामर्शउच्यते । अस्यार्थः । व्याप्तिविशिष्टस्य पक्षेणसहवैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् । तत्रव्याप्यः पक्षे इतिज्ञानम् । पक्षोव्याप्यवान् इति ज्ञानंवा । इति सिद्धान्तमुक्तावली ॥ सचानुमतौ व्यापारः । यथा । व्यापारस्तुपरामर्शः करणंव्याप्तिधीर्भवेत् । अस्यार्थः । अनुमायामनुमितौव्याप्तिज्ञानंकारणंपरामर्शोव्यापारः । तथाहि । येनपुरुषेणमहानसादौधूमेवह्नेर्व्याप्तिर्गृहीतापश्चात्सएवपुरुषः क्वचित्पर्वतादौअविच्छिन्नमूलांधूमरेखांपश्यति तदनन्तरं धूमोवह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणंतस्यपुरुषस्यभवतिपश्चाद्वह्निव्याप्यधूमवान्पर्वतइतिज्ञानंभवति सएवपरामर्श इत्युच्यते । इतिसिद्धान्तमुक्तावली ॥

परामृतम् । न॰ गोघृते ॥ वर्षणे ॥

परामृष्टः । त्रि॰ सम्बद्धे । सम्बन्धयुक्ते ॥ कृतपरामर्शे ॥ विवेचिते । परामृश्यते । मृश॰ । क्तः ॥

पराम्बा । स्त्री॰ पराम्बिकायाम् । साम्यावस्थमायोपाधिक ब्रह्मरूपिण्याम् ॥

परायण : । त्रि० अभीष्टे ॥ तत्परे ॥ आश्रये ॥ यथा । शुद्धाभवन्ति यदन्येऽन्त्यजाःकृष्णपरायणादृति । न०आसङ्गवचने ॥ परमुत्कृष्टमय नंस्थानमस्य । ब्रह्मणि । परमुत्कृ ष्टंपुनरावृत्तिरहितंचतदयनंमुक्तिप्रा प्यंस्थानंचेतिपरायणम् । पूर्वपदा दितिणत्वम् ॥

परायत्तः । त्रि० पराधीने ॥

परारि० पूर्वतरवर्षे गतात्तृतीयवर्षे ॥पूर्वतरे वत्सरेइत्यर्थेसद्यःपरुत्परा र्य्यैषमइत्यादिनापूर्वतरस्यपरभावः आरिचसंवत्सरे ॥

परारि. । त्रि० परगामी ॥

परारित्ना त्रि० पूर्वतरवत्सरसम्बन्धिनि ॥ परारिभवइत्यर्थेचिरपरुत् परारि भ्यस्त्नोवक्तव्यः ॥

पराकः । पुं० कठिल्ले । कारवेल्ले ॥

परारुकः । पुं० अश्मनि ॥

परार्थानुमानम् न० परप्रतिपत्त्यर्थेऽ नुमानवचने । यत्स्वयमेवधूमाद ग्निमनुमायपरप्रतिपत्यर्थं पञ्चावय वंवाक्यंप्रयुङ्क्तेतस्मिन् ॥ यथा । पर्व तोवह्निमान् धूमात्योयोधूमवान्स सोग्निमान् यथामहानसम् तथा चायम् तस्मात्तथेति । अनेनप्रति पादितालिंगात्परोप्यग्निंप्रतिपद्य ते ॥

परार्द्धम् । न० ब्रह्मणआयुषोऽर्द्धे ॥ य- था । निजेनतस्यमानेनआयुर्वर्ष शतंस्मृतम् । तत् पराख्यं तदर्द्धं चपरार्द्ध मभिधीयते ॥ इ० वि- पुं० ॥ हृदये ॥ परस्यब्रह्मणोर्द्धं स्थानम् । तस्मिन्हिपरब्रह्मोपलभ्य ते ॥ दशमध्यसंख्यायाम् । **** । १००००००००००००००००० ॥ स्थानात्स्थानन्दशगुणमेकस्माद्गणि तेद्विज । ततोष्टादशमेभागेपरार्द्धम भिधीयते ॥

परार्ध्यः । त्रि० प्रधाने । श्रेष्ठे ॥ पर स्मिन्नर्द्धेभव : ॥ अर्द्धाद्यत् । पराव राधमोत्तमपूर्वाच्च ॥

परावतम् । न० परूपके । फालसा इ० भा० ।

परावर : त्रि० परमात्मनि । ब्रह्मणि । सर्वात्मके ॥ परंहैरण्यगर्भपदम् अवरंयस्मात् ॥ यथा । परंहिरण्य गर्भादिअवरंमनुष्यादि परञ्चअपर ञ्चपरावरम्० सर्वात्मकंब्रह्मेत्यर्थः ॥

परावर्त्तः । पुं० परिवर्त्ते । विनिमये ॥

परावह : । पुं० वायौ : षष्ठेस्कन्धे ॥ ईदृक्ष : पुरुषोन्यादृक् यमितासमदृ क् तथा । धामश्चप्रतिहर्त्ताचत्वास भ्यं : परावह : ॥ सप्तवायुन्तर्गत सप्तमवायौ ॥सतुपरिवहवायोरूर्द्ध स्थित : ॥

पराविद्धः । पुं० कुबेरे ॥ त्रि० । परैःश त्रुभिराविद्धे । अविद्धे च ॥

परविद्या । स्त्री॰ ब्रह्मविद्यायाम् ॥ यथा । परोविद्यांश्रृणुमुने ययाब्रह्माधिगम्यते । यत्तदृश्यमग्राह्यमगोत्रचरणं ध्रुवम् । अचक्षु : श्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्ममिति ॥

परावृत्त : । अपावृत्ते ॥

परावृत्ति : । स्त्री॰ निवृत्तौ ॥ उल्लङ्घने ॥

परावेदी । स्त्री॰ बृहत्याम् ॥

पराशक्ति: । स्त्री॰ पराप्रकृतौ ॥ परास्यायाम् ॥ यथाहजनमेजयं प्रति व्यास : । यदाविभूतिमत्सत्त्वं श्रीमदूर्जितमेववा । तत्तदेवावगच्छत्वं पराशक्त्यंशसम्भवम् । एतेचान्येचराजान : पराशक्त्युपासका : । संसारतरुमूलस्य कुठारा अभवन्नृपेति ॥ पराचासौशक्तिश्च ॥

पराशर : । पुं॰ व्यासमुनेर्जनके । शक्तिमुनेः पुत्रे ॥

पराश्रय : । त्रि॰ अन्यावलम्बे ॥ परआश्रयोयस्य ॥

पराश्रया । स्त्री॰ वृक्षोपरिजातलताविशेषे । वृन्दायाम् । वृक्षादन्याम् ॥

परासनम् । न॰ मारणे । वधे । असु॰ । ल्युट् ॥

परासिसु : । त्रि॰ परासितुमिच्छौ ॥ अस्यते , सन्नन्तादुप्रत्यय : ॥

परासु : । त्रि॰ मृते । परागताअसवोयस्मात् ॥

परासुता । स्त्री॰ मृतत्त्वे ॥ निद्रापरवशतायाम् ॥

परास्कन्दी । पुं॰ चौरे ॥ परान्आस्कन्दितुंशीलमस्य । स्कन्दिर्॰ । सुपीतिणिनि : ॥

परास्त : । त्रि॰ अपास्ते । प्रक्षाते । निरस्ते । पराजिते । पराअस्यतेस्म । असु॰ । क्त : ॥

पराहत : त्रि॰ दूरीभूते ॥ ताडिते पराहन्यतेस्म । हन॰ । क्त: ॥

पराहन्ता । स्त्री॰ समष्ट्यहङ्कारे । पराहन्तारूपयहङ्कारश्रुति । सोवैदार्थब्रह्मास्मीति वृत्तिरूपकम् : । तथाच स्पष्टिसमयेच : प्रथमोभावोब्रह्मणःपरायाणोरूपोऽयमस्मीत्युत्पन्न : पराहन्तारूप : सोऽहङ्कार : स देवसोऽस्य दमयचासौ हित्यचोक्तात् सतउत्पन्न इतिनीलकण्ठ : ॥

पराह्न : । पुं॰ अपराह्णे । अहरपरमर्द्धमितिविग्रह : ॥

परि । अ॰ सर्वतोभावे । वर्जने । व्याप्तौ । शेषे । कृत्यभूताख्याने । भागे । वीप्सायांम् । आलिङ्गने । लक्षणे । दोषाख्याने । निरसने । पूजायाम् । व्याप्तौ । भूषणे । उपरमे । शोके । सन्तोषभाषणे ।

परिकथा । स्त्री॰ वाङ्मयभेदे । यथा । अथवाङ्मयभेदा : सुधन्दूत

रडकथाकथा । आख्यायिकापरिक्ष घेति । त्रिकाण्डशेषः ॥

परिकम्पः । पुं॰ भये ॥ कम्पे ॥ परितः कम्पः ॥

परिकरः । पुं॰ सङ्घे ॥ गणे ॥ पर्यङ्के ॥ परिवारे ॥ वस्त्रादिनाप्रगाढगात्रिकाबन्धे ॥ यथा । सकृदुच्चरितंयेनहरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेनमोक्षायगमनंप्रतीति ॥ युद्धोचितपरिधाने ॥ समारम्भे ॥ विवेके ॥ सहकारिणि ॥ यत्ने ॥ अलङ्कारवि॰ ॥ यथा ॥ विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तुसः ॥ अर्थादिविशेष्यस्य । उदाहरणम् । यथा । महौजसो मानधना धनार्चिताधनुर्भृतःसंयतिलब्धकीर्त्तयः । नसंहतास्तस्यनभिन्नवृत्तयः प्रियाणिवाञ्छन्त्यसुभिः समीहितुम् ॥ यद्यप्यपुष्टार्थस्य दोषतभिधानात्तन्निराकरणेनपुष्टार्थस्वीकारः कृतः तथाप्येकनिष्ठत्वेनवहूनांविशेषणानामेवमुपन्यासेवैचित्र्यमित्यलङ्कारमध्येगणितः ॥ परिक्रीयते । कृविक्षेपे । ऋदोरप् ॥ परिक्रियतेऽनेन । पुंसीतिघः ॥

परिकर्त्तिका । स्त्री॰ गुदेकर्त्तनवत्पीडायाम् ॥

परिकर्त्ता । पुं॰ अनूढज्येष्ठाकनिष्ठाविवाहस्ययाजकेद्रव्युवाहस्तत्त्वम् ॥

परिकर्म्मा । पुं॰ सेवके । परिचारके ॥ इतिरत् ॥ न॰ । अङ्गसंस्कारे । कुङ्कुमादिनाशरीरशोभाधायककर्म्मणि ॥ परिमलवर्जनार्थाक्रियापरिकर्म्मस्नानोद्वर्त्तनादीत्यर्थः ॥

परिकर्म्मी । त्रि॰ सेवके ॥ इ॰ ई॰ ॥

परिकल्पितः । त्रि॰ कृते ॥

परिकल्प्यः । त्रि॰ परिकल्पितुंयोग्ये ॥

परिकाङ्क्षितः । त्रि॰ तपस्विनि ॥ इतिशब्द॰ ॥

परिकीर्णः । त्रि॰ व्याप्ते ॥ परितः कीर्णः ॥

परिकूटम् । न॰ पुरद्वारकूटके । नगरद्वारकूटके । हस्तिनखे । इत्यन्ये ॥ इ॰ श॰ भा॰ ॥

परिक्रमः । पुं॰ विहारे । क्रीडार्थेपद्भ्यांसञ्चरणे ॥ प्रदक्षिणे । परिक्रमा॰ श॰ भा॰ परिक्रमणम् । क्रमु॰ । घञ् ॥ नोदात्तोपदेशस्येतिनवृद्धिः ॥

परिक्रमसहः । पुं॰ छागले ॥

परिक्रयणम् । न॰ नियतकालंभृत्यास्वीकारणे ॥ परितःक्रयणम् ॥ क्रयवास्यसमीपंवा ॥

परिक्रिया । स्त्री॰ परिसर्पे । परिखादिनावेष्टने ॥ परिकरणम् । कृञः शच् । रिङ्शयग्लिङ्क्षु ॥

परिक्लान्तः । त्रि॰ परिश्रान्ते ॥

परिचित् । पुं॰ नृपान्तरे ॥ अभिमन्युपुत्रे ॥ पाण्डवभेदे ॥ परितोदुरितंचो

परितेनेतिव्याख्यानात् ।

परिक्षिप्तः । त्रि० जलादिनाऽवच्छिन्ने । परिखादिनावेष्ठिते । निरुद्धे ॥ परित.क्षिप्यतेस्म । क्षिप० । क्त: सर्वतोभावेनक्षेपयुक्ते ॥

परिखा । स्त्री० खेये । राजधान्यादीनांखातरूपवेष्टने । खाई० इ०भा० । अस्यानामन्तु । प्रक्षेपपरिखास्मानं गतपसंभयस्तकम् । परितःशिविरा यागम्भीरदृश्यहस्तकम् ॥ सक्के सपूर्वकस्तेषपरिखाद्वारसोपितम् । गम्भीरगम्यमिवस्वगम्यमेवसुखेनचेति ॥ परितःखन्यते० परित.खाता-वा । अन्येष्वपीतिङ: ॥

परिखात: । पुं० गर्ते ॥

परिख्यात: । त्रि० विख्याते ॥

परिगणित: । त्रि० सर्वतोभावेनगण नायुक्ते ॥

परिगत : । त्रि० प्राप्ते । विस्मृते । ज्ञाते । चेष्टिते । गते । वेष्टिते ।

परिगृह्या । स्त्री० नार्याम् ॥

परिग्रह : । पुं० परिजने । पुत्रमित्र कलत्रादौ । यथा । क्वचिदुपहृतिः कर्ताऽस्मीभिःकृताक्रियतेथवानघमु यिसवल्लेरेपुंमांसुखायपरिग्रहाः । दधतिविरहमर्मच्छेदतदर्थमपार्थकं तदपिविपुलायासाःसौदर्यलहोयतत् भावः ॥ पत्न्याम् ॥ स्वीकारे । मूल्ये ॥ मूले । शापे । शपथे । राहुग्रस्त-

सूर्यचन्द्रे ॥ प्रतिग्रहे । सैन्यपश्चाद्भागे । सङ्ग्रहे ॥ शास्त्राऽनिषिद्धमार्गेणदेशयाचानिर्वाहकाधिकभोगसाधनस्वीकारे । शरीरधारणार्थमस्य स्त्वेपिपरीपनीतवागोपकरणे ॥ परिग्रहीतेपरिग्रहणमुपरिगृह्यातिवा यहद्भिस्यप्विभाषायहस्त्यक्त्वा । परिग्रहणेऽस्मिन्नेतिकारणव्युत्पत्तिर्हस्तो ॥

परिघः । पु० योगविशेषे । तत्रजात स्यफलंयथा । यत्पत्तिकालेपरिघोय दिस्यात्वरक्तदावघकुठारधल्पः । च सव्यसाचीयमथाविर्भीमःसल्पानुभीलाविजितारिपक्षः ॥ लोशांगी० द्रु०प्र० अस्त्रविशेषे । परिघातने । लोहबद्धलगुडे । अर्गले । घाते । परिघातौ । मुद्गरे । शूले । कलसिघतय:काचघटेगोपुरतद्मनोरिति शब्दरत्नावली ॥ परिहण्यतेम् । परिहन्यतेऽनेनवा । हन० । परीघश्यप् । घादेशश्च ॥

परिघात: । पुं० अस्त्रे ॥ हनने ॥ परितोघात: ॥

परिघातन : । पुं० परिघे । लोहबद्ध लगुडे ॥ लोहबद्धयष्ट्याम् ॥ परितोघातद्रूत्यनेन । ल्युट् ॥ । न०/सर्वतोभावेनहनने ॥

परिघोष : । पुं० निनादे । शब्दे ॥ अवाच्ये ॥ मेघदध्वनौ ॥ परितो घोषोऽस्य ॥

परिचयः। पुं० संस्तवे। विशेषज्ञाने ॥ परचोदू०भा० ॥ परिसमन्ताच्चयनम्। चिञ्। ०। एरच् ॥ अभ्यासे ॥

परिचरः। पुं० युद्धकालेपरप्रहाराद्रथरक्षके ॥ परिरक्षके। सेनायांराष्ट्रोद्दण्डनायके ॥ प्रयाणेसामन्तस्थापके ॥ दूरस्थन्ये ॥ रथगजादेरक्षपादादिरक्षकेइ०केचित् ॥ सेवके ॥ परितःसरति। पचाद्यच् ॥

परिचरणम्। न० गुर्वादिशुश्रूषायाम् ॥

परिचर्या। स्त्री० सेवायाम्। उपासने। शुश्रूषायाम् ॥ परिचरणम्। चर०। परिचर्या परिसर्येतिशयक्निपात्यते ॥

परिचायकः। पुं० समूहे ॥

परिचाय्यः। पुं० यज्ञाग्नौ। समूहे। उपचाय्ये ॥ परिचीयते। चिञ्। अग्नौपरिचाय्येतिसाधुः। अग्निरिहनज्ञवतः। किन्त्वग्निधारणार्थमिष्टकाचयनेननिर्मितंस्थलम्। तस्मिन्नभिधेये ॥

परिचारः। पुं० परिचरणे ॥ परिचर- घञ् ॥

परिचारकः। त्रि० भृत्ये। दासेरे। दासे। सेवके ॥ परिचरति। चर०। ण्वुल् ॥

परिचारिणी। स्त्री० परिचरणशीलायाम्। परिचरणशिक्षितायाम् ॥ परिचरतीचरेर्णिनिः। ङीप् ॥

परिचाय्यः। त्रि० सेव्ये ॥

परिचितः। त्रि० परिचयविशिष्टे। ज्ञाते। संस्तुते ॥

परिचेयः। त्रि० परिचयनीये। परिचेतव्ये ॥

परिच्छदः। पुं० परिजने। योध्यवर्गे ॥ वसनाभरणादौ ॥ राज्योपकरणे ॥ युद्धोपकरणे ॥ आच्छादने ॥ परिच्छाद्यतेऽनेन। छद०। पुंसीतिघः। छादेर्घेद्व्युपसर्गस्येति ह्रस्वः ॥

परिच्छन्दः। पुं० परिच्छदे ॥

परिच्छन्नः। त्रि० परिच्छदविशिष्टे ॥ सर्वतोभावेनाच्छादिते। संवृते ॥

परिच्छित्तिः। स्त्री० परिमाणे। इयत्तायाम् ॥

परिच्छिद्य। अ० निश्चित्य ॥

परिच्छिन्नः। त्रि० परिच्छेदविशिष्टे। अवधिप्राप्ते। परिमिते। एकदेशवर्त्तिनि ॥ परिच्छिन्नत्वं त्रिविधम्। देशतःकालतोवस्तुतश्चेतिभेदात्। तत्रदेशान्तरनिष्ठाभावप्रतियोगित्वं कूपदेशस्यपरिच्छिन्नत्वं। कालान्तरनिष्ठाभावप्रतियोगित्वं कालतःपरिच्छिन्नत्वम्। वस्त्वन्तरनिष्ठभेदप्रतियोगित्वलक्षणंवस्तुपरिच्छिन्नत्वमिति ॥

परिच्छेदः। पुं० ग्रन्थसन्धौ। ग्रन्थस्यविच्छेदे। यथा। सर्गोवर्गःपरिच्छे

न्नतापत्तिः परिणामः ॥

परिणामदर्शी । त्रि० चरमकालप्रेक्षि- णि । पश्चाद्दर्शिनि । विषयादे- शेषद्रष्टरि ॥

परिणामवादः । पुं० वादविशेषे ॥ न- श्रोतनामरूपप्रपञ्चभेदेनपरिणमतेस्म सिकेषोदञ्चनादिभावेन । यतएव प्राकृतरूपस्यसत्त्वस्यापरित्यागःप्रप- ञ्चेषु उदञ्चनादावपिवर्त्तिवात्त्वस्ये त्यर्थः ॥ परिणामवादस्यसांख्यपात ञ्जलपाशुपतागमेषु ॥ यथा । गुण साम्यं प्रधानंस्यात्त्रिगुणाःसत्वंरजस्तमः । सुखदुःखमोहरूपंहञ्चति त्रिरूपं जगत् ॥ प्रधानंसाम्यमहान् सोऽह ङ्कारोऽसौमोह्यात्मना । आयत्तेपञ्च तन्मात्राण्यहंकारादधापियत् ॥ तन्मात्राणितुभूतानिजायन्तेतमस स्तथा । चतुर्विंशतिरेतानितत्त्वानि पञ्चविंशतिः तदेवकार्यमुत्पत्तेः पूर्वंकारणरूपकम् । आविर्भावति रोभावौजन्मनाशावुदीरिताविति ।

परिणामशूलः । पुं० रोगविशेषे ॥ त- स्योत्पत्तिर्यथा । स्वैर्निदानैःप्रकुपि तो वायुःसन्निरुद्धोयदा कफपित्ते समावृत्यशूलकारीभवेद्बली ॥ तस्यौ षधंयथा । लौहचूर्णसमायुक्तं त्रिफ लाचूर्णमेवचा । मधुनास्वादितंहन्ति परिणामाख्यशूलनुदिति ग० पु० ॥

परिणामी । त्रि० विकारिणि ॥ परिणा



मोऽस्त्यस्येति । म० इनिः ॥

परिणामवादी । त्रि० परिणामवादि नि ॥ पूर्वरूपत्यागेनरूपान्तरप्राप्तिल क्षणंपरिणामंवदतीतिस ः ॥

परिणायः । पुं० शारीणांसमन्तान्नयने ॥ परितोनयनमिति गोनयनम् । णीञ् ॥ परिन्योरितिघञ् । परिणा य्येनशारीन्हन्तिसमन्तान्नयनेनेत्यर्थः

परिणायकः । पुं० परिणेतरि ॥ नय- तेर्ण्वुल् । उपसर्गादसमासेपीतिण त्वम् ॥

परिणाहः । पुं० विस्तारे । पनहा० चौ रादिसार इत्यादिषा० । विशाल तायाम् ॥ परिणह्यतेऽनेन । बन्ध० । घञ् । उपसर्गादसमासेपीतिण- त्वम् ॥

परिणिनंसुः । त्रि० परिणन्तुमिच्छुः प्र ह्वत्वमिच्छुः ॥ नमेस्सन्नन्तादुप्रत्ययः । सनाद्यन्तपदेशेऽनुदात्तादितीट् प्र तिषेधः ॥

परिणूतः । त्रि० स्तुते ॥ परिणूयते स्म । णू स्तुतौ । क्तः ॥

परिणेता । पुं० भर्तरि । वोढरि ॥ परिणयति । णीञस्तृच् ॥

परितप्तः । त्रि० परिदूने ॥

परितर्क्षणम् । न० ऊहे ॥ हिंसा- याम् ॥

परितर्प्पणम् । न० परितृप्तिक्रिया- याम् ॥

परित : । अ० सर्वतोर्थे ॥ पर्य्यभिभ्याञ्चे तिपरिशब्दात्ततसिल्सर्वोभयार्थाभ्या मित्यस्मि ।" सर्वच ॥

परिताप : । पुं० दुःखे ॥ नरकान्तरे ॥ कम्पे ॥ भये ॥ शोके ॥ परित स्ताप : ॥

परितुष्ट : । त्रि० परितोषयुक्ते । सन्तु- ष्टे ॥

परितोष : । पुं० अतिहर्षे । सन्तोषे । सर्वतोभावेनतुष्टौ ॥ यथा । त्वामु दरसाधुमन्येशाकैरपियदसिलब्धपरि तोषम् । हतहृदयंह्यधिकाधिकवा ञ्छाशतदुर्भरंनपुन : ॥

परित्याग : । पुं० सर्वतोभावेनवर्ज्जे ने । परित्यजने । छोरवे ॥ मणी त्यागे ॥ परितस्त्याग : ॥

परित्राणम् । न० आरणोद्यतशस्त्रनिवार णे । हस्तधारणे । हस्तवारणे । पर्य्याप्तौ ॥ त्रैङ्० । ल्युट् । र चणे ॥

परिदर : । पुं० दन्तरोगविशेषे ॥ यथा । दन्तमांसानिशीर्य्यन्तेयस्मिन् ष्ठीवतिचाप्यसृक् । पित्तासृक्कफ जोव्याधिर्ज्ञेय:परिदरोहिसइति ॥

परिदानम् । न० नैमेये । परीवर्त्ते । विनिमये ॥ परिदाख्यदानम् ॥ न्य स्तवस्तुप्रत्यर्पणेपीतिकश्चित् ॥

परिदायी । पुं० अनूढज्येष्ठेतत्कनिष्ठा यकन्यादातरि ॥ यथाहहारीत : । ज्ये ष्ठेऽनिविष्टेकनीयान्निर्विशन् परिवेत्ताभवतिपरिविन्नोज्येष्ठः प रिवेदनीयाकन्यापरिदायीदाताप रिकर्त्तायाजकास्तेसर्वेपतिताइति ॥

परिदीपक : । त्रि० अवबोधके ।

परिदीपित : । त्रि० प्रकाशिते ॥ परिसर्वतोदीपित : ॥

परिदृष्ट : । त्रि० समन्तात्साक्षात् कृते ॥

परिदेवनम् । न० अनुशोचनोक्तौ । विलापे ॥ दिवुपरिदेवने । चु० । ल्युट् ॥

परिदेवना । स्त्री० शोकनिमित्त विला पे । शोकोक्तौ ॥ यथा । अव्यक्ता दीनिभूतानिव्यक्तमध्यानिभारत । अव्यक्तनिधनान्येवतत्रकापरिदेवना ॥ इतिभगवद्गीता ॥ समस्तवल वीर्य्यणप्रज्ञया पौरुषेणच । अलभ्यं लभतेमर्त्त्यस्तत्रकापरिदेवना ॥ ए कसार्थप्रयातानांसर्वेषांतत्रगामि नाम् । यद्येकस्त्वरितोयातिकात त्रपरिदेवनेतिग० पु० ॥ दिवुपरि देवने । चु० । आसश्रन्थोयुजिति युच् । टाप् ॥

परिद्यून : । त्रि० परिदेवनांप्राप्ते । क्षीणचेतने ॥ दिवु ० क्त: ॥

परिद्रष्टा । त्रि० समन्तादर्शनस्यक र्त्तरि । साक्षिपुरुषे । परिपश्यति । दृशिर : । या० तृन् ॥

क्रमे ॥ कृदिकारादिति ङीष् ॥
परिपिष्टकम् । न० सीसके ॥
परिपुष्करा । स्त्री० गोडुम्बायाम् ।
राजगोमक्द्० गौ०भा० ॥
परिपूतम् । न० निष्पुलाकीकृते ।
अपास्तपुलाके । अपास्ततुषधान्ये ॥
त्रि० । सर्वतोभावेनपवित्रे ॥
परिपूरी । त्रि० भक्तवरदे ॥ परिपु-
रयसिकामैर्भक्तान् ॥ परिपूरयते
र्णिनिः ॥
परिपूर्णः । त्रि० पूरिते ॥ परितः
पूर्णः ॥
परिपूर्णता । स्त्री० आभोगे । सम्पू-
र्णतायाम् ॥ परितः पूर्णतेस्य ।
पूरौ० । गत्यर्थेतिक्तः । रदाभ्या-
मितिनिष्ठातत्वम् ॥ परिपूर्णस्य-
भावः । तस्यभावइतितल् ॥
परिपूर्णत्वम् । न० आभोगे । पूर्णता
याम् ॥ परिपूर्णस्यभावः । तस्यभा-
वस्त्वतलौ ॥
परिपेलम् । न० कैवर्त्तीमुस्तके । गा
गरमोथा० इ०भा० ॥ यथा । परि
पेलप्लवंबल्पततकुटन्नटसत्त्वकम् ।
आयतेसुस्तकाकारशैवालकुलसञ्च-
ये ॥
परिपेलवम् । न० कैवर्त्तीमुस्तके ॥
परितःपेलवम्स्द्द ॥
परिप्रश्नः । पु० कोऽहंकथमिदञ्जातङ्को
वैकर्त्तास्यविद्यते० उपादानंकिमस्य

स्तिकर्थवद्धोस्मिकेनोपायेनमुच्येइत्या
दिपृच्छायाम् ॥ पृच्छामात्रे ॥ प-
रितः प्रश्नः ॥
परिप्लवः । त्रि० चञ्चले ॥ परिप्लव-
ते । मुद्गतौ । प०अच् ॥ आ
कुले ॥
परिप्लुतः । त्रि० आप्लुते । व्याप्ते
सर्वतोव्याप्ते ॥ परितः प्लुतः ॥
परिप्लुता । स्त्री० मदिरायाम् ॥ या
व्यधर्मैर्वेदनावत्यायोनौ ॥ यथा ।
परिप्लुतायामभवतियाग्यधर्मैकलाभ्र
शम् । इतियोनिव्यापन्निदानेमाध
वकरः ॥
परिफुल्लः । त्रि० हर्षपुलकिते ॥ फु
ल्लते । फुल्ल० । पचाद्यच्लत्वंमतुफु
ल्लेतिनिष्ठात्वं । अनुपसर्गादितिक-
यनाविरोधात् । परितःफुल्लः ॥
परिबर्हः । पु० राजयोग्यद्रव्ये । सि
तच्छत्रादौ ॥ परिच्छदे ॥ परिबर्ह
तेपरिबर्ह्यतेवा । वर्हप्रधान्ये । अ
च्०घञ्वा ॥
परिभवः । पु० अनादरे ॥ यथा ।
यन्नाव्यादिवजातयः परिभवैर्येतद्-
वचः पालनात्पीतः कुम्भसमुद्र
वेनमुनिनाकिंजातमेतावता । मर्या
दायदिलङ्घतेविधिवशाद्यस्मिन्च-
णेवारिधिस्तैलोक्यसचराचरम स-
तिथ कस्तत्रकुम्भोद्भवः ॥ परी भु-
वोऽवज्ञानइ० घञभावेऽस्दोरप् ॥ स

र्वतोभवने ॥

परिभावः । पुं॰ अनादरे । परिभवे ॥ परौभुवोऽवज्ञानइतिभावेघञ् । वृद्धिः ॥

परिभावुकः । त्रि॰ तिरस्कुर्वति ॥ लषपतेत्यादिनोकञ् ॥

परिभाषणम् । न॰ सनिन्देउपालम्भे ॥ उपालम्भोद्विविधः । गुणाविष्करणपूर्वकोनिन्दापूर्वकश्च । आद्यो-यथा । महाकुलस्यभवतः किमुचितमिदमिति । द्वितीयस्तुयन्धकीसुतस्यभवतउचितमेवेदमिति । तयोर्द्वितीयःसपरिभाषणशब्दार्थः ॥ भाषव्यक्तायांवाचि । ल्युट् ॥ नियमे ॥ आलापे ॥

परिभाषा । स्त्री॰ परिष्कृतिभाषणे । पदार्थविवेचकाचार्याणांयुक्तियुक्तायांवाचि । प्रज्ञप्तौ । शैल्याम् ॥ अनियमनिवारकन्यायविशेषे ॥ अनियमेनियमकारिणीपरिभाषेतिलक्षणात् ॥ आधुनिकसङ्केते ॥ दू॰ शब्दाब्दिगादाधरीटीका ॥

परिभूः । पुं॰ ईश्वरे ॥ सर्वेषामुपर्युपरिभवनात्॰परिसर्व्वतोभवति । भू॰ । क्विप् ॥

परिभूतः । त्रि॰ परिभयान्विते । अनादृते । अवमते । अवमानिते ॥ परिभूयतेस्म । भू॰ । क्तः ॥

परिभूयमानः त्रि॰ अनादरानुभवकर्तरि ॥ यथा ॥ शैशालभावेनपठन्ति विद्यांकामातुरायौवननष्टचित्ताः । तेवृद्धकालेपरिभूयमानाः सन्दह्यमानाः शिशिरेयथाब्जाइति ॥

परिभोगः । पुं॰ उपभोगे ॥ परिभोजनम् । भुज॰ । घञ् ॥

परिभ्रमः । पुं॰ सर्वतोभ्रमणे ॥

परिभ्रमणम् । न॰ पर्यटने ॥ धनाशापुरुषस्येश्वपरिभ्रमणंकारणम् ॥

परिभ्रामणम् । न॰ हस्तादिषुरज्ज्वापरितश्चालने ॥

परिमण्डलः । त्रि॰ वर्तुले ॥ परितश्चक्राकारे ॥ न॰ । परमाणौ ॥

परिमण्डलितः । त्रि॰ विवर्तिते ॥ वर्तुलीकृते ॥

परिमलः । पुं॰ विमर्दने । कुङ्कुमादिमर्द्दने ॥ विमर्द्दोत्थगन्धे । अतिमनोहरगन्धे ॥ जनमनोहरेसुरतादिविमर्द्दनेनोत्पन्नेमाल्यादिगन्धे । सुरतोपमर्दविकसच्छरीररागादिसौरभे ॥ सम्भोगे ॥ पण्डितानांसमूहे । दू॰ भव॰ ॥ परिमलनम् । मलधारणे । घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ घर्षणसमुद्भवेचन्दनादिगन्धे ॥

परिमाणम् । न॰ आढककुडवादौपरिच्छेदके । सर्वतोमाने ॥ आरोहपरिणाहाभ्यांखगराभ्यांयेनकाष्ठादिनिर्मितनौकादिपरिमीयतेतत्

परिमाणंप्रस्थादिरित्यर्थ : । परि : सर्वतोभावे । यथोक्तम् । परिमाणमनुसर्वत । इति ॥ न्यायमतेतुमानव्यवहारासाधारणकारणे । पृथिव्यादिनवद्रव्यवर्त्तिनि । तच्चतुर्विधम् । अणुमहद्दीर्घम्ह्रस्वंचेतिभेदात् । यथोक्तंभाषापरिच्छेदे । परिमाणंभवेन्मानव्यवहारस्यकारणम् । अणुदीर्घंमहद्ध्रस्वमितितद्भेद ईरित : ॥ अनित्ये तदनित्यं स्यान्नित्यं नित्यमुदाहृतम् । सङ्ख्यात : परिमाणाच्च प्रचयादपिजायते ॥ अनित्यं द्व्यणुकादौतु सङ्ख्याजन्यमुदाहृतम् । परिमाणंघटादौतुपरिमाणजमुच्यते ॥ प्रचय : शिथिलाख्योय : संयोगस्तेनजन्यते । परिमाणंतूलकादौनाशस्त्वाश्रयनाशत : ॥ इति ॥ परिमीयतेपरिच्छिद्यते येनतद् ॥

परिमार्ज्जनम् । न० परिशोधने ॥ खाद्यविशेषे । मधुमस्तके । यथा । मधुतैलघृतैर्मध्ये वेष्टिता:समिताश्च या : । मधुमस्तकमुद्दिष्टं तस्याख्या परिमार्ज्जनमितिशब्दचन्द्रिका ॥

परिमित : । त्रि० परिमाणविशिष्टे । परिच्छिन्ने । एतावति । इतनाइ० भाषा० युक्ते । परितोमित : ॥

परिमिलित: । त्रि० व्याप्ते । समन्तात्सङ्गते ॥

परिमृष्ट : । त्रि० व्याप्ते ॥

परिमेय : । त्रि० परिमातुंयोग्ये ॥ । माङ्० । अचोयत् । ईद्यति । गुण: ॥ परिमिते ॥

परिमोच : । पुं० मलत्यागे । परितो मोचने ॥

परिमोषी । त्रि० परिमोषणशीले । चौरे ॥

परिरब्ध : । त्रि० श्लेषिते । आलिङ्गिते ॥

परिरम्भ : । पुं० आलिङ्गने । परिष्वङ्गे । बाहुभ्यांनिष्पीडने । परिरम्भणम् । रभ० । घञ् । रभेरशब्लिटोरितिनुम् ॥

परिरम्भित : । त्रि० आलिङ्गिते । रमिते ॥

परिवत्सर : । पुं० वत्सरे ॥ वत्सरविशेषे ॥ यथा । शकाब्दात्पञ्चभिर्हृतेय : शेषस्तिष्ठतितेनैकादिक्रमेण संपरिइदाअनुइदापूर्वकवत्सरसंज्ञका : वत्सराभवन्ति । यथोक्तम् । शकाब्दात्पञ्चभि . शेषात्समाद्यादिषुवत्सरा : । सम्परीदानुपूर्वाश्च तयोदापूर्वकाअमता : ॥ परिपूर्वेत्यादानंयवानांचदिर्वोत्तमा : । इति विष्णुधर्मोत्तरम् ॥ परितोवसन्त्यत्रायनर्त्वादय : । वस० । सपूर्वाच्चिदितिसर : । सस्यार्धधातुकइति सस्यत : ॥

परिवर्जनम् । न० मारणे ॥ परित्यागे । यथा । गोघ्नोनदोषोमधुराङ्गनानांधूर्तस्यकृष्णस्यहितीतिरेषा । विपर्ययोयेनकृतः सपिचोरस्तोपपत्नीपरिवर्जनंकिम् ॥ वृजीवर्जने । ल्युट् । परितोवर्जनम् ॥ कुभार्यांचकुमित्रञ्चकुराजानंकुसौहृदम् । कुबन्धुञ्चकुदेशञ्चदूरतः परिवर्जयेत् ॥ ब्राह्मणंबालिशंचक्षमयोधारंविषंजलम् । शूद्रमक्षरसंयुक्तं दूरतःपरिवर्जयेत् ॥

परिवर्त्तः । पुं० नैमेये । विनिमये ॥ कूर्मराजे ॥ प्रवर्त्तने ॥ पलायिते । युगान्ते ॥ परिवर्त्तनम् । वृतु० । भावेघञ् ॥ ग्रन्थविच्छेदे ॥ अपवर्त्तने ॥

परिवर्त्तनम् । न० परिदाने । परिवर्त्ते । विनिमये ॥ परेतन्दा इ०भा० ॥ इतस्ततोभ्रमणे ॥(ccc(c)c(c)

परिवर्त्तिका । स्त्री० भावप्रकाशोक्तमेढ्रजातक्षुद्ररोगविशेषे ॥

परिवर्त्तितः । त्रि० निवर्त्तिते ॥

परिवर्त्ती । त्रि० विनश्वरे ॥ संसारः परिवर्त्तीतिप्रसिद्धम् ॥

परिवर्त्तिनी । स्त्री० विष्टुतिप्रभेदे ॥

परिवर्हः । पुं० राजयोग्यद्रव्ये ॥ परिच्छदे ॥ परिवर्हतेपरिवर्ह्यते वा । वर्हप्राधान्ये । पचाद्यच् । घञ् वा ॥

परिवर्हणम् । न० आराधने ॥

परिवसथः । पुं० ग्रामे ॥ परितोवसन्त्यत्र । वस० । उपसर्गेवसेरित्यथः ॥

परिवहः । पुं० प्रावहवायोरुपरिस्थितेसप्तवाय्वन्तर्गतसप्तमवायौ ॥

परिवादः । पुं० परदोषकथने । अपवादे । निन्दायाम् ॥ यथा ॥ संततसुलभदैन्यो निःसुखजीवलोकोयदि सम परिवादात्प्रीतिमाप्नोति कश्चित् । परिवदतुयथेष्टं मत्समक्षंतिरोवा जगतिहिबहुदुःखेदुर्लभः प्रीतियोगः इति ॥ वीणावादनवस्तुनि ॥ परिपूर्वाद्वदेर्भावेघञ् ॥

परिवादकः । त्रि० परिवादकर्त्तरि ॥

परिवादी । त्रि० परिवादकर्त्तरि ॥ परिवादविशिष्टे ॥

परिवादिनी । स्त्री० सप्ततन्त्रीयुतायां वीणायाम् । सप्ततन्त्रिया० इ० भा० ॥ परिवदतिस्वरान् । वद० । सुप्यजातौणिनिः ॥ परिवादविशिष्टायाम् ॥

परिवापः । पुं० पर्युप्तौ । वपने ॥ जलस्थाने ॥ परिच्छदे । परिवारे ॥ परिवपनम्अनेनअत्रवा । टुवप्० । भावेघञ्हलश्चेतिवा ॥

परिवापनम् । न० मुण्डने ॥ हेतुमण्णिजन्तात्वपेर्ल्युट् ॥

परिवापितः । त्रि० मुण्डिते ॥ परि

परिविन्दतिज्येष्ठंपरित्यज्यभार्याम् अग्निहोत्रं वालभते । विद्लृलाभे त्वन्तृचौशंसिवदादिभ्यः संज्ञायां चानिटौ ॥

परिवेदनम् । न० विवाहे ॥ सम्याधाने सर्वतोभाविनलाभे ॥

परिविदनीया । स्त्री० अनूढज्येष्ठतत्कनिष्ठेनविवाहितायाम् ॥

परिविदत्री । स्त्री० परिवेत्तुः स्त्रियाम् इ०हेमचन्द्रः ॥

परिविशः । पुं० वेष्टने ॥ परिधाने ॥ परितोविशति । विश० । घञ् ॥ परिधौ ॥

परिविषः । पुं० भोजनार्थमन्नादीनांपरिवेषणे ॥ परिविषेर्भावेघञ् ॥ परिहतौ ॥ परिधौ ॥ चन्द्रसूर्ययोरुत्थातभूतरश्मिमण्डले ॥ अथाहवराहमिहिर : सम्मूर्छितारवीन्द्वोःकिरणाःपवनेनमण्डलीभूताः । नानावर्णाकृतयोह्यम्भस्योम्नितन्वभ्रे ॥ तेषांसंज्ञान्ताराह । तेरक्तनीलपाण्डुरकापोताभ्राभश्यवलहरिशुक्लाः । इन्द्रयमवरुणनिरृतिश्वसनेशापितामहाग्न्युक्ताः ॥ धनदः करोति मेचकमन्योन्यगुणाश्रयेणचाप्यन्ये । प्रविलीयतेमुहुर्मुहुरल्पफलः सोपिवायुकृतः ॥ वस्तुवशेनफलमाह । चापशिखिर [illegible] । [illegible]

[illegible]

ग्धः परिवेषःशिवसुभिक्षकरः ॥ सकलगगनानुचारीनैकाभ.क्षतजसन्निभोरुक्षः । असकलशकटशरासनशृङ्गाटकवत् स्थित.पापः ॥ शिखिगलसमेतिवर्षंबहुवर्णेन्नृपवधोभयंधूम्रे । हरिचापनिभेयुद्धान्यशोकसुमप्रभेचापि ॥ वर्णेनैकेनयदावहल.स्निग्धःक्षुराभ्रकाकीर्णः । स्वर्तौसद्योवर्षंकरोतिपीतश्चदीप्तार्कः ॥ दीप्तमृगविहङ्गरुतः कलुषःसन्ध्यात्रयोत्थितोतिमहान् । भयदाताडिद्दुल्काद्यैर्हतोत्पबन्धिमग्नेव ॥ प्रतिदिनमर्कहिमांश्वोरहन्निशंरक्तयोर्नरेन्द्रवधः । परिविष्टयोरभीक्ष्णं लग्नास्तमयस्थयोस्तद्वत् ॥ सेनापतेर्भयकरोद्विमण्डलोनातिशस्त्रकोपकरः । त्रिप्रभृतिशस्त्रकोपयुवराजभयंनगररोधम् ॥ * ॥ विशेषमाह । वृष्टिस्त्र्यहेणमासेनविग्रहोवायवेंदुभनिरोधे । दौराजन्माधिपयोर्जन्मर्क्षेवाशुभो राज्ञः ॥ * ॥ परिवेषमध्यगतानांग्रहाणांफलमाह । परिवेषमण्डलगतोरवितनयः क्षुद्रधान्यनाशकरः । जनयतिचवातवृष्टिं स्थावरकृषिकृन्निहन्ता च । भौम : कुमारबलपतिसैन्यानांविद्रवोग्निशस्त्रभयम् । जीवेपरिवेषगतेपुरोहितामात्यनृपपीडा ॥ मन्त्रिस्थावरलेखक परिव

द्विचन्द्रजीसुवृष्टिस्त । शुक्रेयायिच-चियराज्ञोपीडाप्रियस्थानम् ॥ चु-द्नलम्त्सुनराधिपश्रखेभ्योजायतेभ यंकेतौ । परिविष्टेगर्भभयंराज्ञोव्याधिर्नृपभयस्त ॥ ॥ मृदिषुषष्टे षुमध्यगतेषुफलमाह । युग्मानिविमानीयात्परिवेषाभ्यन्तरेद्वयोर्यह यो : । द्विषसक्तस : शशिनोवाचुद्वृष्टिभयंविभुप्रोक्तम् ॥ यातिचतु पुंनरेन्द्र : सामात्यपुरोऽहितोवशंमृत्यो : । प्रलयमिवविद्धिजगत : प ञ्चादिषुमण्डलस्थेषु ॥ ॥ अथतारावहाणांवापृथक्परिविष्टानांफलमाह । तारायहस्यकुर्यात्पृथगेवसमुत्थितोनरेन्द्रवधम् । नक्षत्राणाम थवायद्धिकेतोर्नोद्वयोभवति ॥ ॥ तिथिक्रमेणपरिवेषफलान्याह । विप्रक्षत्रियविट्शूद्राभवेत्प्रतिपदादिषुक्रमश : । श्रेणीपुरकोशानांप-च्चम्यादिष्वशुभकारी ॥ युवराजस्याष्टम्यांपरतस्त्रिषुपार्थिवस्यदोषकर : । पुररोधोद्वादश्यांसैन्यक्षोभस्त्र-योदश्याम् ॥ नरपतिपत्नीपीडांपरिवेशोऽभ्युत्थितस्तुर्दश्याम् । कुर्याच्च पञ्चदश्यांपीडामनुजाऽधिपस्यैव ॥ ■ ॥ परिवेषलेखावशेनशुभाशुभमाह । नागरकाणामाभ्यन्तरस्थितायायिनाम्बाह्यस्था । परिवेषमध्यरेखाविज्ञेयाक्रन्दसाराणाम् ॥ रक्तः श्यामोरूक्षोभवतिषयेषांपराजयस्तेषाम् । स्निग्ध : श्वेतोद्युतिमान्येषांभागोजयस्तेषामिति ॥ ॥ अपिच । दिनकरपरिवेष : पूर्वयामेतुपीडा॰दिनकरपरिवेषोवृष्टिदुर्ब द्वितीये ॥ दिनकरपरिवेष : क्षेममायुस्तृतीयेदिनकरपरिवेष : सर्वनाशश्चतुर्थे ॥ द्विधासूर्येपरिवेषोरात्रौचन्द्रेयदाभवेत् । एकस्मिन्दिवसेरात्रौतदानश्यतिपार्थिव : ॥ एतेनविधिनानित्यंसप्ताहंपरिविष्यते । सर्वभूतविनाश : स्यात्तस्मिन्दृष्टा तदर्थिनी ॥ परितोविष्यतेऽनेन । वि पत्तृव्याप्तौ । घञ् ॥

परिवेषक : । त्रि॰ अन्नादिपरिवेषणकर्त्तरि ॥ यथा । स्नातश्चन्दनचर्चित : सुवसन : स्रग्वीप्रसन्नानन: स्पष्टास्पष्टसुभग : प्रसन्नहृदय : श्री कान्तपूजारत : । स्वामिस्नेहपर : स्वपाकनिपुण : प्रौढोयदान्त : शुचिर्विप्रोनापरिवेषक : स्तुकुलसञ्जान्वीपिवाभूपते : ॥ स्त्री॰ । परिवेषिका ॥ यथा । स्नाताविशुद्धवसनाभवभूषिताङ्गीकर्पूरसौरभमुखीनयनाभिरामा । बिम्बाधराशिरसिबद्धसुगन्धपुष्पामन्दस्मिताद्विजतिश्रुतांपरिवेषिकास्यात् ॥

परिवेषणम् । न॰ भोजनार्थमन्नादे : पात्रेसमर्पणे । परोसना॰इ॰भा॰ ॥

तत्प्रकारोयथा । पुरस्ताद्विमलं-
पात्रंसुविस्तीर्णंमनोहरम् । स्थापि
तंपीठकेशुभ्रेनाभिदेशसमुन्नते ॥ त-
त्रभक्तंपरिन्यस्तंमध्यभागेसुसंयतम् ।
सूपंसर्पिः फलंशाकंपिष्टमन्नन्तुमत्स्य
कम् ॥ स्थापितंदक्षिणेपार्श्वेभुक्ता
नस्ययथाक्रमम् । प्रलेह्याद्याद्रवा :
सर्वेपानीयंपानकंपय : ॥ चोष्यंस-
न्धानकंलेह्यंसव्यपार्श्वेनिधापयेत् ।
सर्वाणिचुक्रिकारांश्चपक्वान्नंपायसंद-
धि ॥ पुरत : स्थापयेद्भोक्तुर्दयो :
पङ्क्त्योस्तुमध्यत : । एवंविज्ञायम
तिमान्परिवेषप्रकल्पनम् ॥ ततो-
ऽभवतिप्राज्ञ : सम्यक्सम्परिवेषि
तुम् ॥ ॥ अथश्राद्धेपरिवेषणेम-
नु : । पाणिभ्यान्तूपसङ्गृह्यस्वयम-
न्नस्यवर्द्धितम् । विप्रान्तिकेपितॄन्ध्या
यन्शनकैरुपनिक्षिपेत् ॥ अन्नस्येति
तृतीयार्थेषष्ठी । वर्द्धितं॰पूर्णंपिठ-
रादिपात्रम् । उपनिक्षिपेत्ब्राह्मणा
नांसमीपेपरिवेषणार्थंमस्तरणात्स्था
पयेत् । तथाचपाकस्थाल्याआकृष्य
प्रथमंभोजनपात्रेनदेयमपितुस्था
ल्यादिकंपाणिभ्यांपात्रसमीपेभूमौ
संस्थाप्यपश्चात्पाणिभ्यांपात्रान्तरि
ताभ्यांश्राद्धेपरिवेषयेत् । उभाभ्या-
मपिपाणिभ्यामाकृष्यपरिवेषयेत्॰
इतिमत्स्यपुराणात् । यत्तुश्राद्धेपरि
वेषणन्तुदक्षिणपाणिमात्रेणैवाऽश्रा

नभिधानादितिमैथिलोक्तं तन्न । ए-
केनपाणिनादत्तंशूद्रादत्तंनभक्षयेदि
त्यादिपुराणीयेनएकपाणिदत्तशूद्रा
दत्तभक्षणनिषेधेनंतन्मात्रपरिवेष-
णस्यापिनिषिद्धत्वात्पाणिभ्यामपि
पात्रान्तरितंकृत्वादेयम् । हस्ताद्-
त्ताश्चयेस्नेहालवणंव्यञ्जनानिच ।
दातारंनोपतिष्ठन्तेभोक्ताभुङ्क्तेच-
किल्विषम् ॥ तस्मादन्तरितंदेयंप-
र्णेनाथतृणेनवा । प्रदद्यान्नतुहस्तेन
नायसेनकदाचन ॥ इतिवशिष्ठवच
नेनसामान्यतोऽभिधानात् । पितृ-
भक्तितरङ्गिण्यामप्येवम् । मनु : ।
गुणांश्चसूपशाकाद्यान्पयोदधिघृतं
मधु । विन्यसेत्प्रयत : सम्यग्भूमा
वेवसमाहित : ॥ आमिषंपानपात्र
ञ्चभोक्तुर्दक्षिणतोन्यसेत् । भक्ष्यभो-
ज्यञ्चविविधंमूलानिचफलानिच ॥
हृद्यानिचैवमांसानिपानानिसुरभी
णिच । उपनीयचतत्सर्वंशनकै :
सुसमाहित: ॥ परिवेषयेत्प्रयतोगु
णान्सर्वान्प्रचोदयन् ॥ गुणान्उ
पकरणानिभूमावेवनतुव्यञ्जनादि-
पात्राणिअन्नादिपात्रोपरिनिक्षिपेत्
॥ इतिश्राद्धतत्त्वम् ॥

परिवेष्टित : । त्रि॰ परिक्षिप्ते । परि-
स्कृते । परिते ॥ परितोवेष्टित : ॥

परिवेष्टा । त्रि॰ परिवेषणस्यकर्त्तरि ॥
परिचारे ।

परिव्याध : । पुं० अम्बुवेतसी । द्रुमोत्पले । परिविध्यति । व्यधताडने । घञ् ॥ परिविध्यतिवा । श्वादृव्यधे तिथः ॥

परिव्रज्या । स्त्री० तपस्यायाम् । द्र०-है० ॥

परिव्राट्०ज् । पुं० भिक्षौ । कर्मन्दिनि । पाराशरिणि । मस्करिणि ॥ तल्लक्षणंयथा । सर्वारम्भपरित्यागोभैक्षाश्यंवृक्षमूलता । निष्परिग्रहताऽद्रोहः समतासर्वजन्तुषु ॥ प्रियाप्रियपरिष्वङ्गेसुखदुःखाविकारिता । सबाह्याभ्यन्तरंशौचंसुखदुःखाविकारिता ॥ सर्वेन्द्रियसमाहारोधारणाध्याननित्यता ॥ भावसंशुद्धिरित्येषपरिव्राड्धर्मउच्यते ॥ कृतिगरुडपुराणम् । परित्यज्यसर्वंव्रजति । व्रज० । परीव्रजि: पः पदा न्तद्वतिक्विप्•दीर्घञ्चपदान्तविषयेप त्वञ्च ॥

परिव्राजक : । पुं० सन्यासिनि । परिव्रजति । व्रज० । ण्वुल् ॥

परिव्राजि: । स्त्री० श्रावण्यामोषधौ ॥

परिशङ्कनीय : । त्रि० सर्वतोभावेनशङ्काविषये । यथा । शास्त्रंसुचिन्तितमपिप्रतिचिन्तनीयंस्वाराधितोऽपि नृपति : परिशङ्कनीय : । अङ्केस्थितापियुवति : परिरक्षणीयाशास्त्रेनृपेचयुवतौचकुतोवशित्वम् ॥

परिशासनम् । न० भृत्यादिप्रेरणे । आकारणपूर्वकभृत्यादिप्रेरणे । शासु० । ल्युट् ॥

परिशिष्टम् । न० परिशेषविशिष्टे । अवशिष्टार्थबोधकेग्रन्थे ॥ त्रि० । अवशिष्टे ॥ परित : शिष्ट : ॥

परिशीलनम् । न० ग्रन्थादिविचारे ॥

परिशीलित : । त्रि० अभ्यस्ते ॥

परिशुष्कम् । न० मांसव्यञ्जनप्रभेदे ॥ यथा । स्थिरंयत्तुदृढंतद्व्यांसुघृताल्लोड्यभर्ज्जितम् । साचयादधिसिंधूत्थरामठैलापरिप्लुतम् ॥ मरिचार्द्रकसंयुक्तंसुगन्धिद्रव्यवासितम् । गतद्रवंसुधातुल्यंपरिशुष्कंतदुच्यते ॥ अपिच । मांसंबहुघृतैर्भृष्टंसिक्तंस्वेच्छाम्बुनामुहु : । जीरकाद्यै:समायुक्तंपरिशुष्कंतदुच्यते ॥ द्र० । त्रि० सर्वतोनीरसे । निर्मांसे ॥ परित : शुष्कम् ॥

परिशेष : । पुं० प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणेसम्प्रत्यये ॥ परिशिष्यते । शिषृलृविशेषणे । घञ् ॥

परिशोध : । पुं० परिशोधने । सर्वतोभावेनशुद्धौ ॥ परित : शोध : ॥

परिशोष: । पुं० सर्वतोभावेनशुष्कतायां ॥

परिश्रम : । पुं० श्रमे । क्लमे । क्लेशे । प्रयासे । परिश्रान्तौ ॥ परित:श्रम: ॥

परिश्रय : । पुं० सभायाम् । आश्रये ॥ परिश्रयणम् । श्रिञ्० । एरच् ।

परिश्रान्त : । त्रि० सर्वतोभावेनश्रान्ति युक्ते । परित : श्रान्त : ॥

परिश्रुत : । त्रि० सर्वतोभावेनश्रवण विशिष्टे ॥

परिश्लेष : । पुं० आश्लेषे ॥

परिषत् । स्त्री० अधीतशास्त्राणांसम वाये । सभायाम् । परिषत्त्वं यथा । एकविंशतिसङ्ख्याकैर्मीमांसान्याय पारगै : । वेदाङ्गकुशलैश्चैवपरिष त्त्वंप्रकल्पयेत् ॥ परित : सीदन्त्य स्याम् । षद्लृ० । सं०क्विप् । सत्सू द्विषेतिवाक्विप् । सदिरप्रतेरितिष त्वम् ॥

परिषद : । पुं० पारिषदे । अनुचरे ॥ ह०लि० ॥

परिषद्वल : । पुं० सभ्ये । सभासदे ॥ परिषदस्यास्ति । रज : कृष्यासुति परिषदोवलच् ॥

परिषेक : । पुं० स्नानादौ ॥

परिष्कन्द : । पुं० परिस्कन्दे । परा चिते ॥ परिस्कन्दति । स्कन्दिर० । पचाद्यच् । परेर्श्चे तिवाषत्वम् ॥

परिष्कार : । पुं० विभूषणे । अलङ् कारे ॥ परिष्क्रियतेऽनेन । घञ् । सम्परिभ्यामितिसुट् । परिनिवी तिषत्वम् । संस्कारे । शुद्धौ ॥

परिष्कृत : । त्रि० अलङ्कृते । भूषि ते । परिष्क्रियतेस्म । क्त : । सम्प रिभ्यामितिसुट् । परिनिविभ्य : से वसितसयसिवुसहसुट्स्तुस्वञ्जामि तिषत्वम् ॥

परिष्वक्त : । त्रि० आलिङ्गिते । यथा । स्त्रीपुंसौपरिष्वक्तौभवत : ॥ अन्यो न्यंगाढमिङ्गितौभवतइत्यर्थ: ॥

परिष्वङ्ग : । पुं० आलिङ्गने । परि रम्भे । परिष्वञ्जनम् । ष्वञ्जपरि ष्वङ्गे । घञ् । परिनिविभ्य : इति ष : ॥

परिसङ्ख्या । स्त्री० विधिविशेषे ॥ यथातत्रचान्यत्रचप्राप्तौपरिसङ्ख्ये तिगीयते । साचोभयप्राप्ताचितर निवृत्तिं बोधयति । यथा । पञ्चपञ्च नखाभक्ष्याइत्यत्रशशादिमांसेतरप ञ्चनखमांसभक्षणनिवृत्तिबोध : । तदुक्तम् । नियम : परिसङ्ख्यावा विध्यर्थोहिभवेद्यत : । अनात्म दर्शनेनैवपरात्मानमुपास्महइति ॥ एकस्योभयत्रप्राप्तावेकत्रनियमनेय थाहु: । एकस्यवस्तुन : प्राप्तावनेक त्रैकधायदा । एकत्रनियम : साहि परिसङ्ख्यानिगद्यतेइति ॥ अलङ् कारविशेषे ॥ यथा । इयंत्रिदोषव तीयथाहस्मार्त्त : । श्रुतार्थस्यपरि त्यागादश्रुतार्थस्यकल्पनात् । प्रा प्तस्यबाधादित्थंसंपरिसङ्ख्यात्रिदू षणेति ॥ किञ्चित्पृष्टमपृष्टंवाकथि

तंयत्प्रकल्प्यते । तादृगन्यव्यपोहाय
परिसङ्ख्यातुसास्मृता ॥ प्रमाणा
न्तरावगतमपिवस्तुशब्देनप्रतिपा-
दितम्प्रयोजनान्तराभावात्सदृश-
वस्त्वन्तरव्यवच्छेदाययत्पर्यवस्यति-
साभवेत्परिसङ्ख्या ॥ सचकथ-
नंप्रश्नपूर्वकंतदन्यथाचपरिहृष्टंतयो-
भयचव्यपोह्यमानस्यप्रतीयमानता-
वाच्यत्त्वञ्चेतिचत्वारोभेदा : । क्रमे-
णोदाहरणम् । किमासेव्यंपुंसांस-
विधमनवद्यंद्युसरित : किमेकान्ते-
ध्येयंचरणयुगलंकौस्तुभभृत : । कि
माराध्यंपुण्यंकिमभिलषणीयञ्चकरु
णायदासक्त्याचेतोनिरवधिविमु-
क्तौप्रभवति । किम्भूपणंसुदृढमपय
शीनरत्वं किंकार्यमार्यचरितंसुकृतं-
नदोष : । किंचक्षुरप्रतिहतंधिषणा
ननैवंजानातिकस्त्वदपर : सदसद्वि
वेकम् ॥ कौटिल्यंकचनिचयेकरच
रणाधरदलेषुरागस्ते । काठिन्यंकु-
चयुगलेतरलत्त्वंनयनयोर्वसति ॥भ
क्तिर्भवेनविभवेव्यसनंशास्त्रेनयुवति
कामास्त्रे । चिन्तायशसिनवपुषि
प्राय : परिदृश्यतेमहतामिति ॥

परिसङ्ख्यानम् । न० गणनायाम् ॥

परिसङ्ख्याविधि : । पुं० उभयोर्युग-
गपत्प्राप्तावितरव्यावृत्तिपरेविधौ ॥
यथा । पञ्चपञ्चनखाभक्ष्याइति ।
इदंहिवाक्यंनपञ्चनखभक्षणपरम् ।
तस्यरागत:प्राप्तत्वात् । नापिनिय-
मपरम्पञ्चनखभक्षणस्ययुगपत्प्रा-
प्ते : पक्षेऽप्राप्त्यभावात् । यतइदम
पञ्चनखभक्षणनिवृत्तिपरमितिभव-
तिपरिसङ्ख्याविधि : । साचद्वि-
विधा । श्रौतीलाक्षणिकीच । तत्र
चकारावयववतीतिश्रौतीपरिसङ्-
ख्या । एवकारेणपञ्चमानातिरिक्त-
स्तोचव्यावृत्तेरभिधानात् । पञ्चपञ्च
नखाभक्ष्याइतिलाक्षणिकीतत्र-
निवृत्तिवाचकपदाभावात् । अतए
वैषात्रिदोषग्रस्ता । दोषत्रयञ्च ।
श्रुतहानि : अश्रुतकल्पनाप्राप्तबा-
धश्चेति । तदुक्तम् । श्रुतार्थस्यपरि-
त्यागादश्रुतार्थस्यकल्पनात् । प्राप्त
स्यबाधइत्येवंपरिसङ्ख्यात्रिदूषणे-
ति ॥ श्रुतस्यपञ्चनखभक्षणनिवृत्ते :
कल्पनात्प्राप्तस्यचपञ्चनखभक्षणस्य
बाधनादिति । अस्मिंस्त्रदोषत्रयंग-
म्येनिष्ठंप्राप्तबाधस्त्वर्थनिष्ठमितिदि-
क् ॥

परिसमाप्ति : । स्त्री० निश्चये ॥

परिसर : । पुं० पर्यन्तभूमौ । नदीन-
गरपर्वतादेरुपान्तभूमौ ॥ परित :
सरन्त्यत्र । अच् गतौ । पुंसीतिघ : ॥
मृत्यौ । विधौ ॥ देवे ॥

परिसरणम् । न० सर्वतोगमने ॥ सृग
तौ । ल्युट् ॥

परिसरा । स्त्री० नाड्याम् ॥

परिसर्य्यः। पुं० परिक्रियायाम्। प-
रिजनादिनावेष्टने॥ परिसमन्तात्
सर्पणम्। सृप्लृगतौ। घञ्॥
परिसर्प्पणम्। न० प्रसरणे॥ परि-
सर्प्पः॥
परिसर्य्या। स्त्री० परीसारे। सर्वतो-
गमने॥ परिसरणम्। स०। परि-
चर्यापरिसर्यामृगयाटाट्यानामुपस
ङ्ख्यानमितिशप्रत्ययोयक्गुणौच-
निपातनात्॥
परिसीमा। स्त्री० भूयत्तायाम्॥ परि
तःसीमा॥
परिस्कन्दः। पुं० पराचिते। परपुष्टे
॥ परिस्कन्दति। स्कन्दिर्०। प०
पच्। परेर्वेतिपत्वेषत्वाभावः॥
परिस्तरणम्। न० आच्छादने॥
परिस्तोमः। पुं० गजपृष्ठस्थचित्रकम्बले
। प्रवेण्याम्। वर्णे। कुथे॥ परि
स्तूयते। ष्टुञ्०। अर्त्तिस्तुस्विति
मन्। यद्वा। परिगतः स्तोमोऽव
यवसंस्तोमत्वात्। यत्क्रियायुक्तास्तइति
परेःस्तौतिप्रतिपन्नुपसर्गत्वाद्बत्वः॥
परिस्पन्दः। पुं० कुसुमप्रकारादेः यथा
वस्त्यादिसरचनायाम्॥ शिखास्थ
माल्ये॥ परिवारे॥ परिस्पन्दन
म्। स्पन्दि०। भावे अधिकरणेवा
घञ्॥
परिस्पन्दनम्। न० सर्वतोभावेनकम्प
ने॥
परिस्पन्दमानः। त्रि० सर्वतोभावेन
कम्पमाने॥
परिस्फुटः। त्रि० प्रसिद्धावयवार्थे॥
परिस्फुरितः। त्रि० प्रकाशिते॥
परिस्रुत्। स्त्री० वरुणात्मजायाम्।
मदिरायाम्॥ परितः स्रवति।
स्रु०। क्विप्तुकौ॥
परिस्रुतः। त्रि० स्रन्ने। स्रवयुक्ते॥
परितः स्रूयतेस्म। स्रु प्रस्रवणे। गत्य
र्थेतिक्तः॥
परिस्रुता। स्त्री० वारुण्याम्। मदि
रायाम्॥ परितःस्रवति। स्रु०।
क्विप्० तुक्। भागुरिमते। टाप्॥
यद्वा। परितः स्रूयतेस्मलोकैः।
स्रु०। गत्यर्थेतिक्तः॥
परिहापितः। त्रि० त्याजिते॥
परिहारः। पुं० अनादरे॥ परिह्रियते
ऽनेनाथवा। हृञ्। घञ्०। उपस
र्गस्येति पाक्षिकोदीर्घाभावः॥
परिहार्य्यः। पुं० वलये॥ त्रि०।
त्याज्ये॥
परिहासः। पुं० नर्मवाक्ये। परीहा-
सेठट्टा इतिभाषा॥ परिहसनम्।
हसेहसने। घञ्॥
परीक्षकः। त्रि० निरूपके। कारणिके
॥ शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षे।
प्रतिपादके॥ परीक्षते। ईक्षदर्शने
। ण्वुल्॥
परीक्षणम्। न० परीक्षायाम्। राज्ञा

धर्मकामार्थभयैरसात्या देर्भावसत्त्व निरूपणे । यथा । भेदोपजाया वुप धाधर्मार्दोर्थत्परीचणम् । इति ॥ सर्वतोभावेनदर्शने ॥ संशय्यपूर्वपच निराकरणेनोत्तरपचव्यवस्थापने ॥ परि स : ईचणम् ॥

परीचा । स्त्री॰ विचारणायाम् ॥ परि तश्चेचणमनया । ईच॰ ।गुरोश्चेहः । टाप् ॥ दिव्ये ॥

परीचित् । पुं॰ नृपविशेषे ॥ अभिम न्युसुते । विष्णुराते ॥ सयुधिष्ठि रामन्तरंकलियुगस्यारम्भे चक्रवर्ती-राजाबभूव । सएवलोकविख्यात : परीचिदितियतः प्रभु : । पूर्वदृष्ट-मनुध्यायन् परीचेतनरेष्विह ॥

परीचित : । पुं॰ परीचिति । अभिमन्यु पुत्रे नृपे ॥ यथा । परिचीणेषुवंशे षुजातोयस्मादरःसुत:। तस्मात्परी चितोनाम विख्यात: पृथिवीतले इ॰ देवीभागवतम् । त्रि॰ । सम्या तापरीचायस्यता॰ इतम् ॥

परीच्यकारी । त्रि॰ सम्यग्विचेतुभिर्विस्र ष्यकरणशीले ॥

परीत : । त्रि॰ परिवेष्टिते । व्याप्ते ॥

परीतत् । त्रि॰ सर्वतोभावेनविस्तृ-ते ॥

परीप्सा । स्त्री॰ त्वरायाम् ॥ अपादा नेपरीप्सायामितिदर्शनात् ॥ प्राप्तु मिच्छायाम् । पर्याप्तुमिच्छायाम्

परीप्सु : । त्रि॰ जित्ता सौ॥ आप्नो-ते : सन्नंतादुप्रत्यय : । आप्ज्ञपृ-धामीदित्वीकार : । अत्रलोपोभ्या-सस्येत्यभ्यासलोप : ॥

परीभाव : । पुं॰ तिरस्क्रियायाम् अनादरे ॥ परीभुवोवज्ञानइति॰-भावेघञ् । इति: । उपसर्गस्यघञी तिदीर्घ : ॥

परीरम् । न॰ फले ॥ पृणाति । पृपा-लनपूरणयो : । कृशृपुकटिपटिशौ टिभ्यइरन् ॥

परीरण : । पुं॰ कमठे ॥ दण्डे ॥ प-ट्टयाटवी ॥ इतिमेदिनी ॥

परीरम्भ : । पुं॰ आलिङ्गने । परिर-म्भे ॥

परीवर्त : । पु॰ प्रतिदाने । विमये । नैमेये ॥ परिवर्त्तनम् । हृत॰ ।भावे घञ् । उपसर्गस्येतिदीर्घ : ॥

परीवाद : । पुं॰ अपवादे । निन्दा-याम् ॥ परिपूर्वाद्वदेर्भावेघञ् । उप सर्गस्यघञीतिदीर्घ : । विद्यमान दोषस्याभिधानंपरीवाद : । अवि-द्यमानदोषाभिधानंनिन्देतिविवे-क : ॥ यथा । परीवादस्तथ्योभवतु वितथोवापिमहतांतथाप्युच्चै र्धाम्नां हरतिमहिमानंजनरव: तुलोत्तीर्णं स्यापिप्रकटनिहताशेषतमसोरवे-स्तादृक्तेजोनहिभवतिकन्यांगतस्य-त : ॥

परीवापः । पुं० पर्युप्ती ॥ सलिलस्थाने परिवारे ॥ परिवपनम् वानेनात्रवा । टुवप्० । भावेघञ् इत्यत्रे तिवा । उपसर्गस्ये तिदीर्घः ॥

परिवारः । पुं० परिजने ॥ खड्गकोषे ॥ परिच्छदे । शोभाजनके उपकरणे छत्रचामरादौ । सभ्यजनादौच ॥ परिवार्यते ऽनेनपरिवारणंवा । घञ् । उपसर्गस्येतिदीर्घः ॥

परीवाहः । पुं० जलोच्छ्वासे । परिवाहे ॥ परिवहन्त्यें भिः । वह० । हलश्चे तिघञ् उपसर्गस्यघञीति पाक्षिकोदीर्घः ॥ परिवहनम् । भावेवा० घञ् ॥ महीभृद्योग्यवस्तुनि

परीष्टिः । स्त्री० अन्वेषणायाम् ॥ इ-षेरनिच्छार्थस्यपरेर्वेतिपक्षेतिन् । परिचर्य्यायाम् ॥ प्राकाम्ये ॥ परीसारः परिसर्य्यायाम् । सर्वतोगमने ॥ परिसरणम् । सृ० । घञ् उपसर्गस्यघञीतिदीर्घः ॥

परीहारः । पुं० अवज्ञायाम् । अनादरे । परिहरणम् । हञ्० । भावेघञ् । उपसर्गस्येतिपाक्षिकोदीर्घः ॥

परीहासः । पुं० द्रवकेलौ । नर्मणि ॥ परिहसनम् । हसे० । घञ् । पाक्षिकोदीर्घः ॥

परुः । पुं० वंशादिपर्वणि ॥ पिपर्त्ति । पॄ० । याहुलकादुः ॥

परुत् । अ० पूर्ववत्सरे । गतवर्षे ॥ पूर्वस्मिन्वत्सरेइत्यर्थे । सद्यःपरुदितिपूर्वस्यपरभावःउत्०च । संवत्सरे ॥

परुत्न : । त्रि० पूर्ववर्षभवे ॥ परुद्भव : चिरपरुत्परारिभ्यस्त्नोवक्तव्यः ॥

परुद्वार : । पुं० घोटके ॥

परुट् । पुं० पर्वणि ॥ यत्परुषिदिनमितिश्रुतौपरुषिपर्वणीत्यर्थात् ॥

परुषम् । न० निष्ठुरवाक्ये ॥ नीलझिण्ट्याम् ॥ परुषफले ॥ न० । तिलकवृक्षे ॥ त्रि ० कर्बुरे॥ रूक्षे ॥ निष्ठुरे॥ । परोक्षदेशजातिकुलविद्याशिल्परूपवृत्त्याचारपरिच्छदशरीरकर्मजीविनांप्रख्यापदोषवचनम् परुषमितिवदन्त ॥ यत्रान्यत्क्रोधसन्तापत्रासस्तज्जननंवच: । परुषंतद्विज्ञेयंयत्रान्यच्चतथाविधम् ॥ चक्षुष्मानितिखञ्जाचंचण्डालंब्राह्मणेति च । प्रशंसानिन्दनंवेयत्परुषान्नविशिष्यतेद्वितिदेवल : ॥ परुषवचनानामेवपरोक्षसुदाहरणमपवादघृस्था इः ॥ निष्ठुरवाग्युक्ते ॥ पिपर्त्तिपूर्यतिअलंबुद्धिंकरोति । पॄ० । पृनहिकलिभ्यउपन् ॥

परुषा । स्त्री० वृत्त्यनुप्रासघटकवृत्तिभेदे ॥ ओज : प्रकाशकैर्वर्णै: परुषाख्यासमृतापरा ॥ वामनादिमतेगौडीयेया ॥

परुः। न० ग्रन्थौ। वंशादिपर्वणि॥ पिपर्त्ति, पृपालनपूरणयोः। अर्त्तिपृवपीत्युस्॥

परूषम्। न० फलवृक्षभेदे। अल्पाऽस्थिनि। नीलचर्मणि। परूसादृति च फालसा० इतिचभाषा०॥

परूषकम्। न० परूषे॥ परूषकंकषाया म्लमामंपित्तकरंलघु। तत्पक्वंमधुरंपाकेशीतंविष्टम्भिवृंहणम्॥ हृद्यंतद्पित्तदाहास्रज्वरक्षयसमीरहृदितिभावप्रकाशः॥

परेत। अ० परतोऽर्थे॥ विभक्तिप्रतिरूपकमव्ययम्॥

परेतः। पुं० भूतान्तरे॥ त्रि०। मृते॥ परलोकमुद्गतः॥ परादूरमितोया॥

परेतरः। त्रि० आत्मीये। अवञ्चके। परादितरः। स्वामिकार्यार्थमितरेषांभेदके॥ परान्विपक्षानितरयतिभेदेनात्मसात्करोति। तत्करोतीतिण्यन्तात्कर्मण्यण्॥

परेतराट्। पुं० धर्मराजे। पितृपतौ। यमे। परेतिपुरस्तीपुरावर्त्ते। राजृ०। सत्सूद्विषेतिक्विप्। जान्तः॥

परेद्यवि। अ० परस्मिन्नहनि। सद्यःपरुदित्यादिनापरस्मादेद्यव्यहनि निपात्यते॥

परेपम्। त्रि० पराधि॥ परागताआपोयस्य। द्व्यन्तरुपसर्गेभ्योऽपईदित्यन्तर्वर्णान्ताद्वेत्युक्तेः पाक्षिकईत्॥

परेष्टुका। स्त्री० बहुसूत्याम्। बहुप्रसूतायाङ्गवि। परमिच्छतिपरैरिष्यतेवा। आ०गु०। स्वा० कः॥

परैधितः। पुं० कोकिले॥ त्रि०। पराचिते। औदासीन्येनपरपुष्टे। परैरेधितः सम्वर्द्धितः॥

परोक्षः। पुं० तपस्विनि॥ त्रि०। इन्द्रियाविषये। अप्रत्यक्षे॥ परोक्षमस्त्यस्य। अर्शआद्यच्॥ अथाहुः। परोभावः परस्याक्षिपरोक्षेलिटि दृश्यताम्। उत्वादेः परादक्ष्णः सिद्धमस्मान्निपातनात्॥ अस्मात्परोक्षेलिडितिनिर्द्देशात्॥

परोक्षम्। अ० इन्द्रियाविषये। इति विषयेऽक्षिशब्दइन्द्रियमात्रपरः। अक्ष्णः परमितिविग्रहेशरदादिषु प्रतिपरेतिसमासान्तविधानसामर्थ्यादव्ययीभावः। परोक्षेलिडिति निपातनात्परस्यौकारादेशः॥ पारस्करादित्वात्सुडित्यप्याहुः। श्रीभोजस्तुपरार्थपरशब्दंमन्यते॥

परोपकारः। पुं० परस्यपरेषांवाउपकृतौ। अन्यसम्बन्धिहिते। दधीचिनापुरागीतः श्लोकश्चूयतेभुवि। सर्वधर्ममयः सारः सर्वधर्मज्ञसम्मतः। परोपकारः कर्त्तव्यः प्राणैः कण्ठगतैरपि। परोपकारजंपुण्यंतुल्यंक्रतुशतैरपीतिमार्कण्डेयपुराणम्

गड़े २२ अध्याय : ।
परोवरीय : । त्रि० योऽपिपरांश्चाव-रांश्चानुभवतितस्मिन् । परोवरपर-म्परपुत्रपौत्रमनुभवतीतिख : । च परस्यादेरुत्वंनिपात्यते । गुण : ।
परोवरीयान् । त्रि० उत्तरमुत्तरंश्रेष्ठाद विशिष्टे ॥ पुं० । परम्परंवरीयस्तु गुणवत्तिप्रार्थे ॥
परोष्णी । स्त्री० तैलपायिकायाम् । सुखविष्ठावागुलिकादिनामिकाया म् । चटिकाविशेषे ॥ परंपरमुष्णां यस्याः । गौ०ङी ।
पर्कटि : । स्त्री० प्लक्षवृक्षे ।
पर्कटी । पुं० प्लक्षवृक्षे । जटिनि । कामगडलुतरौ । पाकरि० इतिभा षा ।
पर्कटी । स्त्री० प्लक्षवृक्षे । पाकरि० दू० भा० प्र० ॥ पूगादेर्नूतनेफले । पृच्यति पृकौ० । बा० कट : । गौ० ङीष् ॥
पर्जनी । स्त्री० दारुहरिद्रायाम् ॥ पि पर्त्ति । पृ० पिच् । परत्वासौजननी च ॥ परम्पालकंस्वास्थ्यंजनयति वा । जनी ० । बहन्तः । कर्मण्यण् ।
पर्जन्य : । पुं० मेघशब्दे ॥ धनदस्य दे ॥ शक्रे । पिपर्त्ति । पर्षतिवा । पृ० । पृषुसेचनेवा । पर्जन्य इ० साधुः ॥ वृष्ट्यात्मकेदेवे । पर्जन्योनाम वृष्ट्युपकरणाभिमानिनो देवताविशे ष इतिछान्दोग्यभाष्यम् । मेघस्य माने । वज्राहतपर्जन्यः । सूर्ये ॥ स्वगोभिर्ज्ञुमारेभेपर्जन्य : का लयागते

पर्जन्यदर्शं : । पुं इन्द्रे ।
पर्जन्या । स्त्री० दारुहरिद्रायाम् ।
पर्ण : । पुं० वातपोथे । पलाशे । किंशुके । ढाक० इ० भा० । । पिपर्त्ति । पृ० । धापृवस्यज्यति भ्योन : । यद्वा । पर्णयति पर्णह रितभावे । अच् । न० । पत्रे । ताम्बूले ॥ यथा । अनिधायमुखे पर्णं पूर्गखादयतेनरः । मतिभ्रंशो दरिद्रःस्यादन्ते नस्मरतेहरिम् ॥
पर्णकृच्छ्र: । पुं० व्रतकृच्छ्रव्रते ॥ यथा । पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः । प्रत्येकंप्रत्यहाभ्यस्तैः पर्णकृच्छ्र उदा हृतः । इतिगरुड़पुराणम् ॥
पर्णखण्ड : । पुं० वनस्पतौ ॥ ताम्बूलिकाङ्गे ॥
पर्णचोरक : । पुं० चोरकनामगन्ध द्रव्ये ॥
पर्णध्वत् । त्रि० पर्णध्वंसकर्त्तरि ॥
पर्णनर: । पुं०पिचादिशवास्थ्यलाभेदा हार्यैतत्प्रतिनिधिभूतशरपलाशपत्र रचितोर्णातन्तुवेष्टितयवपिष्टलिप्तन रावयवपुत्तलके ॥
पर्णभेदिनी । स्त्री० प्रियङ्गौ
पर्णभोजन: । पुं० छागले ॥ पर्णानि

भोजनंयस्य । त्रि० । पत्रभक्षके ॥

पर्णमाचाल : । पुं० कर्मरङ्गवृक्षे ॥

पर्णमृग : । पुं० वानरादिमृगगणविशेषे ॥ यथा । वनौकोऋक्षमार्जार वृक्षमर्कटिकादय : । एतेपर्णमृगा : प्रोक्ता : सुश्रुताद्यैर्महर्षिभि : ॥ स्मृता : पर्णमृगावृष्याश्चक्षुष्या: शोषिणेहिता: । श्वासार्शकासशमना: सृष्टमूत्रपुरीषका इतिभावप्रकाश: ॥

पर्णलता । स्त्री० नागवल्ल्याम् ॥

पर्णवल्ली । स्त्री० पलाशीलतायाम् ॥

पर्णशाला । स्त्री० उटजे । मुनिगृहे । पर्णनिर्मिताशाला । शाकपार्थिवादि : ॥

पर्णसि : । पुं० पद्मजे । पद्मे ॥ जल गृहे ॥ पृणोति । पृणीते । सानसिवर्णसि पर्णसीत्यादिनाऽसिप्रत्यय : पृणोतेर्नुक्च ॥

पर्णाशन : । पुं० घने । मेघे ॥

पर्णास : । पुं०स्वल्पपत्रतुलस्याम् । कठिञ्जरे ॥ पर्णान्यस्यति । असु० । कर्मण्यण् ॥ यद्वा पर्णैरसति । असदीप्तौ । पचाद्यच् ॥

पर्णी । पुं० द्रुमे । वृक्षे ॥

पर्णिनी । स्त्री० माषपर्ण्याम् ॥

पर्णोटजम् । न० उटजे । पर्णशालायाम् ॥

पर्द्द : । पुं० अपानोत्सर्गे । कुत्सितशब्दे । गुदरवे ॥ पर्द्दते ॥ पर्द्द० । अ० अच् ॥

पर्द्दनम् । न० पर्द्दे । पाद० द०भा० ।

पर्प्प : । पुं० पङ्गुपीठे । येनकाष्ठेन पङ्गुश्चरतितस्मिन्काष्ठे ॥ पर्प्पगतौ । हलश्चेतिकरणे घञ् ॥ न० । नवतृणे ॥ गृहे ॥ शिपशि । पृ० । खष्पशिल्पशष्पबाष्परूपपर्पतल्पा इत्यादिनापप्रत्ययान्त: साधु : ॥

पर्प्पट : । पुं० पित्तमारकः० शृ० भा० भेषजान्तरे । कवचे । तिक्ते ॥ पर्पटो वरतिक्तश्च स्मृत : पर्पटकश्च स : । कथित: पांशुपर्यायस्तथा कवचनामक : ॥ पर्पटोहन्तिपित्तास्रभ्रमतृष्णाकफज्वरान् । संग्राही शीतलस्तिक्तोदाहनुद्वातलोलघु : इतिभावप्रकाश : ॥ पापड़० भू०भा० पिष्टप्रभेदे ॥ धूमसौरचिताहिङ्गु हरिद्रालवणैर्युता : ॥ सर्जिकाजीरकाभ्यामतनूकृष्णचवेल्लिता : ॥ पर्पटास्तेतदङ्गारभृष्टा : परमरोचका : । दीपना : पाचनारूक्षागुरव : किञ्चिदीरिता: ॥ मौद्गायथाक्तथा : प्रोक्ताविशेषाल्लघवोहिता : । चणकस्यगणैर्युक्ता : पर्पटाश्चणकोद्भवा: ॥ एतैरभूटाभुतैसर्वे भवेयुर्गध्यमागुण रितिभावप्रकाश : ॥

पर्प्पटक : । पुं० कवचे । तिक्ते । पर्पटे ॥

पर्प्पटद्रुम: । पुं० कुम्भीवृक्षे ॥

पर्प्पटी । स्त्री॰ सौराष्ट्रमृत्तिकायाम् ॥ पिष्टप्रभेदे । पापड़ी॰ इ॰ भा॰॥ उत्तरदेशभवसुगन्धिद्रव्ये । पपरी॰ इ॰ भा॰ । रञ्जन्याम् । चक्रवर्त्तिन्याम् ॥ अस्यागुणा यथा ॥ पर्पटी तुवरातिक्ताशिशिराबर्णकृल्लघुः । विषव्रणहरीकण्डूकफपित्तास्रकुष्ठनुत् ॥

पर्प्परीक: । पुं॰ सूर्ये ॥ वह्नौ ॥ भूमि ॥ पिपर्त्ति । पॄ॰ । पॄभूर्जादिकत्वं चाभ्यासस्य सिद्धकम् ॰ धातोर्हि स्वं रुक् चाभ्यासस्य ॥ वेदभाष्येतुपॄ पालन पूरणयोरस्य निपातनमिद माश्रित्यस्तोतॄणां पालक॰ इ॰ व्याख्यातं ॥

पर्प्परीण: । पुं॰ पर्णस्यशिरायाम् ॥ द्यूतकम्बले ॥ पर्ण पूर्णरसे ॥ न॰ पर्वणि ॥ इतिमेदिनी ॥

पर्प्पिक: । पुं॰ पङ्गौ ॥ खञ्जे ॥ पर्पेण चरति । पर॰ ॥ स्त्री पर्प्पिकी ॥ षित्त्वान्ङीष् ॥

पर्फरीकम् । न॰ किसलये ॥ स्फुरति । स्फुरस्फुरणे । पर्फरीकादयश्चेतिईकान्धातोपर्फरादेशश्च ॥ यद्वा । धातोर्द्वित्वम्॰ उकारस्याकारःसलोपः रुक् चाभ्यासस्य । वेदभाष्ये तु ञिफला विशरणेऽस्य निपातनमाश्रित्यगनूर्णां विदारयितेतिव्याख्यातम् ॥

पर्य्यङ्क: । पुं॰ मञ्चे । मांचा॰ इ॰ भाषा ॥ पल्यङ्के॰ पलङ्ग: इ॰भाषायाम् । वस्त्रवेष्टितजानुजङ्घस्य आसने ॥ पर्य्यस्तिकायाम् खाट॰ भा॰ ॥ परितोऽङ्क्यते । अङ्किलक्षणे घञ् ॥

पर्यङ्कपादिका । स्त्री॰ कोलशिम्ब्याम् ॥

पर्य्यक् । त्रि॰ परितोर्थे ॥

पर्य्यटनम् । न॰ भ्रमणे । व्रज्यायाम् । अटाय्याम् । फिरना॰ इ॰ भाषा अट॰ परिपूर्वः । भावेल्युट् ॥

पर्य्यनुयोग: । पुं॰ जिज्ञासायाम् ॥ इतिहलायुधः ॥ दोषविशेषे ॥

पर्यनुयोज्योपेक्षणम् । न॰ निग्रहस्थानप्राप्तस्यनिग्रहे ॥ निग्रहस्थानंप्राप्तवतोऽनिग्रहःनिग्रहनिग्रहस्थानानुद्भावनमित्यर्थः । यत्रत्वमेकनिग्रहस्थानपाते एकतरोद्भावनंतत्रनपर्यनुयोज्योपेक्षणम् । अवसरेनिग्रहस्थानोद्भावनस्यावच्छिन्नाभावस्यैवतस्मात् । ननुवादिनाकथमिदमुद्भाव्यंस्वकौपीनविवरणस्यायुक्तत्वादितिचेद्सत्यम् । मध्यस्थैनैवेदमुद्भाव्यम् । वादिनस्तथमुद्भावनेऽप्यदोषः ॥

पर्यन्त: । पुं॰ अन्त्यसीमायाम् । प्रान्तदेशे ॥ परितोऽन्तः ॥ समीपे ॥

पर्य्यन्तभू: । स्त्री॰ नदीनगरादिसमीपभूमौ । परिसरे । पर्य्यन्तो भूः ॥

पर्यन्तिका । स्त्री॰ गुणभ्रंशे ॥

पर्य्ययः । पुं० व्यतिक्रमे । क्रमोल्लङ्घने । शास्त्रीयलौकिकव्यवहाराप्राप्तस्वार्थस्यपरित्यागे । अतिपाते । उपात्यये ॥ पर्य्ययणम् । इण् गतौ । एरच् ॥

पर्य्ययणम् । न० अश्वसज्जायाम् । जीन० इ० भाषा० पलानइतिच ॥

पर्य्यवसानम् । न० अन्ते ॥ शेषलक्ष्यकर्मणि ॥ पर्य्यवपूर्वः । ल्युट् ॥

पर्य्यवसितः । त्रि० पर्य्यवसानप्राप्ते ॥

पर्य्यवस्था । स्त्री० विरोधने ॥ पर्य्यवस्थानम् । स्था० । आतश्चोपसर्गे० ॥

पर्य्यवस्थाता । त्रि० शत्रौ । विरोधिनि ॥ पर्य्यवतिष्ठति । स्था० । तृच् ॥ पर्य्यवरोपरि ॥

पर्य्यवस्थानम् । न० विरोधे ॥ स्था० । ल्युट् । सर्वतोभावेनावस्थितौ ॥

पर्य्यश्रुः । त्रि० परिगतानन्दवाष्पे ॥

पर्य्यस्तः । त्रि० पतिते । हते । हेमचन्द्रः इतिभा० ॥ हते ॥ परितोऽस्तः ॥ परिक्षिप्ते । सर्वतः प्रक्षिप्ते ॥ क्षिप्ते ॥

पर्य्यस्तिका । स्त्री० खट्वायाम् ॥

पर्य्याचान्तम् । न० एकपङ्क्तिस्थान्यान्यानवमन्यस्याचान्तेसुज्यमानेकेनचिदाचमनंक्रियतेतदन्नंपर्य्याचान्तमुच्यते ।

पर्य्याणम् । न० पल्ययने । घोडेकापलान० इ० भा० ॥ वङ्गादिभाषायां० इ० त्रि० शे० ॥

पर्य्याधाता । पुं० अनाहिताग्नौकनिष्ठे । यथा । सोदर्येतिष्ठतिज्येष्ठेयःकन्याधानंकरोतिहि । तयोः पर्य्याहितोज्येष्ठः पर्य्याधाताकनिष्ठकः ॥

पर्य्याप्तम् । न० यथेष्टे । निष्कामे ॥ निवारणे ॥ त्रि० । शक्ते ॥ शक्तौ ॥ कार्य्यकारणद्वये ॥ परिमिते ॥ आमुव्याप्तौ । परिपूर्वः । भावे० क्तः ॥ प्राप्तौ ॥ तृप्ताविनिमेदिनिकरः ॥

पर्य्याप्तिः । स्त्री० प्रकामे ॥ प्राप्तौ ॥ रक्षणे । मारणोद्यतस्यनिवारणे ॥ पर्य्यापनम् । पर्य्याप इतिस्थाणार्थः । क्तिन् ॥ सामर्थ्ये ॥ स्वरूपसम्बन्धविशेषे ॥ सचसर्वेषामेवपदार्थानांविशिष्टबुद्धिनियामकः । पदार्थभेदेननाना । यथा । पर्य्याप्तिसम्बन्धेनघटद्वयौदासीन्याद्विप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषद्वित्वादीधितिः । समवायेनगुणेगुणास्त्वसत्त्वेपिचत्वारोगुणाइत्यादिप्रतीत्यागुणादिषुसङ्ख्यादिमत्त्वनियामकोऽपिताहशसम्बन्धः । इतिसामान्याभावेजगदीशः । द्वितीयवादेगदाधरभट्टाचार्यश्च ॥

पर्य्यायः । पुं० प्रकारे ॥ अवसरे ॥ क्रमे । आनुपूर्व्याम् । परिपाट्याम् । अनुक्रमे । वारी० इ० भा० ॥ निर्माणे ॥ द्रव्यधर्मे ॥ क्रमेणैकार्थवाचकाः शब्दाः पर्य्यायाः इतिविजय

जानू इतिच भा० ॥

पर्व्वकारी । पुं० धनादिलोभेनऽपर्वसु अमावास्याक्रियाप्रवर्त्तके ॥

पर्व्वगामी । पुं० पर्वसु स्त्रीगामिनि ॥

पर्व्वतः । पुं० महीध्रे । शिखरिणि । क्ष्माभृति । अहार्य्ये । गोत्रे । गिरौ ॥ पर्व्वाणिसन्त्यच । तपपर्व्वमरुद्भ्याम् ॥ यद्वा । पर्व्वति । पर्वपूरणे । भृमृदृशियजिपर्व्विपच्यमितमिन मिहर्यिभ्योऽतच् ॥ विंशतिर्म्ग्रपर्व्वता यथा । हिमवान्हेमकूटश्चनिषधोनीलपर्वत : ॥ श्वेतश्चशृङ्गवान् मेरुर्माल्यवान्गन्धमादन : ॥ महेन्द्रोमलय : सह्य : शुक्तिमानृक्षमानपि । विन्ध्यश्चपारियात्रश्चकैलासो मन्दिरस्तथा ॥ लोकालोकोमहांस्तेषु तथैवोत्तरमानस : । एतेविंशति र्विख्याता : पर्वतास्तत्र्पांवरा : ॥ पादपे । वृक्षे ॥ शाकप्रभेदे ॥ पावदा इ० गौ० शा० प्र० मत्स्यविशेषे ॥ देवर्षिविशेषे ॥

पर्व्वतकाक : । पुं० द्रोणकाके ॥

पर्व्वतजः । पुं० गिरिसंभवप्रस्तुनि ॥

पर्व्वतजा । स्त्री० पार्व्वत्याम् ॥ सरिति । नद्याम् ॥ द्राक्षावि० । पहाड़ी० दारु इ० भा० ॥ पर्वतात्जाता । जनी० । मदस्यामिति ड : ॥

पर्व्वततृणम् । न० तृणविशेषे । तृणाढ्ये । मृगप्रिये ॥

पर्व्वतमोचा । स्त्री० अद्रिकदल्याम् ॥

पर्व्वतराज : । पुं० नगाधिराजेहिमाद्रौ । पर्वतानांराजा । राजेतिटच् ॥

पर्व्वतराजपुत्री । स्त्री० उमायाम् । दुर्गायाम् । यथा । शुक्लात्पक्षयुते दशाहिमूलर्क्षयुक्तासितसप्तमीया । आरभ्यतस्यांदशमीश्वयावत् प्रपूजयेत्पर्व्वतराजपुत्रीमिति ॥

पर्व्वतवासिनी । स्त्री० आकाशमांस्याम् ॥ गायत्र्याम् ॥ काल्याम् ॥

पर्व्वताधारा । स्त्री० पृथिव्याम् ॥

पर्व्वतारिः । पुं० इन्द्रे ॥ पर्व्वतानामरि : ॥

पर्व्वताखय : । पुं० वानरे ॥ पर्व्वतश्चाक्षयोयस्य ॥

पर्व्वताश्रय : । पुं० मेघे ॥

पर्व्वताश्रय : । पुं० शरभे ॥ त्रि० । पर्व्वतवासिनि ॥

पर्व्वताश्रयदेश : । पुं० देशविशेषेषु ॥ ते यथा । अतोदेशान्प्रवक्ष्यामिपर्व्वताश्रयिणश्चये । निराहाराःसवर्णाश्चकुपथाश्चपथाःखशाः ॥ कुथप्रावरणाश्चैव ऊर्णादर्भासमृक्का : । त्रिगर्त्तामण्डलाश्चैवकिरातास्तामरै : सह ॥ इ० तिमत्स्यपुराणम् ॥

पर्व्वतीय : । पुं० अक्षोटे । पर्वतेभव : । विभाषामनुष्य इतिपक्षेछ : ॥ त्रि० पर्वतोत्पन्नमनुष्यादौपर्वतोनिवासोऽस्य । पर्व्वताश्रि तिछ : ॥

पर्व्वधि: । पुं० हिमांशौ । चन्द्रे ॥

पर्व्व । न० उत्सवे । मद्दे ॥ ग्रन्थौ ॥
प्रस्तावे ॥ लक्षणान्तरे । दर्शप्रति
पदो:सन्धौ ॥ विषुवत्प्रभृतिषु ॥ ग्रन्थ
विशेषे ॥ ग्रन्थसन्धौ ॥ यथा । महा
भारतेऽष्टादशपर्व्वाणि । तानियथा
आदि:सभावनविराटमथोद्यमस्यभी
ष्मोगुरुकर्णविजमद्रकसौप्तिकाख्य । स्त्री
पर्वशान्तिरनुशासनमश्वमेधव्यासाश्र
मौमुषलयानदिवारोहइतिमहाभा
रतटीका ॥ तिथिविशेषेषु ॥ चतु
र्दश्यष्टमीकृष्णाअमावास्याचपूर्णिमा
। पर्व्वाण्येतानिराजेन्द्ररविसङ्क्राम
णंतथा ॥ पर्वति०पर्वतीवा । पर्वपूर
णे । वा० कनिन् ॥ यद्वा । पिपर्त्ति
पृणातिवा ॥ पृ० । स्नामदिपद्यर्त्ति
पृशकिभ्योवनिप् ॥ इति ॥

पर्व्वपुष्पी । स्त्री० रामदूतीवृक्षे ॥

पर्व्वपूर्णता । स्त्री० आयोजने । सम्भा
रे ॥ पर्व्वण:पूर्णत्वे ॥

पर्व्वमूला । स्त्री० श्वेतायाम् ॥

पर्व्वयोनि : । पुं० इक्ष्वादौ ॥ पर्वणि
योनिरुत्पत्तिर्यस्य ॥

पर्व्वरुट् । पुं० पिण्डपुष्पे । दाड़िमे ॥

पर्व्ववल्ली । स्त्री० मालादूर्वायाम् ॥

पर्व्वसन्धि: । पुं० प्रतिपत्पञ्चदश्योर
न्तरे ॥ पञ्चदशीशब्देनपूर्णिमाऽमा
वास्ययोर्द्वयोर्ग्रहणम् । अतएवपौर्ण
मास्याअमावास्यायाश्चशेषसार्द्धदण्ड
चतुष्टयम्प्रतिपदश्चप्रथमसार्द्धदण्ड
चतुष्टयं पर्वसन्धिरिति बुधा : ॥
सैंहिकेयोयदाराहुर्यसतेपर्वसन्धि
ष्वितिवम: ॥ पर्वणो:सन्धि : ॥

पर्व्वित: । पुं० पर्वतमत्स्ये ॥

पर्शु: । पुं० कुठारे । परशौ ॥ परंशत्रुं
शृणाति । शॄहिंसायाम् । आङ्प
रयो:खनिशॄभ्यांडिच्चेतिकु : ॥ पृ०
॥ यद्वा । स्पृशति स्पृशसंस्पर्शने
स्पृशेश्श्रण्शुनौपृचेति०शुन्० । पृ
: षादेशश्च ॥

पर्शुका । स्त्री० पार्श्वास्थिनि । पांसु०
इतिभाषा ॥ स्पृशति स्पृश्यतीवा
। स्पृश० । स्पृशे:श्रण्शुनौपृच
स्यार्थेकन् ॥ यथा पर्शुरिव । इवेप्र
तिकृताविति कन् ॥

पर्शुपाणि: । पुं० गणेशे । विनायके ॥

पर्शुराम : । पुं० जामदग्न्ये । परशुरा
मे ॥

पर्शू : । स्त्री० पर्शुकायाम् ॥ अप्राणि
जातेरित्यूङ् ॥

पर्श्वध : । पुं० कुठारे । परसा० इ०
भा० ॥ परश्वधनम् । टुधाञ्० ।
अन्येष्वपीतिड : । परश्वंदधाति ।
डुधाञ् । आतइतिक: । पृषोदरा-
दि : ॥

पर्षत् । स्त्री० सभायाम् ॥ यथाह०
याज्ञवल्क्य : । चत्वारोवेदधर्मज्ञा:
पर्षत्त्रैविद्यमेववा । साब्रूतेयंसधर्म:

रचित : ॥ सम्पर्कविशेषे ॥ येनस-
ह्यत्सम्पर्क : सम्बन्धस्तेनसहतत्-
पर्य्याय : । यथा । समानं कुलभाव
स्नदानादानन्तथैवच । तयोर्वैशस-
मानंहिपर्य्यायस्तुप्रचक्षते ॥ इतिकु-
लदीपिका ॥ अलङ्कारवि० । यथा।
एकंक्रमेणानेकस्मिन्पर्य्याय : । एकं
वस्तुक्रमेणानेकस्मिन्भवतिक्रियते-
वासपर्य्याय : । क्रमेणोदाहरणम् ।
श्रोणीभारस्त्यजतितनुतांसेवतेमध्य
भाग : पद्भ्यांमुक्तास्तरलगतय :
संश्रितालोचनाभ्याम् । धत्तेवक्ष :
कुचसचिवतामद्वितीयस्तुवक्त्रमृतद्गा
त्राणांगुणविनिमय : कल्पितो-
यौवनेन ॥ यथावा । नन्वाश्रयस्थि-
तिरियंतवकालकूटकेनोत्तरोत्तरवि
शिष्टपदोपदिष्टा ॥ प्रागर्णवस्यहृद
येवृषलक्ष्मणोथकण्ठेऽधुनावससि
वाचिपुन : खलानाम् । यथावा ।
बिम्बौष्ठएवरागस्तेतन्विपूर्वमदृश्य
त । अधुनाहृदयेप्येषमृगशावाक्षि-
दृश्यते ॥ रागस्यवस्तुनोभेदेपिएक
तयाध्यवसितत्वादेकत्वमविरुद्धम् ॥
ततत्रार्णसिरिसद्योदररत्नाभरणस्मि
हिन्नभसेकरसम् । विम्बाधरेपि
त्वाणनिवेशितंकुसुमबाणेन ॥ ☆ ॥
ततद्धत्तंश्रीसद्योदररत्नाभरणंहृदय
मेकारसम् । विम्बाधरेप्रियाणांनिवे
शितंकुसुमबाणेनेतिसंस्कृतम् ॥

श्रीसद्योदररत्नंकौस्तुभ : आभरणं-
यस्यतस्मिन्विष्णौएकरसमेकतान
मस्तेषांपातालवासिनामसुराणामि-
तिचंडीदासहृदयम् । कुसुमबाणे-
नप्रियाणांकान्तानांविम्बसदृशेऽधरे
विनिवेशितमित्यनेकत्रस्थितौप्रयो-
जकनिर्देशाद्भेद : ॥ अन्यस्ततोन्य-
था । अनेकमेकस्मिन्क्रमेणभवति-
क्रियतेवासोन्य : । क्रमेणोदाहरण
म् । मधुरिमरुचिरंवच : खलानाम-
मृतमहोप्रथमंपृथुव्यनक्ति । अथ-
कथयतिमोहहेतुमन्तर्गतमिवहालह
लंविषंतदेव ॥ तद्गेहंनतभित्तिम-
न्दिरमिदंलब्धावकाशंदिव:सापेनु
र्जरतीनदन्तिकरिणामेताघनाभाघ
टा : । सक्षुद्रोमुषल:ध्वनि: कलमि
दंसङ्गीतकंयोषितामाश्चर्यंदिवसैर्द्वि
जोयमियतीभूमिंसमारोपित: ॥ अ
त्रैकस्यैवहानोपदानयोरविवक्षितत्वा
न्नपरिवृत्ति : ॥ ☆ ॥ अपिचलक्षणा
न्तरम् । क्रमेणकमनेकस्मिन्नाधारे
वर्त्ततेयदि । एकस्मिन्नथवानेकपर्य्या
यालङ्कृतिर्मतेति ॥ पर्य्ययणम् ।
इण्० । परावनुपात्ययइणइतिघञ्
। व्यत्ययेपि ॥ यथा । प्राप्त: पर्य्याय
कालोपइतिब्रह्माण्डभाषतइति ॥
पर्य्यायशयनम् । नं० उपशये । विशा-
ये । प्रहरिकादीनांपर्य्यायेणक्रमेणशय
नम् ॥

पर्य्यायोक्तम् । न० अलङ्कारविशेषे ॥ पर्य्यायोक्तंविनावाच्यवाचकत्वेन वस्तुयत् ॥ वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेणयत्प्रतिपादनं तत्पर्य्यायेणभङ्ग्यन्तरेणकथनात् पर्य्यायोक्तम् । उदाहरणम् । यंप्रेक्ष्य चिररूढापिनिवासप्रीतिरुज्झिता मदेनैरावणमुखमानेनहृदयेहरेः ॥ अत्रै रावणशक्रौमदमानमुखौजाता वितिव्यङ्ग्यमपिशब्देनोच्यते । तेनयदेवोच्यतेतदेवव्यङ्ग्यंयथातुव्यङ्ग्यंनतथोच्यतेयथागविशुक्लेचलति दृष्टेगौः शुक्लश्चलतीति विकल्पोय देवदृश्यतेतदेवविकल्पयति० नतुय थादृष्टं तथा० यतोभिन्नासंसृष्टत्वेनदृष्टं भेदसंसर्गाभ्यांविकल्पयति ॥

पर्य्यासितः । त्रि० पर्य्यासिते ॥

पर्य्याहारः । पुं० वीवधे । उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठविशेषे । काचभारइतिबङ्गीइतिचभा० । परितआह्रियतेऽनेन ॥

पर्य्याहितः । पुं० योऽग्रेऽग्न्याधानंकरोतितस्यज्येष्ठे । यथा । सोदर्य्येतिष्ठज्येष्ठेचगन्याधानंकरोतिहि । तयोः पर्य्याहितोज्येष्ठः पर्य्याधाताकनिष्ठकः ॥

पर्य्युदसनम् । न० वर्जने । त्यागे ॥ परितउदस्यते । अस् । क्षेपणे । ल्युट्इतिकर्मणिल्युट् ॥

पर्य्युदस्तः । त्रि० पर्य्युदासविशिष्टे । विध्यन्वयिभेदात्मकनञर्थयुक्ते ॥

पर्य्युदासः । पुं० प्रतिषेधभेदे ॥ प्राधान्यन्तुविधेर्य्यत्रप्रतिषेधेऽप्रधानता । पर्य्युदासः सविज्ञेयोयत्रोत्तरपदेनञ् ॥ सामान्यशास्त्रप्राप्तनिषेधस्यैवपर्य्युदासत्वम् ॥ यथा । अमावास्यायाम्पितृभ्योदद्यात् रात्रौश्राद्धं नकुर्वीत । अत्रश्राद्धकरणे रात्रेः पर्य्युदासः ॥ परिसर्वतोभावेनउदासनमिति विधिर्य्यत्रसपर्य्युदासइतिगौडाः ॥

पर्य्युपयुक्तः । त्रि० समाप्ते ॥ यथा । आगमकालेनैवास्य युक्तस्यपर्य्युपयुक्तंस्यादितिमहाभाष्यम् । आगमकालेनविद्याग्रहणकालेन । अस्य विद्यार्थिनः । पर्य्युपयुक्तंसमाप्तमिति तदर्थः ॥

पर्य्युषितम् । त्रि० रात्र्यन्तरितपक्वान्ने । व्युष्टे । बासी० इ० भाषा० ॥ यातयामंगतरसंपूतिपर्य्युषितञ्चयत् । उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियमितिभगवद्गीता ॥

पर्य्येषणा । स्त्री० अन्वेषणायाम् । ढूढ़णाढूढ़िढूढइतिचभा० ॥ अन्यांपर्य्येषणांचर । तर्कादिनायथावोधितधर्मादन्वेषणा ॥ इषगत० दि० । इषधातोयुच्यात्रा० । आभ्यांपरेवेतिपरेयुच् । टाप् ॥

पर्य्यङ्कम् । न० जडपर्य्यपि । चौंटूइति

ख्याम् ॥ मक्षिकायाम् ॥ टाप् ॥

पलप्रियः। पुं० द्रोणकाके । त्रि० । मांसादे ॥

पलभा। स्त्री० पलविभायाम् । विषुवत्प्रभायाम् ॥ सायमेषसङ्क्रमणा दूर्ध्वाक्समपादाद्दिने मध्याह्ने द्वादशाङ्गुलशङ्कोश्छाया । यथोक्तं ज्योतिषे । मेषादिगे सायनभागसूर्ये दिनार्द्धजा भा पलभा भवेत्सेति ॥

पललः। पुं० राक्षसे । यातुधाने । न० पङ्के ॥ मांसे ॥ तिलचूर्णे ॥ पललं तिलकल्कं स्यात् तिलचूर्णञ्च पिष्टकः । पललं मधुरं वृष्यं पित्तानिलबल पुष्टिदम् । इ० राजनिर्घण्टः ॥ सैन्धवतिलचूर्णे । तिलकुट० इ० भा ॥ यथा । पललन्तु समाख्यातं सैन्धवन्तिलपिष्टकम् । पललं मलकृद्वृष्यं वातघ्नं कफपित्तकृत् ॥ बृंहणञ्च गुरु स्निग्धं मूत्राधिक्यनिवर्त्तनम् ॥ पल- ति० पल्यतेऽनेनवा । पलगतौ । वृषादिभ्यश्चिदितिकलः ॥

पललज्वरः। पुं० पित्ते ॥ इतिहारावली० ॥

पललप्रियः। पुं० द्रोणकाके ॥

पललाशयः। पुं० गलगण्डरोगे ॥

पलवः। पुं० झषे । पञ्जराखेटे । मत्स्यधारणोपाये । लोपो० इ० गौ० भाषा० ॥

पलशतम्। न० तुलायाम् ॥ पलानां शतम् ॥

पलाग्निः। पुं० पित्ते ॥

पलाङ्गः। पुं० शिशुमारे ॥

पलाण्डुः। पुं० सुकन्दके । मुखदूषणे । शूद्रप्रिये । रोचने । प्याज० इ० भा० ॥ पलाण्डुर्यवनेष्टश्च दुर्गन्धो मुखदूषकः । फरणीन्द्र ; पलाण्डु शालतार्कौ ट्टङ्कमयसः ॥ इ० धन्वन्तरिः ॥ सुश्रुतस्तु । लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम् । फरणश्च पलाण्डुश्च लतार्कश्चापदारिका ॥ गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः ॥ इत्याह ॥ पलाण्डुस्तु गुणैस्तुल्यो रसोनसदृशो बुधैः ॥ स्वादुपाकरसोऽनुष्णः कफकृन्नातिपित्तलः ॥ हरते केवलं वातं बलवीर्यकरो गुरुरिति भावप्रकाशः ॥ पलति । पलरक्षणे । बाहुलकात् आण्डुप्रत्ययः ॥

पलादः। पुं० । स्त्री० । राक्षसे ॥ पलमत्ति । अद० । कर्म्मण्यण् ॥

पलादनः। पुं० । स्त्री० । राक्षसे ॥ त्रि० मांसभक्षणशीले ॥

पलान्नम्। न० पाकराजेश्वरोक्तप्रकारे मांसादियुक्तसिद्धभक्ते । मरौदने । मांसौदने ॥

पलापः। पुं० गजगण्डे । हस्तिकपोले ॥

पलायनम्। न० अपयाने । प्रद्रावे । भयादिना स्थानान्तरगमने । भाग- ना० इ० भा०

पलायित: । त्रि० नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ इ० हे० ॥

पलाल: । पुं० । न० । निष्फलेतृणादिकाण्डे । सस्यशून्यधान्यनाले ॥ पलति पल्यतेवा । पलगतौ । तमिविशिविडिमृषिकुलिकपिपलिपञ्चिभ्य : कालन् ॥ पलमलतिवा । अल० । कर्मण्यण् ॥

पलालदोहद: । पुं० आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न० महत्पलालंपलाली तद्वति ॥ मत्वर्थे० पामादित्वात्नः । शालीपलालोद्‌भूतांकुरत्वञ्च ॥

पलाली । पुं० महत्पलाले ॥

पलाश: । पुं० शव्याम् । राक्षसे । मगधदेशे ॥ हरिते ॥ किंशुके । पर्णे । शासपोधे । यात्रिके । ढाक० इ० भा० ॥ पलाशोदीपनोवृष्य : सरोपात्‌व्रणगुल्मजित् । कषाय : कटुकस्तिक्त : स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्श : कृमीन्हरेत् । तत्पुष्पंस्वादुपाकेतुकटुतिक्तंकषायकम् ॥ वातलंकफपित्तास्रकृच्छ्रजिद्‌ग्राहिशीतलम् । तृट्‌दाहशमनंवातरक्तकुष्ठहरंपरम् ॥ फलंलघूष्णंमेहार्श : क्रिमिवातकफापहम् । विपाकेकटुकंरूक्षंकुष्ठगुल्मोदरप्रणुत् ॥ न० । कदम्बे । पर्णे । कदे । पत्ता० इ० भा० ॥ पलाशपत्रे ॥ शासने ॥ परिभाषणे ॥ त्रि० । हरिद्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यपत्रस्यायम् । अण् । संज्ञापूर्वकत्वात्‌वृद्ध्यभाव : ॥ यद्वा । पलंमांसं० अश्नाति । अश० । कर्मण्यण् ॥ पलेमांसेआशायस्यवा ॥

पलाशक: । पुं शव्याम् । किंशुकवृक्षे ॥

पलाशपर्णी । स्त्री० अश्वगन्धायाम् ॥

पलाशसार : । पुं० शाकद्रुमे ॥

पलाशाख : । पुं० नाडीहिङ्गुनि ॥

पलाशाख्य : । पुं० नाडीहिङ्गुनि ।

पलाशान्ता । स्त्री० गन्धपत्रायाम् ॥

पलाशी । पुं० वृक्षमात्रे ॥ पलाशानिसन्त्यस्य । अतइनि : ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री० लताविशेषे । पत्रवल्ल्याम् । अम्लपत्र्याम् ॥ शव्याम् ॥ काश्मीरेगन्धपलाशीतिप्रसिद्धे । धूम्रभेदे ॥

पलिक्नी । स्त्री० वृद्धायाम् ॥ पलितमस्त्यस्या : । अर्श० अच् । असितपलितयोर्न । छन्दसिक्नमेके० इत्येकोक्तेर्भाषायामपिअनयोस्तकारस्यस्थानेक्न इत्येषआदेशोभवति । नान्तत्वान्ङीप् ॥ गर्भिण्यांगवि ॥

पलिघ : । पुं० काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहन्यतेऽनेनवा । हन० । परीघश्चत्यप

घादेशश्च ।

पलितम् । न० केशपाके । जरसाकेशानांशौक्ल्ये ॥ फलतिफलनंवा । फलनिष्पत्तौ । ञिफलाविशरणे । नपुंसकेभावेक्तः । लोष्टपलितावितिसाधु ॥ फलेरितजादेश्चपो षा ॥ शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे ॥ केशशुक्लताहेतौरोगे ॥ तन्निदानं यथा । क्रोधशोकश्रमकृतःशरीरोष्माशिरोगतः । पित्तञ्चकेशान्पचतिपलितंतेनजायत इतिमाधवः । अस्यचिकित्सा यथा । लोहचूर्णंस्वकर्णमृद्धोर्द्धञ्चतमष्ठतः । धात्रीफलरसंपथ्यैहरतैर्कविभीतकम् ॥ पिष्टालोहमयेभाण्डेस्थापयेन्निशिवासयेत् । लेपोऽयमचिराद्धन्तिपलितंनेहसंशयः ॥ दशार्द्धपञ्चकर्षाणि ॥ काश्मर्यामूलमादौसहचरकुसुमंकेतकस्यापिमूलंलोहंचूर्णंसभृङ्गंत्रिफलपलयुतंतैलमेभिःपचेद्यः । कृत्वालोहस्यभाण्डेक्षितितलनिहितंस्थापयेन्मासमेकंकेशाःकाशप्रकाशाअपिमधुपनिभा अस्ययोगाद्भवन्ति ॥ त्रिफलानीलिकापत्रं मङ्गराजोऽयसोरजः । अवीमूत्रेणसंपिष्टं लेपात्कृष्णीकरंपरमिति भावप्रकाशः ॥

पलिता । स्त्री० शुक्लायाम् ॥ असितपलितयोर्नेति० प्रतिषेधात्ङीप् तकारस्यनकारादेशश्चन ॥

पलौदनम् । न० मांसौदने । पलाव० इ० भा० ॥ पलस्यचोदनस्यचनयोः समाहारः ॥

पल्यः । त्रि० मांसभोजिनि ॥ पलम् र्हति । तदर्हतीतियत् ॥

पल्यङ्कः । पुं० पर्यङ्के ॥ मञ्चे ॥ खट्वायाम् ॥ पर्यस्तिकायाम् ॥ परितोऽञ्चति । अकिलचके । घञ् । परिस्थास्कयोरितिवालत्वम् ॥

पल्ययनम् । पुं० पर्याणे । पलानइति भाषा० ॥ इ० है० च० ॥ यस्मादन्तालिकापल्ययनमिति० चि० शे० ॥

पल्लः । पुं० स्थूलकुसूलके । मालुइति मरा इ० च० गौ० भा० ॥

पल्लवः । पुं० । न० । किसलये । नवपत्रे । प्रवाले ॥ पर्वपचादिसङ्ग्रापि शाखाया : पल्लवोमत :इतिकोशान्तरम् ॥ पल्लवते । सं० क्विप् । लूयते । लूञ्० । ऋदोरप् । पल्चासौ लवश्च ॥ विटपे ॥ विस्तारे ॥ चञ्चले ॥ शृङ्गारे ॥ अलक्तरागे ॥ पिङ्गे ॥

पल्लवकः । पुं० वेश्याधवे ॥ मत्स्यविशेषे ॥

पल्लवद्रुः । पुं० अशोकवृक्षे ॥

पल्लवाङ्कुरः । पुं० तोक्मे । पीपर० इ० भा० ॥

पल्लवाधारः । पुं० शाखायाम् ॥

पल्लविकः । त्रि० कामुके ॥

पलायित : । त्रि० । नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ इ० हि० ॥

पलाल : । पुं० । न० । निष्फलेतृणादिकाण्डे । सस्यशूकधान्यनाले ॥ पलति पल्यतेवा । पलगतौ । तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्य : कालन् ॥ पलमजतिवा । अण० । कर्मण्यण् ॥

पलालदोहद : । पुं० । आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न० । महत्पलालंपलालो सहति ॥ मत्वर्थे० पामादित्वात्नः । शाकीपलालीदद्र्वांह्रस्वत्वञ्च ॥

पलाली । पुं० । महत्पलाले ॥

पलाश : । पुं० । शट्याम् । राक्षसे । मगधदेशे ॥ हरिते । किंशुके । पर्णे । वातपोथे । याज्ञिके । ढाक० इ० भा० ॥ पलाशोदीपनोवृष्य : सरो व्रणगुल्मजित् । कषाय : कटुकस्तिक्त : स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्श : कृमीन्हरेत् । तत्पुष्पंस्वादुपाकेतुकटुतिक्तंकषायकम् ॥वातलंकफपित्तास्रकृच्छ्रजिद्ग्राहिशीतलम् । तृट्दाहशमनंवातरक्तकुष्ठहरंपरम् ॥ फलं लघूष्णंमेहार्श : क्रिमिवातकफापहम् । विपाकेकटुकंरूक्षंकुष्ठगुल्मोदरप्रणुत् ॥ न० । छदने । पर्णे । छदे । पत्रा० इ० भा० ॥ पलाशपत्रे ॥ शासने । परिभाषणे ॥ त्रि० । हरिद्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यपत्रायम् । अण् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : ॥ यद्वा । पलंमांसं० अश्नाति । अश० । कर्मण्यण् ॥ पलेमांसेआशायस्यवा ॥

पलाशक : । पुं० शट्याम् । किंशुकवृक्षे ॥

पलाशपर्णी । स्त्री० अश्वगन्धायाम् ॥

पलाशसार : । पुं० शालद्रुमे ॥

पलाशाख : । पुं० नाडीहिङ्गुनि ॥

पलाशाख्य : । पुं० नाडीहिंगुनि ।

पलाशान्ता । स्त्री० गन्धपत्रायाम् ॥

पलाशी । पुं० वृक्षमात्रे ॥ पलाशानि सन्त्यस्य । अतइनि : ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री० लताविशेषे । पत्रवल्ल्याम् । चक्रपत्न्याम् ॥ शट्याम् ॥ काश्मीरेगन्धपलाशीतिप्रसिद्धे । कर्चूरप्रभेदे ॥

पलिक्नी । स्त्री० इवायाम् ॥ पलितम स्त्यस्या : । अर० अच् । असितपलितयोर्न । छन्दसिक्नमेके० इत्यत्र क्नीतिर्भाषायामपिपलितयोस्तइत्यस्य स्थानेक्नइत्यंयश्चादेशोभवति । नान्तत्वान्ङीप् ॥ गर्भिण्यांगवि ॥

पलिघ : । पुं० काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहन्यनम्० परिहन्यतेऽनेनवा । हन० । परीघश्चत्वप्

चादेशश्च ।

पलितम् । न० केशपाके । जरसाकेशानांशौक्ल्ये ॥ फलतिफलनंवा । फलनिष्पत्तौ । त्रिफलाविशत्वे । नपुंसकेभावेक्त: । सौत्रपलितात्तिसाधु ॥ फलेरितजादेशपो वा । शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे । केशशुक्लताहेतौरोगे । तन्निदानं यथा । क्रोधशोकश्रमकृतः शरीरोष्माशिरोगतः । पित्तञ्चकेशान्पचतिपलितंतेनजायत इतिमाधव: । तस्यचिकित्सा यथा । लौह चूर्णंत्रयःसन्तुदशोर्द्धञ्च तमव्यत: । धात्रीफलत्रयंपथ्या हेतथैकविभीतकम् ॥ पिष्ट्वालौहमयेभाण्डेस्थापयेन्निशिवासयेत् । लेपोऽयमचिराद्धन्ति पलितान्नैवसंशय: ॥ दृगार्द्धमल्लकर्षायि ॥ काश्मर्यामूलमादौसहचरकुसुमंकेतकस्यापिमूलंलौहंचूर्णंसभृङ्गंत्रिफलपलयुततैलमेभि:पचेद्य: । कृत्वालोहस्यभाण्डेक्षितितलनिहितंस्थापयेन्मासमेकंकेशा:काशप्रकाशाअपिमधुपनिभा अस्ययोगाद्भवन्ति । त्रिफलानीलिकापत्रं भङ्गरा जोऽयसोरज: । अवीमूत्रेणसपिष्टं लेपात्कृष्णीकरंपरमिति भावप्रकाश: ॥

पलिता । स्त्री० वृद्धायाम् ॥ असित पलितयोर्नेति० प्रतिषेधात्ङीप्

तकारस्यनकारादेशश्च न ॥

पलौदनम् । न० मांसौदने । पलाव० इ० भा० ॥ पलस्यौदनस्यचनयो: समाहार: ॥

पल्ल: । त्रि० मांसभोजिनि ॥ पलम इति । तदर्हतीतियत् ॥

पल्यङ्क: । पुं० पर्यङ्के ॥ मञ्चे । कृष्याम् ॥ पर्यस्तिकायाम् ॥ परितोऽञ्चते । अक्लिलवे । घञ् । परिपर्याङ्कयोरिरितिवालत्वम् ॥

पल्ययनम् । पुं० पर्याणे । पलानइति भाषा० ॥ इ० हे० च० ॥ पल्यादन्तालिकाऽवल्ययनमिति० त्रि० शे० ॥

पल्ल: । पुं० स्थूलकुसूलके । पालुइति ख्याता इ० च० गौ० भा० ॥

पल्लव: । पुं० । न० । किसलये । नवपत्रे । प्रवाले ॥ पर्वमध्यादिसङ्घातिशाखाया: पल्लवोमत: इतिचोच्यान्तरम् ॥ पल्लते । सं० क्विप् । लूयते । लूञ्० । बह्वोरम् । पल्श्चासौलवश्च ॥ विटपे ॥ विस्तारे ॥ बले ॥ शृङ्गारे ॥ अलक्तरागे ॥ पिङ्गे ॥

पल्लवक: । पुं० वेश्याधवे ॥ मत्स्यविशेषे ॥

पल्लवद्रु: । पुं० अशोकवृक्षे ॥

पल्लवाङ्कुर । पुं० तोक्मे । कोंपर० इ० भा० ॥

पल्लवाधार: । पुं० शाखायाम् ॥

पल्लविक: । त्रि० कामुके ॥

पोकरणे ॥ खातिनखचने ॥ लम्बा दिग्धिकले ॥ ।ऽ। मध्यगुरौचतुष्का ले ॥ ।ऽ न० । आपाकि । कुम्भ कारस्यामवटादीनां पाकस्थाने । सरादूतिभा० ॥ जले । त्रि० । पविर्त्रे । प्रयते । पूञ्० । ल्युट्

पवनविजय : । पुं० गरुड़ोक्तेशुभाशुभ सूचकेश्वासवायुजयोपायकेग्रन्थवि- शेषे ॥

पवनव्याधि : । पुं० श्रीकृष्णसखिवे । उद्धवे ॥ वायुरोगे ॥

पवनात्मज : । पुं० हनूमति ॥ अग्नौ ॥ पवनस्यात्मज : ॥

पवनाल: । पुं० तूर्णाह्वे । देवधान्ये । जुमुहरी इतिमुखार० इतिचभा०

पवनाश । पुं० सर्पे ॥

पवनाशन : । पुं० सर्पे ॥ पवनोश नं यस्य ॥

पवनाशनाश : । पुं० गरुड़े ॥ मयूरे

पवनेष्ट : । पुं० महानिम्बे ॥ निम्बे

पवनोम्बुजम् । न० परूषफले ॥

पवमान : । पुं० वायौ ॥ पवते । पूङ् ॥ पूङ्यजो:शानन् ॥ आगेमुक् ॥ स्तोत्रविशेषेषु ॥ ज्योतिष्टोमेबहिष्पाद गस्तोत्रादितनोद्गात्रायैस्त्रिभिर्यज मानार्थं कर्मक्रियते तानिपवमान पदवाच्यानिस्तोत्राणीत्यर्थ : ॥ नि र्मथ्याग्नौ ॥ सचगार्हपत्याग्नि : । यथा । अतएव पवमानस्तु नि-

र्मथ्योग्नि : सउच्यते । सचवैगार्ह पत्योग्नि : प्रथमोत्रक्षयःस्मृत : इ तिमत्स्यपुराणम् ॥

पवनात्मज : । पुं० हव्यवाहने ॥ य- था । पवमानात्मजोह्यग्निर्हव्यवाह नउच्यते ॥

पवारुक : । पुं० अश्मनि । पाषाणे ।

पवि : । पुं० कुलिशे , वज्रे ॥ पुना ति । शीरक्षसपविचस्पोक्ता : पुनाते रचइ : ॥

पवित : । त्रि० पविविते । पूते ॥ पू यतेस्म । पूङ् । क्त:पूङश्चेतीड़ि धात्व : । गुणावादेशौ ॥ न० । म- रीचे ॥

पविता । त्रि० पवित्रताकारके ॥ पुना ति । पूञ्० । तृच् ॥

पवित्रम् । न० वर्षणे ॥ कुशे ॥ ताम्रे ॥ पयसि । जले ॥ अर्घोपकरणे ॥ यज्ञोपवीते ॥ घृते ॥ मधुनि ॥ पार्वणश्राद्धादावर्घार्थं शेमादावाज्य संस्कारार्थमुसमयनिर्गर्भकुशास्तर वेष्टितप्रादेशमात्रद्वये ॥ यथा । अनन्तर्गर्भिणं साग्रं कौशंद्विदलमे वच । प्रादेशमात्रंविज्ञेयं पवित्रंयत्र कुत्रचिदिति ॥ पुं० । तिलक्षुपे ॥ पुत्रजीववृक्षे ॥ त्रि० व्रतादिना शुद्धे । प्रयते । पूते ॥ शुद्धिजनके । मेध्ये ॥ पावने । शुद्धिकरे ॥ पु- नाति । पूञ्० । कर्त्तरिचर्षिदेव

तयोरितीन्द्रः ॥ यद्वा । पवसे पुनाति वा । पू ङ् ० । पूञ् ० वा । अभि चोदिभ्यइत्रौ ॥

पवित्रकः । पुं ० अश्वत्थे ॥ उदुम्बरे ॥ कुशे ॥ मदनके ॥ न० । शणसूत्रजाले ॥ पवित्रमुपवीतम्तद्वदिव । दूर्वेप्रतिकृताविति कन् ॥ पवित्राद्विपरीतलक्षणयासंज्ञायांकोवा । मन्त्रन्यितुपवित्रकमितिस्मृतिः ॥ जानूरुनाभिमानान्तंप्रतिमासुपवित्रकम् । इत्यग्निपुराणम् ॥

पवित्रधान्यम् । न० यवे ॥ इ० रा० नि० ॥

पवित्रा । स्त्री० नदीविशेषे ॥ तुलस्याम् ॥ अश्वत्थीवृक्षे ॥ हरिद्रायाम् ॥

पवित्रारोपणम् । न० श्रीकृष्णसंप्रदानकोपयोगदानरूपोत्सवविशेषे ॥ यथा । श्रावणस्यसितेपक्षेद्वादश्यांवैष्णवैर्मुदा । कर्तव्यः कृष्णदेवस्यपवित्रारोपणोत्सवः ॥ श्रीकृष्णदेवस्यैव पलक्षणमन्यदेवतानामपि ॥

पवित्रारोहणम् । न० पवित्रारोपणे ॥ यथा । आषाढशुक्लपक्षस्याष्टमी श्रावणस्यच । पवित्रारोहणंकुर्याद्देव्याः प्रीतिकरंपरम् ॥ दुर्गामन्त्रगमन्त्रं यद्दुर्गावीजिनभैरव, वैष्णवीसंचमन्त्रे णपवित्रारोहणं चरेत् ॥ विशेषाच्छ्रावणाख्यदेव्याः कुर्यात् पवित्रकम् । सर्वेषामपिदेवानांपवित्रारोहणंचरेत् ॥

पवित्राष्टकम् । न० स्थानादिषु ॥ स्थाणुस्वर्णाक्षगोकर्णभद्रकर्णमहाबलाः वस्त्रापदाविमुक्ताश्चरुद्रकोट्यः खमण्डले ॥ आकाशतत्त्वे एतत्पवित्राष्टकमिति मृगेन्द्रसंहिता ।

पविचितः । त्रि० पवित्रे । प्रयते । पूते । शुचौ । शुद्धे ॥ पवित्रंसञ्जातमस्य । ता० इतच् ॥

पशव्यः । त्रि० पशूपभोग्यबालतृणादिसमृद्धे देशे ॥ पशुभ्योहितमित्यर्थे यत् ॥

पशु । अ० दर्शने ॥ परमदर्शने ॥ सम्यगर्थे ॥ पशुमन्यमानाः ॥

पशुः । पुं० मृगादौ । सिंहव्याघ्रादौ । तिर्यगादिसर्वप्राणिषु ॥ अस्यलक्षणम् । लोमवल्लाङ्गूलवत्त्वम् । इ० भा० रत्ने यगादः । ग्राम्यारण्यप्रभेदेनचतुर्द्दशविधाःपशवोभवन्ति । यथा इमेठीनसि : । गौरजमिरवोऽश्वोश्वतरोगर्दभोमनुष्यश्चेति सप्तग्राम्याः पशवः । महिषवानरर्क्षसरीसृपरुरुपृषतमृगाश्चेतिसप्तारण्याःपशवइति दुर्गसिंहवत्वन् ॥ देवाङ्गे । छागे ॥ छागादौपशुपदप्रयोगसाध्वत्तपार्श्वउग्रोवायदिवामेपश्छागोवायदिवाह यःपशुस्थानेनियुक्तानांपशुशब्दोभिधीते ॥ इतिबलिदानप्रकरणे वि

तत्त्वम् ॥ अवैधपशुहननेदोषो यथा गारुडे । वसेत्सनरकेघोरेदिनानि पशुरोमभिः । सम्मितानिदुराचारोयोहन्त्यविधिनापशून् ॥ इति ॥ प्रमथे । महादेवगणप्रभेदे ॥ स्वर्गादिकामेसंसारपरवशेनरे ॥ घृणा शङ्कपाशबद्धेप्राणिनि ॥ पाशायथा घृणाशङ्काभयंलज्जाजुगुप्साचेतिपञ्चमी । कुलंशीलंतथाजातिरष्टौपाशाः प्रकीर्तिताः ॥ पाशबद्धः पशुःप्रोक्तः पाशमुक्तः सदाशिवः इति ॥ ज्ञानशून्येजने ॥ यथा । आहारनिद्राभयमैथुनानिसमानमेतत् पशुभिर्नराणाम् । ज्ञानंनराणामधिकोविशेषोज्ञानेनहीनाः पशुभिः समाना इति ॥ गवादौ ॥ देवे ॥ प्राणिमात्रे ॥ यज्ञे ॥ यज्ञोडुम्बरे ॥ साधकानांभावत्रयान्तर्गतप्रथमभावे ॥ तस्य निर्णयोयथा । नित्यश्राद्धं तथास्नानं ध्यानम्दर्भपवित्रण्यकम् । देवतादर्शनंपीठदर्शनंतीर्थदर्शनम् ॥ गुरोराज्ञापालनञ्चदेवतानित्यपूजनम् । पशुभावस्थितोमर्त्योमहासिद्धिं लभेद्ध्रुवम् ॥ अपिच । पत्रं पुष्पं फलं तोयंस्वयमेवाहरेत्पशुः । नशूद्रदर्शनंकुर्यान्मनसानस्त्रियंस्मरेत् ॥ आदौभावंपशोःकृत्वापश्चात्कुर्यादवश्यकम् । वीरभावं महाभावं सर्वभावोत्तमोत्तमम् । तत्पश्चादतिसौन्दर्यंदिव्यभावंमहाफलमिति रुद्रयामले उत्तरखण्डम् ॥ दिव्यस्तुदेवताप्रायःशुद्धान्तःकरणः सदा । द्वन्द्वातीतोवीतरागः सर्वभूतसमः क्षमी । तस्यकालो यथा । आदौषोडशदंडेनपशुभावमथापिवा । इति रुद्रयामले उत्तरखण्डम् ॥ जन्ममारभ्य पशुभावंवर्षषोडशकाववधिरितियामलीश्वरे ५१ पटलः । पशुभावकथाव्याकर्म्यगर्भतन्त्राभिन्द्रा मासरुद्रयामले । पशुभावरतायेचवर्षशतं पशुरूपिणः । रात्रौयत्नस्यमंचनस्यशैत्रजपेत्तु निश्चितम् । संध्यायीवलिदानेच तन्त्रेचसंशयः सदा ॥ मन्त्रेचाक्षरबुद्धिश्चशिक्षासोगुरौसदा ॥ प्रतिमासु शिलाबुद्धिर्भेदवोदेवते पुनः । निरामिषेषु देवेशिदेवतायाः प्रपूजनम् ॥ चक्षान्तेन तथा स्नानंप्रत्यहं देवताडनम् । सर्वाघ्रेपनिन्दाचयःकुर्याद्वमहेश्वरि ॥ सएवपशुभावेनह्यधमः परिकीर्तितः ॥ इति रुद्रयामले उत्तरखण्डे ६ पटलः ॥ रात्रौनैव यजेद्देवीं संध्यायां वापराह्णके । ऋतुकालंविनादेवि रमणं परिवर्जयेत् । सांसारिकं महेशानित्यजेत् पञ्चपर्वसु । यदन्यद्देवविहितं कुर्यान्नियमतत्परः । इतिनित्यातन्त्रे प्रथमपटलः । (८८) ॥ संसा

यंगी ॥ यथा । चैतन्यंदृक्क्रियारू
पं तदस्त्यात्मनिसर्वदा । सर्वतश्च
तोमुक्तौश्रूयतेसर्वतोमुखम् ॥ सद
प्यभासमानत्वात् तन्निषिद्धं प्रतीयते
। बद्धेनाप्रतीयेस्यसौतएवविमो
चनात् ॥ अस्यार्थः । ज्ञानक्रिया
त्मकंचैतन्यं तदात्मन्यस्ति नतु
शरीरसमवेतमितिचार्वाकनिराकर
णेशास्त्रेप्रतिपादितम् । तच्चसर्वदैवा
स्तिनतुमुक्तावेवमुक्तौतुसं विश्वभा-
वो यथा । वैशेषिकैरिष्टस्तथाविधा
यामोक्षरूपायामुक्तौ निराकृतत्वात् ।
यतोमुक्तौमुक्तात्मनांसर्वतोमुखस्यचै
तन्यस्यश्रवणात् । नचतेषांतदानी
मेवतदुत्पद्यतइतिवाच्यम् । सदुत्प
त्तेः सत्कार्यवादेप्रतिपादितत्वात् ।
यद्यमुक्तावेवतथाविधचैतन्यश्रुतेः
पूर्वंत्वतदनुपलम्भादन्वयव्यतिरेका
भ्यांसंसारावस्थायांसर्वतोमुखत्वं
चैतन्यस्यमुक्तदृष्ट्याशङ्कानिरासायाह
। सदपीतिसत्यमनुपलम्भःसंसाराव
स्थायांतथाविधस्यचैतन्यस्यसत्वन्यथा
सिद्धः । व्यञ्जकाभावकृतोहियोनुप
लम्भःसनाभावसाधकोऽपितुयसति
व्यञ्जकेयथायमनुपलम्भःसव्यञ्जका
भावहातःप्रतरनाऽसत्वसाधयति ।
तच्चसर्वतोमुखत्वंसदपियस्मान्नप्रथते
ततः केनापिप्रतीतंतन्निरुद्धमिवप्रतीय
ते । यस्माद्धेतोरनाहतनिजमाम

थ्र्यंस्वपुरामुक्तःसचात्मावश्यः इति
॥ पश्यतिसर्वमविशेषेण । दृशिर्०
। अर्जिदृशिकम्यमिपशिबाधामृजि
पशितुक्धुक्दीर्घहकाराश्च कुः
पशिरादेशश्च ॥ पशवश्चग्राम्यारण्या
वेदस्मृत्यागमविहितकर्मसाधनभू
ताः । नहितान्विनायज्ञाद्यनुष्ठा
नम्यज्ञार्थमेवचतेषांसृष्टिः । तत्र
ग्राम्याअजाद्योगवयाद्यस्त्वारण्या
इतिभेदः ॥

पशुक्रिया । स्त्री० मैथुनं ॥

पशुजातिः । स्त्री० पशुशब्दवाच्यं ॥
सिंहाद्याहरिणाद्याश्चगवाद्यायेचजा
तयः । तेसर्वेशास्त्रदृष्ट्याच प्रोक्ता
हिपशुजातयः ॥

पशुपतिः । पुं० चन्द्रमौलौ । शिवे ॥
पशोर्हंयस्यपतिः ॥ पालयामिप
शून्यस्मात् यज्ञादिचयदृच्छया ।
तेषामधिपतिर्वाहं तस्मात्पशुपतिः
स्मृतः ॥ पशूनांजीवानांसुरनरति
रश्चांपतिरितिवा । यथा । ब्रह्माद्याःस्था
वरान्ताश्चपशवः परिकीर्तिताः ।
तेषांपतिर्महादेवःस्मृतःपशुपतिः
श्रुतौ ॥ हुताशने ॥ यजमानमूर्त्तौ

पशुपल्वलम् । न० कैवर्तीमुस्तके ॥

पशुपालः । पुं० इत्यर्थतयाछागमेषा
दिपोषके ॥

पशुपाशः । पुं० पुत्रकलत्रादिषु ॥ मृ
णालज्ञायष्टमु । पशूनांपाशोबन्धनं

दि : । घृणाशङ्काभयंलज्जाजुगुप्सा चेतिपञ्चमी । कुलंशीलंतथाजाति रष्टौपाशा : प्रकीर्त्तिता : ॥ पशुद्द र्शनमहाकूपेपतिता : पशव : प्रिये । परमार्थंनजानन्तिपशुपाशनियन्त्रि ता इतिकुलार्णवे १ उल्लासे ॥

पशुपाशक : । पुं० रतिबन्धविशेषे ॥ यथा । स्त्रियमानतपृष्ठांशौस्वपादाम्ब्. पद्द्वयम् । ऊर्द्ध्वाशेनरमेत्कामीबन्धोयं पशुपाशक : ॥

पशुप्रेरणम् । न० गवादीनांचालने । पद्द्वी । हांकना० इ० भा० । पशूनांप्रेरणम् ॥

पशुमोहनिका । स्त्री० कटुकीलतायाम्

पशुरज्जु : । स्त्री० अश्वादिबन्धनरज्जौ । दामन्याम् ॥ पशुबन्धनीरज्जु: ॥ शाकपार्थिवादि : ॥

पशुराज : । पुं० सिंहे ॥ पशूनांराजा टच् ॥

पशुवृत्ति : । त्रि० अतिवत्सले ॥

पशुहरीतकी । स्त्री० आम्रातकफले ॥

पश्चात् । अ० प्रतीच्याम् ॥ चरमे ॥ अधिकारे ॥ पृष्ठभागे ॥ अपरस्मिन्० अपरस्मात्० अपरोवा । वसत्याग तोरमणीयवा । पश्चादितिसूत्रेणात्र परस्यपश्चभाव : आतिश्चप्रत्ययोऽ स्तातेर्विषये ॥

पश्चात्ताप : । पुं० अनुतापे । विप्रतीसारे । अनुशोचने । पछतावा० इ० भा० ॥ पश्चात्तपनम् । तपसंतापे । घञ् ॥

पश्चार्द्ध : । त्रि० अपरार्द्धे । शेषार्द्धे । अपरश्चासावर्द्धश्च । अपरस्यार्द्धेपश्च भावोवक्तव्य : ॥

पश्चिम : । त्रि० चरमे । अन्ते ॥ पश्चाद्भव : । पश्चादिपश्चाड्डिमचप् ॥ पश्चिम० इ० प्रसिद्धे देशे ॥

पश्चिमक्रतु : । पुं० अन्त्येष्ट्याम् ॥

पश्चिमरात्रि : । स्त्री० अपररात्रे ॥ । पश्चिमाचासौरात्रिश्च । विशेषणसमास : ॥

पश्चिमा । स्त्री० अस्ताचलावच्छिन्नदिशि । प्रतीच्याम् । वारुण्याम् ॥ तद्दिग्भववायुगुणा यथा । पश्चिमोमारुत स्तीक्ष्ण : कफमेदविशोषण : । सद्य : प्राणहरोदुष्ट : शोषकारीशरी रिणाम् इ० रा० नि० ॥ अपिच । पश्चिमोनिलपूर्वंर्थबलारोग्यविवर्धन: । वातद : शोषण : स्निग्धोरोपनो विशदोलघु: । अपोत्तघुत्वबैशद्यशैत्य वैमल्यकारक: । सर्वद्रव्येष्वभिव्यक्त: प्रभावरसवीर्यकृत् । प्राणसंरोपणस्तत्र्व च्चोदाहशोषतृषापह इ० रा० व० ॥

पश्य । अ० विस्मये । प्रशंसायाम् ॥

पश्यन् । त्रि० ईक्षणकर्त्तरि । पश्यति । दृशिर्० । लट : शतृ ॥

पश्यत । अ० प्रशंसायाम् ॥ विस्मये ।

पश्यतोहर : । त्रि० चोरे ॥ यथा ।

य : पश्यतोऽहरेदर्थंसचौर : पश्यतो हरः ॥ पश्यन्तमनादृत्यहरति । हृञ् । अच् । षष्ठीचानादरे० इतिषष्ठी । वागदिक्पश्यद्भ्योयुक्तिदण्डहरे ष्विति० षष्ठ्याअलुक् ॥

पश्यन्ती । स्त्री० मूलाधारोत्थितहृदयग तनादरूपवर्णे ॥ यथा । मूलाधारा त्प्रथममुदितोयस्तुतार : पराख्य : पश्चात्पश्यन्त्यथहृदयगोबुद्धियुङ्मध्य माख्य : । वृत्यलक्षणकौस्तुभ : ॥

पश्वाचार : । पुं० आचारविशेषे ॥ यथा । वेदोक्तेनयत्नेह यींकामसंकल्प पूर्वकम् । सएववैदिकाचार : पश्वा चार:सउच्यते ॥ इत्याचारतन्त्रम् ॥

पष्ठवाट् । त्रि० युगपार्श्वगे । दमन कालेकण्ठारोपितकाष्ठभारे ॥ पष्ठ मंपष्ठंवावयंवहति । वह० । वहश्चे तिण्वि : । पृषोदरादि : ॥

पष्ठौही । स्त्री० बालगर्भिण्यांगवि ॥ प्रष्ठंवहति । ण्विः । वाहऊतिङीप् पृषोदरादित्वाद्रलोप : ।

पस्त्यम् । न० निशान्ते । सदने । गृहे ॥ अपस्त्यायति । एकेर्थशब्दसङ्घात योः । आतश्चोपसर्गइतिकः । पृ० ॥

पस्पश : । पुं० शास्त्रारम्भासमर्थकेउपो द्घातसन्दर्भग्रन्थे ॥

पस्पशा । स्त्री० महाभाष्यस्यादिमा ह्निके ॥ स्पशबाधनस्पर्शनयो : । यङन्तात्पचाद्यच्यङोऽचिचेतिलुक् । अ

जाद्यतइतिटाप् । दीर्घोकितइत्य स्यासस्यदीर्घस्तुनभवति । संज्ञापू र्वकविधेरनित्यत्वादित्याहु : ॥

पह्नव: । पुं० श्मश्रुधारिम्लेच्छजातिवि शेषे ॥ पारदामुक्तकेशाश्चपह्नवा: श्म श्रुधारिण इतिहरिवंश : ॥

पह्निका । स्त्री० वात्तृणे । वारिप्रसून्या म् ॥

पा । स्त्री० रक्षणे ॥ पाने ॥ पूते ॥ पूविते ॥ त्रि० पातरि ॥ पानम् । पा० । सं० । क्विप् ॥

पांशवम् । न० लवणविशेषे । रोमके । औद्भिदे । जपरजे । औषरे । देश इति भा० ॥

पांशु : । पुं० धूली ॥ सस्यार्थंचिरसं चितगोमये ॥ पर्पटे ॥ कर्पूरविशे षे ॥ न० कुसमस्थरे ॥ स्त्री० । नदी भेदे ॥ पंशति । पशिनाशने । अर्जि दृशिकम्यमिपशिबाधामित्यादिना० साधु : ॥

पांशुका । स्त्री० केतक्याम् ॥ रजस्वला याम् ॥ इ० शब्दाम्बुधि : ॥

पांशुकासीसम् । न० कासीसे इ०रा०॥

पांशुकुली । स्त्री० रथ्यायाम् ॥ इ० हारावली ॥

पांशुकूलम् । न० अनामपट्टोलिकाया म् ॥ यथा । शासनंधर्मधीक्षःस्यान् मक्षुति : शूद्रशासनम् । पट्टोलिका क्षुमकीलापांशुकूलंनकस्यचिदिति

त्रिकाण्डशेष: ॥

पांशुचत्वर: । पुं० घनोपले ॥

पांशुचन्दन: । पुं० शिवे ॥ पांशुचन्दनमिवयस्य ॥

पांशुचामर: । पुं० दूर्वाञ्चिततटीभुवि ॥ वर्षापके ॥ प्रशंसायाम् ॥ पुरोटी ॥ धूलिगुच्छके । पटवासे ॥

पांशुजम् । न० पाक्यलवणे । औद्भिदे ॥

पांशुपत्रम् । न० वास्तूके ॥

पांशुपर्य्याय: । पुं० पर्पटे । पित्तपापड़ा इ० भा० ॥

पांशुमर्द्दन: । पुं० केदारे ॥

पांशुर: । पुं० दंशके । डांस० इ० भा० ॥ पीठसर्पिणि । खञ्जे ॥ पांशुरस्त्यस्मिन्वा । नगपांशुपाण्डुभ्यश्चेति र: ॥

पांशुरागिणी । स्त्री० महामेदायाम् ॥

पांशुल: । पुं० पुंश्चलि ॥ शम्भो: खट्वाङ्गे ॥ हरे ॥ पामिनि ॥ पूतिके । करञ्जविशेषे ॥ त्रि० पांशुयुते ॥ पांशु० अस्तिअस्यपक्षिम्वा । सिध्मादित्वाल्लच् ॥

पांशुलवणम् । न० औद्भिदे । पांशवे । वसुके ॥ औद्भिदं पांशुलवणंयज्जातंभूमित: स्वयम् । क्षारंगुरुकटुस्निग्धंश्लेष्मलंवातनाशनम् ॥

पांशुला । स्त्री० असत्याम् ॥ भुवि ॥ पांशुपापमस्त्यस्या: । नगपांशुपाण्डुभ्यश्चेति र: । कपि० । ल: ॥ सिध्मादित्वाल्लच्वा ॥ पांशुलातिवा । आतोनुपेतिक: ॥ केतक्याम् ॥ रजस्वलायाम् ॥ इ० रा० नि० ॥

पांसन: । त्रि० दूषके । दोषोत्पादके

पांसु: । पुं० रजसि । धूलौ ॥ चिरसंचितगोमये । खात० इ० भा० ॥ पंसयति । पसिनाशने । अर्जिदृशि कृतिसाधु: ॥

पांसुल: । त्रि० रजस्वले ॥ पांसुरस्त्यस्य । सि० लच् ॥

पाक: । पुं० परिणतौ ॥ शिशौ ॥ केशस्वनरसार्थौक्त्ये ॥ उदराग्निना द्वारस्यपचने ॥ पचायाम् । स्थाल्यादौपचने ॥ स्थालीमार्जनाद्योदनपरीक्षान्तोव्यापारनिचय: पाक: इति स्मृति: ॥ भर्जनंतलनंस्वेद: पचनंक्वथितंतथा । तान्दूरंपुटपाकश्चपाका: सप्तविधोमत: ॥ नित्यंनूतनभाण्डेनकर्त्तव्य: पाकएवच । अथवापक्षपर्य्यन्तं ततस्त्याज्यमनीषिभि: ॥ दैत्यविशेषेइन्द्रभ्रातरि ॥ पचनम् । डुपचष्० । घञ् ॥ पच्यते,परिणम्यतेऽनेनवा । हलश्चेतिघञ् ॥ पातिपिबतिवा । भारद्वाजे पा-पानेवा । अर्भकपृथुक पाकावयसीतिकन्प्रत्ययान्तोनिपातित: । इग्रभीकापाशल्यतिमर्त्त्याकन्‌वा ॥

पाकक्षा: । पुं० पानीयामलके ॥

रिणि ॥

पाकली । स्त्री० कर्कट्यां ॥

पाकशाला । स्त्री० महानसे । रसवत्या म् । रसोई० इ० भा० ॥ अग्निकोणेरन्ध्रा : कार्य्यस्त्वोक्ता । प्राच्यां दिशिस्नानगृहमाग्नेय्यां पचनालयम् । शयनंयाम्यदिग्भागेनैरृत्यांशस्त्रमन्दिरम् ॥ प्रतीच्यांभोजनगृहं वायुभागेसभागृहम् । भाण्डारसद्मंसौम्ये स्यैशान्यां देवतालयमिति पीयूषधारायांकश्यप : ॥

पाकशासन : । पुं० इन्द्रे ॥ पाकस्यदैत्यस्य शासन : । शासयति । शासु० । णिजन्त , नं० ल्यु० ॥

पाकशासनि : । पुं० इन्द्रात्मजे । जयन्ते ॥ पाकशासनस्यापत्यम् अत इञ् ॥

पाकशुक्ला । स्त्री० कर्कटश्याम् ॥

पाकस्थानम् । न० महानसे ॥ पाकस्य स्थानम् ॥

पाकस्थाली । स्त्री० रन्धनपात्रे ॥ पाकस्यस्थाली ॥

पाका । स्त्री० बालिकायाम् ॥ अजा० टाप् ॥

पाकाभिमुख: । त्रि० सिद्ध्युन्मुखे ॥

पाकारि : । पुं० श्वेतकाञ्चने ॥

पाकिमम् । त्रि० पक्किमे ॥ पाकेननिर्वृत्तम् । भावप्रत्ययान्तादिमप् ॥

पाक्किमा । पुं० पाकतायाम् ॥ पाकस्य भाव : । इमनिच् ॥

पाक्तुक : । पुं० सूपकारे ॥ पचति । डुपचष्० । पचिनशोर्णुकन्कनुभौ चेतिसाधु : ॥

पाक्यम् । न० बिड्लवणे । खारीलूण इ० भा० ॥ पुं० यवक्षारे ॥ त्रि० । पक्तव्ये ॥ पच्यते । डुपचष्० । ऋहलोर्ण्यत् । चजोरितिकुत्त्वम् । पाकेसाधुर्वा । तत्रसाधुरितियत् ॥

पाक्षिक : । त्रि० पक्षपातिनि ॥ पक्षिघातके । शाकुनिके ॥ पक्षोपक्षिवृत्तम् । ठञ् ॥ पक्षिणोहन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् ॥ पक्षभवे ॥

पाखण्ड : । पुं० पाषण्डे । सर्वलिङ्गिनि ॥ पाखण्डयति । खण्डिभेदने । पचाद्यच् ॥ यथा । पालनाच्चत्रयीधर्म : पाशब्देननिगद्यते । तंखण्डयन्तितेयस्मात्पाखण्डास्तेनहेतुना ॥ नानाव्रतधरानानावेषा : पाखण्डिनोमता : ॥ पर्यायवाङ्मात्रेणाप्यर्चनंनिषिद्धम् । यथाहमनु : । पाखण्डिनोविकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ ( क ) ॥ निशामुखेषुखद्योता स्तमसाभान्तिनोग्रहा : । यथापापेनपाखण्डा न हिवेदा : कलौयुगे ॥ इतिभागवतम् ॥

पागल : । पुं० उन्मत्ते । वातुले ॥ य

ये । पञ्चलोहिन्योगुञ्जा : परिमाणस्य । तद्धितार्थे तिसमासेतद्दस्यपरिमाण मितिठञ् । भस्याढङ्क्तिपुंवद्भावाल्लो हिनीशब्दस्य ककारलकारयोर्निवृत्तिः ॥

पाञ्चशब्दिकम् । न० पञ्चप्रकारवाद्ये ॥ यथा । चर्मजंचर्मजंचैवतन्त्रजंकांस्य जंतथा । फूत्कृतञ्चे तिमुनिभि : क थितंपाञ्चशब्दिकमितिस्कान्दे रेवा खण्डम् ॥

पाञ्चार्थिक : । पाशुपते ॥ इ० चि० ॥

पांचाल : । पुं० पांचालानांराज्ञि ॥ प ञ्चियसमानशब्दादिष्वपत्यवत्प्रत्य य : ॥ पंचाला : पुं०बहुत्वे ॥ चि० । पञ्चालदेशोऽपि ॥

पांचालिका । स्त्री० वस्त्रदन्तादिनिर्मि तपुत्रिकायाम् । शालभञ्ज्याम् ॥ पंचालदेशेभवा । जनपदतदवध्योरि तिवुञ् ॥

पांचालनगरम् । न० } पांचालपुरम् । न० } कन्यकुब्जपुरम् कान्यकुब्ज इति ख्यातेपत्तने ॥

पांचाली । स्त्री० द्रौपद्याम् ॥ पुत्रिका याम् । पुत्तली० इति० भा० ॥ कोमलाल्पसमासानुप्रासघटकवृत्तिभे दे ॥ नागध्याम् । पिप्पल्याम् ॥

पाट् । अ० सम्बोधने ॥ पाटयति । प टगतौ । णिजन्त : क्विप् ॥

पाटक : । पुं० रोधसि ॥ ग्रामैकदेशे ॥ अक्षादिपातके । वाद्यादिवादने ॥ वाद्यप्रभेदे ॥ महाकिष्कौ ॥ मूलद्र व्यापचये ॥ कटकान्तरे ॥ पटति । पट० । ण्वुल् ॥

पाटच्चर : । पुं० चौरे ॥ पाटयंश्चरति । चर० । पचाद्यच् । पृषोदरादि : ॥

पाटनम् । न० छेदने । पाडना इ० भा०

पाटल : । पुं० आशुधान्ये । षष्टिकादौ ॥ श्वेतरक्तवर्णे । गुलाबीरङ्ग० इ० यासीय० भा० ॥ न० । पाटलापु ष्पे ॥ कुङ्कुमे ॥ पाटल्यवयवे ॥ पा टलीविकारे ॥ त्रि० श्वेतरक्तवर्णयु क्ते ॥ पाटलोवर्णोऽस्यास्ति । अच् ॥ पाटयति । पट० । बाहुलकादूपादित्वा त्कल : ॥ पाटल्याअवयवोविकारो वा । विल्वाद्यण् ॥ पाटलायाः पुष्प मपाटलम् । अनुदात्तादेश्चाञ : पुष्पमूलेषुबहुलमितिबहुलवचनात् मैञ्लुप् ॥

पाटलद्रुम : । पुं० पुन्नागवृक्षे ॥

पाटला । स्त्री० पाडल इ० भा० पुष्प वृक्षे । अमोघायाम् । काचस्थाल्या म् । फलेरुहायाम् । पारुल इ० गौ० भा० ॥ पाटलातुवरातिक्ताऽनुष्णा दोषत्रयापहा । अरुचिश्वासशोथा स्रच्छर्दिहिक्कातृषाहरी ॥ पुष्पंकषा यंमधुरंहिमंहृद्यंकफास्रनुत् । पित्ता तीसारदाहघ्नंफलंहिक्कास्रपित्तनुत् ॥ पाटंलाति । ला० । क : ॥ पाट लवर्णायोगादपि ॥ अनुदात्तत्वाभावा

ङीष् ॥

पाटलापुष्पसन्निभम् । न० पद्मकाष्ठे ॥

पाटलि: । पुं० स्त्री० पाटलायाम् ॥ मुष्ककद्रुमे ॥ पाटि । पा० क्विप् । टलति । टल वैक्लव्ये । सर्वधातुभ्य इन् । पाटाऽसौटलिश्च ॥

पाटलिपुत्रम् । न० पाटलिपुत्रके ॥ यथा सुदर्शनाभिधस्य राज्ञः पुत्राणां राजविद्याधिगमाय कलौ मरव्यं लोकेऽद्य हस्पतिसदृशेन विष्णुशर्मणा पञ्चतन्त्रहितोपदेशादयो ग्रन्था रचिता: ॥

पाटलिपुत्रकम् । न० पटना० इ० प्र० नगरवि० । कुसुमपुरे ॥

पाटली । स्त्री० मुष्ककवृक्षे । कटभीवृक्षे ॥ पाटलायाम् ॥

पाटवम् । न० पटुत्वे । पटिमनि ॥ पटोर्भाव: । इगन्ताच्चलघुपूर्वादित्यण् ॥ आरोग्ये ॥

पाटविक: । त्रि० धूर्ते ॥ पटौ । दक्षे ॥ पाटवमस्ति । मत्वर्थीयठन् ॥

पाटहिका । स्त्री० गुञ्जायाम् ॥ इति० हारावली ॥

पाटित: । त्रि० दारिते । भिन्ने ॥

पाटी स्त्री० बलायाम् ॥ अनुक्रमे । परिपाट्याम् ॥ यथा । पाटीसद्गणितस्येति ॥

पाटीर: । पुं० मूलके ॥ केदारे ॥ वेणुसारे ॥ वारिदे ॥ तितऊ ॥ वङ्गे ॥ धातिके ॥ चन्दने ॥ यथा । पाटीरतवपटीयान्क: परिपाटीमिमामुरीकर्त्तुम् । यत्पिंषतामपि नृणांपिष्टोपितनोषिपरिमलै: पुष्टिम् ॥ पटीरएव । स्वार्थिकोऽण् ॥

पाठ्यम् । न० पट्टशाके ॥ पाठ्यशाकन्तुमधुरंरुच्यं रंगुरुमारुतम् ॥

पाठ: । पुं० पठने । ब्रह्मयज्ञे । शिष्याणामध्यापने ॥ विधिनावेदस्याभ्यसने ॥ यथा । आदौचप्रणवंजप्त्वास्तोत्रंवासंहितांपठेत् । अन्तेचप्रणवंदद्यादित्युवाचादिपूरुष: ॥ सर्वत्रपाठेविज्ञेयोह्यन्यथाविफलंभवेत् ॥ गुप्ते नानन्यचित्तेनपठितव्यं प्रयत्नत: । नकार्यासततमनसाकार्यैस्तोत्रस्यवाचनमिति शास्त्रिका: ॥ अपिच ॥ आधारेस्थापयित्वातुपुस्तकंवाचयेत्सुधी: । हस्तसंस्थापनादेव यस्मादल्पफलंलभेत् । स्वयंचलिखितंयत्तु ह्रतिनालिखितंनयत् । अब्राह्मणेनलिखितंतच्चापिविफलंभवेदिति चण्डीस्तोत्रादिपाठेषुविधिविशेषनिरूपित: ॥ पठस्व०पाठरंवा । पठ० । भावेघञ् ॥

पाठक: । त्रि० उपाध्याये ॥ धर्मभाणके । धर्मकथके ॥ पठति । पठ० । ण्वुल् ॥ अध्येतरि ॥

पाठक्रम: । पुं० पदार्थबोधकवाक्यानांक्रमे ॥ यस्मात्पदार्थानांक्रमस्थीयते । येनक्रमेणवाक्यानिपठिता

मितेनैवक्रमेणाधीतान्यर्थप्रत्ययंजन यन्ति । यथार्थप्रत्ययंचपदानामनुष्ठानम् । सचपाठोद्विविध : । मन्त्र पाठोब्राह्मणपाठश्चेति । तत्राग्नेया ग्नीषोमीययोस्तत्तद्याज्यानुवाक्या नांपाठक्रमाद्यःक्रमआश्रीयतेसमन्त्र पाठ : । सचायंमन्त्रपाठोब्राह्मणपर ठाद्बलीयान् । अनुष्ठानेब्राह्मणवा क्यामिवयामन्त्रपाठस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हिप्रयोगाद्बहिरेवे दमेवंकर्त्तव्यमित्यवबोध्यकृतार्थम् । मन्त्रा : पुन : प्रयोगकालेव्याप्रिय- न्ते । अनुष्ठानक्रमस्यस्मरणक्रमाधी नत्वात् तत्क्रमस्यचमन्त्रक्रमाधी- नत्वादन्तरङ्गोमन्त्रपाठइति । प्रया- जादीनांसमिधोयजतितनूनपातंय जतीत्येवंविधिवाक्यक्रमाद्यः क्रम : सब्राह्मणपाठक्रम.यद्यपिब्राह्मणवा क्यान्यर्थविधायकतार्थानितथापि प्रयाजानांक्रमस्मारकान्तरस्याभावा त्तान्येवक्रमस्मारकत्वेनस्वीक्रिय- न्तेइतिलौगाक्षिभास्कर : ॥ पाठ क्रमादर्थक्रमोबलीयान् ॥

पाठभू : । स्त्री० ब्रह्मारण्यं । वेदपाठ स्थाने ॥

पाठमञ्जरी । स्त्री० शालिपक्षिणाम् ॥

पाठशाला । स्त्री० अध्ययनगृहे ॥ पाठ स्याध्ययनस्यशालागृहम् ॥ यथा । विधिवद्गुरुमुखादध्ययनाध्यापनरू पंब्रह्मयज्ञापरपर्यायमभ्यसनंपाठ: । तदर्थंशालादेवालयादि: । तथाहि मनु : । तपोविशेषैर्विविधैर्व्रतैश्चवि धिचोदितै : । वेद: कृत्स्नोऽधिगन्त व्य : सरहस्योद्विजन्मना ॥ २ । १६५ ॥ तपोविशेषैर्नियमकायापैर्वि विधैर्बहुप्रकारैश्चवक्ष्यमाणस्त्वा चान्द्रायणादिनोक्तै: सेवेतेमांस्तुनि यमानित्यादिभिर्वक्ष्यमाणैरपि । व्र तैश्चउपनिषन्महानाम्निकादिभि : विधिदेशितै : स्वगृह्यविहितै : । समग्रवेदोमन्त्रब्राह्मणात्मक : सोपि निषत्कोपिपर्यधेतव्य : । रहस्यमु पनिषत् । प्राधान्यख्यापनायपृथङ् निर्देश : ॥ १६५ ॥ अपिच । योन धीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् । सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्व य : । योद्विजोवेदमनधीत्यअन्यत्रा र्थशास्त्रादौश्रमंयत्नातिशयंकरोति सजीवन्नेवपुत्रपौत्रादिसहित : शी घ्रंशूद्रत्वमच्छति । वेदमनधीत्यापि स्मृतिवेदाङ्गाध्ययनेविरोधाभाव : । अतएवशङ्खलिखितौ । नवेदम नधीत्यान्यांविद्यामधीयीतान्यत्रवे दाङ्गस्मृतिभ्य : ॥ १६८ ॥ ( २ ) ॥ तस्माद्देवालयेनित्यं धर्मशास्त्रस्य वाग्मते : । पठनंकारयेद्राजन्यदी- च्छेद्धर्ममात्मन इतिवह्निपुराणम् ॥

यस्तुदेव्यागृहेनित्यंविद्यादानंप्रवर्त्तयेत्। सभवेत्सर्वलोकानांपूज्यः पूजापदंव्रजेदितिपुराणान्तरम् ॥

पाठशालिनी । स्त्री॰ पाठमञ्जर्याम् ॥

पाठा । लताविशेषे । अम्बष्ठायाम् । वनतिक्तिकायाम् । तिक्तपुष्पायाम् ॥ अस्यागुणायथा । पाठोष्णाकटुकातीच्णावातश्लेष्महरीलघुः । हन्तिशूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ॥ दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान् । इ॰ भावप्रकाशः ॥ अम्बष्ठासकषायाम्लाकफकण्ठरुजापहा । वातामयबलासघ्नीरुचिकृद्दीपनीपरा ॥ इ॰ रा॰ नि॰ ॥ अस्याःशाकप्रकारस्तु । पाठाशाकंगलरविच्छिन्नंव्यक्तंधर्षितंप्रातः कालिजरयम् हितैसम्प्रतैलेविपाच्यम् । चूर्णैलिप्तंलवणसहितंमारिचंतमनव्यं सर्वेभ्यस्ताप्रवलितरुचिदंव्यञ्जनेभ्यः प्रभूतम् ॥ पठ्यते । पठ॰ । कर्मणिघञ् । अजादित्वात्टाप् ॥

पाठिका । स्त्री॰ पाठायाम् । पटांकू॰ इ॰ प॰ मा॰ ॥

पाठित : । त्रि॰ अध्यापिते ॥ यथा । माताशत्रुः पितावैरीबालोयेननपाठितः । नशोभतेसभामध्येहंसमध्येबकोयथेति ॥

पाठी । पुं॰ चित्रकवृक्षे ॥ यथा त्रि॰ । पाठविशिष्टे पाठोम्यास्तीति । अत्रइनिठनावितीनिः ॥

पाठीकुटः । पुं॰ चित्रकवृक्षे ॥

पाठीन : । पुं॰ बोयाली॰ इ॰ गौ॰ भा॰ प्रसिद्धेमत्स्ये । सहस्रदंष्ट्रे । बोदाले ॥ गुणायथा । पाठीनःश्लेष्मलोवृष्योनिद्रालुःपिशिताशनः । दूषयेद्रुधिरंपित्तंकुष्ठरोगंकरोतिच ॥ ‡ ॥ पाठीन : खण्डितः शस्त्रैर्वेसवारसमन्वितः । कटुतैलेनसम्भृष्टोहिङ्गुलक्तोयथोजितः ॥ पाठीनःकफकृद्दृष्योनिद्रालुर्मांसनाशनः । मांसाशीपालरक्तश्चकारकोरितसस्तथा ॥ पाठिंपृष्ठंनमयति । णमुप्रह्वत्वे । णिच् । अन्येभ्योपिडः । अन्येषामपीतिदीर्घः ॥ पाठवि ॥ गुग्गुलुद्रुमे ॥

पाठ्यः । त्रि॰ अध्यापनीये । पाठनीये ॥

पाण : । पुं॰ पाणौ ॥ इतिशब्दचन्द्रिका ॥

पाणविक : । त्रि॰ पणवस्यवादके ॥

पाणिः । पुं॰पञ्चशाखे॥ शये । करे । हस्ते ॥ पणायन्तिव्यवहरन्त्यनेन । पण॰ । अशिपाणाय्योरुडायलुकौचेतीणायप्रत्ययस्यलुक्च ॥ कुलिकवृक्षे ॥ स्त्री॰ । पण्यवीथ्याम् । हट्टे

पाणिकम् । न॰ पणेनक्रीते ॥ असमासेनिष्कादिभ्यइतिठक् ॥

पाणिगृहीती । स्त्री॰ पत्न्याम् । वि-

धर्मेणोढायाम् ॥ अग्निसाक्षिकत्वयापाणिः गृहीतोयस्याः । पाणिगृहीतीभार्यायामितिङीष् । कुतूहलादिनापाणिर्गृहीतोयस्यास्तस्याः सातुपाणिगृहीता ॥

पाणिग्रहणम् । न० विवाहे ॥

पाणिग्राहः । पुं० भर्त्तरि । पत्यौ ॥ पाणिंगृह्णाति । ग्रह० । अण् ॥

पाणिघः । पुं० पाणिवादे । मृदङ्गादिवादके ॥ पाणिंपाणिनावाहन्तीति विग्रहेपाणिघताडघौशिल्पिनीत्यनेनपाणावुपपदेहन्तेष्टक्टिलोपोघत्वञ्चनिपात्यते ॥

पाणिघात : । पुं० पाणिनाहनने ॥

पाणिजः । पु० नखे ॥

पाणितलम् । न० कर्षपरिमाणे । तोलकद्वये । हस्ताधोभागे ॥

पाणिनः । पुं० पाणिनिमुनौ । इति त्रिकाण्डशेषः ॥ पणनम् पण० । घञर्थेकविधानमितिपणेः कः पणो ऽस्यास्ति० इ० पणीतस्यगोत्रापत्यम् । अण् । गाथिविदथिकेशिगणिपणिनश्चेत्यऽणिपरेटिलोपोन ॥

पाणिनिः । पुं० दाक्षीपुत्रे । शालङ्किनि । व्याकरणसूत्रकारमुनौ । पणिनोयुवापत्यम् । इञ् ॥

पाणिनीयम् । न० पाणिनिप्रोक्तेव्याकरणे ॥ प्रमाणभूतआचार्योदर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्यमहतापयत्नेनसूत्राणिप्रणयतिस्मतत्राशक्यंवर्णेनाप्यनर्थकेन भवितुमिति महाभाष्यम् ॥ पाणिनिनाप्रोक्तम् । छ । उपचारात्तदध्येतृषु त्रि० । तदध्येतृवेदितरि ॥ पाणिनीयमधीतेवेदवा । प्रोक्ताल्लुगित्यणोलुक् । तेनस्त्रियाम्पाणिनीया० शाङ्गरवादित्वान्ङीप् ॥

पाणिन्धम : । त्रि० अन्धकाराद्याहतधूनि । तत्रशिशिरणोत्थायमेऽस्मिन्नितिविग्रहेऽप्यच्छमस्य पाणिन्धमाश्चेतिखश् । मुम् ॥

पाणिन्धय : । त्रि० पाणिदारापानकर्त्तरि ॥

पाणिपीडनम् । न० विवाहे ॥ पाणेः पीडनम्ग्रहणम् । कृद्योगाचषष्ठीसमस्यतद्भूतिवाच्यम् ॥

पाणिभुक् । पुं० उदुम्बरवृक्षे । त्रि० । पाणिपात्रभोक्तरि ॥

पाणिमर्द्द : । पुं० करमर्द्दके । पाणिं मृद्गाति । मृदक्षोदे । कर्म्मण्यण् ॥

पाणिमुक्तम् । न० अस्त्रे । इतिहलायुधः ॥

पाणिरुहः । पुं० नखे ॥

पाणिवाद : । त्रि० मृदङ्गादिवादके ॥ पाणिवादयति । वदेर्ण्यन्तादण् ॥

पाणिवादक । त्रि० पाणिवादे । इ० ई० च० ॥

पाणिसर्ग्या । स्त्री० रज्जौ । पाणिभ्यां

स्कृयते । सलविसर्गे । पाणीस्वीग्ध्र -द्दितिवद्व्रत् । चक्षोरितिकुत्वम् ॥

पाणीतलम् । न० पाणितले ॥ विडालपदकर्षंचपाणीतलमुदुम्बरमिति शब्दमाला ॥

पाणीकरणम् । न० विवाहे ॥ इति० जटाधरः ॥

पाण्डर : । पुं० शुक्लवर्णे ॥ मरुवके ॥ न० कुन्दपुष्पे ॥ गैरिके ॥ त्रि० शुद्धे तद्वर्णवति ॥

पाण्डरपुष्पिका । स्त्री० शीतलावृक्षे ॥

पाण्डव : । पुं० युधिष्ठिरादिपञ्चसु ॥ पाण्डोरपत्यम् । अण् ॥

पाण्डवाभील : । पुं० श्रीकृष्णे ॥

पाण्डवायन : । पुं० श्रीकृष्णे ॥ पाण्डवानामयन : ॥

पाण्डवेय : । पुं० अभिमन्युसुते । परीक्षितन्नृपे ॥

पाण्डित्यम् । न० पण्डितधर्मकर्मणोः ॥ वेदागमतात्पर्याभिज्ञत्वे । पण्डिती यवस्तुविचारचातुर्यपरिनिपन्ने ग्रव पि ॥ पण्डे तिपुंसे नामैतत्साज्ञाता यस्यमानत : । सपण्डितस्तस्यभावः पाण्डित्यं श्रुतिसम्मतम् ॥ पण्डितस्यभाव : । वर्णदृढादिभ्य : ष्य-ञ्वे तिष्यञ् ॥

पाण्डु : । पुं० नृपतिविशेषे । कुन्तीपतौ । युधिष्ठिरादीनांजनके ॥ सितेवर्णे ॥ श्वेतहस्तिनि ॥ पतुदाख्यपक्षिविशेषे ॥ यथा पांडुस्तुद्विविधोज्ञे यश्चित्रपक्ष : कलधुनिः । द्वितीयो धवलःप्रोक्तः सकपोलस्फुटध्वनिः ॥ चित्रपक्ष : कफहरो वातघ्नोग्रहणी प्रणुत् । धवल : पांडुसहिष्टोरक्तपित्तहरोहिम : ॥ रसेपाकेचमधुर : सङ्ग्राहीवातशांतिकृत् ॥ [illegible] ॥ पाण्डुरफलीक्षुपे ॥ पटोले ॥ शुक्लपीतमिश्रितवर्णे । हरिणे । पाण्डुरे ॥ सितपीतसमायुक्त : पाण्डुवर्ण : प्रकीर्तित: । भेदोपिदृश्यते यथा । पाण्डुरस्तुरक्तपीतभागोंअल्पचन्द्रवत् । पाण्डुस्तुपीतभागार्द्धकेतकीधूलिसन्निभ : ॥ रोगविशेषे ॥ तस्यौषधं यथा । लोहचूर्णंतक्रपीतंपाण्डुरोगहरंभवेत् ॥ १ ॥ अपिच । सप्तरात्रं गवांमूत्रेभावितंचायसोरज : । पाण्डुरोगप्रशान्त्यर्थंपयसाप्रपिबेन्नर : ॥ २ ॥ गोमूत्रसिद्धं मण्डूरचूर्णंसद्य-श्मयत : । पाण्डुरोग:क्षयंयातिपक्षिप्रलम्बदारुणम् ॥ ३ ॥ अयोमलं सुसंतप्तं भूयोगोमूत्रसाधितम् । मधुसर्पिर्युतलीढ्वा पाण्डुरोगीसुखीभवेत् ॥ ४ ॥ पुनर्नवात्रिवृद्व्योषविडङ्गंदारुचित्रकम् । कुष्ठंहरिद्रेत्रिफलादन्तीचव्यंकलिङ्गकम् ॥ ५ ॥ कटुकापिप्पलीमूलमुस्तशृङ्गीचकारवी । यवानीकट्फलञ्चे तिपृथक्पलमितंमतमिति ॥ त्रि० । तद्वति ॥

पाण्डु : । स्त्री० माषपर्ण्याम् । माषाणी इ० गौ० भा० ।। खरुसंयोगोपधान्नं तिनङीष् ।।

पाण्डुकः । पुं० शालिविशेषे ॥ पाण्डुरोगे ॥ पांडुन्नृपे ॥ पांडुवर्णे ॥

पांडुकण्टक : । पुं० अपामार्गे ॥ पांडूनिकण्टकान्यस्य ॥

पांडुकम्बल : । पुं० श्वेतमावारे । श्वेतकम्बले ॥ राजास्तरणवर्णकम्बले ॥ पांडुवर्णकम्बल ,- पांडुवासौकम्बलश्चेति वा । शास्त्रभेदे ॥

पांडुकम्बली । पुं० पांडुवर्णकम्बलावृते रथे ।। पांडुकम्बलेनपरितोरथः - । पांडुकम्बलादिभिरितीनिः ॥ त्रि० । पांडुकम्बलयुक्ते ॥ सत्त्वर्थीयइनिः ॥

पांडुतरु : । पुं० धवहृक्षे ॥

पांडुनाग : । पुं० पुन्नागवृक्षे ॥ श्वेतगजनागयो : ॥

पांडुपत्री । स्त्री० क्रौन्थाख्यौषधौ । रेणुकायाम् ॥

पांडुफलम् । न० परिपक्वफले ॥

पांडुपुत्र : । पुं० पांडवे ॥

पाण्डुपृष्ठ : । त्रि० अलक्षणे । पांडुवर्णपृष्ठयुक्ते ॥

पांडुफल : । पुं० पटोले ॥

पांडुफला । स्त्री० चिर्भिटायाम् ॥

पांडुभूम : । त्रि० पांडुवर्णभूमियुक्तदेशे ॥ पांडुभूमिरस्मिन् । तत्पोदन्यपांडुसङ्ख्यायाभूमेरजिष्यते ॥

पांडुमृत् । स्त्री० पांडुभूमौ ॥ खव्यामृ ॥

पाण्डुर : । पुं० श्वेतपीतमिश्रितवर्णे ॥ ईषत्पृ ते ॥ श्वित्ररोगे ॥ कामलारोगे ॥ त्रि० तद्वति । न० मरुवके ॥ पांडु:शुक्लीवर्णोऽस्यस्यास्तिनृवा - । नगपांशुपांडुभ्यश्चेति र : ॥

पांडुरद्रुम : । पुं० कुटजे ॥

पांडुरपृष्ठ : । त्रि० लक्षणहीने ॥ इ० हे० ॥ पाण्डुरवर्णपृष्ठयुक्ते ॥

पांडुरफली । स्त्री० क्षुद्रक्षुपविशेषे । धूसरायाम् ॥

पांडुरा । स्त्री० माषपर्ण्याम् ॥ पांडुरवर्णायां ॥

पांडुराग : । पुं० मदनकवृक्षे ॥ त्रि० । पांडुवर्णयुक्ते ॥

पांडुरेखु : । पुं० श्वेतेक्षौ ॥

पांडुलेख : । पुं० प्रथमलिखिते । मसौदा० इ० भा० पाडुलिपि ॥ यथा । पांडुलेखेनफलकेभूमौवाप्रथमं लिखेत् । न्यूनाधिकंतुसंशोध्यपश्चात्पत्रेनिवेशयेदिति व्यवहारतत्त्वे व्यास : ॥

पांडुलोमा । त्रि० पाण्डुवर्णलोमभियुक्ते ॥

पांडुलोमशा । स्त्री० माषपर्ण्याम् ॥

पांडुलोमा । स्त्री० माषपर्ण्याम् । माषाणी० इ० गौ० भा० ॥

पांडुशर्करा । स्त्री० रोगविशेषे ॥ यथा

। पिष्टवेमालतीमूलंयोगकालेसमाहृतम् । साधितंछागदुग्धेनपीतंग र्भकरान्वितम् ॥ हरेत्प्रदरनिरोधस्थं हरेद्वैपांडुशर्करम् ॥

पांडुशर्मिला । स्त्री॰ द्रौपद्याम् ॥

पांडुसोपाकः । पुं॰ चण्डालीनवैदेह्यां जनितेत्वक्सारव्यवहारजीविन्यन्त्यजाकारे ॥

पांडूकः । पुं॰ शालिविशेषे ॥ पांडूनीजनपदानीराजनि ॥

पाण्ड्यः । पुं॰ पाण्ड्योराज्ञि । देशविशेषे ॥ यथा । कामोदादक्षभागेतु कुन्द्रप्रस्थाच्चपश्चिमे । पाण्ड्यदेशोमहेशानिमहाशूरस्यकारकइति ॥ पाण्ड्योरपत्यम्राजावा । पाण्ड्वोर्ड्यण् । टिलोपः ॥

पाण्यः । त्रि॰ स्तुत्ये । स्तवनीये ॥ पण॰ । यत् ॥

पाण्यास्यः । पुं॰ ब्राह्मणे ॥ पाणिरास्यमस्य । पाण्यास्योहिद्विजःस्मृतः ॥

पातः । पुं॰ निपातने ॥ पतने ॥ राशौ ॥ पञ्चमपञ्चयोर्भासयोर्भेरसपतने ॥ पतनम् । पत्लृ॰ । घञ् ॥ नत्रीभावे । त्रि॰ यासे ॥

पातकम् । न॰ नरकसाधने । पापे । अंहसि । दुरिते ॥ तच्चशुष्कार्द्रभेदाद्द्विविधम् । अकामात्पातकंशुष्कं कामादार्द्रमुदाहृतमित्युक्तेः ॥ पातयतिअधोगमयतियत्तत् ॥ तत्तुनवविधम् । यथा । अतिपातकम् १ महापातकम् २ अनुपातकम् ३ उपपातकम् ४ सङ्करीकरणम् ५ अपात्रीकरणम् ६ जातिभ्रंशकरणम् ७ मलावहम् ८ प्रकीर्णकम् ९ इतिभेदात् ॥

पातकी । त्रि॰ पापिनि ॥ पातकमस्याऽस्ति । अतइनिठनावितीनिः ॥

पातङ्गिः । पुं॰ शनैश्चरग्रहे ॥ पतङ्गस्याऽपत्यम् । अतइञ् ॥

पातञ्जलम् । न॰ व्याकरणभाष्ये । महाभाष्ये । (क) । पतञ्जलिमुनिप्रणीतपादचतुष्टयात्मकयोगकांडनिरूपकदर्शनशास्त्रविशेषे ॥ तत्रप्रथमेपादेअथयोगानुशासनमितियोगशास्त्रारम्भप्रतिज्ञाविधाययोगश्चित्तवृत्तिनिरोधइत्यादिनायोगलक्षणमभिधायसमाधिसप्रपञ्चंनिरदिक्षद्भगवान्पतञ्जलिः ॥ १ ॥ द्वितीये । तपःस्वाध्यायेश्वरप्रणिधानानिक्रियायोगइत्यादिनाव्युत्थितचित्तस्यक्रियायोगंयमादीनिपञ्चबहिरङ्गानिसाधनानि ॥ २ ॥ तृतीये । देशबन्धश्चित्तस्यधारणेत्यादिनाधारणाध्यानसमाधित्रयमन्तरङ्गंसंयमपदवाच्यंतदवान्तरफलंविभूतिजातम् ॥ ३ ॥ चतुर्थे । जन्मौषधिमन्त्रतपःसमाधिजाःसिद्धयइत्यादिनासिद्धिप्रपञ्चमयुक्तपरसंप्रयोजनंकैवल्यम् ॥ ४ ॥

प्रधानादीनिपञ्चविंशतितत्त्वानिसा ङ्ख्योक्तान्येवापि।षड्विंशस्तुपरमे श्वरोऽधिकः॥ इतिसर्वदर्शनसंग्रहः॥

पातङ्गधा। स्त्री॰ वन्ध्याककेटक्याम्॥

पातनम्। न॰ अधोनयने॥

पातनिका। स्त्री॰ पीठिकायाम्॥

पातालम्। न॰ अधोभुवने। रसातले। नागलोके॥ तानिचसप्त। यथा। अतल वितल सुतल रसातल तला तल महातल पातालान्यधोधोविद्य मानानिसामान्यतः पातालशब्द-वाच्यानिभवन्ति॥ विवरे॥ बडवा नले॥ लग्नाच्चतुर्थभवने॥ पतन्त्यत्र पापात्। पतल्॰। पतिचण्डिभ्या मालञ्। पातम् चलतिपातमाला तिवा॥पुं॰। औषधपाकार्थयन्त्रविशे षे। यथा। ऊर्ध्वमापस्तलेवह्निर्मध्ये तुरससंयुतः। पातालयन्त्रमेतद्धि शोधयेत्सूतकादिकम्॥

पातालगरुडी। स्त्री॰ लताविशेषे। वत्सादन्याम्।सोमवल्ल्याम्। ति क्ताङ्गायाम्। गारुडयाम्। छिउ-ड़ा॰ इ॰ भा॰॥ छिलिहिण्डः॥ छिलिहिण्डोमहामूलः पातालगरु डाह्वयः। छिलिहिण्डः परंवृष्यः कफघ्नः पवनापहः॥

पातालनिलयः। पुं॰ दैत्ये॥ सर्पे॥ त्रि॰ पातालवासिनि॥ पातालंनि लयोयस्य॥

पातालयन्त्रम्। न॰ औषधपाकार्थयन्त्र विशेषे। पाताले॥

पातालौकाः। पुं॰ दैत्ये॥ त्रि॰ पाता लवासिनि॥ पातालेओकआश्रितो यस्य सः॥

पातिः। पुं॰ प्रभौ। भर्त्तरि। स्वामि नि॥ पाति। पा॰। पातेरतिः॥

पातिकः। पुं॰ शिशुमारे॥

पातितः। त्रि॰ भ्रंशिते॥

पातिली। स्त्री॰ वागुरायाम्॥ नार्या म्॥ मृत्पात्रविशेषे। पातिल्॰ इ॰ गौ॰ भा॰ प्र॰। पतीली॰ इ॰ दे॰ भा॰ प्र॰॥ इ॰ मे॰॥

पातुकः। पुं॰ प्रपाते॥ जलहस्तिनि॥ त्रि॰ पतयालौ। पतनशीले॥ प तति। पतल्॰। लषपतपदस्थाभू-वृषहनकमगमशृभ्यउकञ्॥

पाता। पुं॰ कठेरके। गन्धपर्णे। वायु इ॰ इति॰ भा॰॥ रक्षितरि। पा-नशीले इतिकश्चित्॥

पात्रः। पुं॰ न॰ भाजने। याग्येस्रु वादौ॥ स्रुवादिकन्तुयज्ञादौपात्रमि त्यभिधीयते॥ राजमन्त्रिणि॥ कूल योर्मध्ये। तीरद्वयान्तरे। पारावार मध्यभागे॥ पर्णे॥ यज्ञभाण्डे॥ नाट्यानुकर्त्तरि। आढकपरिमाणे॥ इतिवैद्यकपरिभाषा॥ दानपात्रे। विद्यातपोयुक्ते। रथाङ्गे। नविद्य

याकिंचलयातपमावापिपाचता । च चवृत्तीऽस्मैचोमैतक्षिपाचंप्रवीर्त्तित म् ॥ रत्नकोऽहिस : । यतोविद्यातपो भ्यामात्मनोदातुश्चपालनचमएवप्र- तिग्रहणीयादितिशास्त्रम् ॥ विद्यायु क्तोधर्मशील : प्रशान्त : चान्तोदा- न्त : सत्यवादीकृतज्ञ : । वृत्तिग्ला नोगोहितोगोशरण्योदातायज्वावा ह्मण : पाचमाहु : ॥ जनार्द्दने ॥ पतनात्चायतेयस्मात्तस्मात्पाचं- जनार्द्दन : ॥ पिवतिधर्मेनाचया । पान्त्यस्माद्वा । पाति । पायतेवापी- यतेऽनेनवा । पाधाने । पारचयोषा सर्वधातुभ्यष्ट्रन्निर्तिष्ट्रन् । दादिभ्यश्छ न्दसोतिचनृवा ॥

पाचट : । पुं॰ पार्पटके । कर्पटे ॥ चि॰ कृशे ॥

पाचटीर : । पुं॰ सुक्षव्यापारसन्निधि । अपव्यापारसन्निधि । लोहकांस्य रजतपाचे ॥ सिद्धाये ॥ पावके । घृताशे ॥ पिक्काशे ॥ वायसे । कार्ये ॥

पाचसंस्कार : । पुं॰ पुरोटौ । पचभा- ण्डारे । रायभाटी॰ द्रु॰ शौ॰ मा॰ । माज्जगघुडी ॥

पाचिकम् । न॰ पाचपरिमितघौचादि वापयोग्ये चेचे ॥ पाचस्यवाप : । पाचात्ष्ठन् ॥

पाचिकी । स्त्री॰ घोषमक्षौ ॥ पिवा नृङीष् ॥

पाचिय : । चि॰ पाल्ये ॥ पाचमर्हति । पाचाद्घँश्च ॥

पाची । स्त्री॰ अमचे । पाचे ॥ पिबन्त्य ऽनया । पा॰ ष्ट्रन् । ङीष् ॥

पाचीयम् । न॰ यज्ञपाचे ॥

पाचीर : । पुं॰ श॰ यज्ञद्रव्ये ॥ पर्व्वं इतिकश्चित् ॥

पाचेसमित : । चि॰ भोजनसमयएव सङ्गतैनतुकार्य्ये ॥ समाचेसमितो व्यनभोजनाभिमिलितोमय : ॥ पाचेस मिताद्यश्चेतिसप्तम्याअलुक्समास श्चनिपात्यते ॥ पापिविशेषे ॥ यथा मिथायश्चदयेपापंय : परंसंसतिख यम् । सपाचेसमितोऽयस्मादिति- शब्दमाला ॥

पाचोपकरणम् । न॰ भूषभूषणे ॥

पात्य : । चि॰ पाचिये ॥ पाचमर्हति । पाचाद्घँश्चेतियत् ॥

पात्वम् । न॰ पापिवासरि ॥ सर्वेषा मेवपाचाणांपरंपात्वंमहेश्वर : । प- तन्तंचायतेयस्मात्तस्मात्तौनरकार्णवा त् ॥

पात्वता । स्त्री॰ पात्वत्वे ॥

पाथ : । न॰ पानीये । जले । उदके ॥ पाति । पारचयो । सर्वधातुभ्योऽसु न्निध्यसुन् । उदकेथुट्चेत्यसुन : थुट् ॥ मन्ते । मात॰ द्रु॰मा॰ ॥ चन्ते चे त्यसुनथुट्श्च ॥

पाथिः । पुं॰ अब्धौ । समुद्रे । चक्षुषि ॥ पिबति । पा॰ । पिबतेस्थुगित्यौसिन् ॥

पाथेयः । त्रि॰ पथिव्ययोपयोगिनि । शम्बले ॥ पथिसाधुः । पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ वान्याराणौ ॥

पाथोजम् । न॰ कमले ॥ पाथसिजातम् । जनी॰ । सप्तम्यांजनेर्डः ॥

पाथोदः । पुं॰ मेघे ॥ पाथोददाति । डुदाञ् । आतोनुपेतिक : ॥

पाथोधरः । पुं॰ मेघे ॥ पाथसोधरः ॥

पाथोधिः । पुं॰ समुद्रे ॥ पाथांसिधीयन्तेऽस्मिन् । कर्मण्यधिकरणेचेतिधाञः किः ॥

पाथोनिधिः । पुं॰ समुद्रे । पक्षुपारे ॥ पाथसांनिधिः ॥ पाथांसिनिधीयन्तेऽत्र । पाथोधिवद्दाञःकिः ॥

पाद्—द् । पुं॰ चरणे । पादे ॥

पादः । पुं॰ बुध्ने । मूले । तुरीयांशे । रूपकादिचतुर्थभागे ॥ शैलप्रत्यन्तपर्वतेषपादैः समीपेक्षुद्रपर्वते । चरणे । अङ्घ्रौ ॥ अस्यलक्षणं यथा । अस्विन्नौमृदुतलौ कमलोदराभौश्लिष्टाङ्गुलीकपिरताम्रनखौसुपार्ष्णी । उष्णौशिराविरहितौचनिगूढगुल्फौकूर्मोन्नतौचचरणौमनुजेश्वरस्येति ॥ अस्याशुभलक्षणानि यथा । सूर्पाकारविरूक्षपाण्डुरनखौवक्रौशिरासन्ततौसंशुष्कौविरलाङ्गुलीचचरणौ दारिद्र्यदुःखप्रदौ । मार्गायोत्कटकौकषायसदृशौवंशस्यविच्छेददौब्रह्मघ्नौपरिपक्वमृद्द्युतितलौपीतावगम्यारतौविति ॥ विरूक्षाविस्निग्धौ । पांडुरनखौ॰ पांडुराशुक्लाभानखाययोः । पक्वावस्थौदौर्गौ वा । उत्कटौमध्यादुन्नतौमार्गायअधूनिरतौभवतः । कषायसदृशौकृष्णलोहितौ ॥ मयूखे । अंशे । किरणे । कक्षपादे । श्लोकस्यतुर्यांशे । पद्यतेऽसौ । पदगतौ । पदरुजविशस्पृशोघञ् ॥ पद्यतेगम्यतेऽनेनवा । हलश्चेतिकरणे घञ् ॥

पादकटकः । पुं॰ नूपुरे । हंसके । शब्दरहितेपादभूषणे ॥ पादस्यकटकः ॥

पादकृच्छ्रः । पुं॰ व्रतविशेषे । यथा । एकभक्तेनचैकेनतथैवायाचितेनच । उपवासेनचैकेनपादकृच्छ्रउदाहृतः ॥ इतियाज्ञ१०३ अध्यायः ॥

पादग्रंथिः पुं॰ पादरोगविशेषे । श्लीपदे । गोट॰ इ॰ गोड भा॰ ॥

पादग्रहणम् । न॰ अभिवादने । नामोच्चारणपूर्वकसंस्कृत प्रयोगेणनमस्कारे ॥ पादयोर्ग्रहणंस्पर्शः ॥ व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणंगुरोः । सव्येनसव्यः स्प्रष्टव्योदक्षिणेनच दक्षिणः ॥

पादचतुरः । पुं॰ छागे । मेकसे ॥

मिप्पले ॥ अश्वत्थे । करवे ॥

परदोषैकप्रवक्तृपरुषे ॥ इ० मे० ॥

पादचत्वर : । पुं० पादचतुरे ॥ द्र० हेमचन्द्र : ॥

पादचारी । पुं० पादातौ । लि० पद्भ्यां गमनशीले ॥

पादज : । पुं० शूद्रे ॥ पद्भ्यांजातः । जनी० ड : ॥

पादत्राणम् । न० पादुकायाम् ॥

पाददद्रु : । पुं० विपादिकायाम् ॥

पादनिकेत : । पुं० चरणपीठे । पाद योर्निकेत : आश्रय : ॥

पादप : । पुं० । द्वी० वृक्षे ॥ पादैः पिबति । पा० सुपीतियोगविभागात्क : ॥ पादपीठे ॥

पादपखण्ड : । पुं० वृक्षसमूहे ॥ पाद पानांसमूह : । वृक्षादिभ्यः खण्डः

पादपरुहा । स्त्री० वन्दायाम् ॥

पादपा । स्त्री० पादुकायाम् ॥

पादपाश : । पुं० दामाञ्चने । अश्व पादरज्जौ ॥

पादपाशी । स्त्री० शृङ्खलायाम् । पैरवीसकली द्र० भा० । खड्काया म् । खड्वा द्र० भा० ॥

पादपीठ : । पुं० न० पादासने । पादस्थापनपीठे । पादनिकेते । द्र० हे० च० ॥ यथा । अस्पृष्टचरणाञ्च स्वचूडामणिमरीचिभि : । नीराज यन्निभूपाला:पादपीठान्तभूतलमि



तिश्रीहर्षमिश्र : ॥

पादपीठिका । स्त्री० नापितादिशिल्पे ॥

पादपोत्पल : । पुं० कर्णिकारे ॥ पाद पैउत्पलमुत्तदाकारंपुष्पमस्य ॥

पादवलय : । पुं० हंसके । पादकटके ॥

पादवल्मीकम् । न० श्लीपदे ॥

पादमूलम् । न० चरणाधोभागे । गोहिरे ॥

पादरक्षणम् । न० पादुकायाम् ॥

पादरज्जु : । स्त्री० पर्याणम् । हस्तिपादबन्धनगुणे ॥ चरणबन्धनदामसाचे ॥

पादरथी । स्त्री० पादुकायाम् ॥

पादरोहण : । पुं० वटवृक्षे ॥

पादविक : । पुं० पथिके ॥ पद्भ्यांधावति । माथोत्तरपदेत्यादिनाठक् ॥

पादविरजा । स्त्री० पादुकायाम् ॥

पादविहरणम् । न० पादक्षेपे ।

पादश : । न० पादम् पादमित्यर्थे ॥

पादशैल : । पुं० प्रत्यन्तपर्वते ॥

पादशोथ : । पुं० पादगतशोथे ॥ यथा । अनन्योपद्रवकृत : शोथ : पादस मुत्थित : । पुरुषंहन्तिनारीन्तु मुख जोगुह्यजोद्वयम् इति माधव : ॥

पादस्फोट : । पुं० विपादिकायाम् । विवाइ० द्र० भा० । स्फुटति । स्फुट० । घञ् । पादस्यस्फोट : ॥ पादौस्फोटयतिवा । कर्मण्यण् ॥

पादाकुलकम् । न० मात्रावृत्तविशेषे । यथा । अचरगुरुलघुनियमविरहितं

भुजगराजपिङ्गलपरिभणितम् । भवतिसुगुम्फितपोड़शकलकंवाणीभूषा पादाकुलकम् ॥ यथा । मलयपवनहतकुसुमपरागः परभृतनिभृतरविसघनभागः । विरतरसञ्चितमानदुरन्तः कस्यमसुरं सुमनयति वसन्तः ॥

पादायम् । न० प्रपदे । पादस्याग्रम् ॥

पादाङ्गदम् । न० नूपुरे ॥ पादस्याङ्गदमिव ॥ यद्वा । पादएवाङ्गम् । पादाङ्गंद्यति । द्दो० । द्यायतिवा । दै म्० । द्यती । देङ् पालनेवा । आतङ्गतिक : ॥

पादात् । पुं० पादाती ॥

पादातम् । न० पत्तिसंहतौ ॥ पदातीनासमूह : । भिक्षादित्वादण् ॥ पुं० । पादातौ ॥ पादाभ्यामतति । अत० । पचाद्यच् ॥

पादाति : । पुं० पत्तौ । पादातिकि ॥

पादातिक : । पुं० पादातौ ॥ पादातिरेव । विनयादित्वात्स्वार्थेठक् ॥ पादाभ्यामतति अत० । बाहुलकात्तूकोवा ॥

पादाभ्यासयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । आपद्दिव्यापृतनयास्तयायुयुधिरेन्नपा : । आपद्दिव्यापृतनयाविस्मयंजनतायथेतिमाघकाव्य१८ सर्गे ६० श्लोक : ॥ नृपाराजान : । आपद्दिव्यसनेऽपि । व्यापृतनयाप्रवृत्तिनीतिकाएवसन्त : न तुश्वापदवत्स्वेतिभाव : । पृतनया सेनयासाधनेन । वाक्यान्तरस्थस्यापिपृतनाशब्दस्यमत्रान्वयविधिसोढव्य : । तथाविनप्रकारेणयुयुधिरेसम्प्रहृ : । यथा दिव्याजनताप्रन्तरिक्षवर्त्ति सिद्धविद्याधरसङ्घोविस्मयमाप । चमात्कृपयुद्धचमत्कृतिरित्यर्थ : ॥

पादारक: । पुं० पोर्लिदे । नौकावयवविशेषे ॥

पादार्घ्यम् । न० पादप्रदाने ॥

पादालिन्द. । पुं० नौकायां ॥

पादावर्त्त : । पुं० अरघट्टके । ररंद्० तू० भा० ॥

पादाविक: । पुं० पादातौ ॥ पादाभ्यासवति । अवरचपादो । या० इक: ॥ यद्वा । पादेनाबोरत्क्षणम् । तत्रनियुक्त० इतिठक् ॥

पादासनम् । न० पादपीठे ॥

पादी । पुं० पादविशिष्ट कुम्भीरादिजलजन्तुषु ॥ तेयथा । कुम्भीर कूर्मनक्राश्वगोधामकरशङ्कव : । घण्टिक: शिशुमारश्च त्याद्य:पादिन:स्मृता: ॥ पादिनो विचयेतेतुकोषस्थानां गुणै: समा : ॥ चतुर्थांशभागिनि ॥ यथा । सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिन : ॥ त्रि० । पादविशिष्टे ॥

पादुकः । त्रि० गमनशीले ॥

पादुका । स्त्री० पादत्राणे । चर्मादिनिर्मितपादाच्छादने । उपानहि ॥ पादूएव । स्वार्थेकः ॥

पादुकाकारः । पुं० चर्मकारे ॥ पादुकांकरोति । दुकृञ्० । कर्मण्यण् ॥

पादुकाकृत् । पुं० चर्मकारे ॥

पादूः । स्त्री० पादुकायाम् ॥ पद्यतेऽनेनया । पद० । णित्कसिपद्यर्ते रित्यूः ॥

पादूकृत् । पुं० चर्मकारे ॥ पादूंकरोति । कृञ्० । क्विप् । तुक् ॥

पादोदकम् । न० चरणधौतजले ॥ चरणामृते ॥ यथा । कृदिरूपंमुखेनाम नैवेद्यमुदरेहरेः । पादोदकञ्चनिर्माल्यंमस्तकेयस्यसोच्युतः ॥ नैवेद्यमन्नं तुलसीविमिश्रं विशेषतः पादजलंपिबेच्च । योऽश्नातिनित्यंप्रयतो मुरारेः प्राप्नोतिसुप्रं मयुतांसभक्तिमितिपाद्मोत्तरखण्डे १०० अध्यायः । अपिचतत्रैव । स्पर्शो हन्ति यदङ्घ्रिसङ्गितुलसीस्तेयस्य पादोदकं नैवेद्यंयत्कुमद्यपानदुरितंगुर्वङ्गनासङ्गमम् । भक्ताधीनमतिस्थितिर्हरिरमेतत्प्रकृतिः सञ्जाशालग्रामशिलादिमूर्तिसहितोजानन्ति कैर्वैष्णवैरिति ॥ श्रीनृसिंहपुराणे गंगाप्रयागगयनैमिषपुष्करादिपुण्यानियानि कुरुजाङ्गलयामुनानि । कालेनतीर्थसलिलानिपुनन्तिपापं- पादोदकंभगवतःप्रपुनातिसद्यइति पीतेपादोदकेविष्णोर्येद्विप्रापैर्विमुच्यते । हत्वायमभटान्सर्वान्वैष्णवंलोकमाप्नुयात् ॥

पाद्धतम् । न० पद्धतिसमूहे ॥ भि० । अण्० ॥

पाद्मः । पुं० वेधसि ॥ न० । पद्मपुराणे ॥

पाद्यम् । न० पादार्थवारिणि । पादप्रक्षालनार्थजले ॥ पाद्यपात्रलक्षणं यथा । षडङ्गुलंप्रविस्तारमुत्सेधश्चतुरङ्गुलम् । श्रीघ्रमेकाङ्गुलंकुर्यान्नासिकांचतुरङ्गुलाम् ॥ पृष्ठे पादसमायुक्तंचतुरङ्गुलमानतः । पाद्यपात्रमितिख्यातंसर्वदेवप्रपूजने ध्रुवम् ॥ पादार्थमुदकम् । पादार्घाभ्यांचेति यत् ॥

पानः । पुं० निःश्वासे ॥ शौण्डिकाख्यां । शुण्डायाम् ॥ खड्गादेः संस्कारविशेषे । पाय० द्र० भा० ॥

पानम् । न० पीतौ । द्रवद्रव्यस्यगलाधोनयने । पीना० द्र० भा० भाजने ॥ रक्षणे ॥ शौण्डिकालये ॥ पिबत्यत्र । पापाने । अधिकरणेल्युट् ॥ पेयेजलादौ ॥ पीयते यत्तत् । कृत्यल्युटोबहुलमितिकर्मणिल्युट् ॥

पानकम् । न० पञ्चापानारसवत्० द्र० भा० प्र० पेयपदार्थे ॥ तत्राम्लपानकम् ॥ यथा । आम्रमामंजल-

स्विन्नं मर्द्दितं दृढपाणिना । सिताशीताम्बु संयुक्तं कर्पूरमरिचान्वितम् । प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्मितम् । सद्योरुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ॥ अपक्वाम्ररसोद्भूतपानकं वातनाशनम् । कफपित्तकरं किञ्चित्प्रस्थं यदि सेवितम् ॥ पक्वाम्रस्य तु । सुपक्वमाम्रस्य फलं सुसृष्टिना सम्मर्द्दितं शर्करया समन्वितम् । एलालवङ्गार्द्रकनागसारसितं समन्वितं कुसुमरोचकं भवेत् ॥ पानकं चाम्रसम्भूतं स्वाद्वम्लं गुरुपित्तजित् । सुहृद्यं श्लेष्मवल्यं वर्ण्यं हृद्यं रुचिप्रदम् ॥ -( ००‡०० )- ॥ अम्लिकापानकं यथा । अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम् । शर्करामरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् ॥ अम्लिकाफलसम्भूतं पानकं वातनाशनम् । पित्तश्लेष्मकरं किञ्चित्सुरुच्यं वह्निबोधनम् ॥ निम्बूफलपानकं यथा । भागैकं निम्बुअंतोयं षड्भागं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ निम्बूफलभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥ ( ०० ) ॥ धान्याकपानकं यथा । शिलायां साधु सम्पिष्टं धान्याकं वस्त्रगालितम् । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् ॥ नवीनमृन्मये पा-



त्रे स्थितं पित्तहरं परम् ॥ ०॥ जम्ब्वाः पानकं यथा । जम्बूफलं स्थूलतरं सुपक्वं सम्मर्द्दितं शर्करयाम्बु नालम् । सुवासितं वेल्लजभृङ्गमन्यै रुचिं विधत्ते विरुचीजनानाम् ॥ जम्बूफलभवं रुच्यं पानकं कफनाशनम् । कषायं वातकृत्स्तोकं स्वाद्वम्लं दाहशान्तिकरम् ॥ बीजपूरपानकम् । मातुलुङ्गरसं योज्यं त्रिगुणं शार्करं जलम् । कर्पूरमरिचोन्मिश्रं पानकं स्यादिदं वरम् । मातुलुङ्गभवं पानं शूलनाशविनाशनम् । श्वासकासैरुचौ वातजिद्वन्हिप्रचप्रचितम् ॥ हैमखिरप्यन्तु । शर्करा नालिकेलाम्बबीजपूरररसं युतम् । पटपूतं भवेद्धैमखिरणीनामपानकम् ॥ पानकं हैमखिरणं रुच्यं श्रव्यं बलप्रदम् । स्निग्धं वातहृत्कुम्भं किञ्चित्श्लेष्मकरं गुरु ॥ करमर्द्दपानकं यथा । लवङ्गार्द्रकसंयुक्तं सुपिष्टं वारिणायुतम् । करमर्द्दकरैर्मर्द्दी सप्तभागसितान्वितम् ॥ वातहृद्रुचिदं भव्यं हृद्यमत्यन्तरं स्मृतम् । रक्तपित्तकरश्चोष्णमाध्याप्योद्यकारमर्द्दितम् ॥ नारङ्गपानकं यथा । सुपक्वनारङ्गफलं निपीडितं संयोजितं शर्करया विशुभ्रया । सद्राक्षकं चेन्दुकणेन वासितम् पानं च्छयादि जनसंस्तुतगम् ॥ नारङ्गफलसम्भूतं पानकं वातनाशनम् । मधुरं विशदं रुच्यं सुस्निग्धं पित्तहृद्दृढम् ॥ ०॥

चारस्तु । चारस्यफलजं सशर्करं मर्दितंशिशिरवारिणाहृतम् । ऐल -माद्रं क्रमुतेनसुवासंभक्तसिक्थमिलितंकृतशासम् ॥ चारस्यफलजंपानं-गुरुहृद्यंरुचिप्रदम् । कफपित्तहरं-वृष्यंहृद्यंमधुरपाकिच ॥ पक्वक्षीरचुक्रादिद्राक्षादाडिमकंतथा । एवैसं सस्यवभिन्नं पानकंक्रियतेबुधैः ॥ एवमन्यस्यपुष्पस्य फलस्याम्लस्यधातधा । शर्करामरिचोन्मिश्रंस्वसंसात् पानकंवरम् । एवंविधानकंकार्यंसुधियासुद्धयत्कृतम् । गुणाढ्यानुसारेणज्ञातव्याः पानकेबुध ॥

पानगोष्ठिका । स्त्री० भाषाने । सभ्यमिलितयन्त्र० भक्षिनुस्थाने ॥ पानस्यगोष्ठी । स्वार्थेकः ॥

पानगोष्ठी । स्त्री० पानगोष्ठिकायाम् ॥

पानपात्रम् । न० मद्यपानपात्रे । चपके ॥ अस्यपरिमाणाद्यु शकुलसारे- । नयनाग्निवाणसहाकर्मैसुपरमेधव ठि । पैतुपादं प्रकर्षव्यमिस्यकुलसाधनें ॥ तृतीयमधिकपात्रन्तुनकर्त्तव्यंचसाधकैरिति ॥ कर्षेलौकिकतोलकमित्यर्थः ॥ तदुक्तकुलोत्तमे । गुञ्जाष्टदशमाषः स्यात्तदष्टौकर्षउच्यतइति ॥ पानस्यपानायवा पात्रम् ॥

पानवणिक् । पुं० शौण्डिके ॥ पानेन उपलक्षितो वणिक् ॥

पानभाजनम् । न० पानपात्रे । कंसे । कटोरा० इ० भाषा ॥ पीयते० पानम् । चीरादि । भापाने । ल्युट् । पानस्यभाजनम् ॥

पानसम् । न० पनसभवमद्ये ॥ त्रि० पनससम्बन्धिनि । पनसस्येदम् । अण् ॥

पानात्यय : । पुं० मदात्ययरोगे ॥

पानिकम् । न० पानपात्रे ॥

पानीयम् । त्रि० पातव्ये । पेये ॥ रक्षणीये ॥ यथा । पानीयंपानीयंभरद्विवसर्व पयामीयमिति । अस्यार्थः । पानीयंजलंशरदिपानीयम्पानायंभवतिनिर्मलत्वात्त्रिदोषघ्नत्वात्विशेषत : पित्तोपशान्तिस्त्वात् । वसन्तेपपुनस्तदेवपानीयंरक्षणीयमल्पंदेयमितिभाव : । पारणे ॥ न० उदके । जले । सलिले ॥ अस्य गुणायथा । पानीयंश्रमनाशनंक्लमहरंमूर्छापिपासापहंतन्द्राछर्दिविनाशनंबलकरंनिद्राहरंतर्पणम् । हृद्यंगुप्तरसंह्यजीर्णशमनंनित्यंहितंशीतलंलघ्वच्छरसकारणंनिगदितंपीयूषवज्जीवनम् ॥ तद्द्विधातु । पानीयमुनिभिःप्रोक्तंदिव्यंभौममितिद्विधा । दिव्यंचतुर्विधंप्रोक्तंधाराजंकारकाभवम् । तौषारञ्चतथाहैमंतेषुधारंगुणाधिकम् । भौममम्भोनिगदितंप्रथमंषड्विधंबुधैः ॥ जाङ्गलं

परमानूर्पतन : साधारणक्रमात् ॥ धनार्त्तं वंप्रमुच्चन्निवारिवारिधराश्च यत् । तत्त्विदीपायसर्वेषांदेहिनां- परिकीर्तितम् ॥ नादेयमौद्भिदंचैव नैर्झरंसारसंतथा । ताडागस्रतथा- वाप्यं कौपंचौण्डाश्चपाल्वलम् ॥ वि- किरस्यैवकैदारंवार्षिकस्यापिकीर्त्ति- राम् । भौमान्यं तानिवारीणि ज्ञात व्यानिविचक्षणै : ॥ भुक्त्वादौसलि लंपीतंकाश्यं मन्दाग्निदोषकृत् । म ध्येऽग्निदीपनंश्रेष्ठं चान्ते स्थौल्यक फप्रदम् ॥ पानीयंप्राणिनः प्राणाः पानीयंपावनंपरम् ।पानीयस्यप्रदा नेनतृप्तिर्भवतिशाश्वती ॥ पीयते । पापाणे । अनीयर् ॥ पायतेवा । पै शोषणे । अनीयर् ॥

पानीयलगड्लीय : । पुं० लगड्लीय प्रभेदे । काष्ठटे ॥

पानीयनकुल : । पुं० उद्रे । जलमार्जा रे ॥

पानीयपृष्ठज: । पुं० कुम्भ्याम् ॥

पानीयफलम् । न० मखान्ने ।मखाना इतिभाषा० ॥ शृङ्गाटके। सिंघाडा इ० भा० ॥

पानीयमूलम् । न० कुम्भ्याम् । सोमरा ज्यां ॥

पानीयमूलकम् । न० सोमराज्याम् ॥

पानीयवर्णिका । स्त्री० वालुकायाम् ॥

पानीयशाला । स्त्री० प्रपायाम् ॥पानी यसशाला ॥ जलावस्थानगृहे ॥

पानीयशालिका । स्त्री० प्रपायाम् ॥ स्वार्थेकन् ॥

पानीयामलकम् । न० प्राचीनामलके ॥ प्राचीनामलकंलोकेपानीयामल- कंस्मृतम् ॥

पानीयालु : । पुं० जलालौ । पनिया लु० इ० भा० ॥

पानीयाग्न्या । स्त्री० वल्वजायाम् ॥

पान्थ : । त्रि० पथिके ॥ पन्थानंनित्यं गच्छति । पन्थोणनित्यम् । इ० प- न्थादेशोणप्रत्ययश्च ॥ स्त्री० । पान्था

पापम् । न० अधर्मे । अनर्यानुबन्धिनि । किल्बिषे । वृजिने । एनसि । दु- रिते ॥ निषिद्धकर्मानुष्ठानविहित कर्माऽननुष्ठानाभ्यांमपोत्पत्तिंसयि श्रेयमाहश्रीसदाशिवः : । अनुष्ठानं- निषिद्धस्यत्यागोविहितकर्मणः : । त्र्यांजनयत : पापंकर्मशर्मापामय- प्रदम् ॥ स्वानिष्टसाधनमात्परा- निष्टोपपादनात् ।तदेवपापंद्विविधं जानीहिकुलनायिके ॥ परानिष्टक- रात्पापान्मुच्यतेराजशासनात् । च न्यस्मान्मुच्यतेमर्त्यः प्रायश्चित्तस माधिना ॥ प्रायश्चित्ताद्यवादण्डैर्न- पूतायेकृतांहस : । नरकानृननिव- र्त्तन्ते इहामुत्रविगर्हिता इति श्री महानिर्वाणतन्त्रम् ॥ तद्दशविधं- था । प्राणाभिपातनंस्तैन्यंपरदार

पामघ्नी । स्त्री॰ कटुकायाम् ॥ इति॰
राजनिर्घण्ट : ॥

पाम । न॰ विचर्चिकायाम् । कच्छ्वाम् ॥
पायत्यङ्गम् । पैशोषणे । मनिन् ॥
पायतेदेहोऽस्माद्वा । पारयणे । पि
बतिदेहंवा ॥

पामन : । त्रि॰ कच्छुरे । पामरोगवि
शिष्टे । विचर्चिकायुक्ते ॥ पामाऽ-
स्यास्ति । पामादित्वान्न : ॥

पामर : । त्रि॰ खले ॥ नीचे ॥ मूर्खे ॥
पामानंराति । रा॰ । कातइतिक :
॥ यथा । पाधर्म : क्वसेयेन । स्वच्
प्राणत्यागे । पुंसीतिच : ॥

पामरोद्धारा । स्त्री॰ गुडूच्याम् ॥

पामवान् । त्रि॰ पामने ॥ मत्वर्थेमतु
प् ॥

पामा । स्त्री॰ विचर्चिकायाम् ॥ कच्छ्वा
म् । खर्ज्वाम् ॥ अस्याऔषधं यथा
। हरिद्राहरितालस्तुदूर्वागोमूत्रसैन्ध
वम् । षयंसीघोहन्तिदद्रुंपामानंवेग
रंतथा ॥ अपिच । माहिषंनवनीतं
चसिन्दूरसमरीचकम् । पामाविलि
पितानश्येद्दद्रुलापिहपधुव ॥ अन्य
च ॥ मरिचंनिशतंकुष्ठंहरितालंमन
शिलम् । देवदारुहरिद्रेद्वे कुष्ठंमां
सीतिचन्दनम् ॥ विशालाकरवीरश्च
चार्कक्षीरंसकृत्फलम् । एषांचकार
र्षिकोभागोविषस्यार्द्धपलंभवेत् ॥ प्र
स्थंकटुकतैलस्यगोमूत्रेचतुर्गुणेपचेत् ।
मृत्पात्रेलोहपात्रेवाशनैर्मृद्वग्निनापि
चेत् ॥ पामाविचर्चिकाचैव दद्रुवि-
स्फोटकानिच । अभ्यङ्गेनप्रणश्यन्ति
कोमलत्वञ्चजायते ॥ प्रसूतान्यपिश्वि
त्राणितैलेनानेनसत्वरात् । चिरो-
त्थितमपिश्वित्रं विषपँतत्क्षणाद्वि-
द्धिति गारुडे १९५ अध्याय: ॥ पा
यत्यङ्गम् । पै॰ । मनिन् ॥ मनद्विति
नङीप् । डाबुभाभ्यामितिडाप् ॥

पामारि : । पुं॰ गन्धके ॥

पायस : । पुं॰ न॰ क्षीरतण्डुलमिश्रे
। परमान्ने ॥ अतप्तसतण्डुलाधौताः
परिभृष्टाघृतेनच । खण्डयुक्तेनदु-
ग्धेनपाचिता : पायसोभवेत् ॥ पा
यस : कफकृद्बल्योविष्टम्भीमधुरोगु
रु : ॥ अपिच । पायसंदुर्जरंबल्यं-
धातुपुष्टिविवर्द्धनम् । विष्टम्भजन-
नंहन्तिरक्तपित्ताग्निमारुतम् ॥ श्री
वासे । सरलद्रवेटारपिक्वृइति भा॰
॥ पयएव । प्रज्ञाद्यण् ॥ पयसोवि-
कारोवा । तस्यविकारइत्यण् ॥ प-
यसिसंस्कृतोवा । संस्कृतंभक्षा॰ इ
त्यण् ॥

पायिक : । पुं॰ पदातिके । पायक इ
तिभाषा ॥ इति शब्दरत्नावली ॥

पायित: । त्रि॰ मानङ्कारिते ॥ पिबती
त्यन्तात्कर्मणिक्त: । शाच्छासाह्वा
व्यावेपांयुगितियुगागम : ॥

पायु: । पुं॰ मलद्वारे । अपाने । गुदे ॥

अवागनतिरपानश्चपायुरध्यात्ममुच्यते । अधिभूतंविसर्गश्चमित्रस्तत्राधिदैवतम् ॥ पायतिशोषयतितैलमितिपायु : ॥ पै० । शोषे । वापाजीत्युण् । धातोर्युक् ॥ यद्वा पातिमलनिस्सारणेन । पारयणे पिबतिमत्स्यौषधंवा । पापाने । प्राग्वत् ॥ चि० रचके ॥

पाय्यम् । न० परिमाणे । यौतवे ॥ मीयतेऽनेन । माङ्माने । पाय्यसान्नाय्येतिनिपातनात्ण्यत्धात्वादे: पकारादेशोयुगागमश्च ॥ अथ ॥ चि० । निन्दनीये ॥

पारम् । न० परतटे । नदीलङ्घनाक्रम्यतीरे ॥ पुं० । न० प्रान्ते ॥ पारयति । पारतीरकर्मसमाप्तौ ॥ पचाद्यच् ॥ समाप्तौ ॥ पुं० । पारदेपीतिकश्चित् ।

पारकुलीन : । त्रि० परकुलेसाधौ ॥ प्रति० खञ् ॥

पारक्य : । त्रि० परकीये ॥ यथा । यत्नात्मातंस्वशाखायांपारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् इति ॥ पुं० । परलोकहितकर्मणि । यथा । पादेनतस्यपारक्यं कुर्यात्सञ्चयमात्मवान् । अर्द्धेनचात्मभरणं नित्यनैमित्तिकंतथा ॥ पादञ्चार्द्धमर्धस्यमूलभूतंविवर्द्धयेत् । एवमाचरत : पुंसोह्यर्थ . साफल्यमृच्छतीतिमार्कण्डेयपुराणम् ॥

पारग : । त्रि० । पारगामिनि ॥ पारङ्गच्छति । गम्लृ० । अन्तात्यन्ताध्वदूरपारसर्वेत्यादिनागमेर्ड : प्रत्यय : ॥

पारगत : । पुं० जिने ॥ त्रि० । पारगे ॥

पारक् । न० सुवर्णे ॥ पारयति । पार० । पारयतेरजि : ॥

पारजायिक : । पुं० पारदारिके ॥ इतिमहाभारते राजधर्म : ॥

पारटीट : । पुं० । पाषाणे ॥

पारण: । पुं० मेघे ॥ न० । पारणायाम् ॥ यथा । पारणंपावनंपुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतञ्चफलदंशुभकारणम् ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते । अन्यथाफलहानि : स्याद्दृतेधारणपारणम् ॥ नरात्रौपारणंकुर्यादृतेवैरोहिणीव्रतात् । निशायांपारणं कुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्णाहुतिपारणंतत्रत्वारविप्रसुरार्चनम् । सर्वेषांसम्मतंकुर्याद्दतेवैरोहिणीव्रतमितिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८ अध्याय : ॥ जन्माष्टमीव्रतेपारणाकालस्तु । अष्टम्यामथरोहिण्यां नकुर्यात्पारणंक्वचित् । हन्यात् पुराकृतकर्म उपवासार्जितंफलम् ॥ तिथिरष्टगुणंहन्तिनक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नत : कुर्या

मयापि च । त्रीण्येव पापानि कायेन सर्वतः परिवर्ज्जयेत् ॥ असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्न चिन्तयेत् ॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्म्मणां फलमस्तीति त्रिविधं मनसाचरेत् ॥ अपि च । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतञ्चैव पैशुन्यं चापि सर्वशः । असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥ त्रि० । अधर्म्मिणि । शास्त्रप्रतिषिद्धकारिणि ॥ यथा । कथापि खलु पापानामलमश्रेयसे यत इति ॥ क्रूरे । परद्रोहकारिणि ॥ पात्वस्मादात्मानम् । पापजनी । पापीविषिष्य : प : ॥ पापमस्यास्तीति । अर्शआद्यच् ॥ पापं चिन्तयते चैव ब्रवीति च करोति च । तस्याधर्म्मनिविष्टस्य गुणा नश्यन्ति साधवः ॥ धर्म्मनित्यः प्रशान्तात्मा कार्य्ययोगवहः सदा । नाधर्म्मे कुरुते बुद्धिं न च पापे प्रवर्त्तते ॥ धर्म्मनित्यो धर्म्मे निरतः । कार्य्ययोगवहः : कार्य्योपायतत्परः ॥

पापकम् । क्ली० दुरदृष्टे । पाप्मनि । पापे ॥

पापकर्त्तरियोगः । पुं० यात्रायोगविशेषे ॥ यथा । दुर्बलो यदि मार्गे शोनि वसेत्पापमध्यगः । पापकर्त्तरियोगोयं यातुः पत्नीं निहन्ति वै ॥

पापकर्म्मा । त्रि० पापाचारे ॥ नचिरं पापकर्म्माणः क्रूरा लोकजुगुप्सिताः । ऐश्वर्य्यं प्राप्य तिष्ठन्ति सुशीर्णमूला इव द्रुमाः ॥ पापं कर्म्म यस्य सः ॥

पापकृत् । त्रि० पापकारिणि ॥ पापं कृतवानिति विग्रहे सुकर्म्मपापमन्त्रपुण्येषु कृञ इति क्विप् ॥

पापकृत्तमः । त्रि० अतिशयपापकारिणि ॥

पापगणः । पुं० पक्षमासस्याष्टमप्रभेदे ॥

पापग्रहः । पुं० क्षीणचन्द्रादौ ॥ यथा । क्षीणेन्दुः सूर्य्योराहुः शनिः केतुः सकूरन्दुजः । रविः पापा भवन्त्येते शुभाख्यान्ये प्रकीर्त्तिताः ॥ जन्मराश्यपेक्षया षष्ठादिस्थानस्थाः पापा अपि शुभा भवन्ति । यथा । केतूपग्रहभौममन्दगतयः षष्ठत्रिसंस्थाः शुभाश्चन्द्रार्कावपि ते च तोयदशमौ चन्द्रः पुनः सप्तमः । जीवः सप्तनवद्विपञ्चमगतो युग्मे बुधो मात्मजः । शुक्रः षड्दशसप्तवर्ज्जितगृहेष्वन्ये शुभा इति ॥

पापघ्नः । पुं० तिले ॥ त्रि० पापनाशके ॥

पापचेलिका । स्त्री० पाठायाम् ।

पाठायाम् ॥

पापचेली । स्त्री० प्राचीनायाम् ॥ अम्बष्ठायाम् । पाठायाम् ॥ पापे चलति । चलविलसने, पचादौ सेखडि तिनिपातनात् ङीप् ॥ पचेर्यङन्ता द्विषिपापचीतिपापचीवायु :। तमौ रतिवा । पच् ॥

पापपति :। पुं० जारे । उपपतौ ॥

पापपुरुष :। पुं० पापमयाङ्गनरे ॥ उक्तः पाद्मे क्रियायोगसारे । सृष्टौ पुरुष : स्रष्टः समारंसचराचरम् । सर्वेषां दमनार्थायसृष्टवान्पापपूरुषम् ॥ द्विजातिहत्यामूर्धानंमदिरापानलोचनम् । सुवर्णस्तेयवदनं गुरुतल्पगरिस्थितिम् ॥ स्त्रीहत्यानासिकश्चैवगोहत्यादोषबाहुकम् । न्यासापहरणग्रीवंभ्रूणहत्यागलंतथा ॥ परस्त्रीगमनमुखाद्यं मुष्कलोकमधोदरम् । शरणापन्नहत्यादिनाभिं गर्भकथाकटिम् ॥ गुरुनिन्दासक्थिभागंकन्याविक्रयशेफसम् । विश्वासवाक्यकथनपायुंपितृवधाङ्घ्रिकम् ॥ उपपातकरोमाणंमहाकायंभयङ्करम् । कृष्णवर्णपिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदमिति ॥

पापफलम् । न० रोगे ॥ कर्मविपाके ॥

पापमुक्त :। त्रि० निष्पापे ॥

पापयोनि :। पुं० खले ॥ तिर्यक्षि ॥

पापरोग :। पुं० मसूरीरोगे ॥ अष्टौपापरोगा :। तेच । उन्माद :। त्वग्दोष :। राजयक्ष्मा । श्वास :। मधुमेह :। भगन्दर :। महोदर :। अश्मरी । इति ॥

पापरोगी । त्रि० कुष्ठिनि ॥ क्षयरोगिणि ॥ पापरोगाणामष्टविधत्वादष्टौ पापरोगिणोभवन्ति ॥

पापर्द्धि :। स्त्री० मृगयायाम् ॥ वृ० द्वि०

पापल :। त्रि० पापप्रापके ॥

पापशमन :। त्रि० पापनाशके ॥

पापशमनी । स्त्री० शमीवृक्षे ॥ पापनाशिकायाम् ॥

पापात्मा । पुं० अधर्मशीले । पापाशये । पापिनि ॥

पापिष्ठा । स्त्री० वर्णवृत्तविशेषे ॥ आद्यौ कर्णौ यलक्षितंज्ञात्वाविप्र गुरुसहितम् । तद्वृत्तं पिङ्गलभणितंपापिष्ठेतिप्रथितम् ॥ यथा । भामंभामंभुवनतलंदर्शंदर्शंजगदखिलम् । भूयोभूयः परिमुषितम् विष्णोर्नाम प्रवचहितम् ॥

पापी । त्रि० पापयुक्ते ॥

पाप्मा । पुं० पापे ॥ त्रि०। तद्वति । आप्नोति । व्याप्नोतिलोकान् । आप्० । नामन्सीमन्व्योमन्निति० निपातितः ॥ पातिपिबतिवा । पा० । नामन्निति० मनिन्० धातो : पुगागमश्च निपातनात् ॥

पामघ्न :। पुं० गन्धके ॥

पामघ्नी । स्त्री० कटुकायाम् ॥ इति० राजनिर्घण्ट : ॥

पाम । न० विचर्चिकायाम् । कच्छ्वाम् ॥ पायत्यङ्गम् । पैशोषणे । मनिन् ॥ पायतेदेहोऽस्मात् । पारयति । पिबतिदेहंवा ॥

पामन : । त्रि० कच्छुरे । पामरोगविशिष्टे । विचर्चिकायुक्ते ॥ पामाऽस्यास्ति । पामादित्वान्न : ॥

पामर : । त्रि० खले ॥ नीचे ॥ मूर्खे ॥ पामानंराति । रा० । आतइतिक : ॥ यद्वा । पापर्म : म्रियतेयेन । मृङ् प्राणत्यागे । पुंसीतिघ : ॥

पामरीधारा । स्त्री० गुडूच्याम् ॥

पामवान् । त्रि० पामने ॥ अस्त्यर्थेमतुप् ॥

पामा । स्त्री० विचर्चिकायाम् ॥ कच्छ्वाम् । खर्ज्वाम् ॥ अस्याऔषध यथा । हरिद्राहरितालश्चदूर्वागोमूत्रसैन्धवम् । अयंलेपोहन्तिदद्रुंपामानंचैवरंतथा ॥ अपिच । माहिषंनवनीतं चसिन्दूरंचमरीचकम् । पामाविचिपितानश्चेत्कुलापिटपधुक् ॥ अन्यच्च ॥ मरिचंनिहतकुष्ठंहरितालंमनश्शिला । देवदारुहरिद्रे द्वे कुष्ठंमासीतिचन्दनम् ॥ विशालाकरवीरश्चअर्कक्षीरंसकृत्फलम् । एषाचकारपिकोभागोविषस्याईपलंभवेत् ॥ प्रस्थंकटुकतैलस्यगोमूत्रेचतुर्गुणेपचेत् । मृत्पात्रेलोहपात्रेवाशनैर्मृद्वग्निनापचेत् ॥ पामाविचर्चिकाचैव दद्रुविस्फोटकानिच । अभ्यङ्गेनप्रणश्यन्ति कोमलत्वञ्चजायते ॥ प्रसूतान्यपिश्विवाणितैलेनानेनम्रक्षणात् । चिरोत्थितमपिश्वित्रं विवर्णंतत्क्षयाद्भवेदिति गारुडे १९५ अध्याय : ॥ पायत्यङ्गम् । पै० । मनिन् ॥ मनइति ङीप् । डाबुभाभ्यामितिडाप् ॥

पामारि : । पुं० गन्धके ॥

पायस : । पुं० न० क्षीरतण्डुलमिश्रे । परमान्ने ॥ अतप्ततण्डुलाधौताः परिभृष्टाघृतेनच । खण्डयुक्तेनदुग्धेनपाचिता : पायसोभवेत् ॥ पायस : कफकृद्बल्योविष्टम्भीमधुरोगुरु : ॥ अपिच । पायसंदुर्जरंबल्यंधातुपुष्टिविवर्द्धनम् । विष्टम्भजननंहन्तिरक्तपित्ताग्निमारुतम् ॥ श्रीवासे । सरलद्रवेटारपिन्ड्रति भा० ॥ पयसइव । प्रज्ञाद्यण् ॥ पयसोविकारोवा । तस्यविकारइत्यण् ॥ पयसिसंस्कृतोवा । संस्कृतंभक्षा० इत्यण् ॥

पायिक : । पुं० पदातिके । पायक इतिभाषा ॥ इति शब्दरत्नावली ॥

पायित : । त्रि० पानङ्कारिते ॥ पिबतेर्ण्यन्तात्कर्त्तरिक्त : । शाच्छासाह्वाव्यावेपांयुगितियुगागम : ॥

पायु : । पुं० मलद्वारे । अपाने । गुदे ॥

चवाग्गतिरपानश्चपायुरध्यात्ममुच्यते । अधिभूतंविसर्गश्चमित्रस्तत्राधिदैवतम् ॥ पायतिशोषयतितैलमितिपायु : ॥ पै० । कृवापाजीत्युण् । धातोयुक् ॥ यद्वा पातिमलनिस्सारणेन । पारक्यो पिबतिवक्त्यौषधंवा । पायाने । प्राग्वत् ॥ चि० रक्षके ॥

पाय्यम् । न० परिमाणे । यौतवे ॥ मीयतेऽनेन । माङ्माने । पाय्यसान्नाय्येतिनिपातमात्ण्यत्धात्वादे: पकारादेशोयुगागमश्च ॥ जले ॥ चि० । निन्दनीये ॥

पारम् । न० परतटे । नदीसमुद्रादन्यतीरे ॥ पुं० । न० प्रान्ते । पारयति । पारतीरकर्मसमाप्तौ ॥ पचाद्यच् ॥ समाप्तौ ॥ पुं० । पारदेपीतिकश्चित् ।

पारकुलीन : । चि० परकुलेसाधौ ॥ प्रति०खञ् ॥

पारक्य : । चि० परकीये ॥ यथा । यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् इति ॥ पुं० । परलोकहितकर्मणि । यथा । पादेनतस्यपारक्यं कुर्यात्सञ्चयमात्मवान् । अर्द्धेनचात्मभरणं नित्यनैमित्तिकंतथा ॥ पादञ्चार्द्धंहिमर्थस्यमूलभूतंविवर्द्धयेत् । एवमाचरत : पुत्रोह्यर्थ : साफल्यमृच्छतीतिमार्कण्डेयपुराणम् ॥

पारग : । चि० । पारगामिनि ॥ पारङ्गच्छति । गम्लृ० । अन्तात्यन्ताध्वदूरपारसर्वेत्यादिनागमेर्ड : प्रत्यय : ॥

पारगत : । पुं० जिने ॥ चि० । पारगे ॥

पारक्ष् । न० सुवर्णे ॥ पारयति । पार० । पारयतेरजि : ॥

पारजायिक : । पुं० पारदारिके ॥ इतिमहाभारते राजधर्म : ॥

पारटीट : । पुं० । अश्मनि ॥

पारण: । पुं० मेघे ॥ न० । पारणायाम् ॥ यथा । पारणंपावनंपुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतञ्चफलदंशुभकारणम् ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते । अन्यथाफलहानि : स्याद्दतेधारणपारणम् ॥ नरात्रौपारणंकुर्याद्दते वैरोहिणीव्रतात् । निशायांपारणं कुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्वाह्णेपारणंशस्तंकृत्वाविप्रसुरार्चनम् । सर्वेषांसम्मतंकुर्याद्दतेवैरोहिणीव्रतमितिब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ८ अध्याय : ॥ जन्माष्टमीव्रतेपारणकालस्तु । अष्टम्यामथरोहिण्यां नकुर्यात्पारणंक्वचित् । हन्यात् पुराकृतंकर्म उपवासार्जितंफलम् ॥ तिथिरष्टगुणं हन्तिनक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नत : कुर्या

त् तिथिभान्ते चपारणम् ॥ अत्रो
भयवियोगे पारणमुक्तम् । यदा सार्द्ध
प्रहरनिशाभ्यन्तरे एकस्यैव वियोगस्त
दैकतरवियोगेऽपि पारणम् । तथाच
नारदीये । तिथिनक्षत्रसंयोगे उप
वासो यदा भवेत् । पारणन्तु न कर्त्त
व्यं यावन्नैकस्य संक्षयः ॥ संयोगि
केन्नतेपारे यद्यप्येको वियुज्यते । त
त्रैव पारणं कुर्यादेवं वेदविदो विदुः
॥ यदैकस्यापि । सार्द्धप्रहरनिशाभ्य
न्तरेन वियोगस्तदा तयोरवियोगेऽपि प्रा
तरुत्सवान्ते पारणमुतिथ्यन्ते चोत्स
वान्ते वा व्रती कुर्वीत पारणमित्युक्त
रिति ॥

पारणा । स्त्री० । उपवासोत्तरदिने
विहितकाले विहितभोजने ॥

पारसः । पुं० । पारदे । पारा० इ०
भा० ॥ पारं तनोति । तनु० ।
अन्येभ्यो० ड : ॥

पारतन्त्र्यम् । न० । पराधीने । परत
न्त्रतायाम् । पराधीनविषयताशालित्वे

पारत्रिकम् त्रि० । परलोकभवे ॥

पारदः । पुं० रसराजे । रसेन्द्रे । महार
से । चपले । रसे । सूते । यथा । पा
रदस्तु मनाक् पाण्डुः सूतस्तु रक्तिमो
मलात् । पारदस्तु मनाक् शीतः स
र्वेतुल्यगुणाः स्मृताः ॥ इतिशब्दा
र्णवः ॥ तस्योत्पत्त्यादयो यथा ।
शिवाङ्गात् प्रच्युतं रेतः पतितं धर-
णीतले । तद्देहसारजातत्वाच्छुक्ल
मच्छमभूच्च तत् ॥ क्षेत्रभेदेन वि
ज्ञेयं शिववीर्यं चतुर्विधम् । श्वेतं रक्तं
तथा पीतं कृष्णं तत्तु भवेत् क्रमात् ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्तु ख
लु जातितः । श्वेतं शस्तं रुजां नाशे
रक्तं किल रसायने ॥ धातुवादे तु तत्
पीतं खेगतौ कृष्णमेव च ॥ पारदः ष
ड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः ।
योगवाही महावृष्यः सदा दृष्टिबल
प्रदः ॥ सर्वामयहरः प्रोक्तो विशेषा
त् सर्वकुष्ठनुत् । स्वस्थो रसो भवेद्
ब्रह्मा बद्धो ज्ञेयो जनार्दनः ॥ रञ्जितः
क्रामितश्चापि साक्षाद्देवो महेश्वरः ॥
मूर्च्छितो हरति रुजं बन्धनमनुभूय-
खे गतिं कुरुते । अजरीकरोति हि मृ-
तः कोन्यः करुणाकरः सूतात् ॥ रसास्त्
ते । यस्य योगस्य यो योगस्तेनैव सदृशो
जितः । रसेन्द्रो हन्ति तं रोगं नरकुञ्जर-
वाजिनाम् ॥ तस्य दोषा यथा । मलं
विषं वह्निगिरित्वचापलं नैसर्गिकं दोष
मुशन्ति पारदे । उपाधिजौ द्वौ त्रपुना
गयोगजौ दोषौ रसेन्द्रे कथितौ मुनी
श्वरैः ॥ मलेन मूर्च्छां मरणं विषेण दा
हो ऽग्निना कष्टतरः शरीरे । देहस्य जा
ड्यं गिरिणा सदा स्याच्चाञ्चल्यतो वीर्य
हतिश्च पुंसाम् ॥ वङ्गेन कुष्ठं भुजगेन
गण्डो भवेदतोऽसौ परिशोधनीयः ।
वह्निर्विषं मलश्चेति मुख्या दोषास्त

योरसे । एतैकुर्वन्विसन्तापंस्तंसि मू
र्च्छान्त्वगांक्रमात् । अन्येपिकथिता
दोषाभिषग्भि: पारदेयदि । तथा
प्येतेनयोर्दोषाहरणीयाविशेषत : ॥
संस्कारहीनं खलुसूतराजंय : सेव
तेतस्यकरोतिबाधाम् । देहस्यनाशं
विदधातिमूनंकष्टांश्चरोगाञ्जनयेन्न
राणाम् । मञ्जवशब्दवाच्येस्मिञ्जा
तिविशिषि ॥ त्रि० पारदातरि ॥ पा
रंददाति । तुदाम्० । भातोनुपे-
तिकः ॥ पारदस्यमारितस्यमूर्च्छितस्य
स्यगुणाथया । पारद : क्रमिकुष्ठघ्नो
नयदोहदिद : सर : । स्वच्छवम
स्थायीर्योगवाहीजराहर : ॥ स्मृ-
त्योजोरूपदोहच्योहविकारातुवर्द्धन :
। पचहलसाधन: शूर : खेचर : सि
द्धिद : पर : ॥ पारद:सकलरोगघ्ना
स्मृत : षड्रसोनिखिलयोगवाहक:
। पञ्चभूतमयएषकीर्त्तितस्तेभवद्
गुणगणैर्विराजते ॥ अथरसशोधन
विधि: । तत्रस्वेदनम् । नानाधान्यै
र्यथाप्राप्तैस्तुषवर्ज्जैरान्वितै: । कूश्मा-
ण्डं पूरितंरचेद्यावदम्लत्वमाप्नुयात् ।
तन्मध्येभृङ्गराजमुण्डीविष्णुक्रान्ता
पुनर्नवा । मोनाक्षीचैवसर्पाक्षीसह
देवीशतावरी । त्रिफलागिरिकर्णी
च हंसपादीचचित्रकम् । समूलं
कुट्टयित्वातुयथालाभविनि:क्षिपेत्
। पूर्वाम्लभाण्डमध्येतु धान्याम्लक

मिदंस्मृतम् । स्वेदनादिषुसर्वत्र
रसराजस्ययोजयेत् ॥ विष्णुक्रा
न्तागिरिकर्णीच अपराजितेतिभवेत
नीलपुष्पभेदात् ॥ अथस्वमारनालं
वालदभावेप्रयोजयेत् । तदभावे ।
धान्याम्लाभावे । त्र्यूषणंलवणंरा
जीरजमीत्रिफलार्द्रकम् । महा
बलानागबलामेघनाद : पुनर्नवा ॥
मेषशृङ्गीचित्रकस्वलवसारंसमंसमम्
। एतत्समस्तंव्यस्तंवाप्यम्लेनैव
पेषयेत् ॥ प्रलिम्पेत्तेनवस्त्रं नवच
मङ्गुलकमात्रकम् । तन्मध्येनि:क्षि
पेत्सूतंबध्वातत्त्रिदिनंपचेत् ॥ दो
लायन्त्रेऽम्लसंयुक्तेनायतेस्विन्नो
रस : । मेषशृङ्गीमेढाशृङ्गी । तद-
लाभेकर्कटशृङ्गीपाह्या ॥ नवसारम्
नौसादर । अन्यच्च । मूलवानल-
सिन्धूत्थव्यूषणार्द्रकराजिका : ।
रसस्यषोडशांशेनद्रव्यंयुंज्यात्पृथक्-
पृथक् ॥ द्रव्येष्वनुक्तमानेषुमतंमा-
नमिदंबुधै : । पटाहतेषुचैतेषुसूतं
प्रक्षिप्यकाञ्जिके ॥ स्वेदयेद्दिनमेकं
घटोदोलायन्त्रेपचुञ्जिमान । स्वेदात्ती
व्रोभवेत्सूतोमर्दनाच्चसुनिर्मल : ॥
गृहकन्यासुरच्च । अनलश्चित्रकम् । त्र्यू
षणंत्रिकटु । राजिकाराइ ॥ + ॥
अथ मर्दनम् । इष्टका चूर्णं चूर्णा-
भ्यामादौ मर्द्योरसस्तत : । दध्नागु
डेनसिन्धूत्थ राजिकागृहधूमकै : ॥

चान्यच्च । कुमारिका चित्रकरक्तस र्षपैः कृतैः कषायैः र्बृहतो विमि- श्रितैः । फलत्रिकेणापि तमर्दितोर सोदिनत्रयं सर्वमलैर्विमुच्यते ॥ + अथमूर्च्छनम् । ग्रहृणाचिफलावन् ध्याकन्दैः मुद्राङ्कयान्वितैः । विष कीर्णाभिशाचारकन्याकंवनकद्रवै- ॥ सूतंकृतैनयूदेणधारान्ससाभिमूर्च्छ येत् । इत्थंसम्मूर्च्छितः सूतस्त्य- जेत्सप्तापिकञ्चुकान् ॥ वन्ध्याक- न्दर्वांभाखखसाकन्द । मुद्राद्वयम्० कीटीकाटे आ०वड़ीकटैया । सर्वा आर्गामेदका । निशाहरिद्रा । चारो यपकार: । कन्याकुमारी । चक्रीऽ र्वाचरस: । कनकोधत्तूरपचरस: अथोर्ध्वपातनम् । मयूरग्रीवताप्या- भ्यानष्टपिष्टीकृतसम्च । यन्त्रे विद्या धरेबुधांदूरसेन्द्रसोर्ध्वपातनम् ॥ सूत स्सादूर्ध्वपातनसर्वदोषविवर्जितः । मयूरग्रीवातूतिया । ताप्यंसुवर्ण माखी । नष्टपिष्टीकृतसकुमारिकाद्र- मयोगेनतावन्मर्दनंकर्तव्यं यावत्पा रदः पृथङ्नहृश्यते । विद्याधरयन्त्रे डमरुयन्त्रे ॥ अथाध · पातनम् । त्रि फलाशिग्रुशिखिभिर्लवणासुरिसंयु तै । नष्टपिष्टरसंकृत्वालेपयेदूर्ध्व भा जनम् ॥ ततोदीप्तैरधःपातमुपलैस्त न्यकारयेत् , यन्त्रे भूधरसंज्ञेतुतत. सूतो विशुद्ध्यति ॥ खेदनादिभि-



याभिस्तुशोधितोऽसौरष्टाभवेत् । त दाकार्याणिकुरुतेप्रयोज्यः सर्वकर्म सु ॥ + ॥ अथ मुख्य दोष हरशो धनविधिः । एरकन्याहरतिमलं- त्रिफलाग्निं चित्रको विषंहन्ति । तस्मादेभिर्मिश्रैर्वारान् सम्मूर्च्छ- येत्सप्त ॥ ०( ०+० )० ॥ अथ सर्वदोषहरः संक्षिप्तः शोधनवि धिः । कुमारिकाचित्रकरक्तस- र्षपैः कृतैःकषायैर्बृहतीविमिश्रितैः । फलत्रिकेणापिविमर्दितोरसोदिन त्रयंसर्वमलैर्विमुच्यते ॥ एवंकदर्थि- तः सूतः षण्ढोभवतिनिश्चितम् । तन्नोक्षधीकषायैश्चस्वेदितः सबलो भवेत् ॥ सर्पाक्षीचिञ्चकावन्ध्या भृ ङ्गाब्दैः स्वेदितो बली । ततः सप्त वकाद्रावैःखिन्नः स्यादितिदीप्तवा न् ॥ सर्पाक्षीनागफणी । चिञ्चिका यमली । वन्ध्यावांभखखसा । भृङ्गो भृङ्गराजः । अब्दोमुस्ता । पावका- चित्रकः ॥ + ॥ अथरसस्यमारण- विधिः । धूमसारंरसंतोरीगन्धकं- नवसादरम् । यामैकंमर्दयेदम्लैर्भा गंकृत्वासमंसमम् ॥ काचकूप्यांवि- निःक्षिप्यतास्मन्द्रदरसमुद्रया । वि लिप्यपरितोवक्त्रे मुद्रांदत्त्वाविशोष- येत् ॥ अधः सच्छिद्रपिठरीमध्ये कू पीनिवेशयेत् । पिठरींवालुकापूरैः र्भृत्वाचाकूपिकागलम् ॥ निवेश्यचु

तुल्यांतद्योवह्निंकुर्यांच्छनैःशनैः। तस्मादप्यधिकंकिञ्चित्पावयंज्वालयेत्क्रमात्। एवंयामदशमितयामैर्मि य तेरसउत्तमः। स्फोटयेत्स्वाङ्गशीतंतमूर्द्ध्वगंगन्धकंत्यजेत्। अधःस्थंचसूतंसूतंतदूर्ध्वीयात्तत्तुमात्रया। यथोचितानुपानेनसर्वकर्मसुयोजयेत्॥ अथान्य: प्रकार:। अपामार्गस्यबीजानांमूषायुग्मं प्रकल्पयेत्। तत्सम्पुटेक्षिपेत्सूतंमलपूदुग्धमिश्रितम्॥ मलपू: काष्ठोदुम्बरिका॥ द्रोणपुष्पीप्रसूनानि विडङ्गमरिचैदलः। एतच्चूर्णंमधस्तोर्ध्वं दत्त्वामुद्रांप्रदापयेत्। तद्गोलमाधमेत्सम्यक्मृन्मूषासंपुटेसुधीः। मुद्रांदत्त्वाशोषयित्वाततोगजपुटेपचेत्॥ एकेनैवपुटेनैवंसूतकंभस्मजायते। तत्प्रयोज्यं यथास्थानेयथामात्रं यथाविधि॥ + ॥--( ०# )--॥ अथान्य: प्रकार: ॥ काष्ठोदुम्बरिकादुग्धे रसंकिञ्चिद्विमर्द्दयेत्। तद्दुग्धघृष्टहिङ्गोश्चमूषायुग्मंप्रकल्पयेत्॥ क्षिप्त्वाततसंपुटेसूतंतच्चमुद्रांप्रदापयेत्। धृत्वातद्गोलकंप्राज्ञोमृन्मूषासंपुटेक्षिपेत्॥ पचेत्गजपुटेनैनसूतकंयातिभस्मताम्॥ अन्य: प्रकारोपि। नागवल्लीरसैर्घृष्ट: कर्कोटीकन्दगर्भितः। मृन्मूषासंपुटेपक्वः सूतोयात्येवभस्मतामिति भावप्रकाश:॥

पारदण्ड:। पुं० देशविशेषे। सतु० चोड्रदेशैकभागइतिकेचित्॥
पारदर्शी। त्रि० पारद्रष्टे॥ पारंद्रष्टुंशीलंयस्य। णिनि:॥
पारदारिक:। पुं० परदाररते। परस्त्रीगामिनि॥ य: परस्त्रीपुनिरतस्सश्चौर्याकुतोयशः। सचनिन्द्य: पापयुक्त: शश्वत्सर्वसभासुच॥ परदारान्गच्छति। गच्छतीपरदारादिभ्यइतिठक्॥
पारदार्य्यम्। न० परदारगमने॥
पारदृश्वा। त्रि० पारद्रष्टे॥ पारसर्वंदृष्टवान्। दृशेःक्वनिप्॥
पारमार्थिक:। त्रि० परमार्थयुक्ते। मुख्ये। परमार्थादागतः। ठञ्॥
पारमेष्ठ्यम्। न० ब्रह्मपदे॥
पारम्पर्य्यम्। न० आम्नाये। कुलक्रमे॥ यस्मिन्देशेयआचारः पारम्पर्यक्रमागतः। तत्रतत्रायमन्यं तथमन्तथैवताद्दृशः इतिविवादभंगार्णव:॥ परम्परायाआगतःतस्यभागतइत्यण्। चतुर्वर्णादित्वात्ष्यञ्। परम्पराशब्दात्स्वार्थेष्यञ्वा॥
पारम्पर्योपदेश:। पुं० ऐतिह्ये। उपदेशपरम्परायाम्। पारम्पर्येणउपदेशः। कर्मधारयोवा॥
पारलौकिक:। त्रि० परलोकसम्बन्धिनि। पारलौकिककार्येषुप्रमृताभृशनास्तिका:॥ परलोकेभवः। अध्या

यतोन्द्रीयवर्द्धे शीकामुकोघुलुघुलार वः । पारावताङ्घ्रिपिच्छश्चत्रेयोग लरवश्चसद्गति ॥

पारावती । स्त्री० गोपगीते ॥ नदीप्र-भेदे ॥ लवलीफले ॥

पारावार : । पुं० उदन्वति । समुद्रे ॥ न० तटद्वये ॥ पारमावारश्चोस्ति । इत् । कर्मण्यण् ॥ पारावारावस्यसद्गति वा । अर्शआद्यच् ॥

पारावारीण : । त्रि० पारावारगामिनि । पारावारङ्गच्छति० । इत्याद्यर्थेषु । च ।रपाराविद्दोताद्विपरीतार्थे ति खः ॥

पाराशर : । पुं० द्वैपायने । व्यासे ॥ इ तिशब्दरत्नावली ॥ पराशरस्यापत्य-म् । इत्यण् ॥ न० । पराशरोक्ते भिक्षुसूत्रे ॥ उपपुराणविशेषे ॥ त्रि० । पराशरसम्बन्धिनि ॥

पाराशरि : । पुं० वेदव्यासे ॥ पराशर-स्यापत्यम् । अतइञ् ॥

पाराशरी । पुं० भिक्षौ । मस्करिणि ॥ पाराशर्येणप्रोक्तं भिक्षुसूत्रमधीते । पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयो रितिणिनि : ॥

पाराशर्य्य : । पुं० वेदव्यासे । बादरा यणे ॥ पराशरस्यगोत्रापत्यम् । गर्गा दिभ्योयञ्० इत्यनन्तरापत्ये विगो त्राध्यारोपात्प्रत्यय : ॥

पारिकाङ्क्षी । पुं० तपस्विनि । परि काङ्क्षितुंशीलमस्य । काङ्क्षिकाङ् क्षायाम् । सुपीतिणिनि : । पृ० ॥ यद्वा । पारमत्रास्ति । इनि : । पा रिब्रह्मज्ञानंकाङ्क्षति । मस्करिणि इ० हेमचन्द्र : ॥

पारिक्षित : । पुं० अश्वमेधयाजिनि ॥ परितोदुरितंक्षीयतेयेनसपरिक्षित्-अश्वमेध : तद्याजी ॥ जनमेजये ॥

पारिघ : । पुं० वास्तुयागमण्डपनीये ॥ यथा । पूर्वादिषुचतुर्दिक्षुसप्तसप्ताऽन लर्चित : । वायव्याग्नेयदिक्संस्थं-पारिघन्तुनलङ्घयेत् ॥ अग्निकोणय भ्यात्सप्तभानिपूर्वस्यामृगया तःसप्त-भानियाम्यायामनुराधात : सप्त-भानिपश्चिमायाम्धनिष्ठात : सप्त-भान्युत्तरस्यांलेख्यानीतिसर्वत्रधाक्य-शिष : । तत्र०वायव्याग्नेयदिग्गपति यक्षरेखापारिघोदण्डस्तंसर्वयानल ङ्घयेदित्यर्थ : ॥ तदुक्तमप्युवर : । प्राचीमुदग्धारिभिरश्वयायानृमार्ग्-धारिकैरद्भिरष्टदीर्घाम् । तचैव वाम्यामपराश्रितैर्भैर्याम्याश्रितैश्चाप्य परांप्रयायादिति ॥

पारिघातिक : । पुं० अधुरथे ॥

पारिजात : । पुं० मन्दारे । पारिभद्र-तरौ ॥ सुरद्रुमे ॥ पारिणोव्धेर्जात : ॥ पारमस्यास्ति । अतइनि : । पा-रिणारङ्संजातंजन्मास्यया ॥ पारि-जातोविष्णुपदा : पारिजातेतिवि-

पीठ :

समासाद्ययशश्च् शिखरवासिनी ।
शतयोजनविस्तीर्णंत्रिकोणंसर्वसिद्धि
दम् । देवामरणमिच्छन्तिकिंपुनर्मा
नवादय : । भूतधात्रीमहामायाभै
रव : क्षीरखण्डक : ॥ युगाद्यायां
महादेवदक्षाङ्गुष्ठपदोमम ॥ १९ ॥
नकुलोश : कालिपीठेदक्षपादाङ्गु
लीषुच । सर्वसिद्धिकरीदेवीका-
लिकातत्रदेवता ॥ २० ॥ अङ्गुली
षुचहस्तस्यप्रयागेललिताभव : । ज
यन्त्यांवामजङ्घाचजयन्तीक्रमदीश्व
र : ॥ २१ ॥ भुवनेशीसिद्धिरूपा-
किरीटस्थाकिरीटत : । देवताविम
लानाम्नीसंवर्त्तोभैरवस्तथा ॥ २२॥
वाराणस्यांविशालाक्षीदेवताकालभै
रव : । मणिकर्णीतिविख्याताकुण्ड
लञ्चममश्रुती : ॥ २३ ॥ कन्याश्र-
मेचपृष्ठंमेनिमिषोभैरवस्तथा । सर्वा
णीदेवतातत्र ॥ २४ ॥ कुरुक्षेत्रेच-
गुल्फत : । स्थाणुर्नाम्नाचसाविनी
देवता ॥ २५ ॥ मणिवेदके । मणि
बंधेचगायत्रीसर्वानन्दस्तुभैरव: ॥२६
श्रीशैलेचममग्रीवा महालक्ष्मीस्तुदे-
वता । भैरव : शम्बरानन्दोदेशेदेशे-
व्यवस्थित : ॥ २७ ॥ काञ्चीदेशेच-
कङ्कालोभैरवोरुरुनामक : । देव-
तादेवगर्भाख्या ॥ २८ ॥ नितम्ब:
कालमाधवे । भैरवश्चासिताङ्गश्चदे
वीकालीचमुक्तिदा । दृष्ट्वादृष्ट्वामहा
देवमन्त्रसिद्धिमवाप्नुयात् ॥ कुञ्जचारे
भूततिर्यौनिशर्वेयस्तुसाधक : । न
त्वाप्रदक्षिणीकृत्यमन्त्रसिद्धिमवाप्नु
यात् ॥ २९ ॥ शोणाख्याभद्रसेन-
स्तु । नर्मदाख्येनितम्बक: ॥ ३० ॥
रामगिरौस्तनान्यस्तुशिवानीचण्ड-
भैरव : ॥ ३१ ॥ वृन्दावनेकेशजा-
लेउमानाम्नीचदेवता । भूतेशोभैरव
स्तत्रसर्वसिद्धिप्रदायक : ॥ ३२ ॥
संहाराख्यऊर्ध्वदन्तेदेवीनारायणीशु
चौ । अधोदन्तेमहारुद्रोवाराहीपञ्च
सागरे ॥ ३३ ॥ करतोयातटेतल्पं
वामेवामनभैरव : । अपर्णादेवता-
तत्रब्रह्मरूपाकरोद्भवा ॥ ३४ ॥ श्री-
पर्वतेदक्षतल्पंतत्रश्रीसुन्दरीपरा ।
सर्वसिद्धिकरीसर्वासुन्दरानन्दभैरव:
॥ ३५ ॥ कपालिनीभीमरूपावाम-
गुल्फोविभासके ॥ ३६ ॥ उदरञ्च
प्रभासेमेचन्द्रभागायशस्विनी । वक्र-
तुण्डोभैरव ॥ ३७ ॥ ऊर्ध्वोष्ठोभैरव
पर्वते । अवन्तीचमहादेवीलम्बकर्ण
स्तुभैरव : ॥ ३८ ॥ चिबुकेभ्रामरी ।
देवीविकृताक्षोजनस्थले ॥ ३९ ॥
गण्डोगोदावरीतीरेविश्वेशीविश्वमा
तृका । दण्डपाणिर्भैरवस्तुवामगण्डे
तुराकिनी ॥ वत्सनाभोभैरवोवत्ससर्व-
शैलात्मकोपरि ॥ ४० ॥ रत्नावल्यांद
क्षस्कन्ध : कुमारीभैरव : शिव: ॥
४१ ॥ मिथिलायामुमादेवीवामस्क

व्योमकेश्वरः॥ ४२ ॥ नालाहट्यां नलापातोयोगेशोभैरवस्तथा । तत्र साकालिकादेवी सर्वसिद्धिप्रदायिका ॥ ४३ ॥ कर्णाटेचैवकर्णंमेअभीरुनामभैरवः । देवताजयदुर्गाख्यानानाभोगप्रदायिनी ॥ ४४ ॥ वक्रेश्वरेमनः पातोवक्रनाथस्तुभैरवः । नदीपापहरातत्रदेवीमहिषमर्दिनी ॥ ४५ यशोरेपाणिपद्मञ्चदेवतायशोरेश्वरी । चण्डश्चभैरवोयत्रतत्रसिद्धिमवाप्नुयात् ॥ ४६ ॥ अट्टहासेचौष्ठपातोदेवीसाफुल्लरास्मृता । विश्वेशोभैरवस्तत्रसर्वाभीष्टप्रदायकः ॥ ४७ ॥ हारपातोनन्दिपुरेभैरवोनन्दिकेश्वरः । नन्दिनीसामहादेवीतत्रसिद्धिर्नसंशयः ॥ ४८ ॥ लङ्कायांनूपुरश्चैवभैरवोराक्षसेश्वरः । इन्द्राक्षीदेवतातत्रइन्द्रेणोपासितापुरा ॥ ४९ ॥ विराटदेशमध्येतुपादाङ्गुलिनिपातनम् । भैरवश्चामृताख्यश्चदेवीतत्राम्बिकास्मृता ॥ ५० ॥ मगधेदक्षजङ्घामेव्योमकेशस्तुभैरवः । सर्वानन्दकरीदेवीसर्वकामफलप्रदा ॥ ५१ ॥ एतास्ते कथिताः पुत्रपीठनायाधिदेवताः ॥ एताभ्योऽंशविनादेवंपूजयेत्पीठदेवताम् । भैरवोक्तिवतिसर्वैजपपूजादिसाधनम् ॥ अज्ञात्वाभैरवंपीठंपीठशक्तिश्चशङ्कर ॥ प्राणनाशनसिध्येतकल्पकोटिजपादिभिः ॥ नदेयंपरशिष्येभ्योनिन्दकायदुरात्मने । शठायवञ्चकायेदंदत्वामृत्युमवाप्नुयात् ॥ ६५ । ५ । स्वशिष्यायनैष्ठिकायशुचिप्रिये । साधकायकुलीनायमन्त्रीमन्त्रार्थसिद्धये ॥ ० ॥ इतितन्त्रचूडामणौशिवपार्वतीसंवादेएकपञ्चाशत्पीठोत्पत्तीपीठनिर्णयः समाप्तः ॥ अन्यानिपीठानिकालीपुराणे ॥ १८ । ५० । ६१ । अध्यायेषद्रष्टव्यानि ॥

पीठकलिः । पुं० नायकविशेषे । पीठमर्दे ॥

पीठमर्दः । पुं० नायकविशेषे । नर्मसचिवे । तल्लक्षणं । कुपितस्त्रीप्रसादकइति । अस्योदाहरणं यथा । कोयंकोपविधिः प्रयच्छकरुणा गर्भंवचोमायतांपीयूषद्रवदीर्घिकायरिमलैःऽऽरामोदितामेदिनी । आस्तांवास्मुहरालुलोचनमिदं व्यावर्त्तयन्तीमुहुर्यस्मैकुप्यसितस्यसुन्दरितपोवृन्दालिमन्दामहेइति ॥ नाट्योक्तानायकप्रिये ॥

पीठसर्पकः । त्रि० ⎫
पीठविसर्पी । खञ्जे ⎬
पीठसर्पी । पांशुरे । पङ्गौ ॥ ⎭

पीठस्थानम् । न० देवताविशेषाणांपूजास्थाने ॥

पीठिका । स्त्री० पात्तनिकायाम् ॥ क्रमे ॥

पीठी । स्त्री० पीठे । आसने । चौकी

पीतरक्त : । पुं॰ पुष्परागमणौ ॥

पीतरत्नम् । न॰ गोमेदमणौ ॥

पीतराग : । पुं॰ पीतवर्णे । किञ्जल्के । सिक्थके ॥ त्रि॰ । पीतवर्णवति

पीतरोहिणी । स्त्री॰ काश्मर्याम् ॥

पीतल : । पुं॰ पीतवर्णे । त्रि॰ तद्वति ॥

पीतलकम् । न॰ पित्तले ॥ इ॰ रा॰ ॥

पीतलोहम् । न॰ पित्तलभेदे ॥

पीतवासा : । पुं॰ श्रीकृष्णे । त्रि॰ पीतवस्त्रवति ॥

पीतबीजा । स्त्री॰ मेथिकायाम् । पीतानिबीजानियस्या : ॥ त्रि॰ पीतवर्णबीजयुक्ते ॥

पीतवृक्ष : । पुं॰ श्योनाकप्रभेदे ॥ सरलवृक्षे ॥

पीतशाल : । पुं॰ असनवृक्षे ॥

पीतसार : । पुं॰ मलयजे ॥ गोमेदकमणौ ॥ तुरुष्के । बीजके । अङ्कोठवृक्षे ॥ न॰ हरिचन्दने ॥

पीतसारक : । पुं॰ सर्जकवृक्षे विजयसारइतिख्याते ॥ पीत : सारोऽस्य ॥ निम्बवृक्षे ॥ अङ्कोठवृक्षे ॥ इ॰ रा॰ नि॰ ॥

पीतसारि । न॰ सौवीराञ्जने ॥

पीतसालक : । पुं॰ सर्जकवृक्षे । असने । बन्धूके । विजयसार॰ इ॰ ख्याते । पीत : सारोऽस्य । रलयोरैकत्वम् ॥

पीतस्फटिक : । पुं॰ पुष्परागमणौ ॥

पीता । स्त्री॰ हरिद्रायाम् ॥ दारुहरिद्रायाम् । महाज्योतिष्मत्याम् ॥ कपिलशिंशपायाम् ॥ प्रियङ्गौ ॥ गोरोचनायाम् । अतिविषायाम् ॥ पीयतेस्म । पीङ्पाने॰ पापानेवा । कर्मणिक्त : । घुमास्थेतीत्वम् ॥

पीताङ्ग : । पुं॰ श्योनाकप्रभेदे ॥

पीताब्धि : । पुं॰ अगस्त्यमुनौ । पीत : अब्धिर्येनस : ॥

पीताभम् । न॰ कालीयके । हरिचन्दने । पीताआभायस्यतत् ॥ त्रि॰ । पीतकान्तौ ॥

पीताम्बर : । पुं॰ अच्युते । विष्णौ ॥ पीतमम्बरंयस्यस : ॥ शैलूषे । न॰ हरिद्राभवसने । पीतवर्णकौषेयवस्त्रे ॥ त्रि॰ पीतवस्त्रयुक्ते ॥

पीताम्बरा । स्त्री॰ वगलादेव्याम् ॥

पीताश्मा । पुं॰ पुष्परागमणौ ॥

पीति : । पुं॰ घोटके । तुरगे ॥ इत्यमर : ॥ पिबति । पापाने । क्तिच् । घुमास्थेतीत्वम् ॥

पीति : । स्त्री॰ पाने । द्रवद्रव्यस्यगलाध : करणे ॥ इतिमेदिनीकर : । पानम् । पा॰ । स्त्रियांक्तिन् । घुमास्थेतीत्वम् ॥ शुण्डायामिति शब्दचन्द्रिका ॥

पीतिका । स्त्री॰ पीतयूथ्याम् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥

पीतु : पुं॰ । सूर्ये । वन्हौ ।

पिबति । पा० । प : किच्चेति तुन् ॥

पीथ : । पुं० सूर्ये । अग्नौ ॥ काले ॥ न० । जले । घृते ॥ पिबति । पा० । पातृतुदीत्यादिनाथक् ॥

पीथि : । पुं० घोटके ॥

पीन : । त्रि० स्थूले ॥ प्यायतेस्म : ओप्यायीव्रश्चो । गत्यर्थेतिक्त : । ओदितश्चेतिनत्वम् । प्याय : पीभाव : ॥

पीनस : । पुं० रोगविशेषे । नासास्रावे । प्रतिश्याये ॥ अस्यनिदानम् ॥ यथा । आनह्यतेयस्यविशुष्यतेचप्रक्लिद्यतेधूप्यतिचैवनासा । नवेत्तियोगन्धरसांश्चजन्तुर्जुष्टंव्यवस्येत्खलुपीनसेन ॥ तञ्चानिलश्लेष्मभवविकारंब्रूयात्प्रतिश्यायसमानलिङ्गम् ॥ अस्यौषधम् । यथा । पिप्पलीत्रिफलाचूर्णैंमधुसैंधवसंयुतम् । सर्वरोगज्वर श्वासशोषपीनसहृद्भवेत्तृप्ति ॥ पीनंस्यति० सायतिश्च । पीनस्नाकश्च त्रि० यैव यैवा । आतोनुपेतिक : ॥

पीनसा । स्त्री० कर्कट्याम् ॥ इ० रा० नि० ॥

पीनसी । त्रि० पीनसरोगिणि ॥

पीनस्कन्ध : । पुं० महिषे ॥

पीनोध्नी । स्त्री० पीवरस्तन्यांगवि ॥ पीनमूधोऽस्या : । ऊधसोऽनङ् । बहुव्रीहेरूधसोङीष् ॥

पीपरि : । पुं० प्लक्षवृक्षे ॥ इ० रा० नि० ॥

पीयु : । पुं० काले ॥ रवौ ॥ घूके । पेचके ॥ सुवर्णआयसयोरिति दीक्षित : ॥ पिबति । पा० । खरुशङ्कुपीयुनीलङ्गुलिगु० इतिकुप्रत्यय : धातोरीत्वंयुगागमश्च ॥

पीयूषम् । न० अमृते ॥ अमृतायाम् । गुडूच्याम् ॥ यथा । पीयूषलौकपाल्यालीघरणानांकपायका इ० सौलिम्बराज : ॥ दुग्धे ॥ पुं० न० नव्यसूतधेनो : सप्तदिवसावधि क्षीरे । पियूषे ॥ पीयते० पीयते० अनेनवा । पीय इ० सौत्रो धातु : प्रीतौ । पीयेरूषन् ॥

पीयूषमहा : । पुं० चन्द्रे ॥ इ० श० रत्नावली ॥

पीयूषरुचि : । पुं० चन्द्रे ॥ त्रि० । अमृतप्रिये ॥

पीलक : । पुं० पिपीलिकायाम् ॥ इ० हेमचन्द्र : ॥

पीलु : । पुं० प्रसूने ॥ परमाणौ ॥ मतङ्गजे ॥ तालस्यास्थिखण्डे ॥ काण्डे । वाणे ॥ व्रजादिदेशेषु खनाम्नाप्रसिद्धे पादपविशेषे । गुडफले ॥ कृमिविशेषे ॥ पुष्पद्रुमे ॥ पीलयति । पीलप्रतिष्टम्भे । मृगय्वादित्वात्कु : ॥ न० पीलुवच

पीढा॰ पीढी॰ इत्यादिभाषा ॥

पीडनम् । न॰ अवमर्द्दे । देशादेरुप द्रवदाने । शस्यादिसम्पन्नदेशस्यपर चक्रेणपीडने ॥ दुःखे ॥ मरणपो ष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नर कंपीडनेचास्यतस्माद्यत्नेनतंभरेत् ॥ मर्द्दने । टीपना फीचना भीचना इत्यादिभाषा ॥ यथा । गर्भोभिघा तविषमाशनपीडनाद्यैःपक्वद्रुमादि वफलंपततिक्षणेनेति ॥ पीडअवगा हने । ल्युट् ॥

पीडा । स्त्री॰ बाधायाम् । व्यथायाम् दुःखे ॥ पीडयति पीडअवगाहने । चु॰ । भिदाद्यङ् । णिजभावेगुरो श्चेत्य : । टाप् । कृपायाम् ॥ शि रोमालायाम् । उत्तंसे ॥ सरलद्रु मे ॥ इतिमेदिनी ॥

पीडितम् । न॰ स्त्रीणांकरणे ॥ त्रि॰ । यन्त्रिते ॥ बाधिते ॥ मर्द्दिते ॥ पीडासञ्जाताऽस्य । ता॰ इतच् ॥

पीत : । पुं॰ गौरे । हरिद्राभे । पीला इतिहरिद्रिया इतिचभाषा ॥ कु- सुम्भे ॥ कटीटे ॥ शाखोटे ॥ पुष्प रागे ॥ न॰ पाने ॥ हरिताले ॥ त्रि॰ पीतवर्णयुते ॥ कृतपाने ॥ पियतिनर्णान्तरम् । चौरादिक.त्तः ॥ पीयते भक्षुपावम् । पापाने । क्तः । घुमास्थेतीत्वम् ॥ पीतागाण्ड व्यवतु॰ पीतंपानम्॰ भावाभस्तीति तस्यर्थीयोऽर्श आद्यजित्यच्प्रत्य योवोध्य : । यद्वोत्तरपदलोपीबहुव्री ह्य : । पीतोदका : मीना : । अत्रो दकस्यपीतत्वं गौणमुपचर्यते ॥

पीतकम् । न॰ ताम्रे । हरिताले ॥ अ गुरुणि ॥ पद्मकाष्ठे ॥ पित्तले ॥ माक्षिके ॥ नन्दीवृक्षे ॥ कुङ्कुमे ॥ हरिद्रुवृक्षे ॥ किङ्किरातद्रुमे ॥ श्यो नाके ॥ पीतशाले ॥ त्रि॰ पीतेतर क्ते ॥ पीतालुकम् ॥ यथा । स्वार्थे शाखादिभ्य : कन् ॥ पीतचन्दने ॥

पीतकदली । स्त्री॰ स्वर्णकदल्याम् ॥

पीतकद्रुम : । पुं॰ हरिद्रुवृक्षे ॥

पीतकन्दम् । न॰ गर्ज्जरे ॥

पीतकरवीरक : । पुं॰ पीतवर्णकरवी रपुष्पवृक्षे । पीतप्रसवे । सुगन्धिकु सुमे ॥

पीतकावेरम् । न॰ कुङ्कुमे ॥ पित्तले ।

पीतकाष्ठम् । न॰ पीतचन्दने ॥

पीतकीला । स्त्री॰ आवर्त्तकीलतायां म् ॥

पीतघोषा । स्त्री॰ पीतपुष्पघोषालता याम् । धामार्गवे । मधुवाल्याम् ॥

पीतचन्दनम् । न॰ पीतवर्णचन्दने । कालीयके । माधवप्रिये । कालानु सार्य्ये ॥ हरिद्रायाम् ॥

पीतचम्पक : । पुं॰ प्रदीपे ॥ पीतव र्णचम्पकपुष्पवृक्षे ॥

पीततण्डुल : । पुं॰ कङ्गुन्याम् ॥

पीततण्डुला। स्त्री० बृहतीप्रभेदे। घर्षिकाख्ये। पुत्रप्रदायाम्। बहुफलायाम्॥

पीततुण्ड:। पुं० कारण्डवखगे॥ सुगृहे॥

पीततैला। स्त्री० महाज्योतिष्मत्याम्॥ ज्योतिष्मतीलतायाम्॥

पीतदारु:। न० देवदारुणि॥ पीतश्चतद्दारुच॥ हरिद्रौ॥ सरले॥

पीतदुग्धा। स्त्री० हेमचोर्याम्॥ पीतं दुग्धमस्या:॥ धेनुष्यायाम्॥

पीतद्रु:। पुं० दारुहरिद्रायाम्॥ पीतद्रुयति। द्रु गतौ। मितद्र्वादित्वाट्डु:॥ पीतश्चासौ द्रुश्च॥ सरलवृक्षे॥

पीतन:। पुं० आम्रातके॥ प्लक्षे॥ न० पीतदारुणि॥ कुङ्कुमे। हरिताले॥ पीतकरोति। तत्करोतीति णिच्। बहुलमन्यत्रापीति युच्। ल्युर्वा॥ यद्वा। पीयते। पीङ्पाने। बा० तनन्० गुणाभावश्च॥ पीतंवर्णन्नयतीति वा। नयगतौ। णीञ् वा। अन्येभ्योऽपीति ड:॥

पीतनक:। पुं० आम्रातके॥

पीतनी। स्त्री० शालपर्ण्याम्॥

पीतपर्णी। स्त्री० श्वित्रघ्न्याम्॥

पीतपादा। स्त्री० शारिकापक्षिणि॥ पीतचरणयुक्ते॥

पीतपुष्प:। पुं० चम्पकवृक्षे॥ कर्णिकारे॥ पिण्डीतकप्रभेदे॥ पीतझिण्ट्याम्॥ कूष्माण्डे॥ पीतानि पुष्पाण्यस्य॥ न०। आहुल्यवृक्षे॥ हरिद्राभकुसुमे॥

पीतपुष्पा। पाठक्याम्॥ इन्द्रवारुण्याम्॥ झिञ्झिरिटाक्षुपे॥ कर्कोटक्याम्॥

पीतपुष्पी। स्त्री० महापुष्प्याम्॥ पीतदाम्पालके॥ सहदेव्याम्॥ महाकोशातक्याम्॥ त्रपुष्याम्। राजकोशातक्याम्॥

पीतफल:। पुं० शाखोटवृक्षे॥ कर्मरङ्गवृक्षे॥ पीतानिफलान्यस्य॥

पीतफलक:। पुं० शाखोटवृक्षे॥

पीतवालुका। स्त्री० हरिद्रायाम्॥ पीतवर्णसिकतायाम्॥

पीतभद्र:। पुं० किङ्किराते॥

पीतभृङ्गराज:। पुं० स्वर्णभृङ्गारे। हरिप्रिये॥

पीतमणि:। पुं० पुष्परागे॥ गोमेदे॥

पीतमस्त:। पुं० खगान्तरे। कलिकारे॥

पीतमाक्षिकम्। न० मधुप्रभेदे॥

पीतमुण्ड:। खगविशेषे। कलिकारे॥

पीतमुद्ग:। पुं० वस्रो। प्रवेले। शारदे। सोनामूंगा इ० भा० इ० हे०॥

पीतमूलकम्। न० गर्जरे॥ इ० रा० नि०॥

पीतयूथी। स्त्री० स्वर्णयूथ्याम्। सोनजुही० इ० भा०॥

स्यफले । पील्० द्र० भा० ॥ पीलु शिश्लसमीरघ्नं पित्तलंभेदिगुल्मनुत् । स्वादुतिक्तञ्चयत्पीलुतन्नात्युष्णं त्रिदोषहृत् ॥

पीलुकः । पुं० मधूकप्रभेदे ॥

पीलुकुणः । पुं० पीलूनांपाके ॥ तस्य पाकमूलइत्यादिनाकुणप्रत्ययः ॥

पीलुनी । स्त्री० मूर्वायाम् ॥

पीलुपत्रः । स्त्री० लताविशेषे । मोरटायाम् ॥

पीलुपर्णी । स्त्री० बिम्बिकायाम् ॥ मूर्वायाम् ॥ ओषधिभिदि ॥ पीलोरिवपर्णान्यस्याः ॥ पाककर्णेतिङीष् ॥

पीवा । त्रि० स्थूले ॥ प्यायते । प्यैङ्वृद्धौ । प्याप्योः सम्प्रसारणं चेतिक्वनिप् ॥

पीवरः । त्रि० स्थूले । मोटा इति भाषा ॥ प्यायते । प्यैङ् । छित्वरछत्वरेतिष्वरच् प्रत्ययान्तो निपातितः ॥ पुं० कूर्मे ॥

पीवरस्तनी । स्त्री० स्थूलस्तन्याङ्गवि । पीनोध्न्याम् ॥ पीनस्तनविशिष्टायांनार्याम् ॥ पीवराः स्तनाः पीवरौवास्तनौयस्याः स्वाङ्गाच्चोपसर्जनादितिङीष् ॥

पीवरा । स्त्री० अश्वगन्धायाम् ॥ शतावर्याम् ॥ स्थूलायाम् ॥

पीवरी । स्त्री० शालपर्ण्याम् ॥ शतमूल्याम् ॥ प्यायते । प्यैङ् । प्याप्योः सम्प्रसारणं चेतिक्वनिप् स्त्रियांवनोरचेतिङीप् ॥

पुंध्वजः । पुं० गन्धमूषिके ॥

पुंश्चलः । पुं० व्यभिचारिणि ॥ यथा ॥ ललाटोपस्थतास्तिस्रोरेखाःस्युःशतवर्षिणाम् । न्यपत्त्वंस्याञ्चतसृभिरायुःपञ्चनवत्यथ ॥ अरेखिणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलः ॥ इ० गरुडपु० ॥

पुंश्चली । स्त्री० व्यभिचारिण्याम् । अतिचञ्चलायाम् । असत्याम् ॥ तत्स्वास्वरितदोषायथा । अशोकोपिदुःखनेदुःखं यंपुंश्चलीमनः । पुंश्चल्यां योहिविश्वस्तोविधिनासविडम्बितः ॥ यद्विप्कृतस्वयशसाधर्म्मेणस्वकुलेनच । वाञ्छितं नूतनंप्राप्य विनश्यतिपुरातनम् ॥ सदाखण्डंसा ध्यासाक्षोभातस्याः प्रियोऽप्रियः । द्वेषिधर्म्मि पैत्र्यप्रुचैवम्भौनभर्त्तरि ॥ दारुणांपुंश्चलीचित्तं सदाम्लाङ्करकर्म्मणि । प्राणाधिकंरतिज्ञंतास्मृतहत्याहिपुंश्चली ॥ रत्नप्रदंरक्तविज्ञंविपहत्याहिपश्यति । सर्वेषांखलमस्थंवपुंश्चलीगांनकुत्रचित् ॥ दारुणापुंश्चली जातिर्नरजातिभ्यएवच ॥ निष्कृतिः कर्मभोगान्तेसर्वेषामस्तिनिश्चितम् ॥ नपुंश्चलीनाविप्रेन्द्रयावच्चन्द्रदिवाकरौ । अन्यासांकामिनीनाञ्चकीटंहन्तुमया

 

दया । सानास्तिपुंश्चलीनास्त्वकान्तं छन्नंपुरातनम् ॥ रतिज्ञंनूतनंप्राप्य क्षिपत्यन्यंपुरातनम् । कान्तं हत्वा हि नस्त्विवसोपायेनावलीलया ॥ ० ॥ पृथिव्यांयानिपापानिपुंश्चलीष्वेवभारते । तिष्ठन्तिताभ्योनपरा : पापिष्ठा : सन्तिकेचन । (०+०) ॥ पुंश्चलीपरिपक्वान्नंसर्व्वंपातकमिश्रितम् । दैवेकर्म्मणिपैत्रेचदेयंमयतपायसम् ॥ अन्नंविष्ठामयोमूत्रंपुंश्चलीनामिश्चितम् । दत्त्वापितृभ्योदेवेभ्योभुक्त्वानरकंव्रजेत् ॥ शतवर्षंकालसूत्रेपचत्येवसुदारुणे । घोरान्धकारेक्षामयस्तं दशन्तिदिवानिशम् ॥ पुंश्चल्यन्नस्यभोक्तादेवद्विजनराधमः । एकजन्मकृतंपुण्यंतस्यनश्यतिनिश्चितम् ॥ आयुः श्रीर्यशसांनाशोनिरिहलोकेपरत्रच । तस्माद्व्यवहाद्यनयीयंपापभागंकलंकम् । (०+०+) ॥ पुंश्चलीदर्शनेपुण्यंयात्रासिद्धिविघ्नकम् । स्पर्शनेचमहापापंतीर्थस्नानाद्विशुध्यति ॥ स्नानंशर्ममनस्तैवजपस्यदेवपूजनम् । निष्फलंपुंश्चलीनाञ्चभारतेजीवनंयथा ॥ (००+००) ॥ उपस्थितसकामपुंश्चलीत्यागेदोषोयथा रक्ष्युपस्थितांकामात्पुंश्चलींचेज्जितेन्द्रियः परित्यजेधर्म्मभयात्धर्म्मान्नरकंव्रजेत् ॥ (+००+) ॥ सर्वैर्देवतस्यापस्तिस्याज्यस्य गर्हितत्वं च यथा । उपस्थिताचयायोषित्त्याज्याराशिवासेपि । श्रुतौश्रुतमितित्याज्यासर्वैर्देवतपस्विनाम् ॥ अहोसर्वा : परित्याज्याःपुंश्चलीचविशेषत : । धनायु : प्राण्यशसांनाशिनीदुःखदायिनी ॥ स्वकार्यतत्पराशश्वत्परकार्यविघातिनी । निष्ठुरानरघातिन्य: सर्वांपदीजरूपिणी ॥ विद्युद्दीप्तिर्जलरेखाशोभाम्नैवीयथाभवेत् । परद्रोहाशयासम्यक्कुलटाप्रेमतत्परम् । सर्वेभ्योऽपिजन्तुभ्योपि पश्वीत्वासदैवसा । योविश्वसेत्तांसमूढोपिपतत्यपदेपदे ॥ इतिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २३ । २४ । ७२ अध्याय: ॥ पुंसोभर्त्तु: सकाशाच्चलति॰पुरुषान्तरंगच्छति । चलगतौ । अच् । गौरादि : ॥

पुंश्चिह्नम् । न॰ शिश्ने ॥

पुंसवनम् । न॰ दुग्धे । गर्भे । संस्कारविशेषे ॥ द्वितीयेवातृतीयेवा मासिपुंसवनंभवेत् । व्यक्तेगर्भेभवे तृतीयेसीमन्तोन्नयनमथाथवा ॥ पुमान् सूयतेऽनेन । षुञ्॰ । ल्युट् ॥

पुंस्त्वम् । न॰ रेतसि । शुक्रे ॥ पुरुषत्वे ॥

पुंस्त्वविग्रहः । पुं॰ भृत्ये ॥

पुक्कसः । पुं॰ श्वपचे ॥ अधमे ॥ पुत्कुत्सितम् पुण्यं वापुमांसंवाकस

ति । कसगती । अच् । मू॰ कोवा । पृ॰ । निषादाच्छूद्रायांजाते । जातोनिषादाच्छूद्रायांजात्याभवति पुक्कस : ॥

पुक्कसी । स्त्री॰ कालिकायाम् ॥ नील्याम् ॥

पुङ्ग : । पुं॰ मङ्गलाचारे । शराङ्गे । बाणमूले ॥ श्र॰ नै ॥

पुङ्खानुपुङ्खम् । न॰ मङ्गलामङ्गले ॥ यथा । पुङ्खानुपुङ्खविषयेचयासत् परोपिधीरोनमुह्यति मुकुन्दपदारविन्दे । सङ्गीतनृत्यगतिताल्वशंगतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीवेति ॥

पुङ्ग : । पुं॰ न॰ पुञ्जे ॥ इतिशब्दचन्द्रिका ॥

पुङ्गन : । पुं॰ आत्मनि । इतिभूरिप्रयोग : ॥

पुङ्गव : । पुं॰ बलीवर्दे । वृषे ॥ पुमांश्चासौगौश्च ।गोरतद्धितलुकीतिटच् ॥ औषधभेदे ॥ उत्तरपदस्थ : श्रेष्ठे ॥ यथाभीषधे । अशौचे ॥ पुरुषर्षभे ॥ पुमान्गौरिव । उपमितिसमासः । पूर्ववत्टच् ।

पुच्छ : । पुं॰ पश्चात्प्रदेशे ॥ पुं॰न॰ लाङ्गूले ॥ न॰ कलापे । समूहे । लोमवल्लाङ्गूले ॥ पुच्छति । पुच्छप्रमादे । प॰ अच् । पृ॰ । पुच्छभाण्डे तिनिपातनाद्वायमाप : ।

लीचटकाना॰ इतिभा॰ ॥

पुच्छटी । स्त्री॰ । लक्ष्मणाकन्दे ॥ इ॰ राजनिर्घण्ट : ॥

पुच्छी । पुं॰ कुक्कुटे । अर्कवृक्षे ॥ त्रि॰ । लाङ्गूलवति ॥

पुञ्ज : । पुं॰ राशौ । धान्याद्युच्छितवृन्दे ॥ पिञ्जयति॰ पिञ्ज्यतेवा । पिजिहिंसा बलादाननिकेतनेषु । अच्॰घञ्वा । पृ॰ । यद्वा । उन्नत्याप्मांसंजयति । अन्ये॰ ड : ॥

पुञ्जिकस्थली । स्त्री॰ अप्सरोविशेषे ॥

पुट : । पुं॰ वाणपल्लवे ॥ न॰ । जातीफले । उपर्यधोभवापन्नसंयुक्ताष्टाद्विकपालद्वयरूपौषधपाकपात्रे ॥ धात्वादिमारणोपयुक्तान्पुटप्रकाराशास्त्ररसप्रदीप : । लोहादेरपुनर्भावस्सदगुणस्य'गुणाव्यता । सलिलेतरणश्चापितस्तसिद्धि : पुटनाद्भवेत् ॥ गम्भीरेविस्तृतेकुण्डे दिहस्ते चतुरस्रके । वनोपलसहस्रेणपूरितेपुटमौषधम् । कोष्ठेरघं प्रयत्नेनगोविष्ठोपरिधारयेत् । वनोपलमहस्राद्धं कोष्ठिकोपरिनि : क्षिपेत् ॥ वह्निविनि : क्षिपेत्तच्चमहापुटमिति स्मृतम् ॥ १ ॥ कोष्ठभूषा । गोविष्ठा॰ गोष्ठा ॥ +॥ ॥ सपादहस्तमानेनकुण्डे निम्ने तथायते । वनोपलसहस्रेण गर्भमध्ये विधारयेत् ॥ पुटनद्रव्यसंयुक्तांमो

स्रसतुलेखनः ॥ हर्षे वैलार्थमितरः पित्तास्रग्व्रणवातनुत् । इतरोरोगाः । स्नेहमांसवसामज्जमेदः स्या दौषधैः कृतः ॥ स्नेहनः पुटपाकः स्या दुधार्यो हि वाक्शतेतुसः । वाक्शतं कोटिकाशतम् । जाङ्गला नां यकृन्मांसैर्लेखनद्रव्यसंयुतैः ॥ क्षाराम्लोहरजस्ताम्रवङ्गविद्रुमसिन्धुजैः । समुद्रफेनकासीस स्रोतोञ्जनदधिमस्तुभिः ॥ लेखनोवाक्शतंतस्य परंधारणमिष्यते । स्तन्यजाङ्गल मधुाज्यतिक्तकद्रव्यभावितः ॥ लेखना त्त्रिगुणोधार्यः पुटपाकस्तुरोपणः । तिक्तकद्रव्याण्याह । निम्बामृता वृषपटोलनिर्दिग्धिकाभिः स्यात्पञ्च तिक्तकमितिप्रथितोगणोयम् । भाव रेतसर्पणोक्तास्तुक्रियाव्यापत्तिदर्शने । व्यापत्तिदर्शने । मिथ्याकृतपुटपाकजनितव्याधिदर्शने । तत्रास्यमिष्टमाकाशमादर्शभास्कराणि च । नैच्ये तत्तर्पितेनेत्रे यथवापुटपाकवान् ॥ इति भावमिश्रः ॥

पुटपाकलम् । न० मांससाध्यञ्जमान्तरे ॥ गुरुयन्त्रेषायसृपसं तज्ज्ञेयं पुटपाकलम् ॥

पुटभेदः । पुं० नदीवक्रे ॥ पत्तने । नगरे ॥ धातोर्दे ॥ तटिनीमुखे ॥ पक्षाकारेणजलानामवधाने ॥ पुटंसंश्लिष्टं भिनत्ति । भिदिर० । कर्म ण्यण् ॥ पाषाणविशेषे ॥ पुटैःपुटै र्भेद्यते इ० ॥

पुटभेदकः । पुं० पाषाणविशेषे ॥

पुटभेदनम् । न० पत्तने । स्थानीये । नगरे ॥ पुटानिपाचाणिभिद्यन्ते ऽत्र । भिदिर्० । अधिकरणेल्युट् । युज्जा ॥

पुटालुः । पुं० शूकरकन्दे । कोलकन्दे ॥

पुटिका । स्त्री० एलायाम् ॥

पुटितम् । न० अहिपुटे ॥ हस्तपुटे । त्रि० । पाटिते ॥ स्यूते ॥

पुटी । स्त्री० कौपीने ॥ आच्छादने ॥ पत्रादिनिर्मितपुष्पाद्याधारे । पुटिया० पुडी० इ० भा० ॥ गौ० ङीप् ॥

पुटोटजम् । न० श्वेतच्छत्रे ॥ इ० त्रिकाण्डशेषः ॥

पुटोदकः । पुं० नारिकेले ॥ इ० हा०

पुण्डरी । पुं० हस्तिनांमनुष्याणाञ्च चक्षुष्ये क्षुद्रविटपे । शालपर्णीपत्रसमानपत्रे । पौण्डरीके । चक्षुष्ये । सालपुष्पे ॥ इ० शब्द० ॥

पुण्डरीकम् । न० सिताम्भोजे ॥ सितच्छत्रे ॥ भेषजे ॥ पुं० । व्याघ्रे । अग्निदिङ्नागे ॥ कोषकारान्तरे ॥ सहकारे ॥ गणधरे ॥ राजिलाहौ ॥ गजज्वरे ॥ मदनवृक्षे ॥ कमण्डलौ ॥ श्वेतवर्णे ॥ शाली

र्जातिविशेषे ॥ क्षुपविशेषे ॥ तत्र प्रमाणम् । सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् । सोऽस्मिध्वस्तरागस्य पुण्डरीकं प्रचक्षते इति० । पुण्डरीकवर्णयोगात्पुण्डरीकः । अर्श आद्यच् । पुण्डयति । मण्डिभूवायाम् । पुण्डिच । फर्फरीकादयश्चेत्यरीकन् ॥

पुण्डरीकाक्षः । पुं० विष्णौ । नारायणे । हृत्पुण्डरीकेप्रकाशमानेवासुदेवे ॥ तस्यस्मरणादेवशुचिर्भवति । यथा । अपवित्रः पवित्रोवासर्वावस्थाङ्गतोपिवा । यःस्मरेत्पुण्डरीकाक्षंसवाह्याभ्यन्तरः शुचिरितिस्मृतेः ॥ पुण्डरीकमिवाक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच् । पुण्डरीकेषुअक्षिणियस्यवा ॥ पुण्डरीकाख्यानिअक्षिणियस्येतिवा ॥ अयमर्थस्तुहरिस्तु साक्षमितिपुण्डरीकाक्षो वैव्यस्तः ॥ यद्वापुण्डरीकलोकाख्यमश्नुते । अक्षूव्याप्तौ । कर्मण्यण् । तत्कायतिवा । शैवये । आतोनुपसर्गेकइतिकः । अन्येषामपीतिदीर्घः । आङ्प्रश्नेपोवा । तत्सुपीतिसूत्रविभक्तेतिकः ॥ न० । पुण्ड्रर्ये ॥

पुण्डरीयकम् । न० प्रपौण्डरीके । स्थलपद्मे ॥

पुण्डर्यम् । न० प्रपौण्डरीके ॥ पुण्डयति । पुण्डिखण्डने । अच् । पुण्डस्याव्यः प्रधानम् । शकन्ध्वादिः

पुण्ड्रः । पुं० दैत्यविशेषे ॥ इक्षुप्रभेदे । पौण्ड्रा० इ० भा० ॥ अतिमुक्तवृक्षे ॥ कृमौ ॥ पुण्डरीके ॥ तिलके । पुष्पवृक्षविशेषे ॥ इक्षुवृक्षे ॥ देशविशेषेतु पुण्ड्राः ॥ न० । कर्द्दपुण्ड्रादौ ॥ पुण्डति । पुडिखण्डने । स्फायितञ्चीतिरक् ॥

पुण्ड्रकः । पुं० अतिमुक्ते । वासन्त्याम् । माधवीलतायाम् । तिलकवृक्षे । स्थिरपुष्पाम् ॥ इक्षुप्रभेदे । पौण्ड्रा इ० भा० ॥ पुण्डति०पुण्डतेवा । पुडिखण्डने० पुडिच । स्फायीतिरक् । स्वार्थेकन् ॥

पुण्ड्रकेलिः । पुं० इभे । हस्तिनि ॥ पुण्ड्रेपुकेलिर्यस्य ॥

पुण्यम् । न० धर्मे ॥ सुकृते ॥ यथा । पण्डितेनापिकिन्तेनसमर्थेनचदेहिनाम् । यत्पुण्यंभारमुद्वोढुमशक्तःपारलौकिकमिति ॥ तस्माद्यतेतपुण्येषुयएच्छेन्महतींश्रियमिति ॥ विधिविहिते । सदाचारे । शोभनकर्मणि ॥ त्रि० । शोभने । रमणीये । सुन्दरे । पावने । शुभे । पुनाति० पूयतेऽनेनवा । पूञ् । पूञोयण्णुग्घ्रस्वश्चेतियत्णुगागमौह्रस्वश्च । यद्वा । पुण्यति । पुणकर्म्मणिशुभे । इगुपधेतिकः । पुण्येसाधुः । तत्र

साधुरित्ययम् ॥ दयासमं नास्ति पुण्यं पापं हिंसासमं नहीति देवीभागवतम् ॥

पुण्यकम् । न० विधिविहितोपवासकृच्छ्रचान्द्रायणप्राजापत्यव्रतभोजनादिव्रते ॥ पुण्यमेव । संज्ञायां कन् ॥

पुण्यकव्रतम् । न० ब्रह्मवैवर्तोक्ते । स्त्रीकर्त्तव्ये नियमविशेषे ॥

पुण्यकृत् पुं० अश्वमेधादियाजिनि ॥ आश्रमकर्मकर्त्तरि ॥ त्रि० पुण्यकर्त्तरि । धार्मिके ॥ पुण्यकृतवान् सुकर्मपापमन्त्रपुण्येषु कृञः इति कृञः क्विप् ह्रस्वस्येति तुक् ॥ पुण्यं कारयतीति वा । बहुलमन्यत्रापीति णिलुक् ॥

पुण्यगन्धः । पुं० चम्पके । पुण्यो गन्धोऽस्य ॥

पुण्यजनः । पुं० यक्षे ॥ राक्षसे ॥ सज्जनादिवद्विकटवदनतया पुण्यस्यासौ जनश्च ॥ धार्मिके ॥ पुण्याश्रयो जनः । मध्यमपदलोपी समासः ।

पुण्यजनेश्वरः । पुं० कुबेरे । त्र्यम्बकसखे ॥ पुण्यजना यक्षास्तेषामीश्वरः ॥

पुण्यतृणम् । न० श्वेतकुशे ॥

पुण्यदर्शनः । पुं० चाषपक्षिणि ॥

पुण्यफलः । पुं० वनविशेषे । लक्ष्म्या आरामे ॥ न० । धर्मजन्यफले ॥

पुण्यभाक् । त्रि० पुण्यविशिष्टे ॥

पुण्यभूः । स्त्री० आर्यावर्ते ॥ पुण्यस्य भूः । पुण्या चासौ भूमिश्चेति वा ॥

पुण्यभूमिः । स्त्री० आर्यावर्ते ॥ पुण्यस्य भूमिः । पुण्या चासौ भूमिश्चेति वा ॥

पुण्यवान् । त्रि० सुकृतिनि । धन्ये ॥ पुण्यमस्यास्ति । मतुप् । मादुपधायाश्च मतोर्वोऽयवादिभ्य इति वत्वम् ॥

पुण्यश्लोकः । पुं० जनार्दने । विष्णौ ॥ नलइति प्रसिद्धे राजनि ॥ युधिष्ठिरे ॥ पुण्यानि पावनानि श्लोकानि यशांसि यस्य ॥ पुण्यानि श्लोकानि पद्यानि वा यस्मिन् ॥ त्रि० पुण्यचरित्रे ॥

पुण्यश्लोका । स्त्री० द्रौपद्याम् ॥ वैदेह्याम् । सीतायाम् ॥ यथा । पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दन इति पुराणम् ॥

पुण्या । स्त्री० भद्रायाम् ॥ तुलस्याम् ॥ पुण्यजनिकायाम् ॥

पुण्यात्मा । त्रि० धर्मशीले ॥ पुण्य आत्माऽस्य ॥

पुण्याहम् । न० शोभनदिवसे ॥ पुण्यमेतदहश्च । राजाहःसखिभ्यष्टजिति टच् । उत्तमैकाभ्यामित्यह्नादेशो न । पुण्यसुदिनाभ्यामिति क्लीवत्वम् ॥ मङ्गले ॥ यथा० पुण्याहवाचनम् ॥

पुण्याहवाचनम् । न० देवादिकार्यार्थं

पुत्र :

मितवार्यं मुनिपुङ्गव । वाल्ये वयसि
सम्प्राप्ते रिपुवत्वर्त्ततेसदा ॥ पित
रंमातरंचैव क्रीडमानोहिताडयेत्
ताडयित्वाप्रयात्येवंप्रहस्यैवपुन :
पुन : ॥ पुनरायातितं तत्रपितरं
मातरंपुन : । सक्रोधोवर्त्तेनित्यं
नैवकर्मणिसर्वदा ॥ पितरंमारयि
त्वातु मातरंचपुन : पुन : । प्रया
त्येवंसदुष्टात्मा पूर्ववैरानुभावत :
॥ ३ ॥ अथात : संप्रवक्ष्यामियस्मा
ल्लभ्योभवेत्प्रिय: । बालभाव: प्रियं
कुर्यात्वाल्ये नटनक्रीडनै: ॥ वय:
प्राप्यप्रियंकुर्यान्मातापित्रोरनन्तर
म् । भक्त्यासमोपयेन्नित्यं तावुभौ
परिपालयेत् । कोमलेनवचसाचैवप्रि
यसम्भाषणेनच । मृतौगुरुसमाख्या
यस्नेहेनरुदतेपुन : । श्राद्धकर्माणि
सर्वाणि पिण्डदानादिकांक्रियाम् ।
करोत्येवंसदु : खार्त्त स्तेभ्योयात्रां
प्रयच्छति ॥ ऋणत्रयान्वित : सोहि
प्रियांपयतिनिश्चित : । यस्माल्लभ्यं
भवेत्कान्तप्रयच्छतिनसंशय. ॥ पु
त्रोभूत्वासद्याप्रासरनेनविधिनाखि
ल ॥ ४ ॥ उदासीनप्रवक्ष्यामितंवा
ये प्रियसाम्प्रतम् । उदासीनेनभावे
नसदैवपरिवर्त्तते ॥ ददातिनैवग्र
ह्णातिनक्रुध्यतिनतुष्यति । नैवोप
यातिसन्त्यज्यउदासीनोद्विजोत्तम ।
तवाग्रे कथितंसर्वं पुत्राणांगतिरीदृ

शी । यथापुत्रास्तथाभार्या पितामा
ताथबान्धवा : ॥ भृत्याश्चान्ये समा
ख्याता : पशवस्तुरगास्तथा । गजा
महिष्योदासाश्चसर्वेऋणसम्बन्धिन: स्व
मी ॥ ५० ॥ सुपुत्रलक्षणन्तु । श-
शिखण्डवाच । पुत्रस्यलक्षणंपुण्य
तमाख्येप्रवदाम्यहम् । पुण्यप्रसक्तो
यस्यात्मासत्यधर्मरत : सदा ॥ बु
द्धिमान्ज्ञानसम्पन्नस्तपस्वीवाग्विदा
म्बर : । सर्वकर्मसुसद्धीरोवेदाध्य
यनतत्पर : । सर्वशास्त्रप्रवक्ताचदे
वब्राह्मणपूजक : । याजक : सर्व
यज्ञानां दातात्यागी प्रियम्वद : ॥
विष्णुध्यानपरोनित्यं शान्तोदान्त :
सुहृत्सदा । पितृमातृपरोनित्यंस
र्वस्वजनवत्सल : ॥ कुलस्यतारको
विद्वान् कुलस्यपरितोषण : । एवं
गुणै : सुसंयुक्त : सुपुत्र : सुखदाय
क : ॥ पुत्रस्यजन्मतीर्थत्वं यथा ।
सर्वतीर्थाद्वरंतीर्थंपुत्रतीर्थमुदाहृतम्
॥ यद्वैणोर्वैष्णवदे पौसर्वधर्मवहिष्कृ
त : । सुभापुत्रतीर्थेन पवित्रोऽगा
त्परंपदम् ॥ सत्पुत्रंपरमंतीर्थंप्राप्य
मुच्यन्तिपूर्वजा : । पितापितृऋणमु-
क्त : स्यात्जातेपुत्रे महात्मनि ॥
वैष्णवपुत्रस्यपूर्वंपुत्रपत्नात्वं यथा
। वैष्णवोयदिपुत्र:स्यात्मतारयति
पूर्वजान् । पितृनथस्वान्वंशांस्ता
रयत्यतिपावन : ॥ + ॥ कुपुत्रजन

पुत्र :

नैमित्तृणांनरकगमनंयथा । तथाय-दिकुपुत्रःस्यात्तेनमज्जन्तिपूर्वजाः । सुघोरेनरकेदीनाः भपन्तिचमुहुर्मुहुः ॥ यथा जलेकुप्लवेनतरन्मज्जतिमूढधीः । तथापिताकुपुत्रेणतमसान्धेनिमज्जति ॥ जातमात्रे कुलेजन्तौसंशेरतेपितामहाः । किमेषोऽधोनयेदस्मात्तत्कर्त्तुं वावैष्यावोभवन् ॥ इतिपाद्मे भूमिखण्डे ११ । १२ । १८ । १२० अध्यायः ॥ सप्तविधाः पुत्रा यथा । वरजो वीर्यजस्तै यदीभवः माणकस्तथा । विद्यामन्त्रसुतानास्वगृहीतः सप्तमः सुतः ॥ इतिब्रह्मवैवर्त्ते ॥ इति ब्रह्मवैवर्त्तप्रकृतिखण्डे ५६ अध्यायः पुत्रमुखदर्शने पुण्यं यथा । श्रीपार्वत्युवाच । हेनमागच्छप्राणेशतत्रस्तांफलदायकम् । कल्पे कल्पेऽध्यासतेयं तपश्चागच्छमन्दिरम् ॥ शीघ्रं पुत्रमुखंपश्यपुण्यबीजंमहोत्सवम् । पुन्नामनरकत्राणकारणंभवतारणम् ॥ स्नानश्चसर्वतीर्थेषुसर्वयज्ञेषुदक्षिणा । पुत्रस्यदर्शनस्यास्यकलांनार्हन्तिषोडशीम्सर्वदानेनयत्पुण्यं यत्पृथिव्याः प्रदक्षिणं पुत्रदर्शनपुण्यस्यकलां नार्हन्तिषोडशीम् सर्वास्तपोभिर्विप्रभूणां यदेवानशनैः व्रतैः । तत्पुत्रोद्भवपुण्यस्यकलानार्हन्तिषोडशीम् । यद्विप्रभोजनैःपुण्यंयद्देवसुरसेवनैः । सत्पुत्रप्राप्तिपुण्यस्यकलानार्हन्तिषोडशीम् ॥ इति ब्रह्मवैवर्त्ते गणपतिखण्डे ६ ऽध्यायः ॥ ०( ††† )० विद्यादिरहितस्यपुत्रस्यनिन्दायथा । कोर्थः पुत्रेणजातेनयोनविद्वान्नधार्मिकः । तयागवाकिंक्रियते यानदोग्ध्रीनगर्भिणी ॥ सचमध्यमोत्तमाधमभेदात्त्रिविधः । यदुपात्तं यशः पित्रा धनंवीर्यमथापिवा । तन्नाशयतियस्तुसनरोमध्यमःस्मृतः ॥ तद्वीर्याद्यधिकंयस्तुपुनरन्यत्स्वशक्तितः । निष्पादयतितंप्राज्ञावदन्तिनरमुत्तमम् । यः पित्रासमुपात्तानिधनवीर्ययशांसिच । न्यूनतांनयतिप्राज्ञास्तमाहुः पुरुषाधममितिमार्कण्डेयपुराणम् ) ॥ ०†० ॥ जायमानोहरेद्दारान् वर्द्धमानोहरेद्धनम् । म्रियमाणोहरेत्प्राणान् नास्तिपुत्रसमोरिपुरितिनुकुपुत्रजन्यदुःखमनुभवंकुर्वाणस्योक्तिः ॥ संसारिणः सुखंपुंसस्त्वसुखदर्शनम् । कुपुत्राचरितादुःखंमरणाभ्यधिकंविदुः ॥ ०( ०†० )० पुत्रस्यप्रशंसा यथा । धनंनान्यश्वरत्नं यानत्सर्वंपुण्यहेतुकम् । नभविसंयत्पुत्रेयाताद्द्रव्यंनिष्फलंभुवि ॥ शतकूपाधिकावापीशतवापीसमंसरः । सरः शताधिकोयज्ञः पुत्रोयज्ञशताद्वरः

वत्काव्यमितिनिषेधोत्तरपठितेन ० अभ्रुकुंसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्ध्रस्वः ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटिः । स्त्री० भ्रूकुटी । भ्रूकुट्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन । भ्रुवोः कुटिः । भ्रुकुंसश्चप्रक्रिया ॥

भ्रुकुटी । स्त्री० भ्रुकुटी । भ्रुवोः कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी ॥ अभ्रुकुंसादीनामितिवार्त्तिकाद्ध्रस्वः ॥

भ्रूः । स्त्री० नेत्रोपरिभागस्थरोमराज्यां चिल्लिकायाम् । भौं० इ० भा० ॥ भ्रम० । भ्रमेर्डूः । टिलोपः ॥ यद्वा भ्रमति । भ्रमुचलने । भ्रमेर्डूः ॥ यद्वा । भ्राम्यति । क्विप् । जङ्मादीनामिति० गमः क्वाविस्यच वार्त्तिकेन०मलोपकूङ्वादेशः ॥

भ्रूकुंसः । पुं० भ्रूकुंसे । भ्रुकुंसे । नर्त्तकस्त्रिया० इ० भा० ॥ भाषणार्थकचुरादिण्यन्तात्कुंसेरच् । भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वोऽङ्योगालवस्येतिसूत्रे०इयङ्०वङ्भाविनाम्० धानास्वनेतिवार्त्तिकाद्ध्रस्वनिषेधः ॥

भ्रूकुटिः । स्त्री भ्रुकुट्याम् ॥ भ्रुवोः कुटिः इयङ्वङ्भाविनामिति निषेधाद्ध्रस्वोनभवति ॥

भ्रूकुटी । स्त्री० भ्रकुट्याम् । भ्रुकुटी ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी । इयङुवङ्भाविनामितिह्रस्व निषेधः ॥

भ्रूणः । पुं० स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके ॥ गर्भस्थाम् ॥ श्रोत्रियद्विजे ॥ भ्रूणते । भ्रूण आशाविशङ्कयोः । घञ् ॥

भ्रूणहत्या । स्त्री० गर्भस्थबालकहनने ॥ यथा । विविवाहकृतयेनमस्कारोतिचतुर्थकम् । कुलानिपातयेत्सप्तभ्रूणहत्याव्रतञ्चरेत् ॥

भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि ॥ भ्रूणंहतवान् । हन० । ब्रह्मभ्रूणवृत्रेषुक्विप् ॥ ब्रह्मघ्नि ॥ भ्रूणहा० वरिष्ठब्राह्मणहन्तोच्यत इतिव्याख्यानात् ।

भ्रूभङ्गः । पुं० भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोभङ्गः ॥

भ्रेषः । पुं० भ्रंशः पापं । यथोचितात्० भ्रंशे ॥ भ्रेषणम् । भ्रेषृ चलने । घञ् । चलने ॥

भ्रेषणम् । न० चलने ॥

भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातनात्तकारादेशः ॥

+ —॥— +

मः । पुं० मकारे ॥ यमे ॥ समये ॥ विधे ॥ मधुसूदने ॥ चन्द्रशेखरे । ब्रह्मणि ॥ ब्रह्माणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ विधुरौ०ऽऽऽ० ॥

मंहिष्ठः । त्रि० महनीये । पूजनीये ॥

मकरः । पुं० नक्रे । ग्राहः प्रभेदे । मगर० इतिभाषाप्रसिद्धे ० भगवाणांमध्ये भगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । चाकोबेरे ॥ हस्ताति । कृषिसायाम् । पञ्चदाष् । मनुष्याणांकरः । पृषोदरादिः ॥ यद्वा । मकते । मकिमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकंराति । रादाने । आतोनुपेति कः ॥ दर्पणेऽप्युक्तः सारस्वतकोषे ॥ पर्दध्वजे ॥

मकरकुण्डलम् । न० मकराकृतिकर्णाभरणे ॥

मकरकेतनः । पुं० कामदेवे ॥ मकरः केतनंयस्य सः ॥

मकरध्वजः । पुं० कंदर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्य सः ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तत्त्करणप्रकारोन्यथरसेन्द्रचिन्तामणौ ॥

मकरन्दः । पुं० पुष्परसे ॥ मकरमपि द्यति० कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिकः । पृषोदरादिः ॥ यद्वा । मकरमधन्दति । अदिवन्धने । कर्मण्यण् । शकन्ध्वादिः ॥ कुन्दपुष्पवृक्षे ॥ न० किञ्जल्के ॥

मकरमुखी । स्त्री० प्रणाल्याम् । पत्तनस्य पतज्याम् ॥

मकरन्दवती । स्त्री० हृष्टवन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूहः । पुं० मकराकृतिपत्तन्यविन्यासे ॥ बराहव्यूहविपर्यये-यमकरव्यूहोभवति । तिमाऽस्य पश्चाश्चेत्तमभयसंनिमर्च्छेत् ॥

मकराकरः । पुं० समुद्रे ॥ मकराणामाकरः ॥

मकराकारः । पुं० सद्यवारके । पड्न्यं ॥

मकराङ्कः । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिपः । पुं० शनिग्रहे ॥ मकरराशिविशेषस्याधिपः ॥

मकरालयः । पुं० अब्धौ ॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालयः ॥

मकरी । पुं० समुद्रे ॥ मकराः सन्त्यस्मिन् । अतइनिठनाविति० इनिः ॥

मकुटम् । न० मुकुटे । किरीटे ॥ मकुटेऽत्र० ॥ मकि० । बाहुलकादुटः । [illegible]ाग्रस्यानित्यत्वान्नुम् ॥

मकुतिः । स्त्री॰ शूद्रशासने ॥

मकुरः । पुं॰ मुकुरे दर्पणे ॥ बकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि॰ । मकुरदर्दुरादिति साधुः ॥

मकुलः । पुं॰ न॰ मुकुले ॥ बकुलद्रुमे ॥

मकुष्ठः । पुं॰ वनमुद्गे । मोठ॰ इ॰ प्र॰ व्रीहिविशेषे । मकुष्ठो वातलो ग्राहीकफपित्तहरो लघुः । वह्निजिन्मधुरः पाकेक्रिमिकृज्ज्वरनाशनः ॥ चि॰ मंथरे ॥

मकुष्ठकः । पुं॰ वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते॰ मङ्कयतीवा । मकि॰ । लाङ्गलकादुलुमभावश्च । तिष्ठति । ष्ठा॰ । क्वुन् । मकुष्ठा-सौख्यकश्च । पूर्वपदादितिषः ॥

मकूलकः । पुं॰ मुकूलके । वघु दन्त्यामोषधौ ॥ मङ्कते । मकि॰ । खर्जपिच्छादिभ्यऊरोलचावितिऽ- पिच्छादित्वादूलच् स्वार्थेकन् ॥

मक्कल्लः । पुं॰ शूलरोगविशेषे ॥ यथा । सूताया हृच्छिरोबस्तिशूलमक्कल्लसंज्ञितम् । यवक्षारं पिबेत्तत्र मस्तुनोष्णोदकेनवा ।

मक्का । स्त्री॰ खुराशनाभिधे देशे ॥

मक्कुलम् । न॰ शिलाजतुनि ॥

मक्केशः । पुं॰ ) खुराशानदेशस्थे
मक्केश्वरः । पुं॰ ) शिवे ॥

मक्कोलः । पुं॰ शिलाधातौ । सितोपले । मक्कोल॰ खड़ियामाटी॰गोलू॰ इ॰ भा॰ ॥

मघः । पुं॰ खदीपाच्छादने ॥

मघवीर्यः । पुं॰ पियालवृक्षे ॥

मक्षिका । स्त्री॰ कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी॰ इ॰ भा॰ ॥ मशति । मशशब्दे रोषकृतेच । इषिमशिभ्यां सिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । क्वुन्॰ ख़ल्वा ॥

मक्षिकामलम् । न॰ सिक्थके ॥

मक्षीका । स्त्री॰ मक्षिकायाम् ॥

मखः । पुं॰ यज्ञे ॥ मखन्तिदेवा अत्र धनेनवा । मखगतौ । हलश्चेति॰ घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाकचिदपवादविषयेप्युत्सर्गोभिनिविशते॰ इतिघञ्विषयेपिपुंसीतिघः ॥ यद्वा । मह्यते । मह॰ । नर्हिर्खोपश्च॰महेर्घ इतिखोन्तोपश्च ॥

मखत्राता । पुं॰ श्रीरामचन्द्रे ॥ मखानांत्राता ॥

मखवह्निः । पुं॰ प्रवीते । यज्ञाग्नौ ॥

मखाग्नि । पुं॰ महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न॰ पद्मबीजाभे । पानीयफले । मखाना॰ इ॰ भा॰ ॥ मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत् ॥

कृतश्रासयत्न : सद्गलकामी वरसूप
गाव्य : । दाताप्रतापीवसुधाधिपो
सोपुनर्वसौयस्यभवेत् प्रसूतिरित्य-
धैकवचनगाप्ताद्विकम् ॥
पुनान : । त्रि० पवित्रीकुर्वाणे । पुना
ति । पूञ् । शानच् । प्वादीनांह्रस्वः ॥
पुंनाग : । पुं० सितोत्पले । जातीफले ।
॥ नागकेशरे । स्वनामख्यातवृक्षस्य
पुष्पद्रुमविशेषे । पुरुषे । तुङ्गे । श्वेत
पे । देशवल्लभे । गुर्जरदेशसंदेशराष्ट्र
तिख्याते । नरश्रेष्ठे ॥ यथा । सर
लार्थिरगायन्तो घनायन्तो धलिद्रुमाः
। नगमीनचपुंनागोस्यस्मिन्संसार
कानने ॥ पुमान्नागइव । उपमितस
मासः । पुंनागोस्त्रियाः प्राधान्यात्
सर्वत्र ॥
पुंनाट : । पुं० चक्रमर्दे ॥
पुंनाडः । पुं० चक्रमर्दे ॥ पुमांसंनाड
यति । नडभ्रंशे । अण् । अस्याम्
न्नस्वानुस्वारपरसवर्णौ ॥
पुंनामनरकः । पुं० नरकविशेषे ॥ पुंना
मनरकंघोरनिनार्थंप्राहुस्सर्वत : ॥
पुपूषत् । त्रि० पवितुंसाधयितुंनिर्वुती
वर्तुमिच्छतिकर्तरि । पुनाते : सन्न
न्तात्लट : शत्रादेशः । सनिग्रहगु
होश्चेतिचकारादिट : प्रतिषेधः ॥
पुप्फुल : । पुं० उदरस्थवायौ । इति
भूरिप्रयोग : ॥
पुप्फुस : । पुं० बीजकोषे । पद्मबीजा

धारे । वराटके । फो फडा । फेफडा
चद्रतिख्याते वामपार्श्वस्थमलाशये
। रक्तफेनजे । यथा । हृदयाद्वामतो
ऽधश्चपुप्फुसोरक्तफेनजे इति ॥
पुमर्थ : । पुं० धर्मादिषुचतुर्षु । पुरुषा
र्थे । पुंसोर्थात् : पुरुषस्यार्थः प्रयो
जनंयस्मिन् ॥
पुमान् । पुं० पञ्चजने । पुरुषे । पूरुषे
। नरे ॥ पाति । पा । म्पातेर्डुमसु
न् ॥ क्वचित्पूञोडुमसुन्निति पाठ :
। तत्रपुनाति । पूञ्पवने । यथा-
स्वकुलोत्सेधाय : पुमान्सप्रकाशते
आत्मनि । देवतिर्यङ्मनुष्येषुपुंना
माभगवान्हरिः । स्त्रीनाम्नीलक्ष्मी
मैत्रेयनानयोर्विद्यतेपरमितिविष्णु
पुराणम् ॥ यावन्नविन्दतेजायांताव
दर्धोभवेत्पुमान् । यस्माज्जे : परि
हृतंस्मशानमिवतद्गृहम् ॥
पू : । स्त्री० पुर्याम् । नगरे । पत्तने ।
अट्टादिविशिष्टपुरे । पिपर्ति । पॄ०
। आभ्यासेतिक्विप् । उदोष्ठ्यपू॒त्
। रपर : । वोरितिदीर्घ : ॥ पृथ्वी
। पुर० सं० क्विप् वा ॥
पुर : । पुं० गुग्गुलौ । पीतभित्कटा
स् । न० । गेहे । पाटलिपुत्रे । पु
प्पादौमोदकाख्ते । नागरमुस्तायां
म् । चर्म त्रि । गृहोपरिगृहे । देहे
। शरीरे । शरीरंत्रिपुरमिवपुरमुदा-
रपालाधिष्ठानाद्यनेकपुणोपकरणस

म्येत्तिदर्शनाच्छरीरमपिपुरम् । पुरञ्जसोपकरणं स्वात्मनाऽसंहतस्वस्वस्वाम्यर्थंहष्टम् । तथेदंपुरसामान्यादनेकोपकरणसहितं शरीरंस्वात्मनाऽसंहत राजस्थानीयस्वाम्यर्थं भवितुमर्हतीत्यनुध्येयम् । राजनामधिष्ठितराजधान्याम् । विपत्तिं । पृ० । सू० क : । यद्वा । पुरति । पुरअग्रगमने । इगुपधेतिक : ॥ न० । स्त्री० बह्वादिविभिन्नस्थाने । बहुग्रामीयव्यवहारस्थाने । नगरे । पत्तने । कटके । पट्टे । निगमे ॥ अस्यलक्षणमत्स्यपुराणेराजधर्मेद्रष्टव्यम् ॥

पुर:सर : । त्रि० अग्रगे । अग्रेसरे । पुर : सरति । सृ० । पुरोऽग्रतोऽपुसर्त्तेरिति ट : ॥

पुरञ्जन : । पुं० जीवे । जन्म नापुरञ्जनयतीतिव्याख्यानात् ॥ पुरर्यंपुरञ्जनंविद्याद् यद्व्यनक्त्यात्मन : पुरम् । एकद्वित्रिचतुष्पाद्बहुपादमपादकमितिश्रीभागवतम् ॥

पुरञ्जनी । स्त्री० बुद्धौ ॥ यथा । नविदामवयंसम्यक् कर्त्तारंपुरुषर्षभ । आत्मनश्चपरस्यापियोगोंनामचयत् कृतम् ॥ राजन्नूनटोया : सर्वेतिमामाद्यपुरञ्जनीमितिभागवतम् ॥

पुरञ्जय : । पुं० सूर्यवंशीयराजविशेषे । काकुत्स्थे ॥ त्रि० पुरजयकर्त्तरि ।

पुरटम् । न० सुवर्णे ॥

पुरणः । पुं० समुद्रे ॥ पूर्यते । पृ० । कृपृवृजिमन्दिनिधाञ : क्यु : ॥

पुरतटी । स्त्री० हट्टाम् । हट्टीपुरतटीमतेतिहारावली ॥

पुरत, : । अ० अग्रतोर्थे । प्रथमे ॥ पुरति । पुर० । बाहुलकात्अतसुच्

पुरद्वारम् । न० गोपुरे ॥ पुरस्यद्वारम् ॥

पुरद्विट् । पुं० शिवे ॥ पुरंद्वेष्टि । द्विष० ॥ क्विप् ॥

पुरन्दर : । पुं० इन्द्रे । पुरहूते । शक्रे ॥ शत्रूणांपुरोदारयतीतिविग्रहे । पु:सर्वयोर्दारिसहोरितिविदारणार्थकाद्दृधातोःखच्प्रत्ययेवाचयमपुरन्दरौचेतिनिपातित : ॥ चौरे । यथा । समासमीनायदिया कयालासमांसमीनादगवेनवःस्यु: पुरन्दरस्याविषयंवदिष्यात्पुरन्दरस्यापिपुरंनयाचे । न० । चविके ॥

पुरन्दरा । स्त्री० गङ्गायाम् । इतिशरावली ॥

पुरन्ध्रि : । स्त्री० पुरन्ध्र्याम् ॥

पुरन्ध्री । स्त्री० सपुत्रमधवायाम् । कटुम्बिन्याम् ॥ पुरन्ध्रीरं धारयति । धृञ्० । स्वार्थेण्यन्त : । संज्ञायांभृतृवृजिधारिसहितपिदम: । गौ०ङीप् । पृ० । सीमान्ते ॥

पुरविजयी । पुं० पुरांविजेतरिशिवे ॥

पुरश्चरणम् । न० मन्त्रार्थसाधनाय जपहोमादिक्रियायाम् ॥ यथा । जपहोमौतर्पणञ्चाभिषेकोविप्रभोजनम् । पञ्चाङ्गोपासनंलोकेपुरश्चरणमिष्यते ॥

पुरश्छदः । पुं० तृणविशेषे । दर्भे । सोमपथे । उलु०ङ्ग० गौड़भा० ॥

पुरः । अ० अग्रे ॥ प्रथमे ॥ प्राच्यांदिशि ॥ पूर्वकाले ॥ पूर्वस्मिन्पूर्वस्मात्पूर्वोवाएवम्पूर्वस्याम् पूर्वस्याः पूर्वावावसत्यागतोरमणीयंवा। पूर्वाधरावराणामसि पुरधवश्चैषामितिवसिः पुरधादेशश्च ॥

पुरस्कार : । पुं० पुरस्क्रियायाम् । अभियोगे ॥ पूजायाम् ॥ पुर : क्रियतेऽनेन । कृञ्० । घञ् ॥

पुरस्कृत : । त्रि० अभिशस्ते ॥ अरिग्रस्ते ॥ अग्रेकृते ॥ पूजिते ॥ स्वीकृते ॥ सिक्ते । अभिषिक्ते । पुरोऽकारि । कृञ्० । क्तः । पुरोऽव्ययमितिगतित्वम् । नमस्पुरसोरितिसत्वम् ॥

पुरस्तात् । अ० पुरतः । सप्तम्यर्थे ॥

पुरस्क्रिया । स्त्री० पुरस्कारे ॥

पुरस्तात् । अ० प्रथमे ॥ प्राच्याम् ॥ अग्रतोऽर्थे ॥ पुरार्थे ॥ अग्रभागे ॥ पूर्वस्मिन् पूर्वस्यां वा पूर्वस्मात् पूर्वस्या वा । पूर्वः पूर्वा वा । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्ताति : अस्तातिचेतिपूर्वस्यपुरादेशः ॥

पुरा । अ० पुराणे । निकटे ॥ प्रबन्धे ॥ अतीते ॥ भाविनि ॥ प्रतीपे ॥ पुरति । पुर० । आ० का ॥ चिरन्तने ॥ चिरातीते ॥ भविष्यदासन्ने ॥ गच्छपुरादेवोवर्षिष्यति । समनन्तरंवर्षिष्यतीत्यर्थः ॥

पुरा । स्त्री० पूर्वदिशि ॥ सुगन्धिद्रव्यविशेषे । दिव्यायाम् । गन्धाढ्यायाम् । गन्धकुट्याम् ॥

पुराकल्प : । पुं० अर्थवादान्तरे । ऐतिह्यसमाचरिततयाकीर्तने । पूर्वपुरुषैराचरितत्वाभिधाने ॥ यथा । पुराकल्पे तुनारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्चवेदानां सावित्रीवचनंतथेतियम : ॥ युगान्तरे ॥ यथा । पुराकल्पएतदासीत्-संस्कारकालोत्तरंब्राह्मणाव्याकरणंस्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्योवैदिका: शब्दाउपदिश्यन्तेतदद्यत्वेनतथा-वेदमधीत्यत्वरितावक्तारोभवन्तीतिमहाभाष्यम् ॥

पुराकृतम् । त्रि० प्रारब्धकर्मणि ॥ पूर्वकालकृतपुण्यादौ ॥

पुराण : । पुं० पणे ॥ षोडशपणे ॥ आत्मनि । सर्वकारणे । धनाद्यात्मनि ॥ सचपुरापिनवएकरूपएवनत्वधुनानूतनतांकाञ्चिदवस्थामनुभव

ति। योहिद्व्ययवोपचयद्वारेणाभिनि र्वर्त्ततेसइदानींनघोयथाकुम्भादिः। तद्विपरीतस्त्वात्मापुराणोऽनभिव्यक्त :॥ न० सर्वपुराणसामान्यपञ्चलक्षणे। सर्गश्चप्रतिसर्गश्चवंशोमन्वन्तराणिच। वंशानुचरितञ्चेति पुराणंपञ्चलक्षणम्॥ (इत्यमरः)॥ इतिपञ्चलक्षणलक्षितेमत्स्याद्यष्टादशसु। यथा। मद्वयंभद्वयञ्चैव ब्रत्रयं वचतुष्टयम्। अनापलिङ्गकूस्कानि पुराणानिपृथक्पृथगिति॥ पुराभवमित्यस्मिन्नर्थे सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ। तुट्चेति०ट्यु-ट्युलौ। पूर्वकालैकेतिनिपातितत्वादभावः॥ पुराणप्रोक्तेषुब्राह्मणकल्पेष्विति निपातितोऽयं॥ पुं०न० कार्षापणे॥ त्रि०। प्रत्ने। पुरातने। पुराणी० पू० भा० ॥

पुराणग : ॥ पुं० प्रजापतौ। ब्रह्मणि॥

पुराणपुरुष : । पुं० विष्णौ। पुराणश्चासौपुरुषश्च॥

पुराणी। स्त्री० चिरन्तन्याम्॥ पुराभवा। टित्त्वान्ङीप्॥ वक्षादित्वात्पक्षेङीप्वा॥

पुरातन :। पुं० परमात्मनि॥ कालेनापरिच्छिन्नत्वात्पुरापिभवतीति सतधोच्यते॥ त्रि०। चिरन्तने। पुराणे। प्रत्ने॥ सनातिगुरुपरम्परागते॥ पुराभव :। सायंचिरमि तियुट्युलौ। अवाधकान्यपिनिपातनानिभवन्तीतिपक्षेतुट्॥

पुरातनी। स्त्री० चिरन्तन्याम्॥ टित्त्वान्ङीप्॥

पुराधिप :। पुं० पुरपालके॥

पुराध्यक्ष :। त्रि० नगराधिकृते॥

पुरारिः। पुं० त्रिपुरान्तके॥ शिवे॥

पुरार्द्धविस्तरः। पुं० खेटे॥ शाखानगरे॥

पुरावसुः। पुं० भीष्मे। पाण्डवानां पितामहे॥

पुरावृत्तम्। न० इतिहासे। पूर्वचरिते॥ पूर्ववृत्तप्रतिपादकव्यासादिप्रणीतग्रन्थे॥ पुरावृत्तमाचष्टे। पुरावृत्तमाख्यानम्। एवन्तात्पचाद्यच्॥

पुराश्रुतिः। स्त्री० पुरातन्यांगाथायाम्॥ अन्तकानिश्रुतानिश्रुत्यन्तीतिपुराश्रुतिः॥

पुरासिनी। स्त्री० सहदेवीलतायाम्॥

पुरासुहृत्। पुं० शिवे॥ हे० ॥

पुरिः। पुं० राजनि॥ स्त्री० पुर्याम्॥ नद्याम्॥ पिपर्त्तिपूर्यतेवा। पॄ॰। कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्चेति इः॥

पुरी। स्त्री० नगर्याम्॥ नृपावासः पुरीप्रोक्ताविशांपुरमपीष्यते॥ तीर्थविशेषे। अयोध्यामथुरामायाकाशीकाञ्चीअवन्तिका। पुरीद्वारावतीचैव

पुरोटि:। पुं॰ पत्रभ्रंश्कारे । रायभाटिक्॰गौ॰भा॰ ॥ पुरोटि:पुरसंस्कारेइतिशरावली ॥

पुरोडाश: । पुं॰ हविर्भेदे । यवचूर्णनिर्मितरोटिकाविशेषे ॥ पिष्टकस्थमस्याम् ॥ हुतशेषे ॥ सोमरसे ॥ पुरोदाश्यते । दाशृदाने । कर्मणिघञ् । पौरोडाशपुरोडाशेस्यच निपातनाद्दस्यडत्वम् ॥

पुरोडाश्यम् । त्रि॰ पुरोडाशीये । हविर्योग्ये ॥

पुरोत्सवा । स्त्री॰ महामेदायाम् ॥

पुरोधा: । पुं॰ पुरोहिते ॥ पुरोऽग्रे धीयते । डुधाञ्॰ । पुरसिचेति॰ धाञोऽसि: ॥

पुरोभागी । त्रि॰ दोषैकदृशि । दोषमात्रदर्शिनि ॥ पुर: पूर्वं भजते । भज॰ । घिनुण् ॥ दोषैकदृक्पुरोभागीतुश्चर्यत ॥ असूयिनि ॥

पुरोहित: । पुं॰ शान्त्यादिकारि । पुरोधसि ॥ पुरोदृष्टादृष्टफलेषुकर्मसु॰धीयते आरोप्यते य: । डुधाञ्॰ । क्त: । दधातेर्हि: ॥ चर्व्याम्स्वदृष्टानौत्पात्ये कुशल:स्यात् पुरोहित: । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥ तच शास्त्रान्तरे यथा । वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायण: । आशीर्वादवचोयुक्तएषराज्ञ: पुरोहित इति ॥ वर्जनीयस्तुयथा । काणंव्यङ्गमपुत्रंवाऽनभिज्ञमजितेन्द्रियम् । नङ्गस्व्याधितंवापिनृप:कुर्यात्पुरोहितमिति ॥

पुर्यष्टम् । न॰ पुर्यष्टके ॥

पुर्यष्टकम् । न॰ ज्ञानेन्द्रियाद्यष्टके । यथा । ज्ञानेन्द्रियाणिपञ्चैवपञ्चकर्मेन्द्रियाणिच । मनोबुद्धिरहङ्कारश्चित्तञ्चेतिचतुष्टयम् ॥ प्राणोपानसमव्यानोदानाख्यास्तथैवच । सनागकूर्मकृकलदेवदत्तधनञ्जया: ॥ सूत्रधारोयवा एवं वायुरित्यसभूतसूक्ष्माणिपञ्च । अविद्याकामकर्माणिलिङ्गंपुर्य्यष्टकंविदुरिति ॥ अन्यच । भूतेन्द्रियमनोबुद्धिवासनाकर्मवायव: । अविद्याचाष्टकंप्रोक्तंपुर्यष्टमृषिसत्तमै: ॥ अपिच । ज्ञानेन्द्रियाणिखलुपञ्च तथापराणि कर्मेन्द्रियाणि मनआदिचतुष्टयञ्च । प्राणादिपञ्चकमथोवियदादिपञ्चकामश्चकर्मचतम: पुनरष्टधाम् ॥ पुरीणामष्टकम् ॥

पुल: । पुं॰ पुलके । त्रि॰ विपुले ॥

पुलक: । पुं॰ कृमिभेदे । प्रस्तरविशेषे ॥ तस्करपनीतान्यवद्दष्टव्य ॥ मणिदोषे ॥ रोमाञ्चे । त्वक्पुष्पे ॥ हरिताले । गजान्नपिण्डे ॥ गन्धर्वे ॥ गल्वर्के॰इतिहेमचन्द्रपाठ: ॥ असुराज्यामइतिहेमचन्द्र: । न॰ पर्वती

यष्टिसिकाथि० । कहुछे ॥

पुलकित : । त्रि० हर्षिते ॥ पुलक : सञ्जातोऽस्य । ता० इतच् ॥

पुलकी । पुं० धाराकदम्बे ॥

पुलस्त्रि : । पुं० देशविशेषे । गिलहट्टात्पूर्वभागे कामरूपात्तथोत्तरे । पुलस्त्रिदेशो देवेशि नरनारायण : पर : ॥

पुलस्ति : । पुं० पुलस्त्यमुनौ ॥

पुलस्त्य : । पुं० ब्रह्मण : कर्णाभ्यां जातेसप्तर्षीणांमध्ये ऋषिविशेषे । हविर्भुवे । पत्नी ॥

पुलह : । पुं० ब्रह्मणोनाभितोजाते सप्तर्षीणांमध्ये ऋषिविशेषे । गति स्वामिनि । स्वायंभुवमनौस्तनये ॥

पुलिहाश्रम : । पुं० हरेःक्षेत्रे ।

पुला । स्त्री० मृताव्यमेकापरनामनि ऋथंगतिवि० । तदुक्तंसंगीतदामोदरे ।

अम् । मृतामनङ्गिता मौर्वधारा पुलानामिधा । पुनरेनामकोपाख्यां पुलामित्याहदेशिकाः । तत्तद्वसूत्रैव । स्थितिसमविशेषानुत्क्षिप्यसमासान्प्रसरतिपुरतोञ्च : सा धधारापुलाख्या । विलसतिसमपाहोत्क्षिपणाकुञ्चनानां करणमिहगतिञ्च : प्राहुरन्ये पुलाख्यामिति । पार्ष्णिप्रधानं प्रविधायरागाद्वल्गांश्च धौतत्वमरैःपुलाख्यामित्यादि : ॥

पुलाक : । पुं० तुच्छधान्ये । भक्तसिक्थके । संक्षेपे ॥ भक्तसिक्थके ॥ पोलनम् । पुल० । सं० क्विप् । पुलमकति । अक० । कर्म्मण्यण् ॥ पोलतिवा । बलाकादयश्चेतिसाधु : ॥

पुलाकी । पुं० वृक्षे ॥

पुलायितम् । न० अश्वगतौ । विक्रान्ती । पुलाख्यया चयितगति : पुलायितम् । मय० । क्त : ।

पुलिनम् । न० तोयोत्थिततटे । जलादचिरोत्थिततटे । चडा० टाप् । इ० भा० । पोलति पुलमस्त्यस्मिन् । पुलि तखिभ्यस्त्रे तिनम् ॥ द्वीपे ॥

पुलिन्द : । पुं० अरण्यचरिम्लेच्छजात्यन्तरे । शबरे ॥ पोलति । पुल० । कुविपुल्योः : किन्दच् ॥

पुलोमजा । स्त्री० इन्द्राण्याम् । पुलोम्नो मुनेर्जाता । पञ्चम्यामजातावित्तिड : ॥

पुलोमद्विट् । पुं० इन्द्रे ॥

पुलोमा पुं० दानवान्तरे । मुनिविशेषे ॥

पुलोमारि : । पुं० शचीपतौ ॥

पुल्कस : । पुं० पुक्कसे ॥ पृ० ॥

पुषा । स्त्री० लाङ्गलिकीवृक्षे ॥

पुषित : । त्रि० पुष्टे । ज्ञानपोषणोपचिकित्सादौ । पुष्यतेस्म । पुष० । क्त : । भौवादिकत्वादिट् ॥

पुष्कर : । पुं० रोगवि० । नागवि० । सारसपक्षिणि । नृपवि० । नल

राजभास्करि ॥ वंकयंमुने । यथा- न्तरे ॥ मेघाधिपवि० ॥ पुष्करो दुष्करजलः ॥ द्वीपवि० ॥ न० खे अम्बुनि ॥ पद्मे । शिताम्बोजे । सूर्यवक्त्रे ॥ खड्गफले ॥ हस्तिहस्ताग्रे ॥ काण्डे ॥ कुष्ठौषधे । द्वीपवि० ॥ तीर्थविशे० ॥ यथा । गायत्र्याश्चपरं- स्थानंश्रीमत्पुष्करमीरितमिति ॥ तत्प्रत्यय : स्थानम् ॥ पुष्यति । पुष्यातिवा पुष्यते० अनेनवा । पुष० । पुष : किदितिकरन्कि- त्सच ॥

पुष्करकः । पुं० चिताभूमेराच्छाद- नार्थं क्रियमाणेष्टकानिर्मितेदेव- कुलाकारेगृहे ॥

पुष्करवर्षिका । स्त्री० स्थलपद्मिन्या- म् ।

पुष्करजं । पुं० पुष्करमूले ॥ त्रि० । पुष्करोत्पन्ने ॥

पुष्करणी स्त्री० पुष्करद्वीपनद्याम् ॥

पुष्करद्वीपः । पुं० सप्तद्वीपान्तर्गतद्वी पविशेषे ॥ नदीपुष्करणीनामसैव पुष्करमण्डिता । तयासपुष्करद्वी प व्यापित ॰ सुरसेवित ॥

पुष्करनाडी । स्त्री० स्थलपद्मिन्याम् ॥

पुष्करमूलम् । न० कुष्ठच्चमूले । पौ ष्करे ॥ पुष्करस्यकुष्ठौषधस्यमूलम् ॥

पुष्करवान् । पुं० हस्तिनि ॥ पुष्कर मस्त्यस्य । मतुप् ॥

पुष्करशिफा । स्त्री० पुष्करमूले ॥

पुष्कराक्षः । पुं० विष्णौ । पुष्करे- शोप मितेअक्षिणीयस्य । बहुव्रीहौ सक्थ्यक्ष्णो : स्वाङ्गात्षजितिषच् ॥ पुष्करंहृदयपुण्डरीकमक्षोतिव्या- प्रोत्यमार्गोमिरूपेणेतिपुष्करोपपदा दक्षूव्याप्तावितिधातो . कर्म यथा ॥ पुण्डरीकाद्या : स्मात् ॥

पुष्करावर्तः । पुं० मेघभेदे ॥

पुष्कराह्व । पुं० सारसपक्षिणि ॥

पुष्कराह्वयः । पुं० सारसे ॥ न० पु- ष्करमूले ॥

पुष्करिणी । स्त्री० इभ्याम् । हस्ति- न्याम् ॥ सरोजिन्याम् । कमलिन्या म् । कृत्रिमजलाशये ॥ पुष्करमूले ॥ स्थलपद्मिन्याम् ॥ समचतुरस्रखा ते । यथा । चतुर्विंशाङ्गुलोहस्तोध नुश्चतुरुत्तर । शतधन्वन्तरश्चैव तावत्पुष्करिणीमता । एतत्पञ्चगु ण,प्रोक्तस्तडागइतिनिश्चय । ॥ सैव चतुर्दिक्षुविंशतिहस्तान्यूनतायाच तु शतहस्तान्यूनाप्यन्तरस्त्वेनपु, ष्करिणी । एतञ्चन्तारायाधारयरन तु॰उपरितटम् । शतेनधनुर्भि पु ष्करिणी । इतिनव्यवर्द्धमानधृतोऽत्र शिष्ठ ॥ पुष्कराणिसन्त्यस्याम् । पु- ष्करादिभ्योदेशे०इतीनि . ॥

पुष्करी । पुं० हस्तिनि ॥ मत्वर्थीय इनि ॥

पुष्करेक्षणा : । पुं० प्रभासतीर्थाधिष्ठात्र्यांदेव्याम् ॥

पुष्कलः । पुं० भरतात्मजे । पुष्कलावत्याश्चाधीशे ॥ न० । ग्रासचतुष्टयात्मकभिक्षायाम् ॥ यथा । भिक्षाग्रासमात्रमत्र तच्चतुर्गुणम् । पुष्कलंतद्भवेत्पुष्कलचतुर्गुणमुच्यते ॥ इति ॥ अष्टकुडवपरिमितधान्यमानभेदे ॥ यथा । अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोऽष्टौचपुष्कलम् । पुष्कलानिचचत्वारि आढकः परिकीर्तितः ॥ त्रि० परिपूर्णे ॥ श्रेष्ठे ॥ पुष्यति । पुष० । पुषः कित्युणादिसूत्रेण कलन्कित् । स्त्रियांगौरादित्वान्ङीष् पुष्कली ॥ सि० लज्जा ॥

पुष्कलकः । पुं० गन्धमृगे ॥ क्षपणे ॥ कीलके ॥

पुष्पकासः । पुं० पुष्करे ॥ पू० ॥

पुष्टः । त्रि० पालिते । कृतपोषणे । पुष्यते ॥ पुष्यतिस्म । पुष० । क्तः । दैवादिकत्वात् ॥

पुष्टिः । स्त्री० पोषणे ॥ वृद्धौ । अवयवोपचये । अश्वगन्धायाम् ॥ मातृकाविशेषे ॥ यथा । पुष्टिर्गणपतेः पत्नीपूजिताजगतीतले । यथाविना परिक्षीणाः पुमांसोयोषितोपिचेतिभागवतम् ॥ पोषणम् । पुष० । क्तिन् ॥ व्रतफले० । पुष्टिर्धनजनादीनांहविरित्यभिधीयते ॥

पुष्टिदः । त्रि० पुष्टिजनके ॥

पुष्टिका । स्त्री० जलशुक्तौ ॥

पुष्टिकान्तः । पुं० श्रीगणेशे । विनायके ॥

पुष्टिदा । स्त्री० अश्वगन्धायाम् ॥ वृद्धौ ॥ पुष्टिदाख्याम् ॥

पुष्पम् । न० सुमनसि । प्रसूने । कुसुमे ॥ स्नानंकृत्वातुयेकेचित्पुष्पंचिन्वन्तिवैद्विजाः । देवतास्तन्नगृह्णन्ति भस्मीभवतिदारुवदिति लघुहारीतः ॥ विकाशे ॥ स्त्रीरजसि ॥ धनदविमाने ॥ नेत्ररुग्भेदे ।—मूलाफुल्ली० इ० भा० प्र० ॥ अस्यौषधं यथा । हरीतकीवचाकुष्ठं पिप्पलीमरिचानिच । विभीतकस्यमज्जाच शङ्खनाभिर्मनःशिला । सर्वमेतत् समंकृत्वाछागीक्षीरेणपेषयेत् । नाशयेत्तिमिरंकण्डूंपटलान्यर्बुदानिच । अधिकानिचमांसानियश्चरात्रौनपश्यति । अपिद्विवार्षिकंपुष्पं मासेनैकेनसाधयेत् । वर्त्तिश्चन्द्रोदयानामनृणांदृष्टिप्रसादनी ॥ इतिच क्रपाणिदत्तः ॥ पुष्पतिपुष्प्यतेवा । पुष्पविकसने । पचाद्यच् । घञ्वा ॥

पुष्पकम् । न० रीतिपुष्पे ॥ पुष्पवदाभरणभूतेधनदस्यविमाने ॥ पुष्पकोस्त्रीतिशब्दार्णवात्पुंलिङ्गोपि । नेत्ररोगविशेषे । पुष्पे ॥ रत्नकङ्कणे ॥

रसाञ्जने ॥ लोहकांस्ये ॥ भृङ्गार भकव्याम् ॥ कासीसे ॥ पुष्पति । पुष्प० । कुन् ॥ पुष्पमिव वा । इवेप्रतिकृताविति कन् ॥

पुष्पकरण्डकम् । न० उज्जयिन्यामुपि वस्योद्याने ॥

पुष्पकरण्डिनी । स्त्री० अवन्त्याम् । उज्जयिन्याम् ॥

पुष्पकासीशम् । न० किञ्चित्पीतिकासीसे । कंसके । भैषज्यभेदे ॥

पुष्पकीट : । पुं० भ्रमरे । रोलम्बे ॥ कुसुमक्रमिसाम्ने ॥

पुष्पकेतन : । पुं० कामदेवे ॥

पुष्पकेतु: । पुं० रीतिपुष्पे । कुसुमाञ्जने ॥ पुष्पस्य केतुरिव भासकत्वात्

पुष्पघातक : । पुं० वीराकवृक्षे । द्रुमभक्षे ॥

पुष्पज : । पुं० पुष्परसे । पुष्पद्रवे ॥

पुष्पद : । पुं० वृक्षे ॥ त्रि० । पुष्पदातरि ॥

पुष्पदन्तः । पुं० वायुकोणस्थदिग्गजे ॥ विद्याधरविशेषे । सुविख्यास्यजिने ॥ पुष्पमिवदन्ता : यस्य स : ॥

पुष्पदन्तक : । पुं० गन्धर्वविशेषे ॥

पुष्पद्रव : । पुं० पुष्पास्वेदे । पुष्पसारे ॥

पुष्पधनु : । पुं० कामदेवे ॥ पुष्पं धनुरस्य । वासंज्ञायामित्यनङभावेसान्त : ॥

पुष्पधन्वा । पुं० मदने । कामे ॥ पुष्पं धनुरस्य । वासंज्ञायामित्यनङ् ॥

पुष्पनिच : । पुं० भ्रमरे ॥

पुष्पनिर्यासक : । पुं० पुष्पद्रवे ॥

पुष्पन्धय : । पुं० भ्रमरे ॥ पुष्पाणि धयति । धेट्० । मुम्नकुलाश्चपुष्पेषु धेट : खशितिकेचिदिति खश् । अरुर्द्विषदिति मुम् ॥

पुष्पपथ : । पुं० भगे । योनौ ॥

पुष्पभाचम् । न० पुष्पाधारे ॥

पुष्पपुरम् । न० पाटलिपुत्रनगरे ॥

पुष्पफल : । पुं० कपित्थे ॥ कूष्माण्डे ॥ पुष्पयुक्तंफलमस्य ॥

पुष्पबलि : । पुं० वास्तुपूजायाम् ॥

पुष्पमास : । पुं० वसन्ते ॥ पुष्पाणां मास : ॥

पुष्पयोग : । पुं० यात्रायोगान्तरे ॥ यथा । भौमेस्वराशिगेलग्नेसौम्येकेन्द्रत्रिकोणगे । पुष्पयोगोरिपुविपिनकुठार : सङ्गराग्रणी ॥

पुष्परक्त : । पुं० सूर्यमणिवृक्षे ॥

पुष्परथ : । पुं० चक्रयाने । युद्ध विना यात्रोत्सवादौ सुखभ्रमणार्थरथे ॥ सुकुमारत्वात्० पुष्पमिवरथ : ॥

पुष्परस : । पुं० मकरन्दे ॥ पुष्पस्य रस : ॥

पुष्परसाह्वयम् । न० मधुनि ॥

पुष्पराग : । पुं० पीतमणौ । वाचस्पतिश्लभे । पोखराज० इ० भा० ॥ चास्यलक्षणंयथा । सुच्छायपीत

गुरुणापसुरञ्जुशुभ्रं स्निग्धध्वनिर्मल
मतीवसुवृत्तशीतम् । यः पुष्परागं
सकलंकलयेदसुपपुष्पातिकीर्तिं
मतिशौर्यंसुखायुरर्थान् ॥ तस्यापल
क्षणमयथा । छायाविनिर्दिह्नरूक्षं
धवलंमलिनंलघु । विच्छायंशर्करा
गारंपुष्परागंसदोषकं ॥ अस्यपरी
क्षालक्षणं यथा । घृष्टेविकाशयेत्
पुष्परागमधिकमात्मीयम् । नखलु
पुष्परागोनाल्पतयामरीचकेरक्तः ॥

पुष्परेणुः । पुं० परागे ॥

पुष्परोचनः । पुं० नागकेशरे ॥

पुष्पलावः । } पुं० मालाकारे ॥
पुष्पलावी । }

पुष्पलिट् । पुं० भ्रमरे ॥ पुष्पंलेढि । लिह० । क्विप् ॥

पुष्पवटी । स्त्री० फुलौरी० इ० प्र० खाद्यप्रभेदे ॥

पुष्पवन्तौ । पुं० एकयोक्त्यानिष्पदि वचनात्सन्द्रसूर्ययोः ॥ चन्द्रार्कौ० एकयोक्त्यासाधारणवचने० पुष्पवन्तौ० प्रत्येकंपुष्पवानितिम प्रयोक्त्यव्यमितिभावः । पुष्पविकासने । भाविघञ् । पुष्पः प्रकाशस्तद्वन्तौ ॥

पुष्पवती । स्त्री० रजस्वलायाम् ॥ तीर्थविशेषे ॥ पुष्पंरजोऽस्त्यस्या । मतुप् ॥ त्रि० पुष्पविशिष्टे ॥

पुष्पवाटिका । स्त्री० पुष्पवाट्याम् ॥

पुष्पवाटी । स्त्री० पुष्पोद्याने । फुलबारी० फुलवरिया० इ० भा० ॥ पुष्पाणांवाटी ॥

पुष्पवाणः । पुं० मन्मथे । कामदेवे ॥ पुष्पाणिबाणाअस्य ॥

पुष्पवाहनः । पुं० पुष्करराजाभिधे नृपे ॥

पुष्पशकटी । स्त्री० आकाशवाण्याम् । दैवप्रश्ने ॥

पुष्पशून्यः । पुं० उदुम्बरे ॥ त्रि० कुसुमरहिते ॥

पुष्पसमयः । पुं० वसन्ते । चैत्रवैशाखयोः ॥ पुष्पाणांसमयः ॥

पुष्पसायकः । पुं० पुष्पधन्वनि । कामदेवे ॥

पुष्पसारः । पुष्पद्रवे ॥ पुष्पस्यसारः ॥

पुष्पसिता । स्त्री० फूलसकर० इ० भा० प्र० द्रव्ये ॥ भवेत्पुष्पसिता शीतारक्तपित्तहरीलघुः ॥

पुष्पसौरभा । स्त्री० कलिकारीवृक्षे ॥

पुष्पस्वेदः । पुं० पुष्पद्रवे ॥

पुष्पहासः । कुसुमविकासे ॥ पुष्पाणांमुकुलात्मनास्थितानांहासोविकाशः पुष्पहासः ॥

पुष्पहासा । स्त्री० रजस्वलायाम् ॥

पुष्पहीना । स्त्री० उदुम्बरे ॥ निष्फलायाम् । रजःशून्यायाम् ॥

पुष्पा । स्त्री० चम्पापुर्याम् । मालि

न्याम् । भागलपुर० इ०, प्र०, नग रे ॥

पुष्पाजीव : । पुं० मालाकारे ॥

पुष्पाञ्जनम् । न० अञ्जनवि० । कौसु म्भे । पुष्पकेतौ ॥

पुष्पाञ्जलि : । पुं० प्रसूनानामञ्जलौ । कुसुमाञ्जलौ ॥

पुष्पाण्डक : । पुं० शालिजातिविशे षे ॥

पुष्पाम्बुज : । पुं० पुष्पद्रवे ।

पुष्पावचायी । पुं० मालाकारे ॥

पुष्पासवम् । न० मधुनि ॥ पुं० पुष्पम कारन्दजातमासवे ॥

पुष्पास्त्र : । पुं० कन्दर्पे । मकरध्वजे ॥

पुष्पाह्वा । स्त्री० शतपुष्पायाम् ॥

पुष्पिका । स्त्री० दन्तमले । लिङ्गमले ॥

पुष्पित : । त्रि० जातपुष्पे वृक्षादौ । प्रफु ल्ले । पुष्पवति । पुष्पाणिसंजा तान्यस्य । ता० इतच् ॥ रमण्यै वि ॥ भामातरमण्यां ॥

पुष्पिता । स्त्री० रजस्वलायाम् ॥

पुष्पिताक : । त्रि० बुद्धदृष्टौ ॥

पुष्पिताग्रा । स्त्री० अर्धवृत्तेष्वर्धसमवृ त्तभेदे ॥ लक्षणयथा । अयुजिनयु गरेफतोयकारोयुजितुनजौजरगाश्च पुष्पिताग्रा ॥ य० । करकिसलयशोभ याविभान्तीकुचफलभारविनम्रदेहय ष्टि । स्मितरुचिरविलासपुष्पिता ग्राऽजयुवतिजनतिर्हरेर्मुदेऽभूत् ॥

पुष्पेषु : । पुं० कामदेवे ॥ पुष्पाणि इषवोऽस्य ॥

पुष्य : । पुं० ऋक्षमनक्षत्रे । तिष्ये । तिष्ये ॥ पुष्य : सर्वार्थसाधक : ॥ तज्जातस्यफलंयथा । प्रसन्नगात्र : पितृमातृभक्त : स्वधर्मयुक्तोऽभिन याभियुक्त : । भवेन्मनुष्य : खलुपुष्य जन्मासम्मानचामीकरवाहनाढ्य : ॥ पौषमासि ॥ कलियुगे ॥ यथा ॥ सत्सम्प्रदायप्रथमायपुष्येशिष्यैश्च तुर्भि : सहयोवतीर्ण : । उत्कोलुक त्सन्नमतम्बराजे श्रीमच्छंकराचार्यगु रुं तमीडे ॥ पुष्यातिकार्याणि० पु ष्यन्त्यथ्यास्मिन्निति वा । पुष्यसि ध्येनक्षत्रतिमसंर्योधिकरणेक्यप् निपातित : ॥

पुष्यध : । पुं० भूर्जकण्टके । सङ्करजा तिविशेषे । मावल्ये ॥

पुष्यरथ : । पुं० युद्धविनासुखभ्रमणा रथे । यन्नयानि ॥ असौ पुष्यरथश्चक्र यानमसमरायच ॥ पुष्यस्यरथ । पुष्येयात्रोत्सवादौरथोरः ॥

पुष्यस्नानम् । न० पुष्याभिषेके ॥ यथा । मूलमनुजाधिपत्ति प्रजातदोषाद् पघातसस्कारात् । अशुभशुभश्च नो कैभवतियतोसोनृपतिचिन्ता । पुष्य स्नानमृपते : कर्तव्य दैवविमत्रो धेय्याम् । नात : परमपवित्रमर्वो त्पातान्तकरमस्ति ॥ अस्यविधि :

कालिकापुराणेचास्याद्रष्टव्यः ॥
पुष्पा । स्त्री० पुष्पनक्षत्रे ॥
पुस्तम् । न० पुस्तके । लिखितग्रन्थे ॥
यथा । विद्यार्थी पूजयेन्नित्यं पुस्तपूजी
च सिद्धये ॥ लेप्यादिशिल्पकर्मणि ॥
मृदादिना काष्ठपुत्तलिकादयो बोध्याः
॥ यथा । मृदा वा दारुणा वापि वस्त्रेणा
प्यथ चर्मणा । लोहरत्नैः कृतं वापि पु
स्तमित्यभिधीयते ॥ पुस्त्यते । पुस्त
आदरादौ घञ् । इत्यम् ॥
पुस्तकम् । न० पुस्ते । लिखितग्रन्थे ।
पोथी इ० भा० ॥ तस्य परिमाणं
यथा । मानं वक्ष्ये पुस्तकस्य शृणु दे-
वि समासतः । मानेनापि फलं वि-
न्द्यादमाने श्रीर्हता भवेत् ॥ हस्तमा
त्रं मुष्टिमात्रं वा बाहु द्वादशाङ्गुलं । दशा
ङ्गुलं तथाष्टौ च ततो हीनं न कारयेत् ॥
पुस्तकलेखकस्य पूजाफलं यथा । आर
म्भे च समाप्तौ च लेखकं प्रतिपूजयेत्
सुदिव्यगन्धपुष्पाद्यैर्वस्त्रैरनुत्तमोत्त-
रैः ॥ यावदक्षरसङ्ख्यानं प्रतिपत्रे
च सुन्दरि । तावद्युगसहस्राणि ब्र-
ह्मलोके वसेच्चिरम् ॥ वेतनग्रहणे ले
खकस्य दोषो यथा । वेतनं तु गृह-
णीयात् लिखित्वा पुस्तकं सतु । याव
दक्षरसङ्ख्यानं तावन्नरके वसेदिति
योगिनीतन्त्रे तृतीय ३ भागे ७
पटलः ॥
पुस्तकर्म्म । पुं० लेप्यादिशिल्पकर्म
कर्त्तरि ॥
पुस्तकशिम्बिका । स्त्री० शिम्बिप्रभेदे
॥ पुस्तशिम्ब्याम् ॥
पुस्तशिम्बिः । स्त्री० पुस्तकशिम्बि-
कायाम् ॥
पूगः । पुं० क्रमुके । गुवाके ॥ वृन्दे
। नानाजातीयानामनियतवृत्तीना
मर्थकामप्रधानानां सङ्घे ॥ वस्त्रदाके
णि ॥ न० गुवाकफले । उद्वेगे ॥
यथा । पूगं गुरु हिमं रूक्षं कषायं कफ
पित्तहृत् । मोहनं दीपनं रुच्यमास्य
वैरस्यनाशनम् ॥ आर्द्रं तद्गुर्वभिष्य
न्दि वह्निदृष्टिहरं स्मृतम् । स्विन्नं दो
षत्रयच्छेदि दृढमध्यं तदुत्तमम् ॥
अस्य पाको यथा । शृङ्गाटकं चौरके
द्विव्यातीजीपत्रं वंशजम् । सपङ्क-
धान्यकं चापि प्रत्येकं कर्षयुग्मकम् ॥
चैयं गोनं कुडवं सिता चार्द्धतुलोन्व
ता । धात्रीवरीदुग्धविलिप्तपूगस्य
दयलानिव । एकत्र लेहसंकृत्य पू-
र्व्वीरादिकान्वितम् । सन्ध्याभ्यभ-
क्षितं ह्यस्य त्यासरादौ यथोचितम् ।
ज्वरदाहक्षयपित्तश्लेष्मग्रहलगुदाङ्कु
रान् ॥ कर्द्दिं प्रमेह मूत्राणामाघातं च
विनाशयेत् । बलप्रदं कामदं च स्त्रीणा
मुद्गदरसायनमिति ॥ पुनाति०
पवतेश० पूयते सुगमनेनवा । पू
ञ्० । क्षापूखडिभ्यः । किदिति
गन् ॥

पूगक्रत : । त्रि॰ पुञ्जीकृते ॥ यथा पूग : सम्प्रदामान : कृत : इत्यर्थ श्रेण्यादय : कृतादिभिरितिसमासे ॰ श्रेण्यादिपुच्च्यर्थवचनमिति च्व्यर्थता ॥

पूगतिथ : । त्रि॰ पूगानांपूरणे ॥ वहुपूगेतिसुटितिसुगागमविधानादसंख्यात्वे थिइट् ॥

पूगपात्रम् । न॰ पूगपीठे । कलश के ॥

पूगपीठम् । न॰ कटकोषे । पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री॰ कुङ्कली । विवाहसम्बन्धिपुष्पताम्बूले ॥

पूगफलम् । न॰ छद्वेगे । चिक्कण्याम् ॥

पूगयाजक : । पुं॰ बहुयाजके ॥

पूगबोट : । पुं॰ हिन्तालवृक्षे ॥

पूगिका । स्त्री॰ क्रमुकी ॥

पूगिकाफलम् । न॰ पूगीफले ॥

पूगी । स्त्री॰ पूगे । पूगवृक्षे ॥

पूगीफलम् । न॰ छद्वेगे । पूगफले ॥

पूजक : । त्रि॰ पूजाकर्त्तरि ॥

पूजनम् । न॰ अर्चने । पूजायाम् । यथा ॥ शास्त्रप्रयासशुभपूजादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीय : । त्रि॰ श्रुताचाराभिजनादिभि : पूजायोग्ये ॥ पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री॰ नमस्कारायाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनार्धगन्धदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्या: सामान्यानुष्ठानंयथा । पादाद्यर्घ्यादिविन्यास: कारशुद्धिस्तत : परम् । चक्रुजिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयमथदिग्बन्ध : प्राणायामस्तत : परम् । ध्यानंपूजाजपश्चैव सर्वतन्त्रेष्वयंविधिरितियामलवचनम् ॥ पूजनम् । पूज॰ । चि तिपूजीत्यङ् ॥

पूजार्ह : । त्रि॰ मान्ये । अर्चभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजासर्हति । अर्हपूजायाम् । अर्हस्तव ॥ स्त्रियांपूजार्हा ॥

पूजित : । त्रि॰ सत्कृते । अर्चिते ॥ पूज्यतेस्म ॥ पूज॰ । क्त: ॥ देवे ॥ पूजितोय : सुरासुरैरित्याद्दौभूतेक्तोवर्त्तमाने॰ तेन तृतीयात्तचोयपद्यते । अन्यथातस्यचवर्त्तमानइतिषष्ठीस्यात् ॥

पूजितव्य : । त्रि॰ पूजनीये ॥

पूजिल : । पुं॰ देवतायाम् ॥ त्रि॰ पूज्ये ॥

पूज्य : । पुं॰ श्वशुरे ॥ त्रि॰ वन्द्ये पूजार्हे । प्रतीक्ष्ये ॥ पूजार्हा य

या । गुरूणामपिसर्वेषांपूज्या : पञ्चविशिष्यत : । तेषामाद्यास्त्रय : श्रेष्ठास्तेषांमातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठ : भ्राताचभर्त्ताचपञ्चैतेगुर वस्मृताइतिकौर्मे उपरिभागे ११ अध्याय : ॥ पूज्यते । पूज० । । अचोयत् ॥ पूजयितुमर्ह : । पूज० । अर्ह्ये कृत्यश्चेतियत् ॥ सर्वस्वैवविद्वानस्वयमेतागुरुरुच्य ते । कन्यायाश्चैव विद्याया : प्रदा तापूज्योगुरु : ॥

पूज्यपाद : । पुं० भगवच्छङ्कराचार्ये ॥

पूत : । पुं० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुव्रीहौ ॥ अपनीतसुप्रधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादीसामान्यप विभौ० सभावपवित्रे वा । पवित्रे मेध्ये ॥ दृष्टिपूतंन्यसेत्पादंवस्त्र पूतंजलंपिबेत् । सत्यपूतांवदेद्वा चंमन : पूतंसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ्० पूञ्० वा । क्त । ॥ पवतेस्मवा । पूङोगत्यर्थेतिक्त : ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतो : स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतु : । पुं० इन्द्रे ॥ पूता:क्रतवो येन ॥

पूतक्रतु : । स्त्री० देव्याम् ॥ पूता : क्रतवोयस्या : ॥

पूतगन्ध : । पुं० वर्वरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतश्चतत्तृणञ्च ॥

पूतद्रु : । पुं० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतञ्चतद्धा न्यञ्च ॥

पूतना । स्त्री० हरीतक्याम् । पूतना स्त्रियमतीसृष्टेतितिनिरूपणात् । सिन्धु देशवासस्यस्वच्छवदस्थिहरीतकी लेपनेप्रशस्तेतिराजवल्लभ : । गन्ध मांस्याम् । बालरोगविशेषे ॥ बाल मातृकाविशेषे । दानवीविशेषे । बकासुरभगिन्याम् । अतीवक्रौर्य स्तनकालकूटंजिघांसयापाययदप्य साध्वी । लेभेगतिंधात्र्युचितांत- तोन्यं कंवादयालुंशरणंव्रजेम ॥ पू- तंकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारि : । पुं० बालमुकुन्दे । श्री कृष्णे । पूतनायाअरि : ।

पूतनासूदन : । पुं० श्रीकृष्णे । पूत नामूदितवान् । सूदवतिवा । सूद- क्षरणे । नन्द्यादित्वाल्ल्यु : ॥

पूतनाघ्न : । पुं० श्रीकृष्णे । पूतनां- हन्ति । हन० । क्विप् ॥

पूतपाप : । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पुं० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत : शुद्धः सत्त्वादिगुणसम्बन्धरहित : आत्मा स्वरूपमस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धात्म : सारणे ॥ पूतपाप्मायस्य ॥

पूति : । स्त्री० दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के । न० गोविष्ठायाम् ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पूञ् । तिनिकडीका इत्यद्रति० इकन् ॥ न० विष्टायाम्॥

पूतिकरज : । पुं० लटाकरञ्जभेदे । कलिमारके । कलहनाशने । कण्टकितकरञ्जे । कांटाकरञ्जइति० भा० ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज : । पुं० पूतिकरजे ॥

पूतिकर्णक : । पुं० कर्णरोगविशेषे ॥ तल्लक्षणंयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयंसस्रु तिवापूतिःसज्ञेय: पूतिकर्णक : ॥ अस्यौपधंयथा । निर्गुण्डीसुरसम्लंसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत : ॥ अथवा । यस्यपाद्रं कपित्थाम्रमञ्जूपल्लवसाधितम् । पूतिकर्णापहतैलजातीपत्ररसेनवेति चक्रपाणिदत्त : ॥

पूतिका । स्त्री० मार्जार्याम् ॥ पोइ इ० भ० लताशाके । उपोदक्याम्॥

पूतिकामुख : । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुवृक्षे ॥ पूतिपवत्ककाष्ठम् ॥ पूते : पावनस्यकाष्ठं वा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध : । पुं० गन्धके ॥ हिङ्गुदीवृक्षे । न० रङ्गे । त्रि० दुर्गन्धे ॥

पूतिगन्धि : । } त्रि० दुर्गन्धे ॥
पूतिगन्धिक : । }

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु : । न० देवदारुणि ॥

पूतिनस्य : । पुं० नासारोगभेदे ॥ तल्लक्षणंयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्च्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतंपूतिनस्यंप्रवदन्तिरोगम् । औषधन्तु । व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवै : । पाचितंनावयेत्तैलंपूतिनासागदजयेत् ॥ अथवा । त्रिकटुविडङ्गवासैन्यवृहतीफलशिग्रुसुरसदन्तीभि : । तैलंगोजलसिद्धंनस्यं स्यात्पूतिनस्यस्य ॥

पूतिमत्स्य : । पुं० मत्स्यजातिविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ।

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलीष्वस्या : पाक कर्णेतिङीप् ॥

पूतिमयूरिका । स्त्री० अजगंधायाम् ॥

पूतिमेद : । पुं० अरिमेदे ॥

पूतिवात : । पुं० बिल्वछदे ॥ अधोवायौ ॥

पूतिवृक्ष : । पुं० श्योनाके ॥

पूतिशारिजा । स्त्री० खट्टाश्याम् ॥

पूतिक : । पुं० गंधमार्जारे ॥ घोडाकरञ्ज इ० भा०प्र० करञ्जविशेषे ॥ लताविशेषे ॥

पूतिकरञ्ज : । पुं० लट्टा स्यकरञ्जे ।

पूतिगण्ड : । पुं० पूतिकोटे ॥

पूतिश्याय : । पुं० दीर्घनृणे ॥ क्षोटे ॥

पूत्यण्ड : । पुं० गन्धकीटे ॥ गन्धैखे ॥ यस्यनाभौस्त्वगनाभिर्जायते ॥

पूप : । पुं० अपूपे । पिष्टके । पूआ० इ०भा० ॥ यथा ॥ समितांगुडतोयेनसेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोस्त्वपूपक : ॥ अपूप : पुष्टिदोवल्योहृद्योगुरुतरः सर : । पित्तानिलहरोवृष्य : सुमहोरुचिकारक : ॥ पचनंपू : । पूल्-सं०क्षिप् । पुत्तंपाति०पियतिया । पारचणे०पानेवा । वातदूसिका : ॥

पूपला । स्त्री० पोलिकायाम् ॥

पूपाली । स्त्री० पोल्याम् ॥

पूपाष्टका । स्त्री० आग्रहायणीपूर्णिमाया : परत : कृष्णाष्टम्याम् ॥

पूपिका । स्त्री० पूलिकायाम् ॥

पूयम् । न० पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । पतले । मलकी । पीप०राध०इ०भाषा ।

पूयनम् । न० रक्तविकारे । पूये ।

पूयरक्त : । पुं०-नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तो र्ललाटदेशेऽभिहतस्यतैस्तै : । नासास्रवेत्पूयसमन्वितंयत्तंपूयरक्तंप्रवदन्तिरोगम् ॥

पूयारि : । पुं० निम्बपादपे

पूयालस : । पुं० सन्धिगतरोगभेदे ॥ तल्लक्षणंयथा । पक्व : शोफ : सन्धिज : संस्रवेद्यः सान्द्रंपूयंपूतिपूयालस : स : ॥ इतिसुश्रुत : ॥

पूयोद : । पुं० नरकान्तरे ॥

पूर : । पुं० जलसमूहे । अम्भसांवृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न०दाहागुरुणि ॥

पूरक : । पुं० प्राणवायौ : शनैर्वामनासापुटेन०दक्षिणनासापुटेनवा:सव्यापसव्याभ्यावेनान्त : प्रवेशने ॥ वाह्येनवायुनासूत्रै : शनैःशनैःप्रपूरणम् । पूरक : सततभ्यासात्सुगुर्वीपियिकपंयेत् ॥ नासिकोत्कृष्टउच्छ्वासोघ्मात : पूरकउच्यते ॥ मात्रानुसन्धाने ॥ वक्ष्यमाणो तियावृत्तिः पूरकोवायुरीरित : ॥ पूरीघाफ्याय

मे । खुट् ॥ बीजपूरे ॥ गुणकाद्धि ॥ पुं० प्रेतदेहनिष्पादकाशौचमध्यदेयदशपिण्डे ॥ त्रि० पूरणकर्त्तरि ॥

पूरणः । पुं० सेतौ ॥ विष्णुतैले ॥ न० अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ वानतन्तु ॥ पिष्टकभेदे ॥ छिन्नधान्यशलेमांसंसुखिन्नं सूक्ष्मखण्डितम् । संयुक्तंहिङ्गुजीराद्यैर्बीजपूरैलसैन्धवैः ॥ घृतेनसंपरिभृष्टं धूपितंमांसपूरणम् ॥ मांसस्यपूरणंहृद्यं रुच्यं पुष्टिकरंपरं । वातपित्तहरंबल्यं मन्दाग्निज्वरनाशनम् ॥ त्रि० पूरकौ । पूरणकर्त्तरि । पालनकर्त्तरि ॥ पूणाति । पृपालनपूरणयोः । ल्युट् ॥ पर्यन्तेऽपिन । पूरी० । धारयित्यु ट् ॥

पूरणी । स्त्री० शाल्मलिद्रुमे । पटारम्भकसूत्रेषु । पूरणकर्त्र्याम् ॥ पूरयति । पूरी० । ल्युट् । ङीप् ॥

पूराम्लम् । न० वृक्षाम्ले ॥

पूरिका । स्त्री० पूपकभेदे । पूरी० कच्चौरी० इ० भा० ॥ यथा । माषपिष्टिकांसुजन्यालवणाद्यैः कचिद्भिः । तथापिष्टिकयापूर्वांसमिमाकृतपोलिका ॥ ततस्तैलेविपक्वासापूरिकाकथितावुधैः । रुच्यास्वादीगुरुः स्निग्धावातपित्तासृदूषिका । चक्षुष्या लोहरीचोष्णापाकेवातविनाशिनी । तथैवघृतपक्वाऽपिचक्षुष्या रक्तपित्तहृत् ॥ बदरचूर्णपूरिकातु । घृतमिश्रकनिष्कायांमिलितंपक्वमांसकम् । बदरस्वगुभवंचूर्णंजलेना लोडघामीलयेत् ॥ पूरिकाघृतसंपक्वा खण्डप्रायाविलेपिता । पूरिकावद्दोषिश्रासिग्धापित्तहराक्षिमा ॥ मधुराष्टस्वातघ्नी सराच्छर्दिविनाशिनी । एवंविप्रायखर्जूरमर्करानारिकेरलैः ॥ द्राक्षयाचैसुपूर्यस्तुपूरिकाःपूर्ववत्पचेत् ॥

पूरिलः । त्रि० लतपूरणे । पूर्णे ॥ पूर्यतेस्म । पूरी० । क्तः । मादान्तो ति पक्षिष्टद् ॥ शुषिरे ॥

पूरुषः । पुं० पुरुषे । नरे ॥ पुंसि ॥ चिवद्धे ॥ यथा । यस्माद्विश्वमुदेतियत्ररमतेयस्मिन्पुनर्लीयतेभासायस्यजगद्विभातिसहजानन्दोज्ज्वलंयन्महः । शान्तंशाश्वतमक्रियंयमपुनर्भावायभूतेश्वरम् द्वैतध्वान्तमपास्ययान्तिकृतिनः प्रस्तौमितंपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुरः कुशन् । यद्वा पादमपीतिदीर्घः । पृषोदरादित्वां ॥ यद्वा । पूर्यन्ति पूर्यतेवा । पूरी० वा० कुशन् ॥

पूर्णः । त्रि० व्याप्ते ॥ पूरिते ॥ पुं० शक्ते ॥ समग्रे । सकले ॥ पूर्यतेस्म । पूरी० । कर्त्तरिकर्मणिवाक्तः । वा दान्तेतिसाधुः ॥

पूर्णक : । पुं० स्वर्णचूडपक्षिणि ॥ कु-
त्सित : पूर्ण : । संज्ञायांकन् ॥
पूर्णकुम्भ : । पुं० भद्रकुम्भे । जलपूरि
तघटे । पूर्णश्चासौकुम्भश्च ॥
पूर्णकोष्ठा । स्त्री० नागरमुस्तायाम् ॥
पूर्णचन्द्र : । पुं० सम्पूर्णेन्दुमण्डले षोडश-
कलाविशिष्टेन्दौ ॥ पूर्णश्चासौचन्द्रश्च ॥
पूर्णता । स्त्री० पर्याप्तौ ॥
पूर्णपात्रम् । न० वस्तुपूर्णपात्रे ॥ वर्द्धा
पके । पूर्णानके ॥ उत्सवकालेपर्या
त्मगृहीतवस्त्रालङ्कारादौ ॥ होमक
र्मणिब्रह्मदक्षिणायाम् । उत्सवादुत्सव
कालेयद्वस्त्रालङ्कारादिकम् । आ-
कृष्यगृह्यतेपूर्णपात्रंपूर्णानकञ्चतत् ॥
पूर्णमा । स्त्री० पौर्णमास्याम् ॥
पूर्णमास : । पुं० पौर्णमासयागे ॥
पूर्णमासी । स्त्री० पूर्णिमायाम् ॥
पूर्णवीज : । पुं० वीजपूरे ॥
पूर्णवैनाशिक : । पुं० वैनाशिके ॥
वैशेषिकास्त्वर्द्धवैनाशिका: सर्व
क्षणवादिनस्तुपूर्णवैनाशिकत्वेनप्र-
सिद्धा : शाक्या ॥
पूर्णा । स्त्री० पञ्चमीदशमीपूर्णिमाख्या
तिथिषु ॥
पूर्णानकम् । न० वर्द्धापके ॥ चन्द्रा-
तपे ॥ पात्रे ॥ पूर्णपात्रे । उत्सवा
दुत्सवकालेहस्ताद्याकर्षणे ॥
पूर्णावतार : । पुं० नृसिंहे । रामे ॥
परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहुता । स्त्री० पराहन्तायाम् । य-
थाहुर्वार्त्तिककारा : । भुतंयथान्न
कुक्षिस्थंतात्मत्वेनैवपश्यति । पूर्णा
हन्ताकवलितंविश्वंयोगीश्वरस्तथेति
पूर्णिका । स्त्री० नासाच्छिन्नीनामक-
पक्षिणि ॥
पूर्णिमा । स्त्री० पौर्णमास्याम् । शुक्ल
पञ्चान्तिमतिथौ । साद्विविधा ।
यथा । राकाचानुमतीचैवद्विविधा
पूर्णिमामता । पूर्णोदितकलाक्षीणे
पौर्णिमास्यांनिशाकरे । पूर्णिमानु
मतीज्ञेयापश्चात्स्तमितभास्करे । य
स्यांतामनुमन्यन्तेदेवतापितृभि:सह
। तस्मादनुमतीनामपूर्णिमाप्रथमा
स्मृता । यस्यांचास्तमितेसूर्येपूर्णच
न्द्रस्यचोद्गम : । युगपत्नोत्तरारा-
गात्तस्यानुमतिपूर्णिमा ॥ राकान्ताम
नुमन्यन्तेदेवतापितृभि : सह ।
रञ्जनाच्चचन्द्रस्यराकेतिकवयोऽब्रु
वन् ॥ तस्यांजातस्यफलंयथा । कन्द
र्पतुल्योयुवतिप्रियश्चन्यायार्जवित्त:
सततंसदर्प : । सुरोत्सवोत्साहवि-
शारदश्चस्यात्पूर्णिमाजन्मनियस्यज
न्तो : । पूरी० । भावेक्त : । पूर्णच
न्द्रस्यपूरणम्० तेननिर्वृत्ता ॥
पूर्त्तम् । न० खातादिकर्मणि ॥
खादिनादेवकुल्यादिपूरणम् : । तदु-
क्तम् । पुष्करिण्य : सभावापीदेव-
तायतनानिच । आरामश्चविशेषेण

ष्ठपदासु ॥ तत्रजातस्यफलं । जितेन्द्रिय : सर्वकलासु दक्षो जितारिपक्ष : खलु तस्य नित्यम् । भवेन्नरो यान् सुतरामपूर्वापूर्वापदाभाद्रपदाप्रसूतौ ॥ पूर्वाश्वताभाद्रपदाश्च ॥ एकवचनान्तोपि ॥

पूर्वयज्ञ : । पुं॰ जिनवि॰ । यक्षेन्द्रे । मणिभद्रे ॥

पूर्वरङ्ग : । पुं॰ नाट्यशालायाम् ॥ नाट्योपक्रमे । प्राक्सङ्गीते । गुणनिकायाम् ॥ रङ्गप्रधानास्योरङ्गविघ्नशान्तिकारीनान्दीपाठगीतवादित्रादिगीतकाङ्गविशेषोनाट्यादौकर्त्तव्यः कार्म विशेष: पूर्वरङ्ग: । तदुक्तंवसन्तराजीये । यन्नाट्यवस्तुन: पूर्वरङ्गविघ्नोपशान्तये । कुशीलवा : प्रकुर्वन्ति पूर्वरङ्ग : प्रकीर्त्तित: इति ॥ पूर्वरङ्गं विधायादौसूत्रधारेविनिर्गते । प्रविश्यतद्वदपर:काव्यमास्थापयेन्नट : ॥ प्रथमंपूर्वरङ्गस्ततः प्रस्तावनेतिच । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ पूर्वरङ्गोस्मिन्‌ । रङ्गे धञ् । कुत्वम् ॥

पूर्वराग : । पुं॰ नायिकानायिकयोर्दर्शनादिशेषे ॥ श्रवणाद्दर्शनाद्वापिमिथ : संरूढरागयो : । दशाविशेषो योऽप्राप्तौ पूर्वरागःसउच्यते ॥ द॰ ॥

पूर्वरात्र : । पुं॰ रात्रे:पूर्वभागे ॥ राजाद्दाह : पुंसि ॥

पूर्वरूपम् । न॰ पूर्वलक्षणे ॥ वैद्यके, भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न॰ अनुमानविशेषे ॥ यथा । दृष्टस्वलक्षणसामान्यविषयंयत् । तत्पूर्ववदुच्यते । पूर्वंप्रसिद्धम्दृष्टस्वलक्षणसामान्यमितियावत् । तद्यस्यविषयस्त्वं नास्ति । अनुमानस्यास्त्यैतिपूर्ववत् । यथाधूमाद्वह्नित्वसामान्यविशेष : पर्वतेनुमीयते । तस्यवह्नित्वसामान्यस्यलक्षणं वह्निविशेषोदृष्टोरसवत्याम् । वीतावीतभेदात्द्विविधम् ॥

पूर्ववादी । त्रि॰ प्रागभियोक्तरि । प्रथमविवादिनि ॥

पूर्ववित् । त्रि॰ अतीतज्ञे ॥

पूर्वशैल : पुं॰ उदयपर्वते ॥

पूर्वसर : । त्रि॰ अग्रगामिनि ॥

पूर्वा । स्त्री॰ पूर्वदिशि । प्राच्याम् ॥ तद्दिग्भवायुगुणा : । पूर्वस्तुमधुरोवात : स्निग्ध : कटुरसान्वित : । गुरुर्विदाहजनकोवातकृत् : पित्तनाशन : ॥ इति ॥

पूर्वाद्रि : । पुं॰ उदयाचले । दिनमूर्द्धनि ॥

पूर्वाषाढा । स्त्री॰ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशतिसंख्याकनक्षत्रे ॥ तज्जातस्यफलंयथा । सुवोभ्य : सुयमानानुरक्तो भक्तोदिवेम्यमान्योविदम : । पूर्वाषाढा-

भयकालेयदित्यादाषाढ: स्यादैरि यर्गेनित्यन्तम् ॥ पूसावर्वाचाषाढाच॥

पूर्वाह्ण: । पुं॰ द्विधाविभक्तदिनस्य पूर्वभागे ॥ यथा । आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्तत: पर: । आवर्तनात्॰नासरस्यच्छायापरिवर्तनात्प्रागितिशेष: ॥ त्रिधाविभक्तदिनस्यप्रथमभागे ॥ सचत्रिंशद्दण्डदिनमानेसूर्योदयावधिदशदण्डात्मक: काल: यथा । पूर्वाह्णोवैदेवानां मध्यन्दिनंमनुष्याणामपराह्ण: पितृणामितिश्रुति: ॥ अङ्ग: पूर्वम् । पूर्वापराधरेत्येकदेशिसमास: । राजाह: सखिभ्यष्टजितिटच् । अह्नादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि॰ पौर्वाह्णिके ॥ पूर्वाह्णेभव: । विभाषापूर्वाह्णापराह्णाभ्याम्॰इतिट्युट्युलौतुट्च । घकालतनेष्वितिघलुक् ॥

पूर्वेद्यु: । अ॰ प्रात: काले । धर्मवासरे ॥ पूर्वस्मिन्नहनि ॥ रत्यपक दित्यादिनापूर्वशब्दादेद्युस्प्रत्ययो निपात्यते ॥

पूष: । पुं॰ ब्रह्मदारुणि । तूत॰इ॰ भा॰ ॥ पूषत्वौ । इगुपधात्क: ॥

पूषक: । पुं॰ ब्रह्मदारुणि ॥ पूषएव क: ॥

पूषा । पुं॰ सूर्ये ॥ जगत: पोषणात् । पुष्णाति । पुषपुष्टौ । श्वन्नु- घन्पूषन्प्लिहितिनिपातित: ।

पूषभाषा । स्त्री॰ अमरावत्याम् । इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पुं॰ शिवे ॥

पूषा । स्त्री॰ पिङ्गलापृष्ठवर्तिन्यांनाडाम् ॥ पूषातुपिङ्गलापृष्ठे नीलजीमूतसन्निभा । याम्यभागस्थनेत्रान्तावधावत्पादतलंगता ॥

पृक्का । स्त्री॰ मरुन्मालायाम् । पिशुनायामोषधौ । अतारक॰इ॰भा॰ । पिच्छिं॰इ॰गौ॰भा॰स्पृश्यते । स्पृ अस्पर्शने । वा॰ कक् । पृ॰ ॥

पृक्तम् । न॰ धने ॥ त्रि॰ मिश्रिते ॥ सम्पर्कयुक्ते ॥ पृच्यते । पृची॰ । क्त: ॥

पृक्ति: । स्त्री॰ सम्पर्के । स्पृष्टौ । स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के । क्तिन् ॥

पृच्छा । स्त्री॰ अनुयोगे । प्रश्ने ॥ प्रच्छनम् । प्रच्छज्ञीप्सायाम् । गुरोश्चहलइत्य: । सम्प्रसारणम् ॥

पृच्छितव्य: । पुं॰ प्रश्नलग्ने ॥

पृच्छ्यम् । त्रि॰ प्रष्टव्ये ॥

पृतना । स्त्री॰ सेनामात्रे ॥ सेनाविशेषे । तिसृषुवाहिनीषु ॥ अत्रे भा: ॥ २४३ । रथा: २४३ । अश्वा: ७२ ८ । पादातिका: १२१५ । समस्तनइत्ययामचिचतुर्विंशतिभि: स्मृता । २४३० ॥ म्रियते । पृङ्व्या-

याते । दा०तनः शुक्लाभावश्च ॥
पृतनाषाट् । पुं० इन्द्रे । पृतनांसहते । पद्मपर्णे । छन्दसिसहइति० णिव : सहेरितिषः ॥
पृथक् । अ० भिन्ने । विनार्थे । अन्तरेण । ऋते ॥ असङ्कीर्णे । नानार्थे ॥ पर्थयति । पृथप्रक्षेपे । वा० अक् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारणकारणत्वे ॥ यथा । सङ्ख्यावच्चपृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् । अन्योन्याभावतोनास्य चरितार्थत्वमुच्यते ॥ अस्मात्पृथगियंनेतिप्रतीतिर्हिविलक्षणा॥ पृथत्वं निरूपयति सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणकारणपृथक्त्वम् । तन्नित्यतादिकंसंख्यावत् । यथानित्ये द्वेकस्य नित्यम् ०अनित्ये अनित्यम् ०आश्रयद्वितीयक्षणेचोत्पद्यतेआश्रयनाशान्नश्यति० तथापृथक्त्वमपिद्वित्वादिवत्द्विपृथक्त्वादिकमपीत्यर्थः । शैवोमादेयविवेके ॥ भेदे ॥ शाविल्य : ॥ पृथग्भावे । परस्परभिन्नत्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । कर्कशैला० इ० भा० । देव्याम् । मधुरसायाम् ॥ पृथक्त्वचायस्या : ।
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चित्रपर्ण्याम् । पीठवनी०इ० भा० । पाडुल्या० इ० भा० ॥ पृथक्पाक्षपर्णमस्या : । पाकर्णेतिङीप् ।

पृथगात्मता । स्त्री० विवेके । व्यक्तौ ॥ पृथगात्मायस्य । तस्यभाव : । तल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जन : । पुं० मूर्खे ॥ नीचे । अधमे । पृथक्कार्यीजन : असभ्यत्वात्पृथग्जनः । आकापार्थिवादिः । सज्जनेभ्य : पृथग्भूतोजनोवा । त्रि० पापिनि । भिन्नलोके ।
पृथग्रूप : । त्रि० बहुविधे । पृथग्रूपमस्य । ~
पृथग्वर्त्मात्मा । पुं० वायौ । पृथक् नानाविधंवर्त्म सञ्चरणमात्मास्वभावोऽस्य ॥
पृथग्वाद : । पुं० द्वैतिनि । पृथक् नानावस्तु०दृष्टी वंवदनंयस्य ॥
पृथग्विध : । त्रि० नानारूपे । पृथक् धर्माधर्मादिसाधनवैचित्र्ये०पर स्परविलक्षणाविधायस्य ।
पृथग्बीज : । पुं० भल्लातके ।
पृथक् । भिन्ने । विलक्षणे । प्रथयति । प्रथ० । प्रथ. किस्सम्प्रसारणञ्च्वजि : ।
पृथवी । स्त्री० भुवि । पृथिव्याम् । प्रथते । प्रथविस्तारे । प्रथे : षवन् सम्प्रसारणञ्चेत्ये के । षित्वान्ङीप् ।
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्वसरि । पाण्डो : पत्न्याम् ॥
पृथाज : । पुं० कुन्तीपुत्रे । युधिष्ठि

यामे । वा॰तनः शुखाभावश्च ॥
पृतनाषाट् । पुं॰ इन्द्रे ॥ पृतनांसह
ते । पश्चमर्थयो । छन्दसिसहइति॰
ण्विः सहेरिति षः ॥
पृथक् । अ॰ भिन्ने । विनार्थे । अन्तरे
च । वर्ज्जे ॥ असङ्कीर्णे ॥ नानार्थे ॥
पर्थयति । पृथप्रक्षेपे ॥ बा॰ अज् ॥
पृथक्त्वम् । न॰ पृथक्प्रत्ययासाधारण
कारणत्वे ॥ यथा । सङ्ख्यावत्पृ
थक्त्वं स्यात्पृथक्प्रत्ययकारणम् ।
अन्योन्याभावतोनास्य चरितार्थत्व
मुच्यते ॥ अस्मात्पृथगियंनेतिप्रती
तिर्हिविलक्षणा॥ पृथक्त्वं निरूपयति
सङ्ख्यावदिति । पृथक्प्रत्ययासाधा
रणकारणंपृथक्त्वम् । तन्निरूपता-
दिकंसंख्यावत् । यथानित्ये घैक-
त्वं नित्यम्॰अनित्ये अनित्यम्॰आ
श्रयद्वितीयक्षणेचोत्पद्यतेयाश्रयना-
शान्नश्यति॰तथापृथक्त्वमपिद्वित्वादि
वत्द्विपृथक्त्वादिकमपीत्यर्थः। द्वैवो
पादेयविवेके ॥ भेदे ॥ भावेत्व : ॥
पृथग्भावे । परस्परभिन्नत्वे ॥
पृथक्त्वचा । स्त्री॰ मूर्वायाम् । कर्क-
रीता॰ इ॰ मा॰ । देव्याम् । म-
धुरसायाम् ॥ पृथक्त्वचायस्याः ॥
पृथक्पर्णी । स्त्री॰ पृश्निपर्ण्याम् । चि
त्रपर्ण्याम् । पीठवनी॰इ॰ भा॰ ।
पाडुल्या॰ इ॰ भा॰ ॥ पृथक्पृथक्
तांपर्णमस्याः । पाककर्णेतिङीप् ॥

पृथगात्मता । स्त्री॰ विवेके ॥ व्यक्तौ ॥
पृथगात्मायस्य । तस्यभावः । त
ल् । तवन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री॰ व्यक्तौ ॥
पृथग्जनः । पुं॰ मूर्खे ॥ नीचे ।
अधमे ॥ पृथक्कार्यीजनः असभ्य-
त्वात्पृथग्जनः । शाकपार्थिवादिः
॥ सज्जनेभ्यः पृथग्भूतोजनोवा ।
वि॰ पापिनि ॥ भिन्नलोके ॥
पृथग्रूपः । त्रि॰ बहुविधे । पृथ
क्रूपमस्य ॥
पृथगात्मा । पुं॰ वायौ ॥ पृथक्-
नानाविधंयत्स्वरूपमात्मास्वभा
वोऽस्य ॥
पृथग्वादः । पुं॰ द्वैतिनि । पृथक्
नानावस्तु॰द्वैतं वदनंयस्य ॥
पृथग्विधः । त्रि॰ नानारूपे ॥ पृथक्
धर्माधर्मादिसाधनवैचित्र्येण॰पर
स्परविलक्षणाविधायस्य ॥
पृथग्बीजः । पुं॰ भल्लातके ॥
पृथक् । भिन्ने । विलक्षणे ॥ प्रथयति
। प्रथ॰ । प्रथः कित्सम्प्रसारणञ्च
इत्यजिः ॥
पृथवी । स्त्री॰ भुवि । पृथिव्याम् ॥
प्रथते । प्रथविस्तारे । प्रथेः षिवन्
सम्प्रसारणञ्चेत्यवे। षित्वान्ङीप् ॥
पृथा । स्त्री॰ कुन्त्याम् । वसुदेवस्वस
रि । पाण्डोः पत्न्याम् ॥
पृथाजः । पुं॰ कुन्तीपुत्रे । युधिष्ठि

दैव । संज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने । पर्थयति॰ पथ्यतेवा । पृथुप्रक्षेपे । चु॰ । अर्भकपृथुकेति पृथेर्वा कुकन्॰ प्रथेःसम्प्रसारणञ्च ॥ यद्वा । पृथुकायति । कै शब्दे । आतसूतिक : ॥ त्रि॰ शिशौ । अर्भके ॥

पृथुका । स्त्री॰ हिङ्गुपत्र्याम् ॥ बालिकायाम् ॥

पृथुकोल : । पुं॰ राजबदरे ॥

पृथुच्छद : । पुं॰ कपिदर्भे ॥ त्रि॰ बृहत्पत्रे ॥

पृथुपत्र : । पुं॰ रक्तलशुने ॥ कपिदर्भे ॥

पृथुपलाशिका । स्त्री॰ शठ्याम् ॥

पृथुरोमा । पुं॰ मत्स्ये ॥ पृथूनि महान्तिरोमाण्यस्य । रोमशब्दे नप्रसोर्वेतिस्वामी । पत्रलमितिसर्वधर : ॥ त्रि॰ बृहल्लोमयुक्ते ॥

पृथुल : । त्रि॰ विशाले ॥ पृथुत्वमस्यास्ति । सि॰ लच् ॥ पृथु पृथुत्वं लातिवा । क : ॥

पृथुला । स्त्री॰ हिङ्गुपत्र्याम् ॥ टाप् ॥

पृथुशिम्ब : । पुं॰ श्योनाकभेदे ॥

पृथुशेखर : । पुं॰ पर्वते ॥ पृथुसंहतशिखरोऽस्य ॥

पृथुसेन : । पुं॰ राज्ञि ॥ पृथ्वीसेना यस्य ॥

पृथुस्कन्ध : । पुं॰ शूकरे ॥

पृथूदकम् । न॰ तीर्थविशेषे

पृथूदर : । पुं॰ मेषे ॥ त्रि॰ बृहत्कुक्षौ ॥

पृथ्वी । स्त्री॰ भूमौ । अचलायाम् । धरायाम् ॥ म॰ त्वक्पत्र्याम् हिङ्गुपत्र्याम् ॥ कृष्णजीरके ॥ हस्ति ईन्द्रामरि ॥ बृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे॰ प्रख्यानेवा । प्रथिम्रदिभ्रस्जांसम्प्रसारणमितिकु : । वोतोगुणवचनादितिङीष् ॥ वर्णवृत्तविशेषे । तल्लक्षणं यथा । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति ॥ अपिच । पयोधरपरिस्फुरत्कनकयुग्मताटङ्किनीसुवर्णरचिताङ्कयावलसितभावनम्रपुरा । सुवर्णरचितास्फुरद्वसवत्कुण्डलाभुजङ्गपतिवर्णिताक्षरतिरस्तुपृथ्वीसम ॥ यथा । घनाधरतटीघनस्तनितमस्फुरागव्ययोदृशोरविपथोच्चिमाभवतिकारणादन्यतः । इदंतवपरप्रियानिभृतसम्मध्यस्तसंमुखेयदिदमप्यनर्थसिवार्द्धचन्द्र गते ॥

पृथ्वीका । स्त्री॰ बृहदेलायाम् ॥ कृष्णजीरके । कलाजाज्याम् ॥ हिङ्गुपत्र्याम् ॥ प्रथते । प्रथप्रख्याने । फर्फरीकादयश्चेतिसाधु : ॥

पृथ्वीकुरवक: । पुं॰ श्वेतमन्दारे ॥

पृथ्वीजम् । न॰ गडलवणे ॥

पृदाकुः। पुं॰ वृश्चिके॥ व्याघ्रे॥ सर्पे॥ चित्रके॥ पर्दते। पर्द॰।पर्दनिर्क्षस्य सारयमल्लोपश्चेतिकाकुप्रत्ययः॥

पृश्निः। स्त्री॰ रश्मौ॥ त्रि॰ अल्पतनौ॥ स्पृशति स्पृश्यतेवा। स्पृशसंस्पर्शे। घृणिपृश्नीतिसाधुः॥ पृच्छति॰पृच्छ्यतेवा। पर्शति॰पृच्यतेवा। प्रच्छजीप्सायाम्। पृचसेचने वा। पूर्ववत्साधुः॥

पृश्निका। स्त्री॰ कुम्भिकायाम्॥

पृश्निगर्भः। पुं॰ गदायके।श्रीकृष्णे॥

पृश्निपर्णी। स्त्री॰ पृथक्पर्ण्याम्। चक्षुपिक्षिकायाम्। चक्रौरा॰ इ॰ पिठवनि॰ इ॰ च॰ भा॰। चाकुलिया॰ इ॰ गौ॰ भा॰॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा। हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमीः॥ पृश्निरल्पं पर्णमस्याः। पाककर्णेतिङीष्॥

पृश्निभद्रः। पुं॰ श्रीकृष्णे॥

पृश्निशृङ्गः। पुं॰ विष्णौ॥ गणेशे॥

पृश्नी। स्त्री॰ वारिपर्ण्याम्॥

पृषत्। पुं॰ मृगे॥ न॰ बिन्दौ। श्वेतबिन्दुयुक्ते। पर्षति। पृषुसेचने। वर्त्तमानेपृषद्बृहन्महदिति शतृप्रत्ययोगुणाभावश्चनिपात्यते। शतृवदस्यकार्यम्॥

पृषतः। पुं॰ पृषाकमृगे। चित्रमृगे॥ यथा। पृषतश्चन्द्रबिन्दुःस्याद्धरिणः किञ्चिदल्पकः॥ पृषतस्तुभवेत्स्वादुर्याहकःशीतलोलघुः। दीपनोरोचनः श्वासज्वरदोषत्रयास्रजित्॥ इति॥ बिन्दौ। त्रि॰ श्वेतबिन्दुयुक्ते॥ पर्षति। पृषु॰। पृषिरञ्जिभ्यांकिदित्यतच्॥ यथा। पृषताः बिन्दवः सन्त्यस्य। अर्शआद्यच्॥

पृषताम्पतिः। पुं॰ वायौ॥

पृषताश्वः। पुं॰ वायौ। अनिले॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य॥

पृषती। स्त्री॰ मृग्याम्॥

पृषत्कः। पुं॰ वाणे। शरे॥ पर्षति पृषु॰। कटः शक्त। संज्ञापूर्वकत्वान्नगुणः॥ यद्वा। वर्त्तमाने पृषन्महदितिसाधुः स्वार्थेकन्॥

पृषदश्वः। पुं॰ गन्धवहे। पवने। वायौ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य॥ पृषतामम्बुकणानामश्वइवेतिवा॥

पृषदाज्यम्। न॰ सदध्याज्ये। दधिमिश्रितघृते॥ पृषच्चतदाज्यञ्च॥ यद्वा। पृषद्भिः सहितमाज्यम्॥

पृषद्वलः। पुं॰ वायुफले॥

पृषन्तिः। पुं॰ बिन्दौ। यथा। पयःपृषन्तिभिः स्पृष्टावांतिवाताः शनैः शनैरितिकाम्बुवतीविनयपत्र्यम्॥

पृषभाषा। स्त्री॰ दम्भदुर्याम्॥

पृषाकरा । स्त्री० क्षुद्राश्मनि । बटखराद्० भा० ॥
पृषातकम् । न० सदध्याज्ये ॥
पृष्टम् । न० सामगानांमाध्यन्दिनसवनेगीयमानस्तोत्राणांनामभेदे ॥
, त्रि० कृतप्रश्ने । उपासन्निते ॥
पृष्टिः स्त्री ॥
पृष्ट्यः । त्रि० जिज्ञासिते ॥
पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्वस्थाने । पीठ०इ० भा० ॥ चरमशभाग्राभटवर्णयया । सुस्निग्धमांसलपृष्ठमभग्नबाहुशरीरम् । सर्वनानाविपर्यस्तनिर्दनानांप्रकोपितितसितितसमुद्रः ॥ चरममाघे ॥ पृष्यते । पृषु० । तिषपृष्ठमूमिति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्० चिन्ताधिकरणे० मूष्टैः स्तुवनवृत्ताद्रौ तथानिर्णयात् ॥
पृष्ठग्रन्थिः । पुं० गडौ । कूब० इ० भा० ॥
पृष्ठतः । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठे इति । आद्यादित्वात्तसिः ॥
पृष्ठदृष्टि । पुं० भल्लूके ॥
पृष्ठमासादः । त्रि० परोक्षे दोषाभिधायिनि ॥ वाच्याभिधायिनि ॥ द्र० त्रिकाण्डशेषः ॥
पृष्ठमांसादनम् । न० परोक्षे दोषकीर्तने ॥ त्रि० तद्रति ॥
पृष्ठरणः । पुं० रोटके । पृष्ठास्थि-
नि ॥ सतुगर्भेमासमात्रे गर्भवति ॥
पृष्ठवहः । पुं० पृष्ठवाह्ये ॥
पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥
पृष्ठवाट्ह् । पुं० युगपार्श्वगवृषे । पृष्ठवाहिनि ॥
पृष्ठवाहः । पुं० ⎫
पृष्ठवाहकः । पुं० ⎭ वृषे ॥
पृष्ठशायः । पुं० आरनाडूकवृषे । सौरिणि । पृष्ठे ॥
पृष्ठशृङ्गः । पुं० वनच्छागे ॥
पृष्ठशृङ्गी । पुं० हंसभीरो । सैरिभे ॥ गडौ ॥ भीमसेने । वृकोदरे ॥
पृष्ठहायनः । पुं० धान्यविशेषे ॥ मत्तद्विपे ॥
पृष्ठी । पुं० मत्स्यविशेषे ॥
पृष्ठोदयः । पुं० राशिविशेषे ॥ मेषोहयकर्कटधनुर्मकरपवत । पृष्ठोदयाः पडेवैतेमीनधापितथैव च ॥
पृष्ठ्यः । पुं० सौरिणि । पृष्ठिभारवहनशीलेघोटके ॥ न० पृष्ठवृन्दे ॥ यजुरिषयोऽदः आरनिः ॥ पृष्ठानांसमूहः । पृष्ठयाः ॥ प्रशस्तमतिशयितंपृष्ठमस्य । यन्येभ्योपीतियत ॥
पृष्णिः । पुं० सूर्ये ॥
पृष्णिका ⎫ स्त्री० ⎫ जलकुम्भ्याम् ॥
पृष्ण्यौ । ⎭ ⎭ कुम्भ्याम् ॥
पेचकः । पुं० उलूके । वायसारातौ । कौशिके ॥ यूके ॥ गजलाङ्गूलमूले । तद्दाष्णाद्कमांसपिण्डपि

शोषे ॥ पचति० पच्यते वा० दुःखेन । डुपचष्० ॥ पचिमच्योरिच्चो-पधायाइति वुन् । अतइत्त्वम् । पुनर्गोतिगुणःपर्यंङ्के० मेचे० । शूके ॥

पेचकी । पुं० हस्तिनि ॥

पेचिलः । पुं० गजे । हस्तिनि ॥

पेचु । न० पेचुल्याम् ॥

पेचुकम् । न० नाडीचशाके । पेचुल्याम् ॥ त्रिकाण्डशेषे पेचुकमितिपाठः

पेचुली । स्त्री० पेचुनि । नाडीचशाके

पेटः । पुं० प्रहस्ते । पेटति । पिट० । प० अच् ॥

पेटकः । पुं० न० पिटके । पुस्तकादीनामञ्जूषायाम् । पिटार० इ० भा० ॥ त्रि० कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयोः । ण्वुल् ॥

पेटाकः । पुं० मञ्जूषायाम् । पेटके ॥

पेटिका । स्त्री० छत्रविशेषे । कुबेराख्याम् । छत्रशल्लिकायाम् ॥

पेटी । त्रि० पेटके ॥

पेडा । स्त्री० पेटके । मञ्जूषायाम् । हस्तपेटादौ । पिण्डते । पिडिसं-घाते । भ० रट् । अनित्यत्वान्नगुन् ॥

पेत्वम् । न० अमृते । घृते । पीयते । पा० । अन्येभ्योऽपिदृश्यन्तइति० इत्वन् ॥

पेपीयमानः । त्रि० पुनःपुनरत्यन्तंवापीय-

माने ॥

पेयम् । न० पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नवि० । यथा। भोज्यंपेयंतथाचूष्यंलेह्यंखाद्यंच चर्वणम् । निष्पेयञ्चैवभक्ष्यं स्याद-न्नमष्टविधंस्मृतम् ॥ इ० रा० नि० ॥ त्रि० पानयोग्यद्रव्ये । पातव्ये ॥ पातुंयोग्यम् । पा० । यत् । ईद्यति । गुणः ॥

पेया । स्त्री० यवाग्वाम् । षड्गुणमण्डे ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेयाविधिर्यथा । चतुर्दशगुणेनीरेरक्ता मास्थादिभिः श्रुता । द्रवाधिका-स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरैः । सातिसृष्टीयादिर्धीचधातुपुष्टिविधा-यिनी । स्वेदाग्निजननीलघ्वीदीपनी-वर्चोऽनुलोमिनी । शुण्ठीसैन्धवमंतु लाटीपर्णीपाचनीचसा । आमशूल-हरीरुच्यास्याद्विबन्धविनाशिनी ॥ पातुंयोग्या । पा० । यत् । ईद्यति । टाप् ॥

पेयूषः । पुं० न० अमृते । नवदुग्धे । सप्तदिवसावधिक्षीरे ॥ आसप्तरात्रप्रभवंक्षीरंपेयूषउच्यते ॥ पीयते० पीयते ऽनेनवा । पीयत्यतिसौ-त्रोधातुः प्रीतौ । पीयेरूषन् । पृषो-दरादित्वात्गुणः ॥ अग्निसंयो-गात्कठिनतांगतेनवप्रसूतायागोः क्षीरे ॥ क्षीरंसत्कालसूतायाघनं-

न्नायाम् । षष्ठे । गरुडकच्छपे । सि
न० द्रु० भा० ॥
पेशल : । त्रि० पेशले ॥
पेषाप्स : । पुं० पेषस्थाम् ॥
पैञ्जूष : । पुं० कर्णे ॥
पैठर : । त्रि० उख्ये । स्थालीपक्वमां
सादौ ॥ पिठरेसंस्कृतम् । संस्कृतंभक्षा
इत्यण् ॥
पैठीनसि : । पुं० स्मृतिकारकेमुनि
विशेषे ॥
पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥
पैतामहम् । त्रि० पित्र्ये । पितामह
सम्बन्धिधनादौ । पितामहस्येदम्
। तस्येदमित्यण् ॥ स्त्रियांपैतामही
पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ
॥ सुलिनस्थीयतीयषसदेश : स्तुपै
तृक : ॥ पितुरागतम् । पितुर्यच्चे
तिचकाराट्ठञ् ॥ स्त्रीपि० पैतृकीवि
द्या ॥
पैतृकभूमि : स्त्री० । पितृसम्बन्धिस्थाने ॥
पैतृष्वसेय : । त्रि० पितुर्भगिनीसन्त
तौ । पितृष्वसुरपत्यम् । ढक्लोप:
। थतएवसापवाद्ढक् ॥ स्त्रियांपैतृ
ष्वसेयी ॥
पैतृष्वस्रीय : । त्रि० पितुर्भागिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥
पैत्त : । त्रि० पैत्तिके ॥
पैत्तिकम् । त्रि० पित्तजव्याधौ । पि-
त्तसम्भवे ॥ पित्तस्यशमनंकोपनंवा
वातपित्तश्लेष्म : शमनकोपनयो
रितिठञ् ॥
पैत्रम् । न० पितृतीर्थे । तर्जन्यंगुष्ठयो
र्मध्ये ॥ पितृणामिदम् । तस्येद
मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥
पैत्राहोरात्र : । पुं० पितृलोकस्यदि
वारात्रौ । नृणांमासि । कृष्णपक्ष :
पितृणांदिनम् । शुक्लपक्षोरात्रि: ।
पितृणामयम् । पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥
पैल्व : । पुं० दैवसर्गप्रभेदे ॥
पैप्पलम् । त्रि० पिप्पलकाष्ठे ॥ पि-
प्पलभवानि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥
पैल : । पुं० ऋषिविशेषे । ऋग्वेदधा
रकेव्यासशिष्ये । पीलायाअपत्यम्
। पीलायावेत्यञ् ॥
पैलेय : । पुं० पैले । पीलायाअपत्य
म् । अथभावे० डाघ सूत्रि० ढक् ॥
पैशाच : । पुं० अष्टप्रकारविवाहान्त
र्गताष्टमविवाहे ॥ पैशाच : कन्य-
काछलात् , छलमाश्रमनु : , सुप्तां
मत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
ऽधम : ॥ पिशाचस्यायम् । अण् ॥
पिशाचएववा । स्वार्थिक : प्रज्ञाद्य
ण् । दैवसर्गविशेषे ॥ त्रि० पिशाच
सम्बन्धिनि ॥

रथे ॥

पोली । स्त्री० पिष्टकवि० । पूपाख्यान् । चर्पट्याम् ॥

पोष : । पुं० पोषणे ॥

पोषक : । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ ॥ पुष्पपुष्टौ ॥ ल्युट् ॥ भृतौ ॥

पोषयित्नु : । पुं० कोकिले ॥ भर्त्तरि ॥ द्विजे ॥ त्रि० पोषके । पोषणकर्त्तरि ॥ पोषयति । पुष० । स्तनिहृषिपुषीत्यादिना इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त्तरि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृवरः । त्रि० पोषकश्रेष्ठे ॥

पोष्य : । त्रि० प्रतिपाल्ये । पोषणीये । अवश्यसम्बर्द्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पुं० पुत्रप्रतिनिधौ पालनात्सुतत्वं प्राप्ते ॥

पोष्यवर्ग : । पुं० परिजने । प्रतिपालनीयगणे । यथा मातापितागुरुः पत्नीत्वपत्यानि समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गाश्च-मीनव ॥

अपिच । मातापितागुरुर्भार्या प्रजाः दीनाः समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् । नरकं पीडने चास्य तस्माद्यत्नेन संभरेत् ॥ पोष्यार्थवर्गः ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंस इदम् । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियां पौंस्नी ॥

पौगण्डम् । न० पञ्चाब्दानन्तरं दशाब्दपर्यन्तायामवस्थायाम् ॥ यथा । कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशात् यौवनन्तु ततः परमिति ॥ आचार्यप्रमुखानांछिपौन : पौन्ध्यं मतैर्मतौ । यतो गण्डावयवतेन पौगण्ड : समृतो बुधैरित्युक्तस्तदवस्थायामिति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पुण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलपद्मे । प्रपौण्डरीके ॥ पौण्डर्यं मधुरं तिक्तं कषायं शुक्रलं हिमम् । चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफापहम् ॥

पौण्ड्र : । पुं० सं देशी० इ० प्र० देशे ॥ भीमसेनस्य शङ्खे ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्ड्रान्ते । पुण्ड्रशब्दे । स्फायीतिरक् । प्रज्ञादाण् ॥

पौण्ड्रक : । पुं० श्वेतपौंडा० इ० प्र० इक्षौ ॥ वातपित्तप्रशमनो मधुरो रसपाकयोः । सुशीतो बृंहणो बल्यः पौण्ड्रको भीरुकस्तथा ॥ पौण्ड्रदेशे

ह्रवेभ्याद्दीर्घानिये यथादिहितक्षिप्ता लोपादिनाशद्रत्त्वमापन्नं दस्युपदग घ्यो वात्यन्तरे ॥ शौण्डिकायामृषे- ष्याज्जातेनातिवि० । पुंस्त्री० इ० गौ० भा० ॥ पुण्ड्रएव । स्वा० कन् ॥

पौण्ड्रवर्द्धन : । पुं० देशवि० । विहार० इ० भा० ॥

पौण्ड्रिक : । पुं० पुण्ड्रेक्षौ । सैव्ये । अतिरसे ॥

पौतिमाष्य : । पुं० येद्प्रसिद्धेष्टविवि शेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णमधुनि ॥ या कृष्णाभगचोपमाशघुतरा : प्रायो- मशाभिविडस्वायध्मानास्तरुकोटरा- न्तर्गता : पुष्पासवंकुर्वते । सान्नज् चैरिकपुत्तिकाभिगदितस्ताभि:कृत सर्पिस्तुल्य यन्मधुतद्वनेचरजनै : संकीर्तितंपौत्तिकम् । पौत्तिकंमधु रुक्षोष्णं पित्तदाहास्रवातकृत् । वि दाहिमेहकृच्छ्रघ्नं ग्रन्थ्यादिक्षतशो- षिषु ॥ पुत्तिकाभि: कृतम् । तेनकृत यामित्यण् ॥

पौत्र : । पुं० पुत्रस्यपुत्रे । नप्तरि । पौता० इ० नाती इ० भा० ॥ पु- त्रस्य०पुत्रस्यापत्यम् । अनृष्यानन्त र्येविदादिभ्योऽञ् ॥ न० पौतृभाव कर्मणो : । उद्० अञ् ॥

पौत्रिकेय : । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्रया म् ॥ पुत्रस्यपुत्रस्यापत्यम् । अञन्तत्वान्ङीप् ॥

पौन : । पुनिक : त्रि० पुन : पुनर्भ वे ॥ फाखाठञ् ॥

पौन : पुन्यम् । न० आभीक्ष्ण्ये । पु- न : पुनरित्यस्मिन्नर्थे ॥ पुन:पुनरि त्यस्यभाव : । ष्यञ् । अव्ययानांभ मात्रेटिलोपस्य०प्रातिपदिकाद्यर्थ इत्यसंख्यानर्मास्तिटिलोप : ॥

पौनरुक्तिक : । पुं० पुनरुक्तामधीयाभि ॥ उ० ठञ् ॥

पौनर्नवम् । न० पुनर्नवाशाकि ॥

पौनर्भव : । पुं० द्वादशविधपुत्रान्तर्ग- ततृतीय० । पुनर्भूपुत्रे ॥ अपत्ये ढञ् । यादत्वयोपरित्यक्ताविधवावा स्वेच्छया । उत्पादयेत्पुनर्भूत्वास- पौनर्भवउच्यते ॥

पौरम् । न० श्यामृणे । रोहिषतृणे । ग न्धतृण० इ० स्यात् । त्रि० नागरे । पुरोद्भवे ॥ पुरेभवम् । तत्रभवइ त्यण् ॥

पौरक : । पुं० गृहनाक्षोपवने ॥ नि- ष्कुटस्तुगृहारामोवाटारामस्तुपौर क : ॥ इतिहेमचन्द्र : ॥

पौरन्दर : । पुं० पुरन्दरापत्ये ॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव : । पुं० दुष्यन्तनृपतौ । पुरोरप

दिभ्योवलवत् । अतएवाजैर्दीव्यति राजन्यमितिविदेवनादयोधर्माअभिषेचनीयसन्निधौपठिताअपिस्थानान्नतदङ्गम्॰किन्तुप्रकरणाद्राजसूयाङ्गमितिमीमांसका : ॥

प्रकरणसमः । पुं॰ नैयायिकानांपदार्थान्तरविशेषे ॥ तल्लक्षयति । यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्ट : प्रकरणसम : ॥ ४७ ॥ सहेतुःस्वसाध्यस्यपरसाध्याभावस्यवा॰निर्णयार्थमपदिष्ट : प्रयुक्त : प्रकरणसमउच्यते । सकः इत्याकाङ्क्षायामाह । यस्मात्प्रकरणं पक्षप्रतिपक्षावितिभाष्यम् । साध्यतदभावमात्रावितितदर्थः । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्थनिर्णयंजनयितुमशक्तस्तुल्यवलेनपरेणप्रतिवन्धात्॰किन्तु धर्मिणःसाध्यवत्वंतदभाववत्वम्वेति चिन्तांजिज्ञासांप्रवर्तयतिसप्रकरणसम : । यद्वा प्रकृष्टं करणंलिङ्गपरामर्शोवा॰कोहेतुरनयो : साधक : पक्षयो : क॰ परामर्श : प्रमेतिवायर्याजिज्ञासाभवतीत्यर्थ : । यद्वादित्यादितुवस्तुस्थितिमात्रम् । तच्चयत्तुतुल्यवलविरोधिपरामर्शकालीनपरामर्शविषयत्वंतत्साध्यपरामर्शकालीनतुल्यवलविरोधिपरामर्शोवा । विरोधिपरामर्शस्यचहेतुनिष्टत्वमेकज्ञानविषयत्वसम्बन्धेन । अन्यथाहेतोर्दुष्टत्वंनस्यात् । अयञ्चदशाविशेषेदोषइष्यत : सद्धेतोरपि विरोधिपरामर्शदशायांदुष्टत्वमिष्टमेवेत्यवधेयम् ॥ ४७ ॥

प्रकरी । स्त्री॰ नाट्याङ्गे ॥ चत्वरभूमौ ॥

प्रकर्ष: । पुं॰ विशेषे । अधिके । उत्कर्षे ॥ यथा । गुणप्रकर्षेणजनोनुरज्यतेजनानुरागप्रभवाहिसम्पदः ॥ प्रकर्षणम् । प्रप॰ । घञ् ॥

प्रकाण्ड: पुं॰,न॰ विटपे । तरोर्मूलशाखान्तरे । मूलादारभ्यशाखावधिस्कन्धे । स्कन्धे । त्रि॰ प्रशस्ते ॥ प्रगत : काण्डोऽधमोयस्मात् । प्रशस्तोगौ : गोप्रकाण्डं । प्रकाण्डस्यरूढिशब्दत्वात्प्रशंसावचनैश्चेतिसमास : । प्रकाण्डते । कण्डिभेदने । चु॰ । परस्मै॰ । पु॰ । प्रकाण्डयति । अस॰ । विङ् । वरस्त्रीऽयमेतिडीषा ।

प्रकाण्डर : । पुं॰ द्रुमे ॥

प्रकामम् । अ॰ अतिशये ॥

प्रकामम् । त्रि॰ निकामे । यथेप्सिते ॥ प्रकामनम् । कमु॰ । घञ् ॥

प्रकार : । पुं॰ भेदे । सामान्यस्यभेदकेविशेषे । सादृश्ये ॥ प्रकरणम् । कृञोघञ् ॥

प्रकाश : । पुं॰ दीप्तौ । आतपे ॥ स्फुटे । प्रकटे । उद्गमे । व्यक्तौ ॥ प्रहासे । बुद्धिपरिणामविशेषेविषयाकारे॰दीपवत् । स्वविषयावरण

विरोधिनिरसनकार्ये । प्रभावे । न० कांस्ये । चि० व्यक्ते । प्रकाशनम् प्रकाशसेवा । कान्त्यरीत्ते । घञ्० पचाद्यच्वा । यतिप्रसिद्धे ।

प्रकाशक : । पुं० सूर्यादिवदन्यावभासकेपरमात्मनि । सूर्यादिषु । चि० व्यञ्जके । अवभासके । प्रकाशकर्तरि ॥ प्रकाशयति । काश्० । ण्वुल् ॥

प्रकाशकज्ञाता । पुं० कुक्कुटे । चि० प्रकाशज्ञातरि ।

प्रकाशन : । पुं० प्रकाशके । प्रकाशयति । काश्०ल्यु: ॥

प्रकाशमान : । चि० भासमाने । विश्वोपणव्यात्मनासदाप्रकाशमानमेवव्रह्मे त्येषधा ॥

प्रकाशात्मा । पुं० दिवाकरे । सूर्ये । प्रकाशश्चात्माखरूपंयस्य । चि० व्यक्तस्वभावे ।

प्रकाशित : । चि० व्यक्तीकृते । दर्शिते । आविष्कृते । प्रकटिते । सकाशमप्रकाशि ॥ ता० इतच् ॥

प्रकाशो । चि० दीप्तिजनके ।

प्रकीर्ण : । पुं० पूतिकरञ्जे । न० ग्रन्थविच्छेदे । चामरे । चि० असङ्गते । नानाप्रकारमिश्रिते । यथा । प्रकीर्णः पुष्पाणांहरिचरणयोरञ्जलिरयमितिवेणीसंहार : ॥ विस्तृते । विक्षिप्ते । य० । प्रकीर्णमस्तकमनवेक्ष्यकारिणीसदैवभर्तुः प्रतिकूलवादिनीम् । परस्यवेश्माभिरतामलज्जामेवंविधांस्त्रीपरिवर्जयामीतिम्लच्छकोटिकम् । प्रकीर्यतेस्म । कृविक्षेपे । क्त : ।

प्रकीर्णक: । पुं० अश्वे ॥ न० चामरे । विस्तारे । ग्रन्थविभेदे । पाप-वि० । यदनुक्तं तत्प्रकीर्णकम् । अनुक्तम्०अनुक्तनिष्कृतिकम् । प्रकीर्णपातकेज्ञात्वागुरुत्वमथलाघवम् । प्रायश्चित्तंबुधः कुर्यात्ब्राह्मणानुमतेसदा । विवादपदे । तद्यथा पूर्वेपुसर्वैतत्स्यात्प्रकीर्णकम् । संज्ञायांकन् ॥

प्रकीर्त्तित : । चि० कथिते ॥ प्रकर्षेणकीर्त्तित : । यथा । प्रभूतमल्पंकार्यवायोनरः कर्तुमिच्छति । सर्वारम्भेणतत्कुर्य्यात् सिंहादेकंप्रकीर्त्तितम् ।

प्रकीर्य्य: पुं० पूतिकरञ्जे । कण्टिकारके । कठकरञ्ज०प्र०भा० । नाटाकरञ्ज०इ० गौ०भा० ॥ घृतकारञ्जे ॥ रीठाकरञ्जे ॥ चि०विप्रकीर्णे ॥ प्रकीर्य्यते । कृ० । घञादित्वात्यक् ॥

प्रक्रतः चि०प्रस्तुते । प्रकरणप्राप्ते ॥ यथा । प्रक्रतमनुसरामः ॥ प्रकर्षेणकृते ॥ अविकृते ॥ प्रक्रियतेस्म । कृञ्: क्त: ॥

प्रकृतार्थः त्रि० प्रकरणप्राप्तस्याऽभिधेये
प्रकृति :। स्त्री० अमात्यादिषु ॥ तेच
। यथा। स्वाम्यमात्यसुहृत्कोषरा-
ष्ट्रदुर्गबलानिच। राज्याङ्गानिप्रकृत
यः। इति ॥ प्रकृतेः प्रभावस्तू
क्तोदेवीभागवतेइन्द्र प्रसिद्धहरिचन्द्र
नृपेण यथा। भुङ्क्तेशक्रनृपोराज्यं
प्रभावात्प्रकृतेर्ध्रुवम्। यजतेचम-
हायज्ञैः कर्मचतं करोतिचेति ॥ प्र
कृतं करोतिराज्यमिति। क्तिच् ॥
स्वभावे ॥ सांसिद्धिकीस्वाभाविकी
सहजाचप्रकृतावचा। प्रकृतिःसैति
विज्ञेयास्वभावंनजहातिया ॥ जा
तौ ॥ लिङ्गे ॥ लिङ्गम्॰व्यक्तम्। स्त्री
पुन्नपुंसकश्चेतिस्वामी। यथा॰तृती
याप्रकृतिः षण्ढः ॥ पौरवर्गे। भो
राद्यांधिष्णु ॥ शिल्पिनि ॥
शक्तौ ॥ साचद्विविधायथा। साप
ञ्चविधायथा। गणेशजननीदुर्गाराधा
लक्ष्मीसरस्वती। सावित्रीचसृष्टिवि
धौप्रकृतिःपञ्चधास्मृतेति ॥ निरुक्ति
स्तु। प्रकृष्टवाचकः प्रश्चकृतिश्चसृष्टि
वाचकः। सृष्टौप्रकृष्टायादेवीप्रकृ
तिः साप्रकीर्तिता ॥ गुणेप्रकृष्टे
सत्त्वेचप्रशब्दोवर्ततेश्रुतौ। मध्यमे
वर्ततेप्रप्रकृतिःसृष्टिवाचकः : कृष्टे
रायाश्चयादेवीप्रकृतिः साप्रकीर्ति
तेति ॥ योषिति ॥ परमात्मनि ॥
प्रलयात्प्रविकायाम्। प्रलयात्-



प्रथमे ॥ साद्विधा। धातुः प्रातिप
दिकञ्च ॥ पञ्चमहाभूतेषु ॥ कारणे
॥ गुह्ये ॥ जन्तौ ॥ एकविंशत्यक्षरा
यांछन्दोवृत्तौ ॥ एकविंशतिवर्णे
॥ मातरि। अनन्यायाम् ॥ सामर्थ्ये ॥
योनौ। उपादानकारणे। मूलप्र-
कृतौ। सत्त्वरजस्तमसांसाम्याव
स्थायाम् ॥ यथा। सत्त्वंरजस्तमश्चे
तिगुणत्रयमुदाहृतम्। साम्यावस्थि
तिरेतेषांप्रकृतिःपरिकीर्तिता ॥ के
चित्प्रधानमित्याहुरव्यक्तमपरेजगुः
। एतदेवजगत्सृष्टिंकरोतिविकरो
तिच ॥ मूलप्रकृतिरविकृतिः।
प्रकरोतीतिप्रकृतिः। साचविकृतिः
प्रकृतिरेवेत्यर्थः। कस्मात्॰ तस्यत
दत्वमूलेति। मूलत्वासौप्रकृतिश्चे
ति॰मूलप्रकृतिः। विकृतस्यकार्यक
लापस्यसामूलंनतस्यामूलान्तर
म्॰अनवस्थाप्रसङ्गात्। नचानवस्था
यामस्तिप्रमाणमितिभावः। इति
साङ्ख्यविदः ॥ अविद्यायाम् ॥
प्रकृतिर्मायामाया। साचसत्त्वरजस्त
मोगुणमयीअघटनघटनापटीयसी-
मिथ्याज्ञानात्मिकापारमेश्वरीश-
क्तिः ॥ प्राग्जन्मकृतधर्माधर्मज्ञाने
च्छादिसंस्कारेवर्तमानजन्मन्यभिव्य
क्तं॰सर्वचवलयति ॥ पुरुषार्थभ्रंस-
हेतुभूतायामनिर्वचनीयस्वभावायां
त्रिगुणात्मिकायांसर्वविकारकारण

भूतायांभगवन्मायायाम् ॥ मासान्तु प्रकृतिंविद्यात् । प्रक्रियतेऽनयेति-प्रकृतिरुपादानकारणंविद्याजानी-यादित्यर्थः ॥ पराऽपरभेदेनप्रकृतिर्द्विधा । परासेवज्ञलक्षणा॰अप राचेवज्ञलक्षणा । यथा॰ भूमिरापो ऽनलोवायुः खंमनोबुद्धिरेवच । अ-हङ्कारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमे पराम् । जीवभूतांमहाबाहोययेदं धार्यतेजगत् ॥ इति ॥ समग्राङ्गोप देशे ॥ यत्रसमग्राङ्गोपदेशः साप्रकृतिः । यथादर्शपौर्णमासादिः ॥ तत्प्रकरणेसर्वाङ्गपाठात् ॥ प्रकृतिवद्विकृतिः कर्तव्येतिमीमांसका-नांव्यवस्था । राजयज्ञिन्वागी॰इति कर्तव्यतोपदिष्टा यागान्तरेणोपजी व्यतेसाप्रकृतिः । येनचोपजीव्यते साप्रकृतिरितितदर्थः ॥ प्रकरणम् । डुकृञ्॰ । क्तिन् । प्रकुवते । क्ति च् ॥

प्रकृतिजः । त्रि॰ स्वभावप्रभवे । प्रकृतेरभिव्यक्तेर गर्दे यादौ ॥ प्रकृतेर्जातः । जनी॰ । डः ॥

प्रकृतित्वम् । न॰ तत्त्वान्तरोपादाने । तदेवप्रकृतित्वंतादृश्यनयोऽभिमतम् । यतोयद्यपिपृथिव्यादीनामपि गोघट तथाद्ययोविकाराः सन्ति॰ एवंतद्विकारभेदानांपयोबीजादीनां दध्यङ्कुरादयः॰ तथापिगवादयो बीजादयोवापृथिव्यादिभ्यस्तत्त्वान्तरम् । सर्वेषांगोघटादीनांस्थूलत्व-मिन्द्रियग्राह्यत्वञ्चसममितिनतत्त्वान्तरम् ॥

प्रकृतिदान्तः । त्रि॰ स्वभावतउपशोपशान्ते ॥ प्रकृत्यादान्तः ॥

प्रकृतिलयः । पुं॰ प्रधानलये । प्रकृतौसंश्लेषे । पुरुषतत्त्वानभिज्ञस्य॰ वैराग्यमात्रात्प्रकृतिलयः । प्रकृतिपदञ्चात्रप्रकृति महदहङ्कारभूतेन्द्रियाणिगृह्यन्ते । तेष्वात्मबुध्योपासमानेषुलयः । वैराग्यात्प्रकृतिलयः ॥

प्रकृतिविकृतिः । स्त्री॰ महदादिसप्तसु । महदाद्याः प्रकृतिविकृतयः सप्त । प्रकृतयश्चविकृतयश्चताइति-प्रकृतिविकृतयः सप्त । तथाहि । महत्तत्त्वमहङ्कारस्यप्रकृतिर्विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्त्वंतन्मात्राणामिन्द्रियाणाञ्चप्रकृतिर्विकृतिश्चमहतः । एवंपञ्चतन्मात्राणिस्थूलानिभूतानामाकाशादीनांप्रकृतयोविकृतयश्चाहङ्कारस्य ॥

प्रकृतिविरूपम् । न॰ गगनादौ । तत्त्वविभागकोपाध्यायच्छिन्नाकाशत्वात् ॥ निजरूपविरूपम् । प्रकृति-विरूपम् । त्रि॰ प्रकृतेरसमानरूपे ॥

प्रकृतिसरूपम् । न॰ महदादिसमूहे ।

तत्वविभागकोपाध्यवच्छिन्नजनकस्यात् । समानंरूपंसरूपम् । प्रकृते: समानरूपे ॥

प्रकृतिस्थ : । त्रि॰ आयत्स्वप्रभोगजनककर्मक्षयेप्रकृतावत्तानेसूक्ष्मरूपेणस्थिते । स्वभावस्थे ॥ प्रकृतौतिष्ठति । छा॰ । सुपिस्थइतिक : ॥ विकारशून्ये ॥ प्रकृतौसाम्यावस्थायांतिष्ठतीतितथा ॥

प्रकृत्याख्या । स्त्री॰ भ्रम : पदवाच्यार्थातुष्टौ ॥ प्रकृतिराख्यायस्या : ॥

प्रकृष्ट : । त्रि॰ प्रधाने । श्रेष्ठे ॥ उत्तमे ॥ प्रकृष्यतेऽयम् । कृष॰ । कर्मणिक्त : ॥

प्रकेत : । पुं॰ चिह्नभूते ॥ प्रकृष्ट : केत : ॥

प्रकेतनम् । न॰ गृहे ॥ प्रकृष्टकेतनम्

प्रकोष्ठ : । पुं॰ भूपद्वाराभ्यन्तरे ॥ विस्तृतकरहस्ते ॥ मणिबन्धकुर्परयोरन्तरे ॥ प्रकुष्यतेऽनेन । कुषनिष्कर्षे । उपिकुषीतिथन् ॥ प्रकृष्ट : कोष्ठमूलंवा । प्राध्यादयइतिसमास : । भुजे ॥

प्रक्खर : । पुं॰ अश्वकवचे । कुक्कुरे । पाखर॰ इ॰ भा॰ । इ॰ श॰ला॰ ॥

प्रक्रान्त । त्रि॰ उपक्रमकर्त्तरि । आरम्भकर्त्तरि ॥

प्रक्रम : । पुं॰ प्रथमारम्भे । उपक्रमे । अवसरे । क्रमे ॥ प्रक्रमणम् । क्रमु॰ । घञ् । ग्रन्थपरिचयार्थिक्रमपाठे ।

प्रक्रान्त : । त्रि॰ प्रस्तुते प्रकरणस्थे ॥ आरब्धे ॥ प्रक्रान्तमित्र । क्रमु॰ । क्त : ॥

प्रक्रिया : । स्त्री॰ नृपादीनांचामरधूननच्छत्रधारणादिव्यापारे । अधिकारे । उत्पादने । साधने ॥ प्रकारे ॥ औषधिप्रयोगे ॥ प्रकर्षायकरणम् । डुकृञ्॰ । कृञ : शचेतिश : । रिङ् । इयङ् । टाप् । प्रकृष्टकार्ये ॥

प्रक्रीडित : । त्रि॰ क्रीडाकारे ॥ प्रक्रीडति । क्रीड॰ । कर्तरिक्त : ॥

प्रक्लिन्न : । त्रि॰ प्रकार्षेणक्लेदयुक्ते ॥ तृप्ते ॥

प्रक्वण : । पुं॰ प्रक्वाणे । वीणाया: क्वणिते ॥ क्वणशब्दे । प्रकृष्टोवीणाया क्वणनम् ॥

प्रक्वाण : । पुं॰ प्रक्वणे । वीणाशब्दे ॥ प्रकृष्टोवीणायाक्वणितिभावेविकोघञ् ॥

प्रक्षर : । पुं॰ अश्वसन्नाहे । कुक्कुरे । पाखर इ॰ भा॰ । इ॰ हि॰ पं॰ ॥

प्रक्षालनम् । न॰ धावने । मार्जने ॥

प्रक्षालित : । त्रि॰ धौतेमार्जिते ।

प्रक्षिप्त : । त्रि॰ कृतप्रक्षेपे । प्रक्षिप्यतेस्म । क्षिप॰ । क्त : ।

प्रक्षेप : । पुं॰ औषधादिप्रक्षेपणीयद्रव्ये । विक्षेपे ॥

प्रक्षेपणम् । निक्षेपणे ॥ प्रकर्षेणक्षेपणम् ॥

प्रघूर्णः । पुं॰ अतिथौ । त्रि॰ प्रकृष्टघूर्णयुक्ते ॥

प्रचक्रम् । न॰ प्रस्थितायां सेनायां ॥ प्रस्थितं चक्रं सैन्यम् ॥

प्रचक्षाः । पुं॰ वृहस्पतौ ॥

प्रचण्डः । पुं॰ श्वेतकरवीरे ॥ त्रि॰ दुर्वहे । दुर्धर्षे ॥ प्रतापिनि ॥

प्रचण्डमूर्त्तिः । पुं॰ वरुणद्रुमे ॥ त्रि॰ प्रतापयुक्तशरीरे ॥ प्रचण्डा मूर्त्तिर्यस्य ॥

प्रचण्डा । स्त्री॰ देवीविशेषे ॥ यस्याः स्थानं छगलण्डः ॥ श्वेतदूर्वायाम् ॥

प्रचयः । पुं॰ समूहे ॥ प्रसङ्गे ॥ पुष्पाद्यवचये ॥ शिथिलाख्यसंयोगे ॥ अयञ्च परिमाणजनकः । यथा । सङ्घातः परिमाणाच्च प्रचयादपि जायते । प्रचयः शिथिलाख्योयः संयोगस्तेन जन्यते ॥ परिमाणं तूलकादीनामसूत्याश्रयनाशतः ॥ भा॰ प॰ ॥ प्रचीयते । चिञ् एरच् ॥

प्रचयगमनम् । न॰ बाहुल्येन गमनार्थे ॥ प्रचयेन गमनम् ॥

प्रचरः । पुं॰ पथि ॥

प्रचरद्रूपः । त्रि॰ व्यक्तरूपे ॥

प्रचलकी । पुं॰ प्रचलाकिनि ॥

प्रचलाकः । पुं॰ शराघाते ॥ शिखण्डे । भुजङ्गमे ॥

प्रचलाकी । पुं॰ मयूरे ॥ भुजङ्गे ॥

प्रचलायितः । त्रि॰ निद्रादिना घूर्णिते ॥ प्रचलइवाचरति । कर्त्तुः क्यङ् सलोपश्चेति॰ सन्नन्तात् कर्त्तरि क्तः ॥ प्रचलायाजातास्येतिवा । प्रचलायते स्म । गत्यर्थेति क्तोवा ॥

प्रचलितः । त्रि॰ प्रस्थिते ॥

प्रचारः । पुं॰ सदाचारव्यवहारे ॥ व्यक्तौ । प्रकाशे ॥ प्रचरणम् । चर॰ । घञ् ॥

प्रचितः । त्रि॰ परिवृंहिते ॥ प्रचीयते स्म । चिञ्॰ । क्तः ॥

प्रचितकम् । न॰ दण्डकविभेदे ॥ य॰ । प्रचितकसमभिधोधीरधीभिः स्मृतोदण्डकोनद्वयादुत्तरैः सप्तभिर्यैः ॥ यथा सुन्दरयदुकुलाम्भोधिचन्द्रप्रभोदेवकीगर्भरत्नश्चिलोकैकनाथ॰ प्रचितकपटसुरारिप्रमोदाम्बुजावलसोमप्रियाश्वेशेश्वरीन्द्र । चरणनखरसुधांशुच्छटीभ्यः प्रनि ... ... ... प्रणतजनपरिताप ... प्रसीद प्रसीद प्रसीद ॥

प्रचीयमानः । त्रि॰ पुष्यमाणे ॥

प्रचुरः । त्रि॰ प्रभूते । प्राज्ये । बहुले ॥ प्रचोरयति । चुर॰ । इगुपधेतिकः । चुरादीनां णिज्वैकल्पिकः ॥ प्रगतश्चुरायादितिवा ॥

प्रचुरपुरुषः । पुं॰ चौरे ॥ बहुनरे ॥

वाक्क्रीतएवच ॥ एकविंशतिरुत्थ
ग्रास्ते प्रजापतयः स्मृताः । इति
महाभारतेमोक्षधर्म्मः ॥ प्रजानां
पतिः ॥ कीटवि० ॥

प्रजापतितीर्थम् । न० कनिष्ठामूले ॥

प्रजापतिपतिः । पुं० ब्रह्मणि । पि-
तामहे ॥ प्रजापतीनांदक्षादीनांप-
तिः ॥

प्रजापालः । पुं० वायौ ॥ यथा ।
शीतांशुः क्लेदयन्नुर्वीं विवस्वान्
शोषयन्नपि । तावुभावपिसंश्रित्य
वायुः पालयतिप्रजाः ॥ तत्रदक्षि
णायनम् वर्षाशरद्धेमन्ताः । तेषु
भगवानाप्यायतेसोमोऽम्ललवणमधु
रास्त्ररसाबलवन्तोभवन्ति । उत्तरो
त्तरञ्चसर्वप्राणिनांबलमभिवर्द्धते ।
उत्तरायणञ्चशिशिरवसन्तग्रीष्माः
। तेषुभगवानाप्यायतेऽर्कस्तिक्तकषा
यकटुकाश्चरसाबलवन्तोभवन्ति ।
उत्तरोत्तरञ्चसर्वप्राणिनांबलमपची
यते ॥

प्रजापालनम् । न० लोकानांसंरक्षणा
त्मकेभूपतेर्धर्म्मे ॥ यथा । चाटचार
चचौरेभ्योवधबन्धभयादिभिः । पी
ड्यमानाः प्रजारक्षेत्कायस्थेभ्यो
विशेषत इतिवह्निपुराणम् ॥

प्रजावती । स्त्री० भ्रातृजायायाम् ॥
प्रजाऽस्यस्याः । तदस्यास्तीतिमतु
प् ॥ सन्तानविशिष्टायाम् ॥

प्रजाहितम् । न० जले ॥ प्रजाभ्योहि
तम् ॥ त्रि० प्रजोपकारे ॥

प्रजिनः । पुं० वायौ ॥

प्रजुष्टः । त्रि० प्रसक्ते ॥

प्रजेश्वरः । पुं० नृपे । राज्ञि ॥ प्रजा
नामीश्वरः ॥

प्रज्झटिका । स्त्री० मात्रावृत्तान्तरे ॥
य० । चत्वारिचतुष्कलकानिधेहि
तत्रापिजगणमन्ते विधेहि । भणिता
फणिनायकपिङ्गलेनप्रज्झटियासा
षोडशकलेन ॥ यथा ॥ रमतेन-
मनः परितापधारिनमनागपिधिर
मतिनयनवारि । यदवधिवरिपोऽह
क्षपयमगामितदवधिबाधागतमनु-
भवामि ॥

प्रज्ञः । त्रि० पण्डिते ॥ प्रज्ञानाति
। ज्ञाऽवबोधने । आतश्चोपसर्गइति
कः ॥ प्राज्ञप्रज्ञौविरलज्ञानुके०
इतिहेमचन्द्रः ॥

प्रज्ञप्तिः । स्त्री० प्रज्ञाने ॥ ज्ञप्त्यादि
प्रतीतौ ॥ सङ्केते ॥

प्रज्ञप्ती । स्त्री० जिनविद्यादेवीविशेषे

प्रज्ञा । स्त्री० धीशुष्याम् । बुद्धौ । य
था । प्रज्ञाहीनस्यपठनमन्धस्यदर्प
णंयथा । देहोभ्रान्तावतःशास्त्रं तत्त्व-
ज्ञानस्यसाधनमिति ॥ अतीतानु-
स्मृतिर्मेधातत्कालग्राहिणीमतिः ॥
शुभाशुभविचारज्ञाधीरैरुदाहृता ।
इतिविशेषः ॥ प्रज्ञाम् ॥ अप

ते । अनुनये । नमस्कारे । प्रकृष्टा नतिः । ईश्वरोजीवकलयाप्रविष्टो- भगवानिति । प्रणमेद्दण्डवद्भूमा- वाश्वचाण्डालगोखरम् ॥

प्रणतोदरः । त्रि॰ प्रनतोदरे ॥

प्रणयः । त्रि॰ प्रसरे । प्रश्रये । प्रीत्या प्रार्थने ॥ प्रेम्णि । स्नेहे । याच्ञा- याम् ॥ विश्रम्भे । निर्वाणे । मोक्षे ॥ सान्त्वनायाम् ॥ परिचये ॥ प्र- णयनम् ; णीञ्॰ एरच् ॥ त्रि॰ ॥

प्रणयनम् । न॰ प्रापणे ॥ प्रणीयते । णीञ्प्रापणे । ल्युट् ॥

प्रणयवान् । त्रि॰ प्रेमविशिष्टे ॥

प्रणयी । पुं॰ स्वामिनि ॥ त्रि॰ स्नेहव- ति ॥ प्रणयोऽस्यास्ति । इनिः । अ- र्थिनि ॥

प्रणयिनी । स्त्री॰ भार्यायाम् ॥

प्रणवः । पुं॰ तारे । मन्त्रादौ । वेदा- दौ । ब्रह्मणि ॥ प्रणवाद्यास्तथावे- दाः प्रणवेचप्रतिष्ठिताः । वाङ्मयं प्रणवः सर्वंतस्मात्प्रणवमभ्यसेत् ॥ प्रणमन्तिश्रयं वेदास्तस्मात् प्रणव- उच्यतेइतिसनत्कुमारवचनम् ॥ प्रणन्यते इतिप्रणवः । नमेः : कर्मणिघञ् संज्ञापूर्वंकत्वाद्वृद्ध्य भावः । पृषोदरादित्वात्प्रत्वं वः । प्रणूयतेस्तूयते । णुस्तुतौ । स्तोर- प ॥ यद्वा प्रणौतिप्रकर्षणस्तौतिपर मेश्वरम् । णु॰ । पचाद्यच् । उपस र्गादितिणत्वम् ॥

प्रणष्टः । त्रि॰ प्रकर्षेणनाशयुक्ते ॥

प्रणादः । पुं॰ तारशब्दे ॥ श्रवणाम- ये । कर्णनादे । यथा । कर्णस्रोतः स्थितेवातेशृणोतिविविधान्स्वरान् । भेरीमृदङ्गशङ्खानांकर्णनादः सउ च्यते ॥ अनुरागजशब्दे । प्रीतिजनि तमुखकण्ठादिशब्दे । प्रीतिविशेष जात्शीत्कृतशब्दे ॥ अनुरागजातश ब्दे प्रणादःशीत्कृतंनृणामितिशब्दा र्णवः । प्रणदनम् । णदअव्यक्तेशब्दे । घञ् । उपसर्गादसमासेपीतिणत्वं ।

प्रणामः । पुं॰ प्रणतौ प्रणिपाते । भ क्तिश्रद्धातिशययुक्तनमस्कारे । स्वाप कर्षबोधकव्यापारविशेषे । अष्टाङ्ग पञ्चाङ्गादिभेदभिन्ने ॥ यथा । दोर्भ्यां पद्भ्यांचजानुभ्या मुरसाशिरसादृ शा । मनसावचसाचेति प्रणामोष्टा ङ्गईरितः ॥ बाहुभ्यांचैवजानुभ्यां शिरसावचसादृशा । पञ्चाङ्गोयंप्रणा मः स्यात्पूजासुप्रवराविमौ ॥ एक हस्तप्रणामश्चएकंवापिप्रदक्षिणम् । अकालेदर्शनं विष्णोर्हन्तिपुण्यंपुरा कृतम् ॥ प्रणमनम् । णमप्रह्वत्वे । घञ् ॥ यः शूद्रे णार्चितंलिङ्गंवि ष्णुंवाप्रणमेद्द्विजः । निष्कृतिर्न प्रणामे तस्याश्चित्तायुतैरपि ॥

प्रणाय्यः । त्रि॰ अभिलापविवर्जिते । असम्मते । प्रणीयते । णीञ्॰ ।

प्रणाय्योसम्मताविति साधुः॥ प्रणाय्यः साध्वनिन्दितवृतिरिति काण्डशेषः॥

प्रणाल : । पुं॰ कृत्रिमजलनिःसरणमार्गे । पयनाला॰ पनाला॰ इ॰ भा॰ ॥ मल्यते । वालयत्यस्मिं । कर्मणिघञ् । उपसर्गादितिणत्वम् ॥

प्रणाली । स्त्री॰ आनुपूर्व्याम् ॥ कृत्रिमाम्बुनिःसरणमार्गे । पयनाली॰ पनाली॰ इ॰ भा॰ ॥ गौ॰ ङीष् ॥

प्रणिदानम् । न॰ विनिमये ॥ अत्यर्पणे ॥

प्रणिधानम् । न॰ प्रयत्ने ॥ प्रवेशने । अभियोगे । समाधौ । मनसोविषयान्तरवारणे । चित्तैकाग्र्ये ॥

प्रणिधि : । पुं॰ चानुचरे । गूढपुरुषे । चरे । प्रार्थने । याचने ॥ अवधाने ॥ प्रणिधानम्॰प्रणिधीयतेवा । डुधाञ्॰ । उपसर्गेधो : कि : प्रकर्षेणनिधीयतेज्ञेयमनया ॥

प्रणिपात : । पुं॰ अनुनये । प्रणतौ । प्रकर्षेणभक्तिश्रद्धातिशयेननीचै : पतने । दीर्घनमस्कारे । दण्डवत्पतने । प्रकृष्टोनिपात : ॥

प्रणिहित : । त्रि॰ निहिते । समाहिते । सम्प्राप्ते । न्यस्ते । स्थापिते । निहिते । प्रणिधीयतेस्म । डुधाञ्॰ । हा : । दधातेर्हि : अत्यन्तायामे । प्रणिधिकर्मणानियुक्ते ॥

प्रणीत : । पुं॰ संस्कृताग्नौ । प्रकर्षेणनीत : । त्रि॰ क्षिप्ते । उपसम्पन्ने । पाकेनसंस्कृतेव्यञ्जनादौ । विहिते । कृते ॥ प्रवेशिते । प्रणीयतेस्म । णीञ्॰ । कर्मणिक्त : । इत्यग्नेः ॥

प्रणीतमना : । त्रि॰ हृष्टचित्ते ॥

प्रणीता । स्त्री॰ यज्ञपात्रविशेषे । विष्णोरासनार्थे वारिपूरितेपात्रे ॥ टाप् ॥

प्रणुत : । त्रि॰ स्तुते ॥ प्रणूयतेस्म । णुस्तुतौ । क्त : ॥

प्रणुन्न : । त्रि॰ कम्पिते । प्रकर्षेणनुन्न : ॥

प्रणेता । त्रि॰ कर्त्तरि ॥ यथा । सर्वासामपिविद्यानांप्रणेताभगवाञ्शिव इति ॥

प्रणेय : । त्रि॰ वशीभूते । वश्ये । प्रकर्षेणनेतुंशक्य : । णीञ्॰ । अचोयत् ॥

प्रणोद्य : । त्रि॰ प्रत्याख्येये ॥

प्रतत : । त्रि॰ अभिव्याप्ते ॥ निरन्तरे ॥

प्रतति : । स्त्री॰ विस्तृतौ ॥ वल्ल्याम् ॥ प्रतनोति । तनुविस्तारे । क्तिच्क्तौ चसंज्ञायाम् ॥

प्रतती । स्त्री॰ लतायाम् । विस्तारे । कृदिकारादक्तिन इति ङीष् ॥

प्रतन : । त्रि॰ पुरातने ॥ नवपुराणे भ्यादिति प्रपूर्वात्तनप्प्रत्यय : ॥

प्रतनु : । त्रि॰ उत्कृष्टे ॥

प्रतमक : । पुं॰ तमकप्रभेदे ॥ पित्तानुबद्धज्वरादियोगेनतमकस्यैवप्रतमकसंज्ञा । यथा ॥ ज्वरमूर्छापरीतस्यविद्यात्प्रतमकन्तुतम् । उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥ तमसावर्द्धतेऽत्यर्थंशीतैश्चाशुप्रशाम्यति । मज्जतस्तमसीवास्यविद्यात्प्रतमकन्तुतदिति ॥

प्रतर्कणम् । न॰ वितर्के । ऊहे ॥

प्रतर्दन : । पुं॰ भगवति ॥ प्रलयेभूतानिप्रकर्षेणतर्दतिहिनस्ति । तर्दहिंसायाम् । नन्द्यादित्वाल्ल्युः ॥ नृपविशेषे । दिवोदासात्मजेकाशिराजे ॥ प्रकर्षेणतर्दयत्यभिभवतिस्वशत्रून्॰ इति ॥

प्रतल : । पुं॰ चपेटे । तताङ्गुलिकरे । याप॰ इ॰ भा॰ ॥ न॰ पातालवि॰ ॥ प्रतलति । तलप्रतिष्ठायाम् । अच् ॥ संहतले ॥ प्रततिप्रश्लिष्टतलेच ॥

प्रतान् । अ॰ विस्तारे ॥ प्रतास्यति । तमुकाङ्क्षायाम् । क्विप् । अनुनासिकस्येतिदीर्घः । मोनोधातोः ॥

प्रतान : । पुं॰ तन्तुसंयुक्तेपुष्पशालादुप्रभृतिषु ॥ शाखापत्रप्रचये ॥ विस्तारे ॥ प्रतननम्॰ प्रतन्वतेवा । तनु॰ । घञ् ॥ कुटिलतन्तौ ॥ अपतानकाख्येवायुरोगविशेषे ॥

प्रतानिनी । स्त्री॰ प्रतानवल्ल्याम् ॥

शाखापत्रप्रचयः प्रतानः कुटिलतन्तुर्वा ॥ सोऽस्त्यस्याः । इन्नन्तान्ङीप् ॥ प्रसारण्याम् ॥

प्रताप : । पुं॰ तापे ॥ तेजसि । कोषदण्डजेतेजसि ॥ कोषोधनम्॰ दण्डोदमः तद्वेतुत्वात्सैन्यमपिदण्डः । ताभ्यांयत्तेजो जायतेतस्मिन्निति यावत् ॥ प्रतापयति॰ अनेन । तप॰ । णिच् : । पुंसीतिघः प्रतपनंवा । भावेघञ् ॥ अर्कवृक्षे ॥ प्रतापौपौरुषातपाविति यादवः ॥

प्रतापक : । पुं॰ रवौ : प्राज्ञ॰ गान्तरे ॥

प्रतापन : । पुं॰ नरकविशेषे । कुम्भीपाके ॥ न॰ पीडने ॥ प्रतापयति । तपदाहे । ल्युः ॥

प्रतापवत् । त्रि॰ अत्यन्तमात्रेणयशसुविदारकदैत्यप्रभस्तमीसपि ॥

प्रतापस : । पुं॰ श्वेतार्के । शुक्लार्कवृक्षे ॥ प्रतापंचक्षुस्तेज : स्यति । षो॰ । कः ॥ प्रभूतास्तापसायेनवा ॥

प्रतापान्वित : । त्रि॰ शौर्ययुते ॥

प्रतापी । त्रि॰ अनुतापकी ॥ प्रतापयितुंशीलमस्य । ताच्छील्येणिनिः ॥ तेजस्विनी ॥ अतद्गुनिठनादिती निः ॥

प्रताम् । अ॰ ग्लानौ ॥

प्रतारक : । त्रि॰ वञ्चके ॥ प्रतारयति । तॄ॰ । ण्वुल् ॥ ..

प्रतारणम् । न॰ वञ्चने ॥

प्रतारणा । स्त्री॰ वञ्चनायाम् ॥ यदो क्तसितवयोकर्तुं जगदेकैककर्मणा । उपास्यतांकलौकल्पलतादेवीप्रतार णेति॰ धूर्त्तकल्पितम् ॥

प्रतारणीय : । त्रि॰ वञ्चनीये ॥

प्रतारित : । त्रि॰ व्यंसिते । वञ्चिते कृतप्रतारणे ॥

प्रति । अ॰ प्रतिनिधौ ॥ इत्थम्भूता ख्याने ॥ आभिमुख्ये ॥ मात्रार्थे । लोके ॥ भागे ॥ वीप्सायाम् ॥ लक्षणे ॥ प्रतिदाने ॥ वेपे ॥ निश्चये ॥ प्राति॰ प्रयतेथा । बाहुलकाड्डति : ॥ व्याप्तौ ॥ प्रशान्तौ ॥ विरोधे ॥ समाधौ स्वभावे ॥

प्रतिक : । त्रि॰ कार्षापणिके ॥ का र्षापणेनक्रीत : । कार्षापणाट्टिठन् वक्तव्य : ॰ प्रतिरादेशश्चवा ॥ऽऽ प्रतिकी ॥ स्त्री ॥

प्रतिकर्म । न॰ प्रसाधने , वेशे । कृतशोभायाम् ॥ प्रत्यङ्गप्रतिव्या तं धाकर्म । शाकपार्थिवादि ॥ धंस नादिपञ्चकर्मखितिभिधत्त : ॥

प्रतिकार : । पुं॰ प्रतीकारे ॥ सम॰ । भटे॰ । प्रतिकरणम् ॥ कृञोघ ञ् ॥

प्रतिकूप : । पुं॰ परिखायाम् ॥

प्रतिकूल : । त्रि॰ अननुकूले । प्रस व्ये । अपसव्ये । प्रतीपे । विरु द्धार्थे ॥ प्रतीपंकूलात् । प्रतिकूल शब्दोऽविलक्षणयाविरुद्धे वर्त्तते॰ प्रतिलोमवत् ॥ आत्मन : प्रति कूलानिपरेषांनसमाचरेत् ॥

प्रतिकृति : । स्त्री॰ अर्चायाम् ॥ प्र तिनिधौ । दृषदर्म काष्ठादिनि र्मिते प्रतिमापर्यायवस्तुनि ॥ प्र तीकारे ॥ प्रकृष्टाकृति : । प्रति निधि : कृतिर्वा ॥

प्रतिकृष्ट : । त्रि॰ गुप्ते ॥ द्विराकृष्य कर्षिते ॥ प्रतिकृष्यतेस्म ॥ कृष॰ । क्त : ॥

प्रतिक्रिया । स्त्री॰ प्रतीकारे ॥ प्र तिकरणम् । कृञ् : शच ॥

प्रतिक्षणम् । अ॰ पौन : पुन्ये ॥

प्रतिक्षय : । पुं॰ रक्षके ॥

प्रतिक्षिप्त : । त्रि॰ वारिते । प्रति रुते ॥ प्रेषिते ॥ आह्वयप्रेषि तोयस्तुप्रतिक्षिप्त : सउच्यते ॥ भेषजे ॥ कृताधिक्षेपे ॥ अधि क्षिप्ते ॥ अधिक्षिप्यतेस्म । क्षिप प्रेरणे । क्त : ॥

प्रतिक्षेप : । पुं॰ प्रत्याख्याने ॥

प्रतिगतम् । न॰ प्रतिलोमे ॥ प क्षिगतिविशेषे ॥ त्रि॰ प्रतियाते ॥

प्रतिगमनम् । न॰ प्रतिप्रयाणे ॥

प्रतिग्रह : । पुं॰ स्वीकरणे । स्वीकृ तौ ॥ सैन्यपृष्ठे । सैन्यस्यपश्चा

भिन्नसङ्घातेऽर्जीके ॥ प्रतिग्रह्य सेऽनेन । यद्वद्गृह्यते । पतद्ग्रहे ॥ द्विजेभ्योविधिवद्देये ॥ दान द्रव्यग्रहे ॥ ग्रहविशेषे ॥ क्रिया कारे ॥ प्रतिगृह्णाति । ग्रहउपादाने । विभाषाग्रह इतिपक्षेऽच् ब्राह्मणस्यार्थे । प्रतिग्रहार्जितः । यथा । प्रतिग्रहार्जितावित्तविशेषत्वनिर्णिताः । वैश्ये न्यायार्जितार्थाः । शूद्रे शुश्रूषयार्जिताः ॥ अयाचितप्रतिग्रहेदोषाभावोयथा । अयाचितोपपन्ने तुनास्ति दोषः प्रतिग्रहे । अमृतं तद्विदुर्देवास्तस्मात्तन्नैवनिर्णुदेत् ॥

प्रतिग्राह : । पुं० पतद्ग्रहे । आचमनके । प्रोक्षे ॥ प्रतिगृह्णाति । ग्रह । विभाषाग्रहइतिपक्षेणः ॥ प्रतिग्रहणे ॥

प्रतिग्राहित : । त्रि० स्वीकारिते ॥

प्रतिघ : । पुं० प्रतिघाते ॥ क्रोधे ॥

प्रतिघननम् । हन० । अन्यत्रापिदृश्यतइतिडेन्यङ्कादित्वात् कुत्वम् ॥ मूर्च्छायाम् ॥

प्रतिघात : । पुं० प्रतिघन्धे ॥ प्रतिहननम् । हन० । घञ्० । हनस्तोचिण्णलोः । होहन्तेरितिकुत्वम् ॥

प्रतिघातनम् । न० मारणे ॥ हन्तेः स्वार्थण्यन्ताल्ल्युट् ॥

प्रतिघ्नम् । न० वपुषि ॥

प्रतिच्छन्द : । न० प्रतिरूपे ॥

प्रतिच्छाया । स्त्री० प्रतिबिम्बे ॥ प्रकृष्टच्छाया ॥

प्रतिजल्पा । स्त्री० ग्रथनङ्गावाम् ॥

प्रतिजल्प : । पुं० वाक्यविशेषे ॥

प्रतिजागर: । पुं० अवेक्षायाम् । प्रत्यवेक्षणे ॥

गृहमवेक्षस्वेत्यादिनियोगे ॥ प्रतिजागरणम् । जागृ० । घञ् । जाग्रोऽवीतिगुण : ॥

प्रतिजिह्वा । स्त्री० उपजिह्वायाम् । रसनकाङ्गे । वाचस्पत्य० इ०मी०

प्रतिजिह्विका । स्त्री० तालुमूलस्थक्षुद्रजिह्वायाम् । प्रतिजिह्वायाम् ॥ घण्टिकायाम् ॥

प्रतिज्ञा । स्त्री० अङ्गीकृती । अङ्गीकारे । साध्याभिधायिकायांवाचि ॥ मृषायांप्रतिज्ञापरिपालनंस्वर्गसाधनमितिबुधा : ॥ कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारे । इत्यनुमितौ गदाधरी ॥ साध्यनिर्देश : प्रतिज्ञा ॥ इ० गौतमसूत्रम् ॥ ११ ॥ साधनीयस्यार्थस्य योनिर्देश : सप्रतिज्ञा ॥ साधनीयश्चवह्निमत्वादि नापर्वतादि : । —— (+०+)—
तथाचपक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदक विशिष्टवैशिष्ट्यबोधकशब्दइत्यर्थ : । निगमनकारणायच साध्यांशे० साध्यतावच्छेदकातिरि

ज्ञाप्रकारकत्वं वाच्यम् । तदर्थश्च साध्यतावच्छेदकप्रकारतानिरूपितविलक्षणप्रकारताशून्यत्वम् । तेन प्रमेयवत्त्वः साध्यत्वेनासिद्धिः उदासीनवाक्यवारणाय च न्यायाङ्गघटकत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयता निरूपितविषयताशालिबोधजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत् प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपम् तदाद्व्यक्तित्वरूपञ्चेत्यपि वदन्ति ॥ प्रतिज्ञायते । इति ॥ प्रतिपूर्व्वाज्ज्ञानातेरात उपसर्गे इत्यङ् । टाप् ॥

प्रतिज्ञातः । त्रि० अङ्गीकृते ॥ प्रतिज्ञायते स्म । क्तः ॥ प्रतिज्ञात स्वरामेण राज्याभिषेकं प्रतीति रामायणम् ॥

प्रतिज्ञानम् । न० अङ्गीकारे । प्रतिज्ञायते ॥ प्रतिपूर्व्वज्ञानातेः ल्युट् ॥

प्रतिज्ञान्तरम् । न० निग्रहस्थानवि० प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात् तदर्थनिर्द्देशः प्रतिज्ञान्तरम् ॥ ४६ ॥ प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्म्मस्य धर्म्मान्तरस्वविशिष्टः कल्पो विकल्पस्तस्मात् विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः । प्रतिषेधदूषणे न झटिति संवरणे विलम्बे नापि स्वयं दूषणं विभाव्य विशेषणेन दोषदस्युक्तम् । प्रतिज्ञातार्थस्यैव प्रलपनम् ॥ हेत्वतिरिक्तार्थस्येति तत्त्वम् । तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञान्तरत्वेन सङ्गृहीतं भवति । इदञ्च पक्षसाध्यविशेषणभेदात् पञ्चविधम् । यथा शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परीणामप्रत्युक्ते यथोक्तः शब्दः पक्ष इति प्रतिज्ञान्तरम् । न चेदमर्थान्तरम् प्रकृतोपयोगात् । न चेयं प्रतिज्ञाहानिः पूर्व्वोक्तस्य परित्यागात् । एवं पर्व्वतो वह्निमान् सुरभिसलिलधूमवत्त्वादित्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र एवं तादृशवह्निसाध्ये यः सुरभिसलिलधूमवान् स वह्निमानित्युदाहरणे न्यूनत्वे नप्रत्युक्ते तादृशवह्निमानित्यत्र एवमन्यदप्यूह्यम् ॥

प्रतिज्ञाविरोधः । पुं० निग्रहस्थानविशेषे । प्रतिज्ञाहेत्वोर्व्विरोधः प्रतिज्ञाविरोधः ॥ ४७ ॥ यत्र प्रतिज्ञाहेतुपदैकवाक्यकालीनवाक्यपरे । तथा चैकवाक्यस्थवचनार्थविरोधः । यद्यपि काञ्चनमयः पर्व्वतो वह्निमान् इदानीं वह्निमान् इदत्वात्पर्व्वतोव

ह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यम्। तथापि उपधेयसङ्करेऽप्युपाधेरसाङ्कर्यान्न दोषः। न चासङ्कीर्णस्थलाभावः। पर्वतो वह्निमान् धूमात् यो यो धूमवान् स वह्निमानित्युदाहरणे निरग्निस्साध्यमित्युपनये च तत्सत्वात्। एवं निगमनेऽपि बोध्यम्॥ ४७॥

प्रतिज्ञासन्न्यासः। पुं॰ निग्रहस्थानविशेषे। पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः॥ ४८॥ पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परोजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः॥ यथा। शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति॥ ४८॥

प्रतिज्ञाहानिः। स्त्री॰ निग्रहस्थानवि॰। प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः॥ ४५॥ प्रतिपक्षो दृष्टान्तो यस्य स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः दृष्टान्तो यस्य स स्वदृष्टान्तः स्वपक्षः। तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्यम्। सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युक्तरिते अस्तु तर्हि घट एव पक्ष इति। एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति। एवं पर्वतो वह्निमान् धूमात् अयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति। एवमत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि इन्धनवानिति। अन्यहानिस्तु विशेषणहान्यादिः। यथा तत्रैव नीलधूमादित्युक्ते असमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि॥ ४५॥

प्रतिज्ञेयः। त्रि॰ प्रतिज्ञातुं योग्ये। पुं॰ स्तुतिपाठके॥

प्रतितन्त्रसिद्धान्तः। पुं॰ सिद्धान्तविशेषे। समानतन्त्रसिद्धः॥ २९॥ समानशब्द एकार्थः तेनैकतन्त्रसिद्ध इत्यर्थः। स्वतन्त्रसिद्ध इति पर्यवसितोऽर्थः। यथा वादिप्रतिवाद्योः कतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्तः इति फलितार्थः। यथा मीमांसकानां शब्दनित्यत्वम्॥ २९॥

प्रतितालः। पुं॰ तालविशेषे। यथा। कान्तारः समरोपचयैकुपठोपान्ति तस्तथा। कथिताः मङ्गरेषैववस्या

र : प्रतितालका : ॥

प्रतिताली । स्त्री॰ तालकोद्घाटनयन्त्रे । तालो॰ इ॰ भा॰ ॥

प्रतिदानम् । न॰ विनिमये । नैमेये ॥ स्वामिनेन्यस्तस्यार्पणे । दत्तस्यप्रतिनिर्यातने ॥ प्रतिकृत्यदानम् । प्रतीपंवादानम् ॥

प्रतिदारणम् । न॰ भाजौ । युद्धे ॥

प्रतिदिनम् । न॰ प्रत्यहम् ॥

प्रतिदिवा । पुं॰ सूर्ये ॥ प्रतिदीव्यति । दिवु॰ । कनिन्युष्पतक्षिराजि धन्विद्युप्रतिदिवइतिकनिन् ॥ दिवसे ॥ प्रतिदीव्यन्त्यस्मिन्नित्यधिकरणेकनिन् ॥

प्रतिदृष्टान्त : । पुं॰ परपक्षे । प्रतिकूलदृष्टान्ते ॥

प्रतिदेयम् । त्रि॰ क्रीतद्रव्यस्यदुष्क्रीतबुद्ध्यापराहत्यदाने ॥ यथा । क्रीत्वा मूल्येनयःपण्यं दुष्क्रीतंमन्यतेक्रयी । विक्रेतुंप्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥ इतिमिताक्षरः ॥

प्रतिद्वन्द्वी । त्रि॰ प्रतिस्पर्धिनि ॥ विरोधिनि ॥ समे द्वन्द्वे स्वतान्यत्वे स्वत्वाद्वन्द्वं परस्परम् । प्रतिद्वन्द्वितया लोकेप्रसिद्धेनात्रसंशय : ॥

प्रतिध्वनि : । पुं॰ प्रतिरवे । प्रतिशब्दे ॥

प्रतिध्वान : । पुं॰ प्रतिश्रुति । प्रतिशब्दे ॥

प्रतिनन्दनम् । न॰ वन्दने ॥ आशीर्वादादिभि : सम्भावने ॥

प्रतिनप्ता । पुं॰ प्रपौत्रे । पुत्रस्यपौत्रे ॥

प्रतिनव : । त्रि॰ नूतने ॥ प्रतिनूयते णु॰ । स्तुतौ । अप् ॥

प्रतिनिधि : । पुं॰ मुख्यसदृशे ॥ ॥ मुख्यस्याभावेतत्सदृशोयउपादीयतेसप्रतिनिधिरुच्यते ॥ यथा व्रतादायस्तस्यासामर्थ्ये सति॰पुत्रं वापि नयोपेतंभगिनींभ्रातरं तथा । एषामभावएवान्यंब्राह्मणंविनियोजयेदिति गरुडपुराणम् ॥ काम्ये प्रतिनिधिर्नास्तिनित्य नैमित्तिकेहिस : । काम्ये पूपक्रमादूर्ध्वं मन्येप्रतिनिधिंविदुरिति ॥ काचमाधवीयेच मान्नित्यनैमित्तिकेयामेण्य प्रतिनिधि: कार्य: ॥ विप्रवें स्वदेवे : साध्ये स्वब्राह्मणेस्वमन्त्रिभि: । आपत्सु मरणाशौचेविधि:प्रतिनिधि: करप्रति मनु : ॥ मुख्यस्यविधे सोमादेर्वत्सान यदि : प्रतिनिधिर्विश्वप्रतिपदेषादिभिरनुष्ठितोऽसौसोमुख्यासम्भवे- कार्यानिमुख्यसम्भवेकार्यइत्यर्थ: ॥ प्रतिमायाम् ॥ प्रतिनिधीयते॰सहशीक्रियते । डु- धाञ्॰ । उपसर्गेघो : कि: ॥

प्रतिनिनद : । पुं॰ प्रतिध्वाने ॥

प्रतिनियम : । पुं॰ व्यवस्थायाम् ॥

प्रतिनिर्देश : । पुं॰प्रतिपाद्यतयाविधे,

यतयावाक्कीर्तने ॥

प्रतिपत्त : । पुं॰ चरौ । शत्रौ ॥ विपरीतसाधकत्त्वे नाभिमते ॥ अन्तराये ॥ सादृश्ये ॥

प्रतिपत्तव्य : । त्रि॰ अवगन्तव्ये ॥

प्रतिपत्ति : । स्त्री॰ प्रवृत्तौ ॥ प्रागल्भ्ये ॥ गौरवे ॥ सम्प्राप्तौ ॥ प्रबोधे सम्यग्ज्ञाने । पदप्राप्तौ ॥ सत्त्ववचने ॥ साध्यस्यसत्त्ववचनंप्रतिपत्तिरुदाहृता ॥ प्रतिपदनमनयावा । पद॰ । क्तिन् ॥ मीमांसकमतेफलशून्यकर्माणि ॥ कर्तव्यज्ञाने ॥

प्रतिपत्तिपटह : । पुं॰ सम्मापटहे । नगारा॰ हू॰ भा॰ ॥ प्रतिपत्ते : पटह : ॥

प्रतिपत्तूर्यम् । न॰ ढ्रगडवाद्ये ॥

प्रतिपत्त्यभिसन्धि: । पुं॰ प्राप्तिसङ्कल्पे ॥ प्रतिपत्ते : अभिसन्धि : ॥

प्रतिपत्रफला । स्त्री॰ मुद्रकारवेल्याम् ।

प्रतिपत्रसिरा । स्त्री॰ हरीतक्याम् ॥

प्रतिपथिक : । त्रि॰ प्रतिपथप्राप्ते प्रातिपथिके ॥ प्रतिपथलिंगि । ठन् ॥

प्रतिपत्॰ द् । स्त्री॰ तिथिवि॰ । पञ्चतौ ॥ साचन्द्रस्यप्रथमकलाक्रियारूपा । वृद्धिरूपापिच्छुका । ह्रासरूपापितृकृष्णा ॥ तत्तजातस्यफलम् । मतिवानकविभूषा संयुतश्चारुकान्तिर्निजकुलकमलोद्भासमार्तण्डबिम्ब : । प्रतिपदिशशिपूर्वोलब्धजन्मा प्रतापीभवतिविमलवेशस्त्वाक्लेश:प्रजेश: ॥ मतौ । संविदि । चेतनायाम् ॥ ढ्रगडवाद्ये ॥ उप प्रतिपद्यते ज्ञायतेऽनया । पदगतौ । सम्पदादित्वात्क्विप् ॥ प्रतिपदनम् । कर्त्तवाक्विप् ॥ तिथीनांप्रवरायस्माद्ब्रह्मणासमुदीरिता । प्रतिपाद्यापदेपूर्वेप्रतिपत्तेनसोच्यते ॥ अथचन्द्रदर्शनकारणंयथा । अमावास्याघटीशोध्याप्रथमाऽर्द्धानसंयुता । सूर्यराहुघटीभ्यस्तु दधिकाद्दृश्यतेमधीति ज्योतिषम् ॥

प्रतिपद्यमान : । पुं॰ भजमाने ॥

प्रतिपन्न : । त्रि॰ अवगते । विदिते ॥ अङ्गीकृते ॥ विक्रान्ते ॥ प्राप्ते ॥ प्रतिपद्यतेस्म । पद॰ । क्त : ॥

प्रतिपर्णशिफा । स्त्री॰ द्रवन्त्याम् ॥

प्रतिपादक : । त्रि॰ प्रतिपत्तिजनके । बोधके । ज्ञापके । प्रमापके ॥

प्रतिपादनम् । न॰ दाने ॥ प्रतिपत्तौ ॥ बोधने ॥ पद॰ । ण्यन्त : । भावे ल्युट् ॥

प्रतिपादयिता । त्रि॰ समर्थयितरि ॥

प्रतिपादित : । त्रि॰ बोधिते ॥

प्रतिपादुक : । त्रि॰ प्रतिपद्यमाने ॥ लषपतपदेत्यादिना॰ उकञ् ॥

प्रतिपाद्य : । त्रि॰ बोद्धव्ये ॥ वक्तव्ये ॥

प्रतिपालक : । त्रि॰ पालनकर्त्तरि ॥ प्रतिपालयति । पारक्षणे । ण्वुल् ॥

प्रतिपालनम् । न॰ पोषणे ॥ रक्षणे ।
प्रतिपालितः । त्रि॰ रक्षिते ॥
प्रतिपाल्यः । त्रि॰ प्रतिपालनीये ॥
प्रतिपिपादयिषा । स्त्री॰ प्रतिपादयितुमिच्छायाम् ॥
प्रतिप्रयाणम् । न॰ प्रतिगमने ॥ यथा - प्रतिप्रयाणेप्येमृतावमानामिति ॥
प्रतिप्रयातः । त्रि॰ प्रतिनिवृत्तगते । मिलकीवोर्टि॰ इ॰ भां॰ ॥
प्रतिप्रसवः । पुं॰ निषिद्धस्यपुनर्विधाने।
प्रतिप्रसूतः । त्रि॰ प्रतिप्रसवविशिष्टे ॥ सामान्येनाशास्त्रविहितं क्वचिच्छास्त्रेणप्रतिषिद्धंपुनर्विधीयमानंप्रतिप्रसूतमुच्यते ॥ पुनःसम्भाविते ॥
प्रतिप्रस्तोता । पुं॰ ऋत्विग्विशेषे ॥
प्रतिप्रियम् । न॰ प्रत्युपकारे ॥
प्रतिफलनम् । न॰ प्रतिबिम्बे ॥ त्रि॰ तुल्यफले ॥
प्रतिफालनम् । न॰ प्रतिबिम्बे ॥
प्रतिफुल्लः । } पुं॰ प्रफुल्ले ॥
प्रतिफुल्लकः । }
प्रतिबद्धः । त्रि॰ गृहीते ॥ मनोहरे ॥ प्रतिबध्यतेस्म । बन्धबन्धने । क्तः ॥ प्रतिबन्धविशिष्टे ॥
प्रतिबध्यः । त्रि॰ प्रतिबन्धनीये । प्रतिबंधार्हे ॥
प्रतिबन्धः । पुं॰ प्रतिष्टम्भे । कार्यप्रतिघाते । प्रतिबन्धनम् । बन्ध॰ । घञ् ॥
प्रतिबन्धकः । त्रि॰ प्रतिरोधके । वाधके ॥
प्रतिबन्धिः । पुं॰ अनिष्टान्तरप्रसञ्जकवाक्यविशेषे । प्रतिबन्धे ॥ प्रतिबन्धेस्तुल्यत्वम् ॥
प्रतिबलः । त्रि॰ समानबले ॥ शक्ते । समर्थे ॥
प्रतिबोधः । पुं॰ स्फुटने । निद्रापगमे ॥ गुरूपदेशे ॥
प्रतिबोधम् । अ॰ बोधंबोधंप्रतीत्यर्थे ॥ अव्ययंविभक्तीत्यादिनायथार्थेऽव्ययीभावः ॥ बोधाभिमुखे ॥
प्रतिभयम् । न॰ भये ॥ त्रि॰ घोरे । भयङ्करे ॥ प्रतिगतंभयंयेन । प्रादिसमासः प्रतिगतंभयमस्मिन् । प्रादिभ्योधातुजस्येतिवा ॥
प्रतिभयाकरः । त्रि॰ भयङ्कररूपे ॥ प्रतिभयस्याकरोयस्य ॥
प्रतिभा । स्त्री॰ उपस्थितायांबुद्धौ ॥ ज्ञानबीजभूतसंस्कारविशेषे ॥ नवनवोन्मेषशालिन्यांबुद्धौ ॥ [illegible] नवनवोन्मेषशालिनी[illegible] ॥ पत्रमयष्टे ॥ प्रति[illegible] । [illegible] । आतयेत्यङ् ॥
प्रतिभागः । पुं॰ [illegible] [illegible]
प्रतिभानम् । न॰ [illegible] [illegible]

सूचम् ॥
प्रतिभानवान् । त्रि॰ प्रतिभाविशिष्टे ॥ प्रतिभैवप्रतिभानम् । प्रतिभानमस्त्यस्य । मतुप् ॥ तात्कालिकबुद्धिमति ॥
प्रतिभान्वितः । त्रि॰ प्रगल्भ ॥ प्रतिभयाऽन्वितः ॥
प्रतिभामुखः । त्रि॰ प्रगल्भे ॥
प्रतिभार्गवः । पुं॰ प्रतिशुक्रे ॥ यद्दिग्गतः समुदयेविचरेद्भगोलके । यद्वारभेपुविपरीतविविधः प्रतिभार्गवः ॥ एकग्रामेचतुःशालि दुर्भिक्षे राष्ट्रविप्लवे । प्रतिमानीयमानाया : पुरः शुक्रोनदुष्यतीति नक्षत्रधर्मागमनैदीपिका ॥
प्रतिभासः । पुं॰ प्रतीतौ ॥
प्रतिभाहानिः । स्त्री॰ बुद्धिनाशे ॥
प्रतिभूः । पुं॰ लग्नके । धनिकाधमर्णयोर्मध्यस्थे । जामन्दूः भारसीभाषा ॥ सचत्रिविधः एकोदर्शनप्रतिभूः । द्वितीयोदानप्रतिभूः । अपरः प्रत्ययप्रति भूरिति ॥ प्रति॰ प्रतिनिधिर्भवति । भू॰ । भुवः संज्ञान्तरयोरितिक्विप् ॥ निर्वेतरि ॥
प्रतिमः । त्रि॰ उत्तरपदस्थोयंस्तसदृशे ॥ प्रतिमीयते । माङ् । आतइत्यङ् ॥
प्रतिमा । स्त्री॰ गजदन्तास्थबन्धे ॥ अनुकृतौ । मूर्तिसदृशमृच्छिलादिनिर्मितप्रतिरूपके । प्रतिमाने । प्रतिविम्बे ॥ प्रतिमीयतेऽनया । माङ्माने । आतश्चोपसर्गइत्यङ् ॥ उपमायाम् ॥
प्रतिमानम् । न॰ प्रतिच्छायायाम् । प्रतिविम्बे ॥ प्रतिच्छायामीयतेऽनेन । माङ्माने । ल्युट् ॥ गजकुम्भान्तराले ॥ गजदन्तद्वयान्तरे ॥ दन्तयोरुभयोर्मध्यं प्रतिमानमिति स्मृतम् । वाहित्याधोभागे ॥ प्रतिमीयतेऽनेन । मीञ्हिंसायाम् । करणेतिल्युट् । मीनातिमीनोतीत्यात्वम् ॥
प्रतिमार्गकः । पुं॰ पुरविशेषे ॥ वद्रूे ॥
प्रतिमुक्तः । त्रि॰ आमुक्ते । परिहितकवचादौ भटे ॥ प्रतिमुच्यतेस्म । मुच्लृ॰ । क्तः ॥
प्रतिमुखः । पुं॰ नाटकसन्ध्यन्तरे ॥ अभिमुखे ॥ विमुखे ॥
प्रतियत्नः । पुं॰ गुणाधाने । संस्कारे ॥ लिप्सायाम् ॥ उपग्रहे ॥ त्रि॰ यत्नवति ॥ प्रतियत्नम्॰ प्रतियत्नतेवा । यतीप्रयत्ने॰ निकारादौवा । यजयाचेतिनङ् ॥
प्रतियातना । स्त्री॰ प्रतिकृतौ । प्रतिविम्बे । प्रतिमायाम् ॥ प्रतियात्यतेऽनया । यतनिकारोपस्कारयोः

। पुं० । व्यासयन्योधुच् ॥ तुल्यया तनायाम् ॥

प्रतियोग : । पुं० विरोधे ॥ प्रतियुज्यते । घञ् ॥ सम्बन्धे ॥

प्रतियोगी । त्रि० विरोधिनि ॥ यथा रागप्रतियोगीविराग : ॥ सत्प्रतिपक्षे ॥ यथा ॥ प्रतियोगिनं दृष्ट्वाप्रतियोगोगिवर्त्तते ॥ तुल्ययशिमस्ति ॥ निरूपिते ॥ यथा । सम्भावप्रतियोगिकम् । विद्यमान वस्तुनानिरूपित मित्यर्थ : ॥

प्रतिरथ : । त्रि० प्रतिपक्षे ॥

प्रतिरथ : । पुं० प्रतिलम्भे ॥

प्रतिरव : । त्रि प्रत्यावर्त ॥

प्रतिरूप : । त्रि० सदृशे ॥ न० । प्रतिमायाम् ॥ प्रतिसदृशं रूपं यस्य ॥

प्रतिरूपकम् । न० प्रतिरूपे ॥ स्वा० कः ॥

प्रतिरोधा । त्रि० प्रतिकूलाचरण शीले ॥

प्रतिरोध : । पुं० तिरस्कारे ॥ चौर्ये ॥ सत्प्रतिपक्षे ॥

प्रतिरोधक : । पुं० चौरे । प्रतिबन्धके ॥

प्रतिरोधी । पुं० चौरे । प्रतिरोद्धुं शीलमस्य । रुधिर्० । सुपीतिणिनि : ॥

प्रतिरोपणम् । न० उत्खातपुना रोपणे ॥

प्रतिलम्भ : । पुं० लाभे । लम्भने ॥

प्रतिलोम : । त्रि० वामे ॥ विलोमे ॥ अचप्रत्यन्ववित्यच् ॥

प्रतिलोमज : । त्रि० प्रतिलोमजाते ॥ उत्तमवर्णायामधमवर्णाज्जाते ॥

प्रतिवचनम् । न० उत्तरे । प्रतिवाक्ये ॥

प्रतिवप : । न० प्रत्युत्तरे ॥

प्रतिवन्दी । स्त्री० स्वस्वीकृतदोषसाम्ये ॥

प्रतिवसथ : । पुं० ग्रामे ॥

प्रतिवस्तूपमा । स्त्री० अलङ्कारवि०

प्रतिवाक्यम् । न० उत्तरे ॥ प्रतिवचनम् । यत् ॥

प्रतिवाणि : । स्त्री० प्रतिवाक्ये ॥

प्रतिवाद : । पुं० वाद्यवि० ॥ योगुरुदेशाच्छिष्यदेशमागच्छतिवाद्य : स प्रतिवादइत्युच्यते ॥

प्रतिवाद : । पुं० प्रत्याख्याने ॥ प्रतिवदनम् । वद० । घञ् ॥ विरोधे ॥

प्रतिवादी । त्रि० विरोधिनि ॥ प्रतिवादोऽस्यास्ति । इनि : ॥ प्रतिपक्षे ॥ यथा । यदार्थ्येऽधिय : पक्ष: कल्पित : पूर्ववादिना । तस्मात् तत्पक्षसंगत्य प्रतिवादीतदोत्तरम् ॥ इति बृहस्पति : ॥

प्रतिवाप : । पुं० प्रतीवापे ॥

प्रतिवासर : । पुं० प्रतिदिने ॥

प्रतिवासी । त्रि॰ आसन्नगृहिणि । प्रतिवेशवासिनि । परौसी॰ इ॰ भा॰ ॥ प्रतिवसति । वस॰ । ग्रह्यादिणिनि : ॥

प्रतिविधानम् । न॰ प्रतियत्ने ॥

प्रतिविधि : । पुं॰ प्रतीकारे ॥

प्रतिविम्बम् । न॰ प्रतिरूपे । प्रतिमायाम् ॥ तत्तदुपाधिषुविम्बाकारैचित्तपरिणामे ॥ प्रतिकृतिर्विम्बस्य । कुगतीतिसमास : ॥

प्रतिविषा । स्त्री॰ अतिविषायाम् । अतीस॰ इ॰ भा॰ ॥ प्रतीपं विषं यस्या : ॥

प्रतिविष्णुक : । पुं॰ मुचुकुन्दवृक्षे । मुचुकुन्दपुष्प॰ इ॰ प्रसिद्धे ॥

प्रतिविहित : । त्रि॰ सज्जिते ॥

प्रतिवेश: । पुं॰ प्रतिवासिगृहे ॥ प्रतिवासिनि ॥ प्रतिविशिर्घञ् ॥

प्रतिवेशवासी । त्रि॰ प्रतिवासिनि ॥

प्रतिवेशी । त्रि॰ प्रतिवासिनि ॥

प्रतिशब्द: । पुं॰ प्रतिध्वनौ । सुस्पष्टगाधुन्यवरे ॥

प्रतिशरणम् । न॰ प्रतिगृहे ॥

प्रतिशासनम् । न॰ आत्मीयभृत्यादीनां कार्यप्रेरणे ॥ प्रतिपूर्वात्॰शासुच नुशिष्टावित्यस्माल्ल्युट् ॥

प्रतिशिष्ट : । त्रि॰ प्रहिते । प्रेरिते ॥ प्रत्याख्याते ॥

प्रतिशीर्षकम् । न॰ निष्क्रये ॥

प्रतिशुक्र : । पुं॰ प्रतिभार्गवे ॥

प्रतिश्या । स्त्री॰ पीनसे ॥ प्रतिश्यायति नयाश्यैङ्गतौ । आतश्चोपसर्गेड्- ल्कङ्॰ । टाप् ॥

प्रतिश्याय : । पुं॰ पीनसे । नासाख्यरोगे । प्रतिश्यायति । श्यैङ् । श्याद्व्यधेतिण : ॥

प्रतिश्रय : । पुं॰ सभायाम् ॥ आश्रये । आश्रये ॥ निवासे ॥ यज्ञगृहे ॥ प्रतिश्रयणम् अनया । श्रिञ्॰ । एरच्॰ बोध्य ॥

प्रतिश्रव : । पुं॰ अङ्गीकारे । अभ्युपगमे ॥ प्रतिपूर्वाच्छृणोते : ऋदोरप् ॥

प्रतिश्रवणम् । न॰ आज्ञाङ्गीकरणे ॥

प्रतिश्रुत् । स्त्री॰ प्रतिध्वानौ ॥ श्रुश्रवणे । सम्पदादित्वात्क्विप् प्रतिप्रथमशब्दं तथौ कृत्यश्रुयते॰ इ॰ प्रतिश्रुत् ॥

प्रतिश्रुत: । त्रि॰ स्वीकृते । अङ्गीकृते ॥ प्रतिश्रूयतेस्म । श्रु॰ । क्त : ॥

प्रतिषिद्ध : । त्रि॰ निषिद्धे । प्रतिषेधविषये ॥ अप्रतिषिद्धमनुमतंभवतीतियथा ॥

प्रतिषेद्धा । त्रि॰ निषेधके । बाधके । प्रतिषेधकर्त्तरि ॥

प्रतिषेध : । पुं॰ निषेधे ॥ यथा । प्राधान्यन्तुविधेर्यत्रप्रतिषेधेप्रधानता । पर्युदास : सविज्ञेयोयत्रोत्तरपदे

नञ् ॥ इ० ॥ पर्युदास : सदृश ग्राहीप्रतिषेधोनिवर्तकः । इतिच ॥

प्रतिषेधक : । त्रि० निषेधकर्तरि ॥

प्रतिषेध्य : । त्रि० प्रतिषेधंकर्तुंयोग्ये ॥

प्रतिष्कश : । त्रि० सहाये ॥ वार्त्ताहरे ॥ पुरोगे ॥ कशगतिशासनयोः । प्रतिपूर्वोऽस्मात्पचाद्यच् ० प्रतिष्कशश्चकशेरितिसुट्षत्वञ्चनिपात्यते ॥

प्रतिष्कष : । पुं० चर्मरज्जौ ॥

प्रतिष्टम्भ : । पुं० प्रतिघाते । प्रतिबन्धे । रोधे । प्रतिष्टम्भनम् । स्तम्भु-रोधे । घञ् ॥

प्रतिष्ठ : । पुं० सुपार्श्वनामकतीर्थकृत् पितरि ॥ त्रि० प्रतिष्ठायुक्ते ॥

प्रतिष्ठा । स्त्री० गौरवे ॥ गौरवरूपाप्रतिष्ठापपुण्यस्यफलं । यथा । पुण्यफलं प्रतिष्ठासापूजिता पुण्यदासदा । ययाविनाजगत्सर्वंजीवन्मृतसमंमुने० तिभागवतम् ॥ ++ ) स्थितौ ॥ स्थाने ॥ स्थितौ ॥ चात्मयापनायस्थाने । आस्पदे । आश्रये ॥ अनिकेताश्चनाहाराविन्दसायंगृहागता : । तेषांत्वहस्व: सर्वेषांप्रतिष्ठायोनिरेवचेतिविष्णुपुराणम् । योनिरन्नादिदानेनजीवनवृत्तिः ॥ यागनिष्पत्तौ ॥ योगसिद्धौ ॥ संस्कारविशेषे ॥ तत्र • यथाशक्तिस्थापना-

दिपूर्वकं प्रतिमादृदयेतन्मूलमन्त्रविन्यासेनदेवतायाविशेषसन्निधि : प्रतिष्ठेत्याख्यातम् । यथोक्तं भविष्यपुराणे । स्नपनादिविधायस्तिकृत्वातन्मूलमन्त्रकम् ॥ विन्यसेत्हृदयाम्भोजेप्रतिमासुष्टताभवेद्विति ॥ महाकपिलपञ्चरात्रे । प्रतिष्ठाशब्दसंसिद्धि : प्रतिपूर्वात्तिष्ठते : । स्वार्थेत्यान्निपातानांसंस्कारादीप्रति: स्थिति : ॥ अर्थस्तस्यमतस्तगीयते शाब्दिकैर्जनै: । विशेषसन्निधिर्यात्तु क्रियतेस्थापकस्यतु ॥ सन्मूर्तिभावनासक्त : प्रतिष्ठासाभिधीयते ॥ भूति ॥ प्रकल्पिते ॥ प्रतितिष्ठत्यनेनेतिकल्पितरूपरहितसकलिपत मुच्यते ॥ स्थानादप्रच्युतौ । प्रतिपूर्वस्तिष्ठतेरातश्चोपसर्गेऽङ्। उपसर्गात्सुनोतीतिषत्वम् ॥ चतुरक्षरपदे ॥ यथा । भास्तत्कन्या० सैकाधन्या । यस्या : कृते० कृष्णोऽस्थित् ॥

प्रतिष्ठानम् । न० नगरवि० । यमावर्त्तिन : पुरूरवसोराजधान्याम् । ब्रह्मावर्त्त० इ० बिठूर० दू० ष यत्र प्रसिद्धि : ॥

प्रतिष्ठापित : । त्रि० विनिवेशिते ॥

प्रतिष्ठित : । त्रि० तात्पर्येणस्थिते । संस्थिते । निष्पन्नयागे । संस्कृते ॥ प्रतिपूर्व :ष्ठा० । गत्यर्थेति-

दिवसकृद्वतुवर्चसप्रभ : स्निग्ध : ॥ वैदूर्यनिभ : स्वच्छ : शुक्लश्चेमसौ भित : ॥ पीतोव्याधिंजनयति च-शोकरुपद्रवश्चस्वकोपाय । प्रतिसूर्या योमासादस्य भयासकृनृपस्पर्शी ॥ दिवसकृत : प्रतिसूर्योविशदकृदुदग्दक्षिणोस्थितोऽनिलकृत् । उभयस्थ : सलिलभयं नृपमुपरिनिघ्नन्स्य भोजनहा ॥ इति ॥

प्रतिस्पष्ट : । त्रि॰ प्रत्याख्याते ॥ प्रेषिते ॥ दत्ते ॥ प्रहिते ॥

प्रतिसोमा । स्त्री॰ महिषवल्ल्याम् ॥

प्रतिस्पर्द्धा । स्त्री॰ स्पर्धायाम् ॥

प्रतिस्पर्द्धी । त्रि॰ स्पर्धाविशिष्टे ॥ प्रतिगर्जिते ॥

प्रतिश्रुत : । त्रि॰ श्लिष्टे प्रतिमुखलिखिते ॥ सद्दे ॥ यशे ॥ प्रतियद्धे ॥ प्रतिश्रुत्यतेस्म । क्त : ॥

प्रतिहति : । पुं॰ विनाशे ॥ प्रतिघाते ॥

प्रतिहन्ता । त्रि॰ विनाशके ॥ प्रतिहन्ति । हन॰ । बहुलमन्यत्रापीति तृन् ॥

प्रतिहरणम् । न॰ इतस्ततोनयने ॥

प्रतिहर्त्ता । पुं॰ ऋत्विग्विशेषे ॥ प्रतिहरति । हृञ्॰ । बहुलमन्यत्रापीति तृन् ॥ त्रि॰ वारयितरि ॥ प्रतिहर्त्तात्वमासदाम् ॥

प्रतिहार : । पुं॰ द्वारि । द्वारि ॥ द्वास्थे । द्वारपाले ॥ प्रतिह्रियतेऽनेना नया । हृञ्॰ । घञ्॰ । उपसर्गस्य घञ्यमनुष्येबहुलमिति वाकोदीर्घाभाव : ॥ प्रतिहरणम् । भावेघञ् । प्रतिहारोऽनवा रणमस्यास्य । अर्शआद्यच् ॥ सांमभक्त्यन्तरे ॥ चास्वभक्तिसाम्यसाम्य तुर्थभक्ती ॥

प्रतिहारक : । पुं॰ मायाकारे ॥ इन्द्रजालादिकारके ॥

प्रतिहास : । पुं॰ करवीरे ॥ प्रतीपो हासोऽस्य ॥ हासकप्रतिशब्दे ॥

प्रतीक : । पुं॰ अङ्गे । अवयवे ॥ त्रि॰ प्रतिकूले । प्रतीपे । विलोमे । प्रतिगताङ्गैस्तर्पीयतेनवा । मधृतश्चेति कप् ॥ प्रत्येति॰ प्रतीयतेवा । इण् गतौ । अलीकादयश्चेति साधुर्वा ॥

प्रतीकार : । पुं॰ कृतापकारस्यप्रत्यपकारे । वैरशुद्धौ ॥ स्वप्राणादित्राणाय व्यापारे ॥ प्रतिकरणम् । कृञ्॰ । घञ् । उपसर्गस्येति दीर्घ : ॥ उपाये । चिकित्सायाम् ॥

प्रतीकाश : । पुं॰ उपमायाम् । उत्तरपदस्थितात्सदृशवचने ॥ प्रतिकाशते । काशृदीप्तौ । पचाद्यच् । इक : काशइत्युपसर्गस्यदीर्घ : ॥

प्रतीक्षणम् । न॰ प्रतीक्षायाम् ॥ ईक्ष॰ । ल्युट् ॥

प्रतीक्षा । स्त्री॰ प्रतीक्षणे । निद्धांत प्रामाण्यार्थप्रतीक्षणे ॥ ईक्षणम् । ईक्ष

दर्शनाद्धनयो : । गुरोश्चेत्य : । टाप् ॥

प्रतीच्य : । त्रि० पूज्ये ॥ प्रतिग्राह्ये ॥ प्रतीचणीये ॥ प्रतीच्यते । ईच० । ऋहलोर्ण्यत् ॥

प्रतिघात : । पुं० प्रतिघाते ॥

प्रतीची । स्त्री० पश्चिमदिशि ॥ प्रतिपश्चाद्दिनान्तेऽञ्चतिसूर्यम् । अञ्चु गतिपूजनयो : । ऋत्विगादिनाक्विन् । उगितश्चेति ङीप् ॥

प्रतीचीन : । त्रि० प्राग्भवे ॥ प्रत्यक् ॥ विभाषाञ्चेरदिक्स्त्रियामिति ख : ॥

प्रतीच्छक : । त्रि० ग्राहके ॥

प्रतीच्छित : । त्रि० इष्टे ॥ गृहीते ॥

प्रतीच्य : । त्रि० प्रतीचिभवे ॥ द्युप्रागिति यत् ॥

प्रतीत : । त्रि० सादरे ॥ ज्ञाते ॥ हृष्टे ॥ प्रख्याते ॥ प्राज्ञे ॥ प्रथिते ॥ प्रत्यक्षमगात् । प्रतीयतेस्मेति वा । इण० । गत्यर्थत्वात् । कर्त्तरि कर्मणि वा क्त : ॥

प्रतीति : । स्त्री० प्रत्यये ॥ ज्ञाने ॥ सिद्धौ । भावे ॥

प्रतीप : । पुं० चन्द्रवंशीयद्विराजपुत्रे । शान्तनुराजपितरि ॥ त्रि० प्रतिकूले । पराङ्मुखे ॥ न० वामे ॥ अलङ्कारविशेषे ॥ यथा । प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् । त्वल्लोचनसमंपद्मं त्वद्वक्त्रसदृशोविधु : ॥ प्रसिद्धोपमानोपमेय प्रातिलोम्यात् प्रतीपम् ॥ यथावा । यत्त्वन्नेत्रसमानकान्तिसलिलेमग्नन्तदिन्दीवरंमेघैरन्तरित : प्रियेतवमुखच्छायानुकारीशशी । येपित्वद्गमनानुकारिगतयस्ते राजहंसागतास्त्वत्साद्दृश्यविनोदमात्रमपिमेदैवेननक्षम्यते ॥ अन्योपमेयलाभेनवर्ण्यस्यानादरश्चतत् । अलङ्कर्वंगातेवक्त्रकान्त्याचन्द्रोपिताद्दृश : ॥ अत्युत्कृष्टगुणतयावर्ण्यमानस्य अन्यत्रसादृश्यमसहमानस्यउपमेयंकिञ्चित्प्रदर्श्यतावतावर्ण्यस्य तिरस्कारोद्वितीयं प्रतीपं । पूर्वस्मादपिविच्छित्तिविशेषशालि । यथा । गर्वमसम्भाव्यमिमंलोचनयुगलेनकिंवहसिभद्रे ॥ सन्तीदृशानिदिशिदिशिसरस्सु ननुनीलनलिनानि ॥ वर्ण्योपमेयलाभेन तथान्यस्याप्यनादर : । कातीर्वंदर्पस्तेमृत्यो त्वत्तुल्या : सन्तिशिखिन : ॥ अत्युत्कृष्टगुणतयाक्वचिदप्युपमानभाव मसहमानस्य वर्ण्यस्य वर्ण्यमुपमेयंपरिकल्प्यतावतास्यापितिरस्कार : पूर्वप्रतीपद्वैपरीत्येनतृतीयंप्रतीपम् ॥ यथाया । अहमेवगुरु : सुदारुणानामितिहालाहलमास्मतातदृप्य : । ननुसन्तिभवादृशानिभूयोभुवनेस्मिन्वचनानि

कप्रतीहारशब्दात्स्वार्थेइनि : ॥

प्रतीहारी । स्त्री० द्वा:स्थितायाम् । द्वारपालकसंकर्त्र्याम् ॥ गौ० ङीष्

प्रतीहास : । पुं० करवीरे । शतप्राशे । हयमारके ॥

प्रतुद : । पुं० हारीतादिपक्षिगणे ॥ यथा । हारीतोऽथबक : पाण्डुश्चित्रपक्षोऽथ भृङ्गक : । पारावत : खञ्जरीट : पिकाद्या: प्रतुदा : स्मृता : ॥ अतमुख्यपाठस्त्वयम् । काणकचटकहारीतकपोतशतपत्रिका : । सारिकाखञ्जरीटश्च पिकाद्या : प्रतुदा : स्मृता : ॥ इति । भावप्रकाशीयव्याख्यानुरोधात् ॥ प्रतुदा मधुरा:पित्तकफघ्नास्तुवराश्च हिमा : । लघवीयबद्धवर्चस्का : किञ्चिद्वातकरा : स्मृता : ॥ अपिच । छायाश्चाविष्किरोवर्ग : प्रतुदाजाङ्गला : मृगा : । लघव : शीतमधुरा : कषायाश्चिता नृणाम् ॥ इति ॥

प्रतोद : । पुं० प्राजने । लौहप्रोताये श्वभादिप्रेरणदण्डे ॥

प्रतोरणम् । न० बहिर्द्वारे ॥

प्रतोली । स्त्री० ग्राममध्यमार्गे । रथ्यायाम् । विशिखायाम् ॥ प्रतोलयति । तुलउन्माने । चु० । अच् । गौ० ङीष् ॥

प्रत्त : । त्रि० दत्ते ॥ प्रदीयतेस्म ॥ डुदाञ्दाने । क्त : । अचउपसर्गात्तइतितादेश : ॥

प्रत्न : । त्रि० पुरातने ॥ नवपुराणे प्रादितियेनसमुच्चितस्त्नप्प्रत्यय: ॥

प्रत्यक्चेतन : । पुं० त्वम्पदलक्ष्ये ॥

प्रत्यक्फलम् । न० सर्वान्तरत्वे ॥

प्रत्यक्पर्णी । अपामार्गे ॥ द्रवन्त्याम् ॥ प्रत्यञ्चिपर्णान्यस्या : सा । पाककर्णेतिङीप् ॥

प्रत्यक्पुष्पी । स्त्री० अपामार्गे ॥ प्रत्यञ्चिपुष्पाण्यस्या : पाककर्णेतिङीप् ॥

प्रत्यक्श्रेणी । स्त्री० दन्त्याम् ॥ मूषिकपर्ण्याम् । सुतश्रेण्याम् ॥ प्रतीचीश्रेणीयस्या : । समासान्तस्यानित्यत्वान्नकप् ॥

प्रत्यक्षम् । अ० प्रत्यक्षे ॥ अक्षिमक्षिप्रतीतिशीर्षायाम् यथार्थत्वेनसमास : । अक्ष्णोराभिमुख्यमित्यर्थे०लक्षणेनाभिप्रतीतिअव्ययीभाव : प्रतिपरसमनुभ्योक्ष्णइतिटच् ॥

प्रत्यक्षम् । त्रि० प्रमाणविशेषे । स्मृतौ ॥ प्रामाण्यंप्रत्यक्षपिक्षत्वात् । इन्द्रियग्राह्ये । ऐन्द्रियके ॥ इन्द्रियार्थसन्निकर्षजन्यार्थाकाराश्रया० इन्द्रियाश्रितवृत्ति : प्रत्यक्षंप्रमाणम् ॥ प्रत्यक्षज्ञानकारणंप्रत्यक्षम् । इन्द्रियार्थसन्निकर्षजन्यंज्ञानंप्रत्यक्षम् ॥ तद्द्विविधम् । निर्विकल्पकं०सविकल्पकञ्चेति । तत्रनिष्प्रकारकंज्ञानंनिर्विकल्पकम् । सप्रकारकंज्ञा

नं० सविकल्पकम् । यथा० डित्थो
यम्० ब्राह्मणोयं० श्यामोयमिति ।
प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः
षड्विधः । संयोगः संयुक्तसमवायः
संयुक्तसमवेतसमवायः समवेत
समवायः विशेषणविशेष्यभावश्चे
ति । तत्रचक्षुषाघटप्रत्यक्षजनने०
संयोगसन्निकर्षः ( ॥ + १ + ॥ )
घटरूपप्रत्यक्षे०संयुक्तसमवायः च-
क्षुःसंयुक्तेघटे रूपस्यसमवायात्२रूप
त्वसामान्यप्रत्यक्षेसंयुक्तसमवेतसम
वायःचक्षुःसंयुक्तेघटेरूपंसमवेतम्त
त्ररूपत्वस्यसमवायात् ॥३॥ श्रोत्रेण
शब्दसाक्षात्कारे०समवायः सन्नि
कर्षः कर्णविवरवर्त्याकाशस्यश्रोत्र
त्वात्०शब्दस्याकाशगुणत्वात्०गुण
गुणिनोश्चसमवायात् ॥ ४ ॥ शब्द
त्वसाक्षात्कारे० समवेतसमवायः
सन्निकर्षः श्रोत्रसमवेतेशब्दे०शब्द
त्वस्यसमवायात् ॥ ५ ॥ अभावप्रत्यक्षे
विशेषणविशेष्यभावः सन्निकर्षः
घटाभाववद्भूतलमित्यत्र०चक्षुःसं-
युक्तेभूतले०घटाभावस्यविशेषणत्वा
त् ॥ ६ ॥ एवंसन्निकर्षषट्कजन्यं
ज्ञानंप्रत्यक्षम् । तत्करणमिन्द्रियम्
। तस्मात्०इन्द्रियंप्रत्यक्षप्रमाणमि
तिसिद्धम् ॥ इन्द्रियार्थसन्निकर्षोत्प
न्नंज्ञानमव्यपदेश्यमव्यभिचारिव्यव
सायात्मकंप्रत्यक्षम् ॥ प्रतिगतोऽक्ष

म् । अत्यादयइतिसमासः ॥ अनु
भवविशेषे ॥ तत्षड्विधम् । घ्राण-
जम् १ रासनम् २ श्रावणम् ३ चा
क्षुषम् ॥ स्पार्शनम् ५ मानसम् ६
निर्विकल्पकसविकल्पकभेदेनप्रत्य
क्षंद्विविधम् । निर्विकल्पकमती
न्द्रियम् । सविकल्पकंमनोग्राह्यम् ।
षड्विधप्रत्यक्षे०आश्रयस्यमहत्त्वंका
रणम् । इन्द्रियंकरणम् । विषयेणस
ह०इन्द्रियसन्निकर्षोस्यव्यापारः ।
यथा । घ्राणजादिप्रभेदेनप्रत्यक्षंष-
ड्विधंमतम् । घ्राणस्यगोचरोगन्धो
गन्धत्वादिरपिस्मृतः ॥ तथारसो
रसज्ञायास्तथाशब्दोपिचश्रुतेः ।
उद्भूतरूपंनयनस्यगोचरोद्रव्याणितद
न्तिपृथक्त्वसङ्ख्ये । विभागसंयो
गपरापरत्वस्नेहद्रवत्वंपरिमाणयुक्त
म् । क्रियांजातिंयोग्यवृत्तिंसमवा-
यञ्चतादृशम् । गृह्णातिचक्षुः स-
म्बन्धादालोकोद्भूतरूपयोः ॥ उद्भू
तस्पर्शवद्द्रव्यंगोचरः सोपित्वच
चः । रूपान्यच्चक्षुषोयोग्यंरूपमत्रा
पिकारणम् ॥ द्रव्याध्यक्षेत्वचोयोगो
मनसाज्ञानकारणम् । मनोग्राह्यं
सुखंदुःखमिच्छाद्वेषोमतिः कृ
तिः ॥ ज्ञानंयन्निर्विकल्पाख्यं तद
तीन्द्रियमिष्यते । महत्त्वंषड्विधेहे
तुरिन्द्रियंकरणंमतम् ॥ विषयेन्द्रि
यसम्बन्धोव्यापारः सोपिषड्विधः

॥ इतिभाषापरिच्छेद : ॥

प्रत्यक्षत्वम् । न० अविलम्बितप्रतीतिकत्वे ॥

प्रत्यक्षदर्शन : । त्रि० साक्षिणि ॥ प्रत्यक्षंदर्शनम् । यस्य स : ॥

प्रत्यक्षदर्शी । त्रि० साक्षिणि ॥

प्रत्यक्षदेव : । पुं० ब्राह्मणे ॥

प्रत्यक्षवादी । पुं० बौद्धे ॥

प्रत्यक्षी । त्रि० व्यक्तदृष्टार्थे ॥

प्रत्यगात्मा । पुं० चर्चशब्दप्रत्ययात्मकत्वे० आत्मनि ॥ जडानृताहङ्कारादिभ्य : सत्यज्ञानानन्दादिरूपतया प्रतिपक्षतिद्वतिप्रत्यक् । सचासावात्माच ॥

प्रत्यगाथापति : । पुं० वरुणे ॥

प्रत्यग्धृत : । त्रि० अन्तर्मुखीभूते ॥

प्रत्यग्र : । अभिनवे । नूतने ॥ शोधिते ॥ प्रतिनवमग्रमस्य ॥

प्रत्यग्रथ : । पुं० अहिच्छत्रदेशे ॥

प्रत्यङ्गम् । न० कर्णाद्यवयवे ॥ यथा । प्रत्यङ्गंकर्णनासाक्षिशिखाङ्गुलिकरादिकम् । इति ॥

प्रत्यङ्गिरा । स्त्री० देवीविशेषे ॥

प्रत्यक् । अ० दिशि ॥ देशे ॥ काले ॥ प्रतीच्यांदिशि•प्रतीच्यादिशः प्रतीचीदिग्वा । दिक्शब्देभ्य . सप्तमीपञ्चमीप्रथमादिनाऽस्ताति : । अस्तेर्लुक् । लुक्तद्धितलुकि ॥ ॥ एवंदेशकालेष ॥

प्रत्यक् । त्रि० दिशि ॥ देशे ॥ काले ॥ प्राग्भवे ॥ सर्वान्तरेदृश्यादन्यस्मिन् कोदृक्तत्प्रत्यगितिचेत्•तादृगीदृगितिद्वयम् । वचनप्रसरेभ्येतत्प्रत्यगित्यवधार्यताम् ॥ निर्विशेषापरोक्षे ॥ जडानृताहङ्कारादिभ्य : सत्यज्ञानानन्दादिरूपतया प्रतिपक्षतीति तथा । क्विन् ॥

प्रत्यर्चित : । त्रि० पूजिते ॥

प्रत्यनन्तर : । त्रि० प्रत्यासन्ने ॥

प्रत्यनीक : । पुं० अरौ । शत्रौ । विरोधिनि ॥ परपक्षसैन्ये ॥ न० अर्थालङ्कारवि० ॥ यथा । प्रतिपक्षमशक्तेनप्रतिकर्तुं तिरस्क्रिया । यातदीयस्यतत्स्तुत्यैप्रत्यनीकंतदुच्यते ॥ न्यक्कृतिपरमपिविपक्षं साक्षान्निरसितुमशक्तेनकेनापियत्तदाश्रितप्रतिपक्षस्यकर्षयितुंतदाश्रितस्य तिरस्कारणम् तदनीकप्रतिनिधितुल्यत्वात्•प्रत्यनीकमभिधीयते । यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरंमूढतयाकेनचिदभियुज्यते•तथेहप्रतियोगिनिविजेयेतदीयोन्यो विजीयतइत्यर्थ : । उदाहरणम् । त्वंविनिर्जितमनोभवरूप : साचसुन्दरभवत्यनुरक्ता । पञ्चभिर्युगपदेवशरैस्तांतापयत्यनुशयादिवकाम : ॥ यथा । यस्यकिञ्चिदपकर्तुमक्षम : कायनिग्रहगृहीतविग्रह : । कान्तवक्त्रसदृशाकृ

तिगच्छतीतिवाविग्रहे । यथ० । यच् । प्रत्ययाः सहकारिणइतिचि कारहर्षैय : ॥

प्रत्ययकारिणी । स्त्री० मुद्रायाम् । छाय० मोरछाय० ह० भा० ॥ अ- भिधाने ॥ प्रत्ययसनिश्चयस्यकारि णी ॥

प्रत्ययित : त्रि० । आप्ते । विश्वस्ते ॥ · प्रत्ययोविश्वास : सञ्जातोऽस्य । त दस्यसञ्जातमितीतच् ॥

प्रत्ययी । त्रि० विश्वासिनि ॥ प्रत्ययो ऽस्यास्ति । इनि : ॥

प्रत्यरि : । पुं० पञ्चमतारायाम् ॥

प्रत्यर्थी । त्रि० शत्रौ ॥ प्रतिकूलमर्थ- यितुंशीलः । अर्थयास्यावाम् । सुपी तिणिनि : ॥ प्रतिवादिनि ॥ वादि- प्रतिपक्षे ॥ यथा । प्रत्यर्थिनोऽयतो लेख्यंयथावेदितमर्थिना । समामा सतदर्थश्चनामजात्यादिचिह्नितम् ॥ चार्थ्यतेऽत्यर्थ : साध्य : सोप्रत्यर्थी० तत्प्रतिपत्त : प्रत्यर्थी ॥

प्रत्यर्पणम् । न० निर्यातने । न्यासा- र्पणे ॥

प्रत्यर्पित : । त्रि० प्रतिदत्ते ॥ प्रत्य वमर्शनम् न० समलङ्करे ॥ नि- वर्त्तने ॥

प्रत्यवर : । त्रि० निकृष्टे ॥

प्रत्यवसानम् । न० भक्षणे ॥भोजने ॥

प्रत्यवसितम् । त्रि० भक्षिते ॥ प्रत्य वसीयतेस्म । मोक्षकर्मणि । क्त : ॥

प्रत्यवस्कन्द : । पुं० प्रत्यवस्कन्दने

प्रत्यवस्कन्दनम् । न० व्यवहारोत्तर प्रभेदे । यथा । प्रत्यवस्कन्दनंनाम सत्यंगृहीतम्०प्रतिदत्तंप्रतिग्रह- लब्धमितिवा । यथाहनारद : । अ र्थिनालेखितोयोर्थ : प्रत्यर्थीयदि तंतथा । प्रपद्यकारणंब्रूयात्प्रत्यव स्कन्दनंस्मृतमिति । छन्दस्यतिरपि । अर्थिनाभिहितोयोर्थःप्रत्यर्थीयदि तंतथा । प्रपद्यकारणंब्रूयात्प्रत्य- वस्कन्दनंचितद्दिशि ॥

प्रत्यवस्थाता । पुं० शत्रौ ॥

प्रत्यवस्थानम् । न० दूषणाभिधाने ॥

प्रत्यवहार : । पुं० प्रलये ॥ प्रत्यव ह्रियन्तेप्राणिनोऽस्मिन् । हञ् । अवहाराधारेतिघञ् ॥

प्रत्यवाय : । पुं० अङ्गवैगुण्यनिमित्ते पापे ॥ प्रत्यावृत्ते । प्रत्यवम् पूर्वाद् अयतेर्घञ् ॥

प्रत्यवेक्ष्य : । त्रि० एतावत्तुहतमेताव त्कर्त्तव्यमित्यनुसन्धानेनविचार णीये ॥

प्रत्यश्मा । पुं० गैरिके । गिरिमृदि ॥

प्रत्यस्त : । त्रि० प्रक्षिप्ते ॥

प्रत्यहम् । अ० प्रतिदिने ॥ अह : अह : प्रति० यथार्थेऽव्ययीभावेन पुंमकाद्व्यतरस्यामितिसमासान्त टच् । टिलोप : ॥

प्रत्याकार : । पुं॰ खड्गकोषे ॥

प्रत्याख्यात : । पुं॰ दूरीकृते । निराकृते ॥ प्रत्याख्यायतेस्म । ख्याप्रकथने॰ चक्षिङादेशोवा । क्त : ॥

प्रत्याख्यानम् । न॰ निराकरणे । निरसने ॥ ख्या॰ चक्षिङादेशोवा । ल्युट् ॥

प्रत्याख्येय : । त्रि॰ प्रत्याख्येये । प्रत्याख्यातुंयोग्ये ॥ अचोयत् । ईत् ॥ कुणा : शान्तप्रयोगज्ञा : प्रत्याख्येयंनपारिच । यथापिताहतंपाप्समपिदुष्कृतकर्मण : ॥ अन्यत्रकुलटापरकप्रतितिष्ठोविषयेलिङ्गपुराणे अध्याय : ॥

प्रत्यागत : । त्रि॰ पुनरागते ॥ सन्निवृत्ते ॥

प्रत्यागम : । पुं॰ प्रत्यागमने । फिरकेआवना॰ भू॰ भा॰ ॥

प्रत्यागमनम् । न॰ पुनरागमने । प्रत्यागमे ॥

प्रत्यादिष्ट : । त्रि॰ आच्छिद्यगृहीतुमिष्टौ ॥

प्रत्यादिष्ट : । पुं॰ निराकृते । निरस्ते । साधागच्छत्याद्युक्ते । प्रतिरुद्धे ॥ प्रत्याख्याते ॥ प्रत्यादिश्यतेस्म । दिशअतिसर्जने । क्त : ॥

प्रत्यादेश : । पुं॰ निराकृतौ । प्रत्याऽऽख्याने ॥ प्रसङ्गनिवारणे ॥ भर्तांप्रतिदेवतायाउपदेशे ॥ प्रत्यादेशनम् । दिश॰ । घञ् ॥

प्रत्याय : । पुं॰ विश्वासे ॥

प्रत्यायक : । त्रि॰ प्रतीतिजनके ॥ यथा । वर्णसमूहरूपतयाशब्दोऽयंस्वप्रत्यायकइति ॥ यथावाङ्गिरादेर्जित्यवज्ञविशब्दस्यप्रत्यायकत्वमादेषांप्रत्याय्यत्वम् ॥

प्रत्यायनम् । न॰ प्रतीतानयने ॥ बोधजनने ॥

प्रत्यायित : । त्रि॰ विश्वसनीये ॥ प्रत्ययपत्रप्रत्याय : संप्राप्त : ॥

प्रत्यालीढम् । न॰ धन्विनांयुद्धकाले चरणन्यासभेदे । अत्र स्वस्वयामपादप्रसारितदक्षिणपादसङ्कोचे ॥ त्रि॰ चर्विते ॥ प्रत्यालेपनम् । लिह॰ । नपुंसकेभावेक्त : ॥

प्रत्याशा । स्त्री॰ अभिलाषे ॥

प्रत्यासत्ति : । पुं॰ सामीप्ये ॥

प्रत्यासन्न : । त्रि॰ निकटवर्त्तिनि ॥

प्रत्यासर : । पुं॰ सैन्यपृष्ठे ॥

प्रत्यासार : । पुं॰ व्यूहस्यपश्चाद्भागे । व्यूहस्यपश्चाद्व्यूहान्तरे । व्यूहपार्ष्णौ ॥ प्रतीपमासारयतिअभिमान् । सृ॰ । ण्यन्त : । अच् ॥

प्रत्याहत : । त्रि॰ कुण्ठिते ॥

प्रत्याहरणम् । न॰ प्रत्याहारे ॥

प्रत्याहार : । पुं॰ उपादाने । स्वस्वविषयेभ्यइन्द्रियाणांप्रत्याहरणे ॥ स्वस्वविषयासम्प्रयोगेचित्तस्वरू

पानुकारएवेन्द्रियाणामितिपातञ्ज लः। विषयेभ्योनिगृहीतानीन्द्रि- याणिचित्तरूपाण्येवभवन्ति। तत श्चविक्षेपाभावात्चित्तधारणादिकं निर्वर्त्ततीत्यर्थः॥ सर्वाणीन्द्रिया णिस्वस्वविषयेभ्यः प्रत्याहरतीति- तथा॥ विषयेभ्यःसमाहृत्यमनस- श्चित्तमञ्जनम्। प्रत्याहारः सवि क्षेपोऽभ्यसनीयोमुमुक्षुभिः॥ प्रत्या हरणम्। हृञ्०। घञ्॥ अक्षरस- माम्नाये। अन्त्येनसहेतायइणि। व्याकरणप्रसिद्धे ष्वण्अणादिषु॥ प्रत्याह्रियन्तेसङ्क्षिप्यन्तेवर्णायत्र। कारणाधिकरणयोश्चेतिल्युटिप्राप्ते हलश्चेत्यधिकरणे घञ्। प्रतिकार्यमाश्रित्य क्तेया॥

प्रत्याहारयोगः। पुं० योगादीनी न्द्रियाण्यन्यं संयमाग्निपुनुश्च्योतीति विधिरी॥

प्रत्युक्तः। त्रि० दत्तोत्तरे। प्रतिवा क्ये॥

प्रत्युक्तिः। स्त्री० प्रत्युत्तरे॥

प्रत्युत्क्रमः। पुं० प्रयोगार्थे। फलारम्भे प्रथमप्रयोगे॥ प्रत्युत्क्रमणम्। घञ्॥

प्रत्युत्क्रान्तिः। स्त्री० प्रत्युत्क्रमे॥

प्रत्युत्तरम्। न० प्रतिवचने। उत्तरे॥ उत्तरंप्रति०उत्तरे॥ यथा। नमेयं भूमिःक्रमागतत्वात्०इतियाद्युक्ते० मेयंभूमिरीश्वरदौर्धभुज्यमानत्वात् इतिप्रत्युत्तरं॥

प्रत्युत्थानम्। न० अभ्युत्थाने। गात्रो त्थानपूर्वकसन्माने। प्रत्युत्थीयते ऽत्र। ष्ठा०। ल्युट्॥

प्रत्युत्पन्नः। त्रि० उत्पत्तिविशिष्टे॥ प्रत्युत्पद्यतेस्म। पद०। क्तः॥

प्रत्युत्पन्नमतिः। त्रि० प्रगल्भे। प्रतिभायुक्ते॥ सूक्ष्मबुद्धियुक्ते। क्षु द्राचीयमतौ॥ कार्यावसरएवप्रत्यु त्पन्नामतिर्यस्य॥

प्रत्युद्गतः। त्रि० प्रत्युद्गते॥ प्रत्यु- द्गच्छतिस्म। गम्लृ०। क्तः॥

प्रत्युद्गमः। पुं० आगच्छतोगुर्वादेः सन्मुखगमने। अभ्युत्थाने॥ प्रत्यु द्गमप्रश्रयाभिवादनं विधीयते साधुमित्रः शुभक्षमे। प्राज्ञैः प- रस्मै पुरुषायचेतसाशुभाशयायैवदे हमानिनि॥

प्रत्युद्गमनम्। न० प्रत्युद्गमे॥

प्रत्युद्गमनीयम्। न० धौतांशुकद्वये॥ त्रि० उपस्थे। समुपस्थानयोग्ये प्रजनीये॥

प्रत्युद्घातः। पुं० प्रत्याहते॥

प्रत्युद्यतः। त्रि० निवेदिते॥

प्रत्युपकारः। पुं० उपकारंप्रतिउप कारे। प्रतिक्रिये॥ प्रतिकर्तुम शक्तस्यजीवितान्मरणंवरम्॥

प्रत्युपवेशनम्। न० निरोधने।

प्रत्युप्त : । त्रि० खचिते ॥

प्रत्यूष : । न० प्रभाते । प्रत्योषत्यन्ध कारम् । उषदाहे । उप : किदिच्चसि: यन्योपसर्गनिवृत्तयेप्रतीति ॥

प्रत्यूढ : । त्रि० हृते । वहिष्कृते ॥

प्रत्यूष : । पुं० अष्टमुखे । प्रभाते ॥ वसौ ॥ प्रत्यूषति० रुजतिकामुकान् । अपरुजायाम् । इगुपधेति कः ॥

प्रत्यूष : । न० प्रत्यूषे ॥

प्रत्यूह : । पुं० विघ्ने ॥ प्रत्यूहनम् । ऊह० । घञ् ॥

प्रत्येकम् । न० एकमेकम्प्रतीत्यर्थे ॥

प्रत्येना : । त्रि० चौर्यादिशिक्षके । प्रत्येनस : शिक्षका : चुचौर्यादौ तस्तदेनस्ति ॥

प्रथनम् । न० विस्तारे ॥

प्रथम : । त्रि० आद्यौ । प्रधाने । मुख्ये । प्रथते । प्रथप्रख्याने विस्तारे वा । प्रथेरमच् । प्रथमचरमेति सर्वनामस्त्वात्पक्षे०जस : शी । प्रथमे प्रथमा : ॥

प्रथमा । स्त्री० सु० औ० जस् इति त्रिके ॥

प्रथयन् । त्रि० विस्तारयति ॥

प्रथा । स्त्री० ख्यातौ । प्रसिद्धक्रियायाम् ॥ प्रथनम् । प्रथ० । भिदादङ् ॥

प्रथित : । त्रि० विख्याते । प्रथतेस्म । प्रथ० । अकर्मकत्वात्कर्त्तरिक्तः इट् ॥

प्रथिति : । स्त्री० ख्यातौ ॥ प्रथते प्रथ० । पद्दिप्रथिभ्यांनिदितितिः ॥ तितुत्रेष्वग्रहादीनामितीट् ॥

प्रथिमा । पुं० पार्थिवे । पृथुत्वे । पृथोर्भाव : । पृथ्वादिभ्यइमनिज्वेति इमनिच् । रऋतोरितिरआदेश : । टेरितिटिलोप : ॥

प्रथिष्ठ : । त्रि० अतिशयेनप्रथौ । अतिशयहति ॥

प्रथीयान् । त्रि० पृथुतरे ॥ ईयसुनि० रऋतोश्च्छादेरितिरिआदेश : ॥

प्रद : । त्रि० प्रदातरि । प्रकर्षेणददाति । डुदाञ्० । क : । मेदाज्ञ्वृत्तिकर्मण्युपपदेविधानाज्ञ्स : तस्मात्दसाधुरेवायम् ॥

प्रदक्षिण: । पुं० न० दक्षिणावर्त्तेनदेवतामुद्दिश्यभ्रमणे ॥ यथा । एकदेव्यारवौसप्त चौविकुर्याद्विनायके । चत्वारिकेशवेकुर्यात् शिवेचार्धप्रदक्षिणम् ॥ सर्वदेवतुष्टिदप्रदक्षिणम् यथा । प्रसार्यदक्षिणंहस्तं स्वयंमममिता : पुना : । दक्षिणेदर्शयन्नृपाखं मनसापिचदक्षिणः ॥ सकृत्विर्वावेष्टयेत्ताद्देव्याप्रीति : प्रजायते । सचप्रदक्षिणोज्ञेय: सर्वदेवौघतुष्टिदः । घटोत्तरगतंयस्तुदेव्या: कुर्यात्प्रदक्षिणंसर्वान्कामान्समासाद्यपश्चान्मोक्षमवाप्नुयात् । मन-

ऽनेनवादीपयतिप्रकाशयतिवा । दीपीदीप्तौ । इगुपधत्वात्क । घञ्था । अञ्था । प्रोऽन्योपसर्गमिवृत्त्यर्थ : ॥

प्रदीपन : । पुं॰ स्थावरविषभेदे ॥ सम्बन्धंयथा। वर्त्सोलोहितोयः स्याद्दीप्तिमान्दहन : प्रभ : । महादाहकर : पूर्वैःकथित : सप्रदीपन : ॥ अपिच । प्रदीपनस्तुदहनोरक्तवर्णो ज्वलनाद्विज : ॥ पु॰ ॥ त्रि॰ प्रकाशके ॥ प्रकर्षेणादीपयति । णिज न्ताद्दीपेर्ल्यु : ॥

प्रदीप्त : । त्रि॰ प्रज्वलिते । दह्यमाने॥

प्रदीप्ता । स्त्री॰ रवियुक्तदिशि ॥

प्रदूषित : । त्रि॰ उपहते ॥

प्रदेय : । त्रि॰ पारितोषिके ॥

प्रदेश : । पुं॰ देशमात्रे । भित्तौ । आख्याने । अवकाशे ॥ तर्जन्यङ्गुष्ठसम्मिते ॥ भित्तौ । एकदेशे । प्रदिश्यते । दिश॰ । एतन्थे तिघञ् । उपसर्गस्यघञीतिप्राचिकोदीर्घाभाव : ॥

प्रदेशनम् । न॰ प्राभृते । उपायने । उपहारे । प्रदिश्यते । दिश॰ । कल्युट् ॥

प्रदेशनी । स्त्री॰ तर्जन्याम् । प्रदिश्यतेऽनया । दिश॰ । करणेल्युट् ॥

प्रदेशिनी । स्त्री॰ तर्जन्याम् ॥ प्रदिशति । दिश॰ । सुपीतिणिनि : प्र देशोस्यस्त्यावा । इनि॰ ॥

प्रदेह : । पुं॰ आलेपभेदे । प्रलेपे ॥ आर्द्रौघनस्तयोर्मध्य : स्यात्प्रदेह : सु(?) प्रशान्तहा ॥ अनुलेपनाभ्यङ्गादौ ॥

प्रदोष : । पुं॰ रजनीमुखे ॥ त्रिमुहूर्त्त : प्रदोषस्याद्रवावस्तंगतेसतीत्युक्ते ॥ प्रदोषोऽस्तमयादूर्ध्वघटिकाद्वयमिष्यतद्रत्यन्ये ॥ प्रकृष्टदोषे ॥ दुष्यति । दुष॰ । घञ् । टाप् । प्रारब्धोदोषायाः : प्रादिसमास : । प्रारब्धादोषायस्मिन्वा । गोस्त्रियो रितिह्रस्व : ॥

प्रदोषव्रतम् । न॰ प्रदोषदिनेक्रियमाणे व्रतानुष्ठाने ॥ यथा । यत्रदेवोमहादेवोदेवीसंस्थाप्यविष्टरे । नृत्यंकरोतिपुरतःसार्धंदेव्यानिशामुखे । रात्रौ पोष्यरजन्यादौ प्रदोषेपूजयेच्छिवाम् । प्रतिपक्षंविशेषेणतद्देवोप्रीतिकारकमितिश्रीदेवीभागवतेश्रीदेवीगीता ॥

प्रद्युम्न : । पुं॰ कामदेवे । कन्दर्पे । वृष्ण्यधिपसारथि(?) । वासुदेवांशविशे॰। यथा । अनिरुद्ध : स्वयंब्रह्माप्रद्युम्न : कामएवच । बलदेव : स्वयंशेष : हल्पत्रप्रकृते : पर : । प्रकृष्टंद्युम्नंबलमस्य ॥

प्रद्योत : । पुं॰ आतपे । प्रकाशे ॥ प्रकृष्टोद्योत : ॥ रश्मौ ॥

प्रद्योतन : । पुं॰ सूर्ये ॥ प्रकृष्टोद्योत-

द : ॥ न० द्युतौ ॥

प्रद्रायक : । त्रि० कुत्सितामवस्थांप्राप्ते । अन्नलाभादन्त्यावस्थांप्राप्ते ॥

प्रद्राव : । पुं० पलायने । अपक्रमे ॥ प्रद्रवणम् । द्रु० । प्रेद्रुस्तुस्रुव इतिघञ् ॥

प्रधनम् । न० युधि । रणे । दारणे । डुधाञ्० । कृपृवृजीतिक्युः ॥

प्रधर्षणम् । न० अभिभवे ॥

प्रधानम् । न० प्रकृतौ । गुणसाम्यावस्थायाम् ॥ परमात्मनि ॥ बुद्धौ ॥ प्रधत्ते सर्वमात्मनि । अन्यचापीतियुच् ॥ त्रि० उत्तमे ॥ प्रदधाति । डुधाञ्० । ल्युट्०युच्वा । प्रधत्ते०प्रधीयतेऽनेनास्मिन्वा । करणादौल्युट् ॥ पुं०न० महामात्ये । सेनापत्यादौ ॥ प्रधीयते । कृत्यल्युटोबहुलमितिकर्मणिल्युट् ॥ प्रधानानुयायिनोजनव्यवहाराभवन्ति ॥ प्रधानस्यप्रधानेनसहनिरोधी-नतुदर्शनेन ॥

प्रधानात्मा । पुं० जगत्प्रकृतौ । मायायाम् ॥

प्रधावन : । पुं० वायौ । त्रि० प्रकृष्टगमनविशिष्टे । प्रकृष्टं धावनंयस्य ॥

प्रधि : । पुं० रथस्यचक्रान्तोभूमिस्पर्शिभागे । नेम्याम् ॥ प्रधीयतेऽनेन । डुधाञ्० । उपसर्गेघो : कि : ॥

प्रधी : । त्रि० उत्कृष्टबुद्धियुक्ते ॥ प्रकृष्टं ध्यायति । ध्यै० । आतो यते : सम्प्रसारणञ्चेतिक्विप् । हलइतिदीर्घ : । नित्यस्त्रीत्वाभावान्ननदीत्वम् । प्रकृष्टाधीर्यस्येतिविग्रहेतुनदीत्वम् ॥ स्त्री० प्रकृष्टबुद्धौ० तद्युक्तायाञ्च ॥ प्रकृष्टाधी : प्रकृष्टाधीर्यस्यावा ॥

प्रधूपित : । त्रि० प्रकर्षेणतप्ते । दीप्ते च ॥ क्लेशिते ॥ प्रकर्षेणधूपित : ॥

प्रधूपिता । स्त्री० क्लेशितायाम् ॥ रविगन्तव्यदिशि ॥

प्रधूमित : । त्रि० सञ्जातधूमे ॥ ता० स्त्री० सूर्यगन्तव्यदिशि ॥ प्रकर्षेण धूम : संजातोऽस्य ता० इतच् ॥

प्रध्वंस : । पुं० विनाशे । प्रकृष्टो ध्वंस : ॥

प्रध्वंसाभाव : पुं० अभावविशेषे ॥ सच० सादिरनन्त : प्रध्वंस : उत्पत्तेरनन्तरम्कार्यस्य । घटादावतिव्याप्तिवारणायानन्तइति । आकाशादावतिव्याप्तिवारणायसादिरिति ॥ प्रध्वंसस्याभावाभावस्य ॥ कपालेषुघटादेर्विद्यमानस्यैवाभाव: प्रध्वंसाभावस्तिरोभावस्त्वनपह्नवइति सत्कार्यवादिन : ॥

प्रनष्टोदर : । त्रि० विनष्टोदरे । कृशोदरे ॥ प्रकर्षेणनष्टमुदरंयस्य ॥ रोस्त्री० ॥ वृषादित्वाण्ण : ॥

प्रनिघातनम् । न० प्रणिघातने ।

वधे ॥

प्रपञ्च : । पुं० सञ्चये ॥ विस्तारे । प्रतारणे । विप्रलम्भने ॥ विपर्यासे । विपर्यासो ॥ वैपरीत्यं भ्रमो वा मायेतिख्यातो ॥ संसारे । नामरूपप्रपञ्चोऽहं तस्य दविस्तारे । आकाशादिदेहान्तजगद्विस्तारे । प्रपंचते । प्रविश्यते वा करणे । यथाह्यम् । अध्यारोपापवादाभ्यानिष्प्रपंचं प्रपंचते । अतःप्रपंचोनवास्तव : । यथाहुर्गौडपादाचार्या : । प्रपंचो यदिविद्येत निवर्तेत नसंशय : । मायामात्रमिदं द्वैतमद्वैतं परमार्थत: । विकल्पोविनिवर्तेत कल्पितो यदिकेनचित् । उपदेशादयं वादो ज्ञाते द्वैतं नविद्यते ॥ प्रपंचस्य किं कारणं किंस्वरूपमित्यादितर्कजालं नकर्तव्यं तस्यमायामयत्वादित्याहुराचार्या यथा ॥ किमिदं किमस्यरूपं कथमिदमभूदमुष्यकोहेतु : । इतिनकदापिविचिन्त्यं चिन्त्यं मायेतिधीमताविश्वम् ॥ दंतिनिदारुविकारेदारुतिरोभवतिसोपितत्रैव । जगतितथापरमात्मापरमात्मन्यपिजगत्तिरोधत्ते ॥ आत्ममयेमहतिपटेविविधजगच्चित्रमात्मनालिखितम् । स्वयमेवकेवलमसौपश्यन्प्रमुदं प्रयातिपरमात्मा ॥ तथा चोक्तं योगिनीहृदये । जगच्चित्रं समालिख्यस्वेच्छातूलिकयात्मनि । स्वयमेवसमालोक्यप्रीयातिभगवान्शिवइति ॥

प्रपञ्चितम् । त्रि० विस्तारिते ।

प्रपञ्चोपशम : । पुं० आत्मनि ॥ प्रपञ्चस्य उपशमोयस्मिन् ॥ चिन्मात्रममलमद्वयमद्वयमानन्दमनुभवारूढम् । ब्रह्मैवास्तितदन्यन्नकिञ्चिदस्तीतिनिश्चयोविदुषाम् ।।

प्रपथ : । त्रि० शिथिले ॥

प्रपथ्या । स्त्री० हरीतक्याम् ॥ प्रकर्षेणपथ्या ॥

प्रपदम् । न० पादाग्रे ॥ प्रकृष्टं प्रारब्धं ०प्रगतं वापदम् । प्रादयोगताद्यर्थेप्रथमयेतिसमास : ॥

प्रपदनम् । त्रि० प्राप्तिसाधने ॥ प्रपद्यतेऽनेन । पद० । ल्युट ॥ शरणंगमने ॥

प्रपद्यमान : । त्रि० मन्यमाने ॥

प्रपन्न : । त्रि० शरणागते ॥ सकृदेव प्रपन्नायतवास्मीतिचयाचते । अभयं सर्वथातस्मै ददाम्येतद्व्रतं मम ॥ प्रपद्यतेस्म । पद० । क्त : । आगते ॥ प्राप्ते ॥

प्रपन्नाड : । पुं० एडगजे । चक्रमर्दके ॥

प्रपा । स्त्री० पानीयशालिकायाम् ॥ प्रपिबन्त्यस्याम् । पापाने । आतद्रव्यङ् ॥

मास : । प्रफुल्लसिता । फुल्लविक सने । प० अच् ॥

प्रबन्ध : । पुं० सन्दर्भे रचनायाम् । काव्यादिग्रथने । पूर्वापरसङ्गतौ । प्रचारे । प्रकृष्टोबन्ध :

प्रबन्धकल्पना । स्त्री० कथायाम् । प्रबन्धे भकल्पना । प्रबन्धस्याभिधे-यकल्पनास्वयंरचनाया । प्रबन्धक-ल्पनास्तोकसत्याप्राज्ञा : कथांवि दुः । परम्पराश्रयायाख्यात्सामता ख्यायिकाक्वचित् ॥ इतिकोषाद् सत्यार्थ : ॥

प्रबल : । पुं० मल्लवे । त्रि०प्रकृष्टबल संयुक्ते । प्रकृष्टंबलमस्य न० प्रकृ-ष्टबले ॥

प्रबला । स्त्री० प्रसारिण्याम् प्रकृ ष्टंबलमस्या : अस्यांवा ॥ प्रकृष्ट बलयुक्तायाम् ॥

प्रवाल : । पुं० न० अभिनवपल्लवे । किसलये । वीणादण्डे । अङ्गारक मणौ । विद्रुमे । लतामणौ । रक्तव र्णवर्तुलाकाररत्नवि० । मूंगा० दू० भा० । तस्यशुभाऽशुभलक्षणं यथा । शुद्धघनंदृढंवृत्तं स्निग्धंगात्रसुरक्त कम् । समंगुरुसिराहीनंप्रवालधार येच्छुभम् । गौरंरक्तजलाक्रान्तंवक्रं सूक्ष्मंसकोटरम् । रूक्षकृष्णंलघु-श्वेतंप्रवालमशुभंत्यजेत् ॥ विशेषो युक्तिकल्पतरोरनुसन्धेय : ॥ प्रक-र्षेणावल्यतेसंनियते । बलसंवरणे । घञ् ॥ यद्वा । प्रवलति । बलप्रा-णने । ज्वलतीतिच : ॥ यद्वा० ण्य-न्तात्पचाद्यच् ॥ जीवशाके ॥

प्रवालक : । पुं० जीवशाके जीवन्ते ॥

प्रवालफलम् । न० रक्तचन्दने ॥

प्राक्तिका । अ० समकाले । जार्थे ॥

प्रबाहु : । पुं० बाहोरग्रभागे ॥

प्रबाहुकम् । अ० समकाले । ऊर्ध्वे प्रबाहुकांगृह्णीयात् ॥

प्रबुद्ध : । त्रि० निद्रोत्थिते । प्रफुल्ले । विकसिते । ऊहापोहकुशले । पण्डि ते । आत्मबोधयुक्ते । नि : सन्दे हापरोक्षज्ञानिनि । प्रकर्षेण० अस भावनादिरहितत्वेनबुद्ध : ।

प्रबोध : । पुं० विनिद्रत्वे । ज्ञाने । यथार्थज्ञाने । चैतन्यप्रधाने । ब्रह्मा कारान्त : करणवृत्त्युपहितचन्द्राभास चैतन्ये । प्रकृष्टोबोध : ॥

प्रबोधनम् । न० अनुबोधे । गतगन्ध स्यप्रयत्नेनोद्बोधने । यथाकस्तूरिका दिगन्धादिनाप्रवृत्ति : । बुधअवगमने । भावेल्युट् । विबोधने ॥

प्रबोधनी । स्त्री० हरिबोधनायाम् । का र्तिकशुक्लैकादश्याम् । देवउठनी० दू० भा० ॥

प्रबोधित : । त्रि० सञ्जातप्रबोधे ॥ प्रकर्षेणज्ञापिते ॥

प्रबोधिता । स्त्री० अतिजगतिप्रभेदे

मासः ॥ प्रफुल्लतिथा । फुल्लविकसने । प० यत् ॥

प्रबन्धः । पुं० सन्दर्भे रचनायाम् ॥ काव्यादिग्रथने ॥ पूर्वापरसङ्गतौ ॥ प्रबाहे ॥ प्रकृष्टोबन्धः

प्रबन्धकल्पना । स्त्री० कथायाम् ॥ प्रबन्धे नकल्पना ॥ प्रबन्धस्याभिधेयकल्पनाक्ष्यंरचनाया ॥ प्रबन्धकल्पनास्तोकसत्यांप्राज्ञाः कथांविदुः । परम्पराश्रयायास्यात्सामताख्यायिकाक्कचित् ॥ इतिकोलाहलाचार्यः ॥

प्रबल : । पुं० पल्लवे ॥ त्रि०प्रकृष्टबलसंयुते ॥ प्रकृष्टं बलमस्य न० प्रकृष्टबले ॥

प्रबला । स्त्री० प्रसारिण्याम् प्रकृष्टं बलमस्याः धस्यांवा ॥ प्रकृष्टबलयुक्तायाम् ॥

प्रवाल : । पुं० न० अभिनवपल्लवे ॥ किसलये ॥ वीणादण्डे ॥ अङ्गारकमणौ । विद्रुमे । लतासर्गे । रक्तवर्णबर्तुलाकारस्त्रवि० । मूंगा० इ० भा० ॥ तस्यशुभाऽशुभलक्षणं यथा । शुकपक्वबिम्बफलसंनिभंवृत्तायतम्बक्रम् । सग्रन्थिकंसंरूक्षंप्रवालकंशस्यते न तु । ... सुभगं सकोटरम् । रूक्षकृष्णं लघुश्वेतं संप्रवालमशुभात्यजेत् ॥ विशेषोयुक्तकल्पतरौदनुसन्धेयः ॥ प्रक-

र्षेणवलत्यसौसंनियते । वलसंवरणे । घञ् ॥ यद्वा । प्रवलति । वलप्राणने । ज्वलतीतिवः ॥ यद्वा० ग्रन्थात्पचाद्यच् ॥ जीवशाकि ॥

प्रवालक : । पुं० जीवशाकि जीवन्ती ॥

प्रवालफलम् । न० रक्तचन्दने ॥

प्रवाहिका । थ० समकाले ॥ जहांर्थे ॥

प्रबाहु : । पुं० बाहोरग्रभागे ॥

प्रबाहुकम् । थ० समकाले ॥ जहांर्थे प्रबाहुकंगृह्णीयात् ॥

प्रबुद्ध : । त्रि० निद्रोत्थिते ॥ प्रफुल्ले । विकसिते ॥ जागरिते ॥ पण्डिते ॥ आत्मबोधयुक्ते । नि : सन्देहपरोक्षज्ञानिनि ॥ प्रकर्षेण० धस्मादनादिरहितत्वेनबुद्धः ॥

प्रबोध : । पुं० विनिद्रत्वे ॥ ज्ञाने ॥ यथार्थज्ञाने ॥ चैतन्यप्रधाने । ब्रह्मात्मनः । कारणस्य परिणामनाशात चैतन्ये ॥ प्रकृष्टोबोधः ॥

प्रबोधनम् । न० अनुबोधे । गतगन्धस्य प्रयत्नेनोद्बोधने ॥ यथाकस्तूरिकादेर्मद्यादिनाप्रवृत्तिः । बुधधवगमने । प्राबेल्युट् ॥ विबोधने ॥

प्रबोधनी । स्त्री० दुरालभायाम् । कार्त्तिकशुक्लैकादश्याम् । देवउठनी० इ० भा० ॥

प्रबोधित : । त्रि० सम्यक्‌प्रबोधे ॥ प्रकर्षेणज्ञापिते ॥

प्रबोधिता । स्त्री० अतिजगतिप्रभेदे

॥ यथा । सजलाम्भोधरभवतिप्रवोधिता ॥ यथा शयितामृषाचटुलमाननिद्रया॰रतिकेलिकुञ्जनिलयेविलासिनी । मुरवैरिणावदनचुम्बनास्मितमाततालसपदिप्रबोधिता ॥

प्रबोधिनी । स्त्री॰ उत्थानैकादश्याम् । प्रबोधन्याम् ॥

प्रभञ्जनः । त्रि॰ अभञ्जनशीले । खाद्वतिख्याते ॥

प्रभञ्जनः । पुं॰ वायौ ॥ प्रकृष्टंभनक्ति । भञ्जोआमर्दने । युच् ॥

प्रभद्रः । पुं॰ निम्बे ॥ त्रि॰ श्रेष्ठे ॥

प्रभद्रा । स्त्री॰ प्रसारिण्याम् ॥

प्रभवः । पुं॰ जलमूले ॥ जन्महेतौ पित्रादौ । पराक्रमे ॥ ज्ञानस्यादिमस्थाने । प्रथमज्ञानाधिस्थाने ॥ मुनिविशेषे ॥ जन्मनि ॥ उपादाने निमित्ते ॥ प्रभवत्यस्मात् । अकर्तरिचकारकेसंज्ञायामित्यधिकारादपादानार्थे भुवः अप् ॥ अन्यत्र : सिद्धसप्रथमसुपलम्भे ॥ विष्णौप्रकृष्टोभवोजन्मास्य ॥ यथा । प्रकर्षेणभवन्ति आयन्ते महाभूतान्यस्मात्पूर्वंपदम् ॥ गुरोर्मानेनपष्ठिवत्सरारामादिमेवत्सरे ॥ तत्फलंयथा । बहुतोयाकुधामेघावहुशस्याचमेदिनी । बहुक्षीरास्तथागावो व्याधिरोगविवर्जिताः ॥ प्रभवान्तापार्थिवाये वप्रभवेपरिकीर्त्तिताः ॥ १ ॥ तीर्थविशेषे

प्रभविष्णुः । पुं॰ उत्पत्तिकारणेसर्वस्यप्रभवनशीले ॥ प्रपूर्वाद्भवतेर्भुवश्चेतिइष्णुच्॰यद्वाभिभुवश्चेतिछन्दसि॰इष्णुजिष्णुते॰तथा त्रि॰जगत्प्रभोरप्रभविष्णुवैष्णवमितिलोकेपि प्रयोगदर्शनात् । अत्रनिरङ्कुशाः कवयइतिसमाधानमकारिभट्टोजिदीक्षितेन ॥ प्रभौ ॥ यथा । नभर्तानैवचसुतोनपितानाभ्रातरोनच । चादानेवाविसर्गेवास्त्रीधनेप्रभविष्णवः ॥ स्मृ॰ ॥ त्रि॰ प्रकर्षेणभवनशीले ॥

प्रभा । स्त्री॰ रुचि । त्विषि दीप्तौ । प्रकाशे ॥ तेजसीभार्यायाम् यथा । प्रभावदाहिकाचैवद्वेभार्येतेजसः स्मृते । याभ्यांविनाजगत्स्रष्टुंविधातुञ्चनहीश्वरः इति ॥ प्रहाणांच द्विविधायांछायायाम् ॥ यथाहमरिपुत्रः । याचच्छायाप्रभासैवद्विविधा साप्रकीर्त्तिता । सच्छाक्रिया प्रसन्नाचकान्ता दीप्ताविदीपनीति कुबेरपुर्याम् ॥ अपतीछन्दः प्रभेदे । मन्दाकिन्याम् । लक्षणंयथा । स्वरशरविरतिननौरौप्रभेति । य॰ । वलिदमनविधौवभौसङ्गतापदजलरुचियस्यमन्दाकिनी । सुरनिहितसिताम्बुजस्रग्विभाइरतुजगदघंसपीताम्बरः ॥ प्रभाति । भादीप्तौ । आतश्चोपसर्गेङकः ॥ दुर्गायाम्

॥ सूर्यपत्न्या ॥ गोपीविशेषे ॥

प्रभाकरः । पुं॰ वह्नौ ॥ सूर्ये प्रभां
करोति । दिवादिविभेतिटः अर्कहले
॥ चन्द्रे ॥ समुद्रे ॥ मीमांसैक
देशिनि ॥

प्रभाकीटः । पुं॰ खद्योते ॥

प्रभाञ्जनः । पुं॰ शोभाञ्जने ॥ प्रभा
मनक्ति । अञ्ज॰ । कर्त्तरिल्युट् ॥
बहुलमन्यत्रापीतियुक्त्या ॥

प्रभातम् । न॰ प्रातः काले । दिना
दौ । प्रत्यूषे । उषसि ॥ भातुंप्रवृत्त
मृषादिकर्मणिक्तः ॥ वैद्यःपुरोहि
तोमन्त्रीदैवज्ञोथचतुर्थकः । प्रभात
कालेद्रष्टव्योनित्यंस्वश्रियमिच्छता ॥

प्रभावः । पुं॰ शक्तौ ॥ नीतिवेदिनां
प्रभावोत्साहमन्त्रजाःशक्तयः ॥ कोे
शदण्डजस्तेजसि ॥ प्रतापे ॥ महिम
नि ॥ भवत्यनेन । भू॰ । श्रिणी
भुवोनुपसर्गेइ॰घञ् ॥ भवनंभावः
॥ प्रकृष्टोभावः ॥ प्रभुत्वशक्त्यतिश
ये ॥

प्रभावान् । त्रि॰ प्रभायुक्ते ॥

प्रभावती । स्त्री॰ मालिकानामकोनर्थिं
शद्वर्णाह्निमाराद्रि ॥ गणानांवीणा
याम् ॥ छन्दोभेदे ॥ यथा । एतेक्त
मात्रभसजसंज्ञया गणागतान्नौ
यदिनिहितोमहीपते । वेदैर्यैर्भ
वतियतिस्तशोभनानागाधिपोवदति
तदाप्रभावतीम् ॥

प्रभावनः । त्रि॰ सम्पादयितरि ॥
प्रभावयति । कर्त्तरिल्युट ॥ ङी
पिप्रभावनी ॥

प्रभावी । त्रि॰ महानुभावे ॥ प्रभावो
स्यास्य । इनिः ॥

प्रभाषः । पुं॰ वसुविशेषे ॥

प्रभाषितम् । न॰ वचने ॥ प्रकृष्टंभा
षितम् ॥

प्रभासः । सोमतीर्थे ॥ पुष्करेक्षणा
देव्याःस्थाने ॥ प्रभासेसोमतीर्थो
सौदेवीपुष्करेक्षणेत्यागमात् ॥ जै
नगणाधिपविशेषे ॥

प्रभिन्नः । पुं॰ मत्तहस्तिनि । गलिते
। मत्ते ॥ त्रि॰ विदीर्णे ॥ प्रकृष्टभे
दविशिष्टे ॥ प्रकर्षेणभिद्यतेस्म ।
भिदिर्॰ क्तः ॥

प्रभुः । पुं॰ ईश्वरे ॥ पारमनि ॥ पार
दे ॥ शब्दे ॥ त्रि॰ निग्रहानुग्रहस
मर्थे । स्वामिनि । मदीयोयमिति
स्वीकर्त्तरि । अधिभुवि । नायके
॥ नित्ये ॥ शक्ते ॥ प्रभवति । भू॰
। विप्रसम्भ्यड॰ डु॰ ॥ परमेश्वरे
॥ प्रभवति॰सृष्टिस्थितिसंहारप्रवेश
प्रशासनेषु॰ इतिप्रभुः

प्रभुता । स्त्री॰ विभुतायाम् ॥

प्रभुत्वम् । न॰ ऐश्वर्ये ॥ स्वाम्ये ॥

प्रभुभक्तः । पुं॰ उत्तमाश्वे ॥ त्रि॰ स्वा
मिन्यनुरक्ते ॥ प्रभोर्भक्तः ॥

प्रभुशक्तिः । स्त्री॰ कोशदण्डबले ॥

प्रभो : पत्न्याम् ॥ प्रभोःशक्ति : ॥
प्रभूतम् । त्रि० उद्गते ॥ प्रचुरे । प्राज्ये ॥ पुं० स्वाम्यैश्वर्यादिगुणैः संपन्ने भगवति ॥ प्रभवतिस्म । भू० । गत्यर्थेतिक्त : ॥ प्रकृष्टे सुमहाभूतेषु
प्रभूष्णु : । त्रि० शमे । शक्ते ॥
प्रभृति : । अ० तदादौतत : प्रभृति पितर : पिण्डसंज्ञान्नुलेभिरे ॥ इ रितिप्रयिक्तत्वम् ॥
प्रभृति : । पुं० तदादौ ॥
प्रभेद : । पुं० भेदे । प्रकारे । विशेषे । भिदायाम् । अन्तरे ॥ प्रकृष्टोभेद : ॥
प्रभृष्टकम् । न० चूडालम्बिमाल्ये । शिखातोलम्बमानमाल्ये ॥ प्रभ्रंशितंप्रहृतम् । कादिकर्मणिक्त : ० वार्तारिच । स्वार्थेकन् ॥
प्रमत्त : । त्रि० अनवहिते । अनवधानतायुक्ते । प्रमादिनि । व्यसनासक्ते ॥ शीलसंरक्षणेनरहिते ॥ यथा । मनुष्यामृगाविहीनःप्रमत्त : पतित : स्मृत : इतिमवराद्मानाक्षा नयितव्योयथा । मत्तोन्मत्तप्रमत्ता. र्त्तभृत्याज्ञाछानयेन्नृप : ॥ प्रमाद्यतिस्म । मदी० । गत्यर्थेतिक्त : । नध्याख्येतिनत्वाभाव : ॥
प्रमथ : । पुं० षट्त्रिंशत्कोटिसंख्याके हरपारिषदे ॥ दुष्टान्प्रकर्षेणमथति । मथे० । प० अच् ॥ भूत विशेषे ॥ प्रमथ्यतेमन्त्रादिना । खनोघञ्चेतिघ : ॥ घोटके ॥
प्रमथनम् । न० वधे । मारणे ॥ मथहिंसायाम् । ल्युट् ॥
प्रमथनाथ : । पुं० महाभैरवे ॥ प्रमथानांनाथ : ॥ यथा । भवद्भवनदेहली प्रकटचण्डदण्डाहतस्फुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते । व्रजाभिमवदनिकम्प्रकृतिमेत्यपैशाचिकीमिमिल्यमरसम्पदं प्रमथनाथनाथामते ॥
प्रमथा । स्त्री० हरीतक्याम् ॥
प्रमथाधिप : । पुं० शिवे ॥ प्रमथानां योगिविशेषगणानामधिप: ॥ तेगणा यथा । षट्त्रिंशत्सहस्राणि प्रमथादिव्यसत्तमा : । तत्रैकत्र सहस्राणिभागेषोडशसंस्थिता : ॥ नानारूपधरायैवैजटाचन्द्रार्धमंडिता : । तैसर्वेसकलैश्वर्ययुक्ताध्यानपरायणा : ॥ योगिनोमहमात्सर्यदम्भाहङ्कारवर्जिता : । सौम्यमायामहाभागा : शमौ : प्रीतिकरा : परा : ॥ नतेपरिग्रहंराग्क्षाद्धन्ति खाकदाचन । संसारविमुखा : सर्वे सततयोगतत्परा : ॥ ध्यानावस्थं महादेवं परिवार्यधृतव्रता : । कृत्वा परिषदंतच्चातिष्ठन्तिविगतक्लमा : ॥ यदैवपरमंज्योतिस्तिन्तयत्यम्बिकापति : । तदैवतेपारिषदा : स

वैसंवैष्टयन्तितम् ॥ तेषोडशसमाख्याताः कोटयोयेष्टतव्रताः । सिंहव्याघ्रादिसारूप्याश्वयिमादिसमायुताः ॥ इत्यादिकालिकापुराणे पाठोद्रष्टव्यः ॥

प्रमथितम् । न० निर्जलतक्रे ॥ त्रि० क्षुण्णे ॥ प्रकर्षेणमथितम् ॥

प्रमथ्या । स्त्री० पेयद्रव्यान्तरे ॥ तस्याः विधिर्गुणाश्चयथा । प्रमथ्यामुच्यतेद्रव्यपलात्कल्कीकृताच्छृतात् । तोयेऽष्टगुणितेतस्याः पानमाहुःपलद्वयम् ॥ द्रव्यं० पाच्यद्रव्यम् । तस्याः पलद्वयशेषायाः ॥ गुणाः प्रमथ्यापेयाचततोलघ्वीविशेषतः ॥

प्रमदः । पुं० सम्मदे । हर्षे । मुदि । प्रीतौ ॥ धुस्तूरफले ॥ त्रि० मत्ते । सहर्षे ॥ प्रमदसम्मादौहर्षइत्यप् ॥

प्रमदकाननम् । न० प्रमदवने ॥

प्रमदनम् । न० प्रमादे ॥

प्रमद्वनम् । न० रक्षोन्ताःपुरोचितवने । यत्रसस्त्रीकोराजाक्रीडति० तस्मिन्नुद्याने ॥ प्रमदानांवनम् । ङ्यापोरितिह्रस्वः ॥

प्रमदा । स्त्री० उत्तम योषिति ॥ प्रमदोहर्षोऽस्त्यस्याः ॥ यद्वा । प्रमदयतिपुरुषम् । मदी० । अच् । टाप् ॥

प्रमदाकाननम् । न० प्रमद्वने ॥

प्रमदावनम् । न० प्रमद्वने ॥ प्रमदानांवनम् ॥

प्रमना: । त्रि० हृष्टमानसे ॥ प्रकृष्टंमनोयस्य ॥

प्रमयः । पुं० वधे ॥

प्रमा । स्त्री० यथार्थानुभवे । प्रमितौ । बोधे । ज्ञाने ॥ यथाहुः साङ्ख्यविदः । असन्दिग्धाऽविपरीताऽनधिगतविषयाचित्तवृत्तिर्बोधश्चपौरुषेयः फलंप्रमेति । असन्दिग्धेत्यादिप्रमेत्यन्तान्वेति । स्मृतिसाधारणेच्चमधिगतपदं नदेयम् । अविपरीतोऽबाधितः । साङ्ख्यसिद्धान्ते० चक्षुरादेःकरणत्वाभावात्इन्द्रि०चित्तवृत्तिरिति । प्रमास्वरूपमाह०बोधः पौरुषेयइति० चैतन्यप्रकाशरूपइत्यर्थः । ननु चैतन्यप्रकाशस्यनित्यत्वात्कथंप्रमाणफलत्वव्यवहारइत्यतआह० फलंप्रमेति । तथाचैतन्यप्रकाशस्यनित्यत्वेपितद्घटोपरक्तवृत्तिप्रतिबिम्बाश्रयत्वेनप्रमाणकार्यत्वादित्यर्थः ॥ प्रमीयते । माङ् माने । आतश्चोपसर्गइत्यङ् । टाप् ॥ अनधिगताबाधितार्थानुभवरूपाप्रमेतिव्याख्यातारः । साक्षात्त्वघानुमितत्वप्रमितिमान्द्यापत्त्वेनुपपन्नविभेदेनपोक्ता ।

न्यायमते० तद्वति तत्प्रकारकज्ञाने । भ्रमभिन्नज्ञाने ॥ अस्याः कारणं गुणः । स च प्रत्यक्षे० विशेष्ये विशेषणस्य सम्बन्धः । अनुमितौ० साध्यविशिष्टपक्षे परामर्शः । शाब्दबोधे० योग्यतायास्तात्पर्यस्य वा यथार्थज्ञानम् । उपमितौ० शक्ये सादृश्यबुद्धिः । यथा । दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । प्रत्यक्षे तु विशेष्ये च विशेषणवता समम् ॥ सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः । पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ॥ शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः । शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ॥ गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा । अथवा तत्प्रकारं यज्ज्ञानं स्यात्तद्विशेष्यकम् ॥ इति ॥ प्रमाणमप्रमा चैव प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥

प्रमाणम् । न० नित्ये । शाश्वते । शास्त्रे । सत्यवादिनि । इयत्तायाम् । परिच्छेदे । यथा । कियत्प्रमाणमुदकम् ॥ मर्यादायाम् । अवधौ । यथा । राजानं मां प्रमाणं कृत्वा० अवधिं कृत्वेत्यर्थः ॥ हेतौ । ज्ञप्तिनिमित्ते । यथा । अग्नौ प्रमाणं धूमः ॥ प्रमातरि ॥



यथा ॥ अयार्थे प्रभुः प्रमाणम् ॥ नित्यक्लीवैकवचनान्तयं शब्दः । यथा । वेदाः प्रमाणं स्मृतयः प्रमाणमित्यादि ॥ बहुवचनान्तमपि । यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ प्रमाकरणे ॥ प्रमातानेनार्थं प्रमिणोतीति तत्प्रमाणम् । प्रमीयतेऽनेनेति निर्वचनात्प्रमां प्रति करणत्वं गम्यते । असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिर्बोधश्च पौरुषेयः फलं प्रमा० तत्साधनं प्रमाणमिति । एतेन० संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः ॥ ० ॥ प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावाख्यानि० षट् प्रमाणानीति वैदिकाः । प्रत्यक्षानुमानागमाः प्रमाणानि त्रीणीति योगाः । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः । अथ तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं० प्रशब्दविशिष्टेन माधातुना प्रत्याय्यते० तत्करणत्वं प्रमाणत्वम् । ज्ञानभ्रान्तानुभवो विवक्षितः । तेन स्मृतिकारणेनातिव्याप्तिः । लक्षितानां प्रमाणानां विभागः प्रत्यक्षानुमानोपमानशब्दा इति० विभागश्चोद्देश एवान्तर्भूतत्वाद्वविशेषोद्देशः । प्रत्यक्षलक्षणन्तु यथास्थाने द्रष्टम् । एषां चान्तर्भावयद्विभावाभ्यां सङ्कोच

न्यायमते॰तद्वतितत्प्रकारकज्ञानि भ्रमभिन्नज्ञाने ॥ अस्या : कारणंगुण :। सचप्रत्यक्षे॰ विशेष्येविशेषणस्यसम्बन्ध :। अनुमितौ॰ साध्यविशिष्टपक्षेपरामर्श :। शाब्दबोधे॰योग्यतायाःतात्पर्यस्यवायथार्थज्ञानम् । उपमितौ॰ शक्यं साहृश्यबुद्धि :। यथा। दोषोऽप्रमाया जनकःप्रमायास्तुगुणोभवेत् । प्रत्यक्षे तुविशेष्ये णविशेषणवतासमम्- ॥ सन्निकर्षोगुणस्तुस्यादथत्वनुमितौपुन :। पक्षेसाध्यविशिष्टे चपरामर्शोगुणोभवेत् ॥ शक्ये साहश्यबुद्धिस्तुभवेदुपमितौगुण :। शाब्दबोधेयोग्यतायास्तात् पर्यस्याथवाप्रमा ॥ गुण : स्याद्भ्रमभिन्नन्तुज्ञानम् प्रमोच्यते प्रमा ........ बुद्धिप्रतिबिम्बितचिदात्मनि ॥ लौकिकवैदिकव्यवहारेष्वभ्रान्तेजीवे ॥ प्रमाता वैयर्थंप्रमिमीति॰सचचेतनोव्यपदिश्यते ॥ प्रकृष्टोमाता ॥ प्रमातारम् विनाशास्त्रस्याम्नायार्थबोधकृत् । प्रमातापिविनाशास्त्रकेनार्थमवबुध्यते ॥ स्मृतिनिश्चयसन्देहरागद्वेषादिवृत्तिषु । अहंरूपेणयोन्वेति सप्रमातास्यनिश्चित् ॥ वृत्तिमदन्त : करणावच्छिन्नाचित्प्रमातेति ॥ स्मारास्यहंनिश्चिनोमिसंशयेरागवानिति । अहंरूपान्वय : स्पष्ट : कर्त्ताभोक्ताप्यसौभवेत् ॥ प्रकृष्टे यथा ॥ अत्रार्थेप्रभु : प्रमाणम् ॥ नित्यक्लीवैकत्ववानयंशब्द :। यथा ॥ वेदा : प्रमाणंस्मृतय : प्रमाणमित्यादि ॥ बहुवचनान्तमपि । यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ प्रमाकरणे ॥ प्रमातायेनार्थंप्रमिणोतितत्प्रमाणम् । प्रमीयतेऽनेनेतिनिर्वचनात्प्रमांप्रतिकरणत्वंगम्यते । असन्दिग्धाविपरीतानधिगतविषयाचित्तवृत्तिर्बोधश्चपौरुषेयफलंप्रमा॰तत्साधनंप्रमाणमिति । एतेन॰स्मृतिविपर्ययसंशयसाधनेष्वप्रसङ्गः ॥ ४॥ प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यंषट्प्रमाणमित्याहुः । अनवधानतायाम् ॥ यथा॰ समाधिसाधनानुष्ठानसामर्थ्येपि अनुष्ठानशीलतां॰विषयान्तरव्यासक्ततयायोगसाधनेष्वौदासीन्यमितियावत् ॥ वस्तुविवेकासामर्थ्ये ॥ चित्तविक्षेपे ॥ सत्त्वकार्यप्रकाशविरोधिनि ॥ तत्कालकर्त्तव्यत्वेनप्राप्तस्यार्थस्याननुसन्धानाभावे । पूर्वकर्त्तव्यतयानिश्चितेष्वकर्त्तव्यतावुद्धौ ॥ मदोदर्पे । भावेघञ् । प्रकृष्टोमाद :। स्वाभाविकज्ञानभावात्प्रच्युतौ ॥

प्रमादवान् । त्रि॰ जाड्ये । प्रमादयुक्ते । प्रमादोऽस्यास्मिन्वा । मतुप् ॥

त्रिकाणीद्रव्यौ ॥ + ॥ प्रमितिसाधने ॥ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याश्च॰प्रमाणानि । श्रुतिर्द्वितीयासमताचलिङ्गं वाक्यं पदान्येव तुसंहतानि । साप्रक्रियावाक्यमित्यपिचास्थानंक्रमोयोगवलंसमाख्या ॥ लक्षणायाम् ॥ बोधके ॥ बाधकज्ञानरहितमगृहीतग्राहिज्ञानंप्रमाणम् ॥ आयामस्तुप्रमाणंस्यादितिवाहिंकाणैतु॰आयामोदैर्घ्यम् यथेनमीयते तत्प्रमाणम् । तच्चकचित्तिर्यगवस्थितस्यवस्तुन : । यथा । वस्त्रादेर्हस्तादि : । कचिदूर्ध्वाधरदिगवस्थितस्य । हास्तिनमुदकम्॰ ऊरुदघ्नमुदियैचस्तथा॰ ॰ ॰ मीयते॰प्रमिता : ॥ अपिच । प्रमादिनोवर्षिष्ठा : पिशुना : कालकीलका : । संन्यासिनोपिदृश्यन्ते दैवसन्दूषितामया : ॥

प्रमापक : । त्रि॰ प्रमाजनके ॥

प्रमापणम् । न॰ निवर्हणे । मारणे । वधे ॥ मीञ् हिंसायाम् । स्वार्थेण्यन्त : । भावेल्युट् ॥

प्रमायुक : । त्रि॰ प्रमरणशीले ॥

प्रमित : । त्रि॰ ज्ञाते ॥ माद्यमाने । चाद्रिकस्य पिशा: कर्त्तं रिचेतित: । । वतिस्यसौतीत्त्वम् ॥

प्रमिताक्षरा । स्त्री॰ जगतीछन्दोभेदे॥ थ॰ । प्रमिताक्षराएजससै : कथि

द्पैचन्तेऽखिलाक्षिमानानि । वाक्यं तन्निगमानांमानंतस्याद्यतीन्द्रियावगतौ ॥ मानंप्रबोधयन्तं बोधंमानेनयेवुभुत्सन्ते । एधोभिरिवदह्यनंदग्धं वाञ्छन्तितेमहात्मान : ॥ वेदोऽनादिरमुष्याव्यक्तकर्त्तृण : स्वयंप्रकाशात्मा । तदभिव्यक्तिमुदीक्ष्यप्रोक्तौ सौसूरिभि : प्रमाणमिति ॥ रूपाणामवलोकेचक्षुरिवान्यत्नकारणंदृष्टं । तद्वद्दृष्टावगतौ वेदवदन्योनवेदकोहेतु : ॥ निगमेषुनिश्चितार्थंतत्वं कश्चिदपिप्रकाशयति । तदिदमनुवादमात्रप्रामाण्यं तस्यसिध्यतिनकिञ्चित् ॥ अनुभूतौप्रमाणानांपरिनिष्ठासमाप्यते । ततस्तयैवयाज्ञभि : क्रियतान्वेप्रमान्तरै : ॥

णे । गुरौ॰ [illegible] तर्कनि॰

प्रमुख : । पुं॰ पुन्नागवृक्षे ॥ न॰ सदात्वे । तत्काले ॥ त्रि॰प्रथमे ॥ श्रेष्ठे । मुख्ये ॥ प्रकृष्टं मुखमस्य ॥

प्रमुखत :। अ॰ सम्मुखे ॥

प्रमुद्॰त् । त्रि॰ हृष्टे ॥ आनन्दे ॥ यथा । आत्मन्येमहतिपटे विविधलगन्निचमात्मनालिखितम् । स्वयमेवकेवलमसौपश्यन्प्रमुदं प्रयातिपरमात्मा ॥

प्रमुदित : । त्रि॰ हृष्टे ॥ प्रमोदतेस्म । मुदहर्षे । क्त : ॥

प्रमृतम् । न॰ कर्षणाद्युत्पत्तौ ॥ प्रम

संस्पर्शं संस्पृतमितिमनु : । कार्ष-णस्वभूमिगतप्रचुरप्राणिसरणानिमि-त्तत्वाद्दुष्टु : खफलकम् ॥ वि०प्र-कर्षेणाकृष्टे ॥

प्रसृष्ट : । त्रि० व्यासृष्टे ॥

प्रमेय : । त्रि० प्रमाविषये । प्रत्यक्षा-दिप्रमाणै : परिच्छेद्ये ॥ यत्प्रमी-यते तत्प्रमेयम् । यथाजीवब्रह्मैक्यम् शुद्धचैतन्यं वेदान्तानां प्रमेयम् । आ त्मशरीरेन्द्रियार्थबुद्धिमन : प्रवृत्ति-दोषप्रेत्यभावफलदु : खापवर्गास्तु प्रमेयम् ॥ द्र० गौतमसूत्रम् । ९ ॥ प्रकृष्टं मेयम् ॥ प्रमीयते । माङ्० । अनीयर् । ईद्यति । गुण : ॥ प्र-मातुर्योग्योवा ॥ प्रमाणाधीनाप्रमे यसिद्धि: ॥ प्रमाणप्रमाणस्य प्र के योनिश्चितिस्तथा । यस्मान्निश्चयात्प्र सिध्यंतितत्सिद्ध्यैक्रिमपेक्ष्यते ॥

प्रमेयत्वम् । न० ज्ञातत्वे । प्रमावि षयत्वे ॥ भावे ० त्व : ॥

प्रमेह : । पुं० शुक्रघटितरोगविशेषे । मूत्रदोषे । मेहे ॥ प्रकृष्टोमेह : ॥ अस्यनिदानम् । गास्यासुखं स्वप्नसु-खं दधीनिग्राम्यौदकानूपरसा : प यांसि । नवान्नपानं गुडवैकृतञ्च प्र मेहहेतु : कफकृच्चसर्वम् ॥

प्रमोदक : । पुं० मोचने ॥ प्रकर्षेणमु च्यते । मुच्ल० । कर्मणिघञ् ॥

प्रमोचन : । त्रि० प्रमोचके ॥ प्रकृष्ट मोचनकर्तरि ॥

प्रमोचनी । स्त्री० गवाक्ष्याम् । गोडु म्बायाम् ॥

प्रमोद : । पुं० हर्षे ॥ मुद० । घञ् । प्रकृष्टोमोद : ॥ वत्सरवि० । जन्म तस्त्वजगत्सर्वं धनधान्यसमाकुलम् । नित्योत्सव : प्रजाहृष्टि : प्रमोदेजा यतेप्रिये ॥ ४ ॥

प्रमोदन : । पुं० विष्णौ ॥ प्रमोदतीह प्यतिस्वरूपानन्दानुभवात्० । मुद० । अनुदात्तेतश्चहलादेरितियुच् ॥ ध्यायिनीयोगिन: प्रमोदयतिहर्षय ति । मुदे:प्रपूर्वाण्णिजन्तात्कर्त्त रिल्युट्० औणादिकोयुच्‌वा ॥

प्रमोदित : । पुं० कुबेरे ॥ मुद० । क्त. उदुपधाद्वितियाकित् ॥ त्रि० प्रमो दयुक्ते ॥

प्रमोदी । त्रि० प्रकृष्टहर्षयुक्ते ॥

प्रमोदिनी । स्त्री० जिङ्गिनीवृक्षे ॥

प्रम्लोचा । स्त्री० अप्सरोविशेषे ॥

प्रयन् । त्रि० गच्छति ॥ प्रैति । इण: शतरि० यणादेश : ॥

प्रयत : । त्रि० पवित्रे ॥ अहिंसारते ॥ प्रयच्छतिस्म । यम० , अकर्मकत्वा त्कर्तरिक्त: । मलोप: ॥ यद्वा । प्र-यतते । यतीप्रयत्ने । अच् ॥

प्रयतनम् । न० साधने ॥ प्रपूर्वाद्यतते र्नपुंसकेभावेल्युट् ॥

प्रयतात्मा । त्रि० शुद्धबुद्धौ ॥ प्रयतश्चा

कचटतपगजडदवडञणनमा:०तद्व मा : यरलवा :० स्वरा: २८ एषा मल्पप्राणा: । खछठथफघझढधभा: एतद्यमा : शषसहा : ० अनुस्वार विसर्ग≍क≍पा: २८ एषांमहाप्रा णा: । अइउऋऌएऐओऔ ६ एषामु दात्तानुदात्तस्वरिता: ० विवारसंवा रादयस्तु० वर्णोत्पत्ते : पश्चान्मू र्द्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ वुत्पद्यन्ते ० इतिभाष्याद्युक्तेश्च्यन्ते । गलबिलस्यसङ्कोचात्संवार : । तस्यैवविकाशाद्विवार : । एतौ चसंवृतविवृतरूपाभ्यन्तराभ्यांभिन्ना वेव । तयो : समीपदूरावस्थाना मकत्त्वादित्यवधेयम् ॥

प्रयत्नवान् । त्रि० प्रतियत्ने । प्रज्ञष्टय त्नविशिष्टे ॥ प्रयत्नोस्यास्ति । म तुप् ॥

प्रयस्त : । त्रि० सुसंस्कृते । घृतचतु र्जातादिद्रव्यान्तरेणप्रयत्नात्संस्कृते पक्वव्यञ्जनादौप्रयस्तेस्म । यसुप्र यत्ने । कर्म्मणिक्त : ॥

प्रयाग : । पुं० तीर्थविशेषे । भा स्करक्षेत्रे । अत्रमुण्डनंकर्त्तव्यम् । मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंवि धि : । वर्ज्जयित्वागयांगङ्गांविशा लांविरजांतथा॥ प्रयागेतीर्थयात्रा यांपितृमातृवियोगत : । कचानां वपनंकुर्याद्वृथानविकचोभवेत् ॥ गङ्गायांभास्करक्षेत्रे मातापित्रोर्गु रोर्मृतौ । आधानेसोमपानेचवपनं सप्तसुस्मृतमितिस्मृतिसमुच्चय- लिखितवचनं प्रयागावच्छिन्नगङ्गाय विधायकम् । गङ्गायांभास्करक्षेत्रेमु ण्डनंयोनकारयेत् । सकोटिकुल संयुक्तआकल्पंरौरवेवसेत् ॥ यमी ॥ यतनखे । यज्ञे ॥ यज्ञे ॥

प्रयागभव : । पुं० वृन्दे ॥

प्रयाज : । पुं० यज्ञाङ्गे ॥ दशप्रया जा : । यजेर्घञ्० प्रयाजानुयाजौ यज्ञाङ्ग इतिकुत्वाभावोनिपात्यते ॥

प्रयाणम् । न० प्रस्थाने । गमने ॥ प्रपूर्वाद्यातेर्ल्युट् ॥ उद्घाटितेन ववारेपञ्जरविहगोऽनिल : । यत्रि छतितद्वाश्चर्यंप्रयाणेविस्मय : कुत : ॥

प्रयाणकाल : । पुं० अन्तसमये ॥ मौहूर्त्तिकाविदितगमनसमये ॥ प्रयाणस्यकाल : ॥

प्रयात् । त्रि० धावति ॥ यातेर्लट : शत्रादेश : ॥

प्रयात : । पुं० सौप्तिके । रात्रियुद्धे ॥ भृगौ ॥ न० गमने ॥ त्रि० गतेऽस्थिते । गया० इ० आ० ॥ प्रकर्षेणयात : ॥ याते : कर्मणि क्तोवा ॥

प्रयाम : । पुं० नीवाके । महर्घ्यहेतौ धान्यसंचये ॥ क्रयादरे ॥ प्रयम

थम् । यमेर्घञ् ॥

प्रयास : । पुं॰ आयासे । क्रमे । श्रमे ॥ यसनम् । यसुप्रयत्ने । घञ् । प्रकृष्टोयास : ॥

प्रयुक्त : । त्रि॰ प्रेरिते ॥ निरूपिते ॥ कृतप्रयोगे ॥ युज्यतेस्म । युजिर्॰ । क्त : ॥ प्रकर्षेणयुक्ते ॥ च॰ । गुण प्रयुक्ता : परमर्मभेदिन : शराइवा वंशभवाभवन्तिहि । तथाविधाये तुविशुद्धवंशजा प्रयान्तिवापाङ्गव तेऽतिमन्यताम् ॥ प्रकर्षेणयुक्तमि ति ॥

प्रयुक्ति : । स्त्री॰ प्रयोजने ॥ प्रकृष्ट युक्तौ ॥

प्रयुतम् । न॰ नियुते । दशलक्षे ॥ १००००००॥

प्रयोक्ता । त्रि॰ उत्तमर्णे ॥ प्रवर्त्तके ॥ अनुष्ठातरि ॥ महाकवीविष्णुचित : प्रयोक्तेतिरघु: ॥

प्रयोग : । पुं॰ कार्मणे ॥ प्रयुक्तौ ॥ निदर्शने ॥ वशीकृतौ ॥ अश्वे ॥ अनुष्ठाने ॥ प्रकृष्टोयोग : ॥ शब्दे ॥ प्रयुज्यते प्रयोजनया ॥ युजिर॰ घञ् ॥

प्रयोगविधि : । पुं॰ प्रयोगप्राशुभाव योधकेविधौ ॥ सचाङ्गवाक्यैकवाक्यतापन्न : प्रधानविधिरेव । सहि साङ्गंप्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायंप्रयोगप्राशुभावंविधत्ते । यथा॰वेदं कृत्वावेदींकरोतीत्यादि । नचतद्विलम्बेपिप्रमाणाभावइतिवाच्यम् । विलम्बेह्यङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्ति : । विलम्बेनक्रियमाणयो : पदार्थयोरिदमनेनसहकृतमितिसाहित्यव्यवहाराभावात् । सचाविलम्बोनियतेक्रमआश्रीयमाणेभवति । अन्यथाहि किमेतदनन्तरमेतत्कर्त्तव्यम्॰एतदनन्तरंवेतिप्रयोगविक्षेपापत्ते: । अंत : प्रयोगविधिरेवस्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थंनियतंक्रममपिपदार्थविशेषणतयाविधत्ते । अतएवाङ्गानांक्रमबोधकोविधि : प्रयोगविधिरित्यपिलक्षणम् । तत्रक्रमोनाम विततिविशेष : पौर्वापर्यरूपोवा । तत्रश्रुत्यर्थपाठादीनिषट्प्रमाणानि भवन्ति ॥

प्रयोगार्थ : । पुं॰ प्रत्युत्क्रमे । प्रधानप्रयोगानुकूलेप्रयोजनानुष्ठाने ॥ प्रयोजनम् । युजिर्॰ । घञ् । प्रयोगोर्थोस्य ॥ प्रयोगस्येप्सौ ॥

प्रयोगी । त्रि॰ प्रयोगवति ॥ प्रयोगोऽस्यस्य । अतइनिठनौ ॥ प्रयोक्तरि । ऋत्विजि ॥

प्रयोग्य : । त्रि॰ अश्वादौ ॥ प्रयुज्यते । युजिर्॰ । ऋहलोर्ण्यत् ॥

प्रयोजक : । त्रि॰ प्रयोगकर्त्तरि । नि

योगकर्त्तरि । य: कर्त्तारंकारयति
तस्मिन् ॥ प्रेरके । कर्त्तुर्व्यापारानु
कूलव्यापारवति ॥ प्रयोजयति ।
युज्० । ण्वुल् ॥

प्रयोजनम् । न० कार्ये ॥ हेतौ ॥ सर्वं
स्यैवहिशास्त्रस्यकर्मणोवापिकस्यचि
त् । यावत्प्रयोजनंनोक्तंतावत्तत्
केनगृह्यते ॥ सिद्धार्थंसिद्धसम्बन्धं
श्रोतुंश्रोताप्रवर्त्तते । ग्रन्थादौतेनवक्त
व्य:सम्बन्ध:सप्रयोजन: ॥ फले । य
था । वेदान्तानांप्रत्यग्ब्रह्मणोरैक्यप्र
मेयगताज्ञाननिवृत्तिस्तत्स्वरूपान
न्दावाप्तिश्चेतिप्रयोजनम् ॥ प्रयोज
नमनुद्दिश्यनमन्दोपिप्रवर्त्तते ॥ यु
जिर्० । ल्युट् ॥ प्रयोजनंलक्षयति
गोतम: । यमर्थमधिकृत्यप्रवर्त्तते-
तत्प्रयोजनम् ॥ २४ ॥ अधिकृत्य०
उद्दिश्य । तथाच० इष्टसिद्धिरिच्छा
विषयत्वंप्रयोजनत्वम् । विषयत्वं
साध्यताख्यविषयताविशेष: ॥ कार
णव्युत्पत्त्याप्रयोजके ॥

प्रयोजयिता । त्रि० नियोजयितरि ॥

प्रयोज्य: । त्रि० भृत्ये ॥ प्रयोक्तुंशक्ये ॥
प्रपूर्वाद्युजेर्यत् । प्रयोज्यनियो
ज्याविति०कवर्गाभावोनिपातनात्
॥ न० मूलधने ॥

प्ररुढ: । पुं० जठरे ॥ त्रि० वद्धमूले ॥
वृद्धे ॥ प्रकर्षेणारूढ: ॥ जाते ॥

प्ररोह: । पुं० उद्गमे । अङ्कुरे ॥ न्यग्रोधादीशाखावलम्बिन्यधीमूले-
ङ्कुरे ॥ प्रकृष्टोरोह: ॥

प्ररोही । पुं० नन्दोवृक्षे ॥

प्रलपनम् । न० प्रलापे ॥

प्रलपित: । त्रि० कथिते ॥ प्रपूर्वाल्लपे:
कर्मणिक्त: ॥

प्रलब्ध: । त्रि० वञ्चिते ॥

प्रलम्ब: । पुं० दैत्यभेदे ॥ सचम
नुष्यवध्य: । यथा । एकादशऋषभो
रिष्ट: प्रलम्बनरकौतथा । चन्द्रभा
धनकेशीचपुर: प्रक्षोयधनुक: ॥
गवेष्टिकोगवाघसरा: पक्वेतुब्रवीर्यवा
न् । एतेमनुष्यवध्यास्तुदनो:पुत्रान्व
या: स्मृता: ॥ त्रपुषे ॥ पयोधरे
॥ तालाङ्कुरे ॥ शाखायाम् ॥ हार
प्रभेदे ॥ प्रलम्बने ॥ त्रि० लम्बमा
ने ॥

प्रलम्बघ्न: । पुं० रामे । बलदेवे ॥ प्र
लम्बंहतवान् । मू० क: ॥

प्रलम्बभित् । पुं० बलभद्रे ॥ प्रलम्बं
भिनत्ति । भिदिर्० । क्विप् ॥

प्रलम्बाण्ड: । पुं० दीर्घाण्डकोपिपि
॥ प्रलम्ब: अण्डोयस्यस: ॥

प्रलम्बित: । त्रि० प्रकर्षेणलम्बमाने
माल्यादौ ॥

प्रलम्भनम् । न० मिथ्याफलाख्याने ॥
वञ्चने ॥

प्रलय: । पुं० मरणे ॥ मृत्यौ ॥ प्रक-
र्षेणलीयन्तेऽस्मिन्नितिव्युत्पत्त्यासंहार

ब्राह्मणात्मनासमस्तानांवेदानांप्रव चनंकुर्वन्वेदस्यार्थमितिब्राह्मणश्रुति ब्राह्मणनामार्थभाष्यम् । प्रकर्षेण उच्यतेवेदार्थएभिरितितथा ॥ त्रि० प्रकृष्टवक्तरि ॥ यथा । यथिचक्रुः प्रवचनमेकंशुश्रूषवोऽपरे ॥

प्रवचनीय : । त्रि० प्रवक्तरि ॥ प्रवाच्ये ॥ प्रकर्षेण प्रोच्यतेवा । वच० । अनीयर् । भव्यगेयप्रवचनीयेतिसाधु :। प्रवचनीयोगुरुः स्वाध्यायस्य० । प्रवचनीय : स्वाध्यायोगुरुणा ॥

प्रवञ्चनम् । न० प्रतारणे ॥ वञ्चु० प्र०पू० : ल्युट् ।

प्रवण : । पुं० चतुष्पथे ॥ क्षणे ॥ आवर्त्ते ॥ त्रि० क्रमनिम्नमहीभागे ॥ उदारे ॥ प्रह्वे ॥ प्रगुणे ॥ आयत्ते ॥ क्षीणे ॥ प्रकर्षेणनिम्नाववा । प्रकृष्टगती । ल्युट् ।

प्रवत्स्यन् । त्रि० प्रवासंकरिष्यति ॥

प्रवत्स्यत्पतिका । स्त्री० नायिकाभेदे ॥

प्रवयणम् । न० प्रवतोदे ॥ प्रकीयतेऽनेन । अजगतिक्षेपणयो : । ल्युट् ॥ वायावितिपाक्षिकोवि : । प्राचयत्रितिणत्वम् ॥

प्रवया : । त्रि० स्थविरे । वृद्धे ॥ प्रगतंवयोऽस्य ॥

प्रवर : । पुं० सन्ततौ ॥ गोत्रप्रवर्त्तक मुनिव्यावर्त्तके मुनिगणे ॥ तथा



चजमदग्निगोत्रस्यप्रवरा : ० यमदग्न्यौर्वच्यविष्ठा : ३ । भरद्वाजगोत्रस्य०भरद्वाजाङ्गिरसबार्हस्पत्याः ३ विश्वामित्रगोत्रस्य० विश्वामित्रमरीचिकौशिका : ३ । यत्रिगोत्रस्य ४ यत्र्यात्रेयशातातपा : ३ । गौतमगोत्रस्य ५ गौतमवशिष्ठबार्हस्पत्या : ३ । वशिष्ठगोत्रस्य ६ वशिष्ठः १ । केचिदत्रैतुवशिष्ठात्रिसाङ्कृतय : ३ । काश्यप गोत्रस्य ७ काश्यपास्सारनैध्रुवा: ३ । अगस्त्यगोत्रस्य ८ अगस्ति दधीचिजैमिनय : ३ । सौकालिनगोत्रस्य ९ सौकालिनाङ्गिरस बार्हस्पत्यास्सारनैध्रुवा: ५ । मौद्गल गोत्रस्य १० और्वच्यवनभार्गवजामदग्न्याप्नुवत : ५ । पराशरगोत्रस्य ११ पराशरशक्तिवशिष्ठाः ३ । बृहस्पतिगोत्रस्य १२ बृहस्पतिकपिलपार्वणा : ३ । कात्यायनगोत्रस्य १३ अश्वत्थदेवलदेवराजा : ३ विष्णुगोत्रस्य १४ विष्णुवृद्धि कौरवा : ३ । कौशिक गोत्रस्य १५ कौशिकात्रिजमदग्नय : ३ । कात्यायनगोत्रस्य १६ अत्रिभृगुवशिष्ठाः ३ । आत्रेयगोत्रस्य १७ आत्रेयशातातपसाङ्ख्या : ३ । काण्वगोत्रस्य १८ काण्वाश्वत्थदेवला: ३ । कृष्णात्रेयगोत्रस्य १९ कृष्णात्रेयात्रेयवासा : ३ साङ्कृतिगो

त्रस्य २० थव्याहाराचिसाङ्कृत
य : ३ । कौण्डिन्यगोत्रस्य २१
कौण्डिन्यस्तैमितकौत्सा : ३ ।
गर्गगोत्रस्य २२ गार्ग्यकौस्तुभ
माण्डव्या : ३ । आङ्गिरसवशिष्ठ
बार्हस्पत्या : ३ । अनाहकाख्य
गोत्रस्य २४ गार्ग्यगौतमवशिष्ठा :
३ । अव्यगोत्रस्य २५ अव्यवसि
ष्ठारम्भता : ३ । जैमिनिगोत्रस्य
२६ जैमिन्युतथ्यसाङ्कृतय : ३ ।
हविगोत्रस्य २७ कुत्सद्धाङ्गि
रौर्वाङ्गिरस्या : ३ ॥ शाण्डि
गोत्रस्य २८ शाण्डिल्यासितदे
वला : ३ । वात्स्यगोत्रसावर्ण्णगो
त्री : २९ १० और्वच्यवनभार्गव
जामदग्न्याप्नुवत : ५ । आर्त्तभा
यन गोत्रस्य ३१ आर्त्तभायनशा
लङ्कायन शाकटायना : ३ । वैया
घ्रपद्यगोत्रस्य ३२ साङ्कृति : १
। धृतकौशिकगोत्रस्य ३३ कुशिक
कौशिकधृतकौशिका : ३ कैवाश्वित्
कुशिकाकौशिकमम्बुजा : ३ । शक्ति
गोत्रस्य ३४ शक्तिपराशरवशिष्ठा :
३ काण्वायनगोत्रस्य ३५ का
ण्वायनाङ्गिरसबार्हस्पत्यभरद्वाजा-
जमीढा : ५ । वासुकिगोत्रस्य
३६ अनन्तवासुकय : ३ ।
गौतमगोत्रस्य ३७ गौतमाप्सारा
ङ्गिरसबार्हस्पत्यनैध्रुवा : ५ के
पालित्गोतमाङ्गिरसावासा : ३ ।
शुनकगो० ३८ शुनकशौनकगृत्स
मदा : ३ । सौपायनगोत्रस्य ३९
और्वच्यवनभार्गवजामदग्न्याप्नुव-
त : ५ । प्रवरा : ॥ इतिधनञ्जय
कृतधर्म्मप्रदीपेगोत्रप्रवरविवेक : ॥
न० गोत्रे ॥ पशुतपि ॥ त्रि० श्रे
ष्ठे ॥ प्रत्रियते० ह्रोमधूर्भ्यामुत्०
कोर्य्यते । वृञ्० । प्रद्वृद्धिल्यप्
॥ प्रवरण्वंश ॥

प्रवरललितम् । न० छन्दोभेदे ॥ य-
था । यमौनसौगसप्रवरललितंनाम
वृत्तम् ॥ मुखोत्क्षेप : शुन्धे चलव-
लयभङ्कारयुक्तस्तत्पादन्यास :
प्रकटिततुलाकोटिनाद : । स्मितंव
क्त्रेऽकस्माद्दृशिपटुकटाक्षोर्मिलीला
हरोभीयादीद्दक्प्रवरललितंवल्लवी
नम् ॥

प्रवर्ग : । पुं० होमाग्नौ ॥

प्रवर्ग्य : । पुं० वैदिककर्म्मविशेषे ॥ म-
हावीरे ॥

प्रवर्त्तक : । त्रि० प्रेरके । प्रवर्त्तनकर्त्त
रिणि ॥ प्रवर्त्तिजनके ॥ यथा । प्र-
वर्त्तकंवाक्यमुवाचचोदनांनिवर्त्तकं
नैनसुवाचभाष्यकृत् । ततश्चविध्यो-
भयित्रोदनास्तितासाप्रवर्त्तयायानभ
वेदितिस्थिति : ॥ इतिसङ्क्षेपशा
रीरके ॥

प्रवर्त्तकत्वम् । न० प्रवृत्तिजनकत्वे ॥

प्राय : प्रवर्त्तकत्वं विधिवचसांलो-
कवेदयोर्दृष्टम् । सिद्धं बोधयतोर्थेक
यमेतत्प्रवर्त्तितात्त्वमस्यादे : ॥ ३९ ॥
विधिरेवनप्रवृत्तिं जनयत्यभिलषित
वस्तुबोधोपि । राजाभवतिसुतोभू-
दित्तिबोधेमप्रवृत्तंतिलोक : ॥
प्रवर्त्तनम् । न० प्रेरणे । याच्ञा
पने ॥ प्रवृत्तौ ॥ आरम्भे ॥
प्रवर्त्तना । स्त्री० पर्य्येषणायाम् ॥ उत्
कृष्टस्यनिकृष्टप्रव्याख्यायाम् ॥ प्र-
वृत्तिजनकत्वे । प्रवृत्तिहेतुव्यापा-
रे ॥ प्रवर्त्तकज्ञानादिनिष्ठायाम् ॥
विध्यर्थे ॥ सर्वानुगतं प्रवर्त्तनासा-
मान्यं विध्यर्थ : । प्रेषणादयोवि-
शेषास्तु० अर्थप्रकरणादिगम्या-
इतिबोध्यम् ॥
प्रवर्त्तयिता । त्रि० कर्त्तरि ॥
प्रवर्त्तित : । त्रि० ज्वाते ॥ उत्पादि-
ते ॥ यथा । प्रवर्त्तितोदीपइवप्र-
दीपाद्दिलीपरघु : ॥
प्रवर्द्धनम् । न० विवर्द्धने ।
प्रवर्षण : । पुं० पर्व्वतविशेषे । न०प्र-
कृष्टवर्षणे ॥ तन्नलक्षणमाहवराहा
चार्य्य : । ज्यैष्ठेसमासमतीतायांपूर्वा
षाढादिसंसृष्टेनशुभमशुभंवावाच्यं
परिमाणंचाम्भसस्तज्ज्ञै : ॥ तत्प्र
माणार्थमाह । हस्तविशालंकुण्डक
मधिकृत्याम्बुप्रमाणनिर्द्देश : ॥ प
ञ्चाशत्पलमाढकमानेनमिनुयाज्-

ज्जलंपतितम् ॥ प्रवर्षणप्रमाणमा
ह : येनधरित्रीमुद्राजनितावाविन्द
वस्तृणाग्रेषु । दृष्टेनतेनवाच्यं परि
माणंवारिण : प्रथमम् ॥ मुद्राजनि
ता० विगतधूलिकाता । मतान्तरमा
ह । केचिद्यथाभिहृष्टं दृश्ययोजनम-
ण्डलंवदन्त्यन्ये । गर्गवशिष्ठपराशर
मतमेतद्द्वादशात्परम् ॥ येप्रवर्षेभ्य
भिहृष्टंभूयस्तत्र्यवर्षतिप्राय : ।
यद्दिनाप्यादिप्रवृष्टंसर्वेप्वतद्द्वादशना
ष्टि : ॥ नक्षत्राणांप्रवृष्टिप्रमाणमा-
ह । हस्ताप्यसौम्यचित्रापौष्णधनि-
ष्ठासुषोडशद्रोणा : । शतभिषगैन्द्र
स्वातिषुचत्वार कृत्तिकासुदश ॥
श्रवणमघानुराधाभरणीमूलेषुदशच
तुर्युक्त : । फाल्गुन्यांपञ्चकृति : पु
नर्वसौविंशतिर्द्रोणा : । ऐन्द्राग्न्याख्य
वैश्वे विंशति : सार्पेदशत्यधिका :
॥ आहिर्बुध्न्यार्यमप्राजापत्ये पु
पञ्चकृति : । पञ्चदशाजेपुष्ये चकी
र्त्तिताधाजिभेदशद्रोण ॥ रौद्रे पो-
डशकथिताद्रोणानिरुपद्रुतेष्वेते ॥
पक्षविशेषमाह । रविरविसुतकेतुपी
डितेभेक्षितित्तनयत्रिविधाद्भुताहते
च । भवतिचनशिवंनचापिवृष्टि : शु
भसहितेनिरुपद्रवेशिवंस्वेति ॥
प्रवलाकी । पुं० भुजङ्गे । चित्रमेघ-
लके ॥
प्रवर्ह : । त्रि० प्रधाने । श्रेष्ठे ॥ प्रव-

हीति । हलहली । पचाद्यच् ॥

प्रवह : । पुं० वहिर्यानायाम् । पुराद्वहिर्गमने ॥ वायुमात्रे ॥ सप्तवायुमार्गान्तर्गतवायुविशेषे ॥ सतु० आवहवायोरूर्ध्वस्थित : ॥ सभिन्त्वं प्रत्यग्गति : तस्यतुमध्यसंस्था : । मघवकथा : खचरै : समेतायस्मादतस्तेनसमाख्यातोयम् । अपञ्जर : खेचरचक्रयुक्तोभ्रमत्यजस्रं प्रवहानिलेनेतिशिशिरोमणि: ॥ यस्माज्ज्योतींषिवहतिप्रवहस्तेनसस्मृत : ॥ ० ॥ षष्ठ्यार्थ : ॥ यस्माज्ज्योतींषिप्रकर्षेण वहतितेनसवायु:प्रवह: स्मृत : ॥ प्रवहस्यैवभेदा : सर्वेवायुस्कन्धा : ॥ इतिविष्णुपुराणेद्वितीयांशे १२ अध्याय : ॥ वायोर्द्वितीयस्कन्धे ॥ स्वतुजित्सत्यजित्सेनजिदमित्रावमित्रजित् । भूरिमिश्चसुषेणोभिस्थाभानी : प्रवहोगण : ॥ प्रकृष्टोवह : । गोचरसञ्चरिणिसाधु : ॥ पुरतोगच्छन्प्रवहोवायु : ॥

प्रवहणम् । न० कर्णीरथे । डयने । स्त्रियोद्वहनाययानविशेषे । चौडोला० इ० भा० । अधुना० पीनसखर्खरिया० इ० प्र० ॥ प्रोह्यतेऽनेनषा । वहप्रापणे । ल्युट् ॥

प्रवह्लिका । स्त्री० प्रहेलिकायाम् । पहेली० इ० भा० ॥ प्रवह्लते० आच्छादयति । वर्द्धकप्रपरिमाणपर्यांहि प्रादानेषु । कृत्शिल्पिसंज्ञयो : ॥ दुर्विज्ञानार्थप्रश्नादिवाक्यरूपाहिसा

प्रवाक् । त्रि० वाग्मिनि ॥

प्रवाचक: । त्रि० प्रकृष्टवक्तरि ॥

प्रवाच्य : । पुं० पाठविशेषोपलक्षितेग्रन्थविशेषे ॥ प्रोच्यते । वच० । ण्यत् । यजयाचेतिनकुत्वम् ॥

प्रवाणी । स्त्री० तन्तुवायशलाकायाम् प्रकर्षेणाऽऽवयतिवस्त्राम् । प्रपूर्वाद्वयतेल्युट् ॥

प्रवाद : । पुं० परस्परवाक्ये ॥ जनरवे ॥ वादविशेषे ॥ प्रकृष्टोवाद : ॥

प्रवादित : । त्रि० शब्दिते ॥

प्रवारणम् । न० निषेधे ॥ काम्यदाने ॥ महादाने ॥ प्रव्रियते । वृञ्० चु० ॥ ल्युट् ॥

प्रवास : । पुं० स्वगृहाद्दूरगमने । विदेशस्थितौ ॥ विदेशे ॥ प्रवसन्त्यस्मिन् । वस० । हलश्चेतिघञ् ॥

प्रवासनम् । न० वधे । मारणे ॥ वासच्छेदे । चु० । प्रपूर्वाद्वसेर्ल्युट् ॥ प्रवासनायाम् ॥

प्रवासी । त्रि० प्रवासविशिष्टे । प्रोषिते । पथिके ॥ वस० । प्रपूर्वादस्मात् ग्रहेलपक्वद्रुमघवदवस : इतितच्छीलादिषुघिनुण् ॥

प्रवाह : । पुं० प्रवृत्तौ ॥ व्यवहारे ॥ अम्बुवेगे । जलस्यस्रोतसि ॥ अविच्छिन्नसन्ततौ । अविच्छेदेनजलादि

नितरांप्रयतमानतायाम् । रत्न : कार्ये चारम्भे ॥ गतौ ॥ प्रवर्त्तते व्याप्नोति० प्रवर्तनंवा । वृतु० । क्तिच्० । क्तिम्वा । न्यायमतेयत्नवि शेषे ॥ अस्या:कारणम् । चिकीर्षा कृतिसाध्यताज्ञानम्० इष्टसाधन ताज्ञानं०उपादानप्रत्यक्षम् । यथा प्रवृत्तिश्चनिवृत्तिश्चतथाजीवनकारणम् । एवंप्रयत्नत्रैविध्यंतान्त्रिकै : परिदर्शितम् ॥ चिकीर्षाकृतिसाध्य साधनत्वमतिस्तथा । उपादानस्य चाध्यक्षंप्रवृत्तौजनकंभवेत् ॥ इति ॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ :। इति गौतमसूत्रम् ॥ १७ ॥ यद्ज्ञानात् प्रवृत्ति:स्यात् तज्ज्ञानात्साकृती भवेत् ॥

प्रवृत्तिक्रम : । पुं० श्रुत्यादिभ्योऽनुष्ठेये प्रवृत्तेःक्रमे ॥ तथाहि । सहप्रयुज्यमानेषुप्रधानेषुसन्निपातिनामङ्गानामावृत्त्याऽनुष्ठानेकर्तव्येपि० द्वितीयादिपदार्थानांप्रथमानुष्ठितपदार्थानांप्रथमानुष्ठितपदार्थक्रमाद्य : क्रम : । यथा० प्राजापत्यपश्वङ्गेषु० प्राजापत्याश्चियेपञ्चदेवीकृत्वाप्राजापत्यैश्चरन्तीतिवाक्ये नतृतीयानिर्देशानुसैतिकर्तव्यताप्रापकवाक्यत्वेनविहिता : । अतस्तेषांतद्ज्ञानाश्चोपाकरणनियोजनप्रभृतीनांसाहित्यं मन्यायम् । तत्रप्रजापत्ययग्रनांस- म्प्रतिपन्नदेवताकत्वेनयुगपदनुष्ठानादुपपद्यते । तद्ज्ञानाश्चोपाकरणादीनांयुगपदनुष्ठानमशक्यम्० अत स्तेषांसाहित्यमव्यवहिताऽनुष्ठानात्सम्पाद्यम् । तत्रैकस्योपाकरणं विधायापरस्योपाकरणंविधेयम्० एवंनियोजनादिकमपि । तथाच प्राजापत्येषुकस्माच्चित्पशोरारभ्य : एकांसर्वंचानुष्ठायद्वितीयादि : पदार्थस्तेनैवक्रमेणानुष्ठेय : सप्रवृत्तिक्रम : ॥ प्रवृत्ते : क्रम : ॥

प्रवृत्तिजनक : । त्रि० प्रवर्त्तके ॥

प्रवृत्तिज्ञ : । पुं० चारभेदे । वार्त्तिके । वार्त्तायने ॥ त्रि० प्रवृत्तिज्ञानविशिष्टे ॥

प्रवृद्ध : । त्रि० प्रौढे । एधिते । वृद्धियुक्ते ॥ प्रसारिते । प्रसृते ॥ प्रवर्द्धितेस्म । वृधुवृद्धौ । गत्यर्थेति क्त : ॥

प्रवृष्ट : । त्रि० प्रवृष्टवति ॥

प्रवेक : । उत्तमे । प्रधाने । प्रमुखे ॥ प्रविच्यते । विचिर्पृथग्भावे । घञ् ॥

प्रवेट : । पुं० शितशूके । यवे ॥

प्रवेणि : । स्त्री० कुथायाम् । वेण्याम् प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे । वेणति । वेञ्गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु गमनज्ञानचिन्तासु । इन् । प्रउपसर्गान्तरव्युत्पन्न :॥

प्रवेणी । स्त्री० कुथायाम् । परिस्तोमे । गजपृष्ठस्थचित्रकम्बले । वेण्याम् । प्रकर्षेण वीयतेऽस्याम् । वीणाद्यादिषु । वीज्याज्वरिभ्योनि : । कृदिकारादक्तिनइतिपाक्षिकोङीप् ॥

प्रवेल : । पुं० पीतमुद्गे । सोनामूंगा हि० भा० ॥

प्रवेश : । पुं० अन्तर्विगाहने । गृहाद्यन्तर्गमने । प्रवेशस्तुर्धा । अपूर्वप्रवेश : सुपूर्वप्रवेश : द्वन्द्वाभयप्रवेश : वधूप्रवेश : इतिभेदात् । तत्र वधूप्रवेशस्यान्वर्थसंज्ञकत्वात्० तदन्ये पांलक्षणान्युच्यन्ते । यथा । अपूर्वसंज्ञ : प्रथम : प्रवेशोयात्रावसानेतुसुपूर्वसंज्ञ : । द्वन्द्वाभयस्त्वग्निभयादिजात स्त्वेवंप्रवेशस्त्रिविध : प्रदिष्ट : ॥ भूरिपुष्पनिकरंसतोरणंतोयपूर्णकलशोपशोभितम् । धूपगन्ध बलिपूजितामरं प्राप्नुयाद्भवनमुत्तमंगृहम् ॥ प्र० विश० । घञ् ॥ ...

प्रवेशनम् । न० प्रवेशे । सिंहद्वारे ॥ प्रविश० । ल्युट् ॥

प्रवेश्य : । त्रि० प्रवेशयितव्ये । प्रवेशनीये ॥

प्रवेष्ट : । पुं० भुजे । वाही । प्रवेष्टते । वेष्टवेष्टने । पचाद्यच् । हस्तिदन्तमांसे । गजपृष्ठतल्पने ।

प्रव्यक्त : । त्रि० उत्कर्षे । स्पष्टे । स्फुटे । प्रव्यज्यतेस्म । अञ्जू व्यक्त्यादौ । क्त : । प्रव्यज्यतेस्मना । अञ्जु विशेषणे । क्त : ॥

प्रव्यथित : । त्रि० प्रपीडिते ॥ व्याकुलीकृते ॥ अतिभीते ॥

प्रव्रजन् । त्रि० संन्यसागच्छति ॥

प्रव्रजित : । पुं० प्रव्रज्याश्रमविशिष्टे । बुद्धभिक्षुशिष्ये । चेलुके । श्रामणेरे ॥ त्रि० निष्क्रान्ते ॥

प्रव्रजिता । स्त्री० मांस्याम् ॥ मुण्डीर्याम् ॥ तापस्याम् ॥

प्रव्रज्या । स्त्री० वेदयाध्ययरक्तपटादौ ॥ प्रव्रजनम् । व्रज० । व्रजयजोर्भावे क्यप् ॥ सन्न्यासे ॥

प्रव्रज्यावसित : । पुं० सन्न्यासभ्रष्टे ॥

प्रव्राजी । पुं० प्रव्रजनशीले । सन्न्यासिनि ॥ शाण्डील्य वैराग्यातिशयप्रशस्तिष्वस् ॥

प्रशंसनीय : । त्रि० प्रशंसितुंयोग्ये । शंसु० । अनीयर् ॥

प्रशंसा । स्त्री० प्रशंसने । वर्णनायाम् । ईडायाम् । स्तवे ॥ परोक्षरागी । द्विप्रकाराहिप्रशंसाभवति । वस्तुनिविद्यमानगुणोत्कर्षपक्ष : प्रकार : स्तावकेनशब्देनसभ्यादिरोगुणोत्कर्ष : पर : प्रकारइति ॥

प्रशत्त्वा । पुं० समुद्रे ॥ प्रशीयते । शद्लृशातने । प्रद्रुरगदोस्तुद्चेतिशनिप् ॥

प्रशस्वरी । स्त्री॰ नद्याम् ॥ ङीप्त्री ॥

प्रशम : । पुं॰ उपशान्तौ ॥ प्रशमनम् । शम॰ । भावेघञ् ॥

प्रशमनम् । न॰ मारणे । वधे ॥ शम सायाम् ॥ प्रशान्तौ ॥ प्रशमयति । शम॰ । णिजन्तात्ल्युःभावेल्युट्वा ॥

प्रशमितः । त्रि॰ अपाकृते । राज्ञ : कर्त्तव्ये ॥ रक्षापौरजनस्य॰देशनगरवासीषुगुप्तिसधा॰ योधानामपिसङ्ग्रह॰तुलयामानव्यवस्थापनम् । सान्त्वं सन्धिषु॰दानवृत्तिकरणीत्याग : समानार्ज्जनम्॰कार्यांश्चेषमहीभुजां प्रशमनान्येतानिराज्ञ्येनव ॥

प्रशस्तम् । न॰ मङ्गले ॥ त्रि॰ क्षेमे । शुभे ॥ प्रशंसनीये । अतिश्रेष्ठे । उत्तमे ॥ प्रशस्यतेस्म । शंसु॰ । क्त: । प्रपर्यायशस्तोवा ॥

प्रशस्तिः । स्त्री॰ प्रशस्तिलेखनप्रक्रियायां ॥

प्रशान्त : । त्रि॰ प्रकृष्टशमताविशिष्टे । पर्यायसारहिते ॥ सर्वसमबुद्ध्या रागद्वेषशून्ये । निर्विकारे ॥ सर्वलाभेनापिसन्तुष्टे ॥ तमोरजसो : कर्माश्रयविक्षेपशून्यत्वेनशुद्धसत्त्वरूपे चित्ते ॥ प्रकर्षेणशान्त: ॥ प्रत्याहारे शे ॥

प्रशान्तचित्त : । त्रि॰ शान्ते । उपरत दर्पादिदोषे । समाहितमनसि ॥ प्रशान्तं चित्तं यस्य स : ॥

प्रशान्तवाहिता । स्त्री॰ तमोरजसो : कर्माश्रयविक्षेपशून्यत्वेनशुद्धसत्त्वरूपं चित्तं प्रशान्तं । पूर्वपूर्वप्रशमसंस्कारपाटवेनतादृशचित्तस्याधिक्यं प्रशान्तवाहितेत्यर्थ : ॥

प्रशान्तात्मा । त्रि॰ प्रशान्तचित्ते ॥

प्रशान् । अ॰ समानार्थे ॥

प्रशान् । त्रि॰ शांते ॥ प्रकर्षेणशाम्यति । शम॰ । क्विप् । अनुनासिकस्यक्विझलोरितिदीर्घ : । मोनोधातो : ॥

प्रशासनम् । न॰ प्रकृष्टाज्ञायाम् ॥ शासु॰ । ल्युट् ॥

प्रशासिता । त्रि॰ प्रकृष्टशासनकर्त्तरि ॥ ईश्वरे ॥ यथा । प्रशासितारंसर्वेषामणीयांसमणोरपि । रुक्माभंस्वप्नधीगम्यं विद्यात्तंपुरुषंपरम् ॥ देवतायागकर्त्तारंपितर : श्राद्धकारिणम् । गामुत्सृष्टव्यकथ्यांधर्ष्टदिनस्यात्प्रशासिता ॥

प्रशास्ता । पुं॰ ऋत्विजि ॥ मित्रे । त्रि॰ शासनकर्त्तरि ॥ प्रशास्ति । शासु॰ । तृच् । अपृतृन्नितिदीर्घ : ॥

प्रश्न : । पुं॰ अनुयोगे । पृच्छायाम् ॥ प्रच्छनम् । प्रच्छ॰ । यजयाचेतिनङ् । छ्वोरितिश : । प्रश्ने चेतिनिङ्गाद्रसम्प्रसारणम् ॥

प्रश्नदूती । स्त्री॰ प्रहेलिकायाम् ॥

प्रश्नी । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

प्रश्रयः । पुं॰ प्रणये । प्रीत्याप्रार्थने ॥ प्रश्रयणम् । श्रिअप्रत्यं ॥

प्रश्रवणम् । न॰ प्रवाहे ॥

प्रश्रितः । त्रि॰ विनीते ॥ प्रथमंगुणै रश्रायि । श्रिञ्॰ । क्तः ॥

प्रश्लथः । त्रि॰ शिथिले ॥

प्रश्लिष्टः । त्रि॰ प्रकर्षेणश्लिष्टे ॥

प्रश्लेषः । पुं॰ संयोगे ॥ प्रश्लेषणम् । श्लिष्॰ । घञ् ॥

प्रश्वासः । पुं॰ प्राणेनकोष्ठस्थवायो र्बहिर्निःसारणे । समाध्यङ्गपूरकवि रोधिनि ॥ श्वासस्यविशेषे ॥ प्रश्व सनम् । प्रश्वस॰ । घञ्॰ ॥ श्रमाप नये ॥

प्रष्टव्यः । त्रि॰ प्रश्ने ॥

प्रष्टा । त्रि॰ कथङ्कथिके । प्रश्नकर्तरि । पृच्छति । प्रच्छ॰ । तृच् । नयेति छन्दम् ॥

प्रष्ठः । त्रि॰ अग्रगे ॥ श्रेष्ठे ॥ चाण्डा लिकौषधौ ॥ प्रतिष्ठते॰ गच्छति । स्था॰ । आतश्चोपसर्गइतिकः सुपि स्थइतिकोवा । प्रष्ठोऽग्रगामिनीति षः । षत्वम् ॥

प्रष्ठवाट् । पुं॰ युगपार्श्वगे । दमनया सैकस्कन्धारोपितकाष्ठवाहे ॥ प्रष्ठमग्र गामिनंवहति । वहश्चेतिण्विः ॥ स्वामीतु॰पष्ठंमंपष्ठंयावर्णंवहतीति विग्रहेरेफरहितंपठति॰तत्रपृषोद रादित्वंबोध्यम् ॥

प्रष्ठौही । स्त्री॰ प्रष्ठभार्यायाम् ॥

प्रष्ठौही । स्त्री॰ बालगर्भिण्याङ्गवि । प्रथमगर्भधृतवत्स्याम् ॥ प्रष्ठंवहति । वहश्चेतिण्विः । वाहऊठितिङीष् ॥

प्रसक्तः । त्रि॰ आसक्ते ॥ लग्ने । सर्वथासदैकपरे ॥ न॰ । सतते ॥ सङ्गि । षञ्ज॰ । कर्मणिक्तः ॥

प्रसक्तिः । स्त्री॰ प्रसङ्गे ॥ प्रवृत्तौ ॥ अनुमितौ ॥ आपत्तौ ॥ प्र॰ षञ्ज॰ । स्त्रियांक्तिन् ॥ आसक्तौ ॥

प्रसङ्गः । पुं॰ प्रसक्तौ । अन्योद्देशेनाऽ न्यदीयस्यापिसङ्गानुष्ठाने ॥ अन्योद्दे शेनप्रवृत्तावन्यस्यापिसिद्धौ ॥ यथा । दृष्टानुपरतेपापं स्पृष्टानुविदितंभये त् । प्रसङ्गेनापियागङ्गामौषदाश्च यगालिता ॥ गीतवादित्रादौ । प्रस ज्यतेपुरुषोयत्र । षञ्ज॰ । घञ् ॥ नैहैतावान्प्रसङ्गोनर्माविषयेनकर्म णा । नविवाहेनेष्वर्येपुनात्त्मिति यतस्ततः । यतस्ततः पतितादेः ॥ प्रस्तावे ॥ प्रस्तावे ॥ य॰ । यथा च्युतोदारकथाप्रसङ्गः ॥ पुनः पु नः प्रवृत्तौ ॥ प्रकृष्टसम्बन्धे ॥ स ङ्गतिविशेषे ॥ स तत्त्वसंस्थापोद्घा तादिषट्कभिन्नत्वमितितास्यलक्षण म् । स तत्त्वोपेक्षानर्हत्वप्रसंगत्वम् । तद्दर्शस्तुस्मृतिविषयतापन्नत्वेसतिद्वे षविषयतानापन्नत्वमित्यनुमितिप्र न्थे गदाधरभट्टाचार्यः । प्रकृष्ट.सङ्गः ॥

मैथुने ॥

प्रसन्नत्वम् । न० स्मृतस्योपेक्षाऽनर्हत्वे । स्मृतविषयतापन्नत्वेसति०द्वेषविषयतानापन्नत्वमितितदर्थः ॥

प्रसङ्ख्यानम् । न० चासक्तौ ॥ चासक्तिर्हिप्रसङ्ख्यानमित्युक्तः ॥

प्रसज्य : । पुं० प्रसज्यप्रतिषेधे ॥ पर्युदासः सदृग्ग्राहीप्रसज्यस्तुनिषेधकृत् ॥

प्रसज्यप्रतिषेध : । पुं० निषेधान्तरे ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधेविधानता । प्रसज्यप्रतिषेधोयंक्रिययासहयत्रनञ् ॥

प्रसञ्जनम् । न० प्रसङ्गे ॥

प्रसत्ति : । स्त्री० नैर्मल्ये । प्रसादे । प्रसन्नतायाम् ॥

प्रसत्त्वा । पुं० प्रजापतौ । धर्मे ॥ मूढे ॥ प्रसीदति । पदृष्ट० । प्रद्रुरसदो स्तद्धेति०दग्रपादीभाठात्सदेरपि क्वनिप् ॥

प्रसत्वरी । स्त्री० प्रतिपत्तौ । बनीर चेतिङीप्रौ ॥

प्रसन्न : । त्रि० याच्छे । स्वच्छे । निर्मले । यच्छा० चच्छी० इ० भा० ॥ सन्तुष्टे ॥ प्रसन्नयातुष्टे ॥ प्रसादवति ॥ प्रसादन् । प्रसीदति स्मया ॥ पदृष्ट० गत्यर्थेतिक्तः ॥

प्रसन्नता । स्त्री० नैर्मल्ये । प्रसादे ॥ प्रसन्नस्वभाव :, तल् ॥

प्रसन्ना । स्त्री० सुरायाम् ॥ मद्यभेदे ॥ प्रसन्नागुल्मवातार्शोविबन्धानाहनाशिनी । शूलप्रवाहिकाटोपकफवातार्शसांहिता ॥ प्रसादविशिष्टायाम् ॥

प्रसन्नात्मा । पुं० शमदमाद्यभ्यासाच्छुद्धचित्ते ॥ प्रसन्न.रजस्तमोभ्यामकलुषित : आत्मान्त : करणमस्य ॥ विष्णौ ॥ अवाप्तसर्वकामत्वात्प्रसन्नयात्मा स्वभावोऽस्य ॥

प्रसभ: । पुं०न० बलात्कारे ॥ प्रगता सभायस्मात् । सभाया:प्रगतोवा ॥

प्रसर : । पुं० प्रणये ॥ वेगे । जवे ॥ समरे । युद्धे ॥ विसर्पणे ॥ प्रसरंन लभन्ते हियावत्क्वचनमर्कटा : । नाभिद्रवन्तितेतावत् पिशाचावास गोचरे ॥ प्रसरणम् । स्मगती । भा० अप् ॥ चयिकारणैर्मुसिसंज्ञायामितिघोवा ॥ प्रकर्षे ॥ समूहे ॥

प्रसरक : । पुं० पियाले ॥ चनप्रसनयाहृल्यपिपाठ : शब्दमालायाम् ॥

प्रसरणम् । न० आसारे । सैन्यानांसर्वतोव्याप्तौ ॥ तृणकाष्ठादिहेतवेसैन्यानामितस्ततोगमने ॥ सर्वतोगमने । पसर्ना०फैलना० इ० भा० ॥ स्ट० । ल्युट् ॥

प्रसरणी । स्त्री० प्रसरणार्थे ॥ प्रसरति । सृ० । वर्तिस्मिन्त्यनि : । कृदिकारादितिङीप् ॥

प्रसारिका । स्त्री० सूक्ष्मधान्ये ॥

प्रसाद : । पुं० अनुग्रहे । तुष्टिदाने । प्रीतिदाने ॥ यथा । सत्कीर्त्तिर्विमलं यशः सुकविता पाण्डित्यमारोग्यता० वाग्देवाक् पटुता कुलेष्वतुरता गाम्भीर्यमक्षोभ्यता । प्रागल्भ्यं प्रसुतागुणे निपुणता यस्य प्रसादाद्भवेत् तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदमिति ॥ स्वास्थ्ये । चारोग्ये ॥ सौम्यतायाम् ॥ प्रसत्तौ । प्रसन्नतायाम् । नैर्मल्ये ॥ चित्तस्य प्रसन्नतायाम् । चित्तस्वच्छतायाम् ॥ देवनिवेदितद्रव्ये ॥ गुरूणां भुक्तावशेषे ॥ प्रसदनम् । पद्लृ० । भावेघञ् ॥ वैदर्भीरीतियुक्तकाव्यगुणे । बाम्यशब्दभिन्नम् सिद्धार्थपदवत्त्वे ॥ यथा । ओज : प्रसादमाधुर्यगुणान्वितयमेदत : । गौडवैदर्भपाञ्चालारीतयः परिकीर्त्तिताः ॥ तत्र० व्यक्तार्थपदमग्राम्यं प्रसादः परिकीर्त्तितः । इतिलक्षणम् ॥ अपिच । शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः । व्याप्नोत्यन्यत् प्रसादोसौ सर्वत्र विहितस्थितिः ॥ व्याप्नोत्यन्यदिति० व्याप्नोति चित्तम् । सर्वत्रेति सर्वेषु रसेषु० सर्वासु रचनासु च । गुणशब्दस्य पुनस्तेषामपि : शब्दार्थयोर्धर्मता ॥ गुणशब्दस्योपचारेण । तेषाम्० ओजआदिगुणानाम् ।

आकारेशौर्यस्येव ॥

प्रसादन : । पुं० भक्तकारे ॥ न० अन्ने ॥ त्रि० प्रसन्नताकारके ॥

प्रसादना । स्त्री० परिचर्यायाम् । सेवायाम् ॥

प्रसादित : । त्रि० प्रार्थिते । सौमनस्यमिते ॥

प्रसादी । त्रि० अनुग्रहशीले । प्रसादगुणयुक्ते ॥ शीलेणिनि : । अस्य येदूनिर्वा ॥

प्रसाधनम् । न० वेशे । अलङ्कारस्य मादिकृतशोभायाम् । प्रसाध्यते ऽनेनाङ्गम् । साध० । करणे ल्युट् ॥ प्रकृष्टनिष्पत्तौ ॥

प्रसाधनी । स्त्री० कङ्कतिकायायाम् ॥ सिद्धौ । ङीप् ।

प्रसाधिका । स्त्री० नीवारे । वेशकारिण्याम् । अलङ्कर्त्र्याम् ॥

प्रसाधित : । त्रि० अलङ्कृते । भूषिते ॥ प्रसाध्यतेस्म । साधसंसिद्धौ । स्वार्थण्यन्त : । क्त : ॥ प्रकृष्टनिष्पन्ने । निष्पादिते ॥

प्रसार : । पुं० प्रसरणे ॥ प्रसरणम् । सृ० । घञ् ॥ तृणकाष्ठादे : प्रवेशे ॥

प्रसारणम् । न० पञ्चविधकर्मान्तर्गतविस्ताररूपिकर्मणि । यथा । उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा । प्रसारणञ्चगमनं कर्माण्येतानि

पश्च ॥

प्रसारणी । स्त्री॰ गंधालिकायाम् । सरणायाम् । कुब्जप्रसारणीतिख्यातायाम् । गन्धभादालिया ॰ इ॰ गौ॰ भा॰ ॥ प्रसारणीगुरुर्व्यावल सन्धानहृत्सरा । वीर्योष्णावातहृत्तिक्ताघातरक्तकफापहा ॥ वीर्यानाह्यविरागाश्च वातसङ्कोचितात्मनाम् । प्रसारयेद्वलोऽङ्गानितद्गुणैः प्रासारणी ॥ प्रसार्यतेऽपमनया । कारणे लियुट् ॥

प्रसारिणी । स्त्री॰ लज्जालुलतायाम् ॥ प्रसारण्याम् ॥

प्रसारित : । त्रि॰ तते । विस्तारिते ॥

प्रसारी । त्रि॰ प्रसरणशीले । विसृत्वरे ॥ प्रसरति॰ तच्छील : । सगती । प्रे लपसृद्रुमथवद्वसवृतिणिनुण् ॥ चायति ॥ ख्याति ॥

प्रसितम् । न॰ पूये । त्रि॰ तत्परे । आसक्ते ॥ प्रासाचि । विशृबन्धे । कर्मणिक्त : ॥

प्रसिति : । स्त्री॰ बन्धने ॥ बन्धनसाधनरज्जुनिगडादौ ॥ प्रसयनम् । षिञ्॰ । क्तिन् ॥

प्रसिद्ध : । त्रि॰ भूषिते ॥ ख्याते ॥ प्रसिद्ध्यति॰ प्रसिध्यते स्मजा । षिधुस राद्धौगत्यावा । कर्त्तरि॰ कर्म्मणिवाक्त : ॥

प्रसिद्धि : । स्त्री॰ टङ्कारे । ख्यातौ ॥ उत्कृष्टसिद्धौ ॥ प्रकृष्टासिद्धि : ॥

प्रसुप्त : । त्रि॰ निद्रिते ॥ प्रकर्षेण सुप्त : ॥

प्रसू : । स्त्री॰ अश्वायाम् ॥ जनन्याम् ॥ कन्दल्याम् ॥ वीरुधि । प्रसूते॰ प्रसूयते वा । षूङ्प्रसवे । सत्सूद्विषिक्विप् ॥

प्रसूका । स्त्री॰ वाजिन्याम् । वडवायाम् ॥

प्रसूतम् । न॰ कुसुमे । पुष्पे ॥ त्रि॰ सञ्जाते ॥ सूते ॥ प्रासविष्ट । षू॰ । क्त : ॥

प्रसूता । स्त्री॰ आसन्नप्रसवायाम् । जातापत्यायाम् । प्रजातायाम् ॥ टाप् ॥

प्रसूति : । स्त्री॰ प्रसवे । उद्भवे ॥ तनये ॥ दुहितरि ॥ स्वायम्भुवमनो : पुत्र्याम् ॥ प्रसवनम् । प्रसूयते वा । षूङ् । क्तिन् ॥ कारणे । प्रकर्षेणसूतिर्जन्मयस्मात् ॥

प्रसूतिका । स्त्री॰ प्रसूतायाम् ॥ प्रासविष्ट । षूङ्॰ । गत्यर्थेतिक्त : । स्वार्थेकन् । सूतिकापुंसिकौतीत्वम् ॥

प्रसूतिजनम् । न॰ दु:खे । पीडामात्रे ॥ प्रसूतिजातम् । प्रसवन्याम् जातादिसिद्ध : ॥

प्रसूनम् । न॰ फले ॥ पुष्पे ॥ त्रि॰

जाते ॥ प्रसूयते । षुञ् चभिषवे । सुखोदीर्घश्चेतिनः ॥ यद्वा । प्रसूयते स्म । षूङ्० । क्त ॥ ओदितश्चेतिनिष्ठानत्वम् ॥ स्वादयओदितः ॥

प्रसूनेषु : । पुं० कन्दर्पे । कामे ॥ प्रसूनानि इषवोऽस्य ॥

प्रसृत : । पुं० । अर्धाञ्जलौ । निकुब्जपाणौ । पसरे० इ० भा० ॥ न० पलद्वये ॥ वि० सुप्रसारे । तते ॥ विनीते ॥ वेगिते ॥ निरस्ते ॥ प्रकृष्टं सृतमस्य ॥ प्रसरतिस्म । सृ० । गत्यर्थेतिक्तः ॥

प्रसृता । स्त्री० जङ्घायाम् ॥ प्रसरतिस्म० प्रसियते अनया । सृ० । गत्यर्थेति० कर्मणिवाक्तः ॥ प्रकृष्टं सृतं गमनमनयावा ॥

प्रसृति : । स्त्री० आकुञ्चितपाणौ ॥ अर्धाञ्जलौ । प्रसृति । प्रकृष्टासृतिरस्य ॥

प्रसृष्ट : । वि० प्रेषिते ॥ अनुज्ञाते ॥

प्रसेक: । पुं० सेचने ॥ च्युतौ ॥ क्षरणे ॥ प्रसेचनम् । षिच्० घञ् ॥

प्रसेदिका । स्त्री० क्षुद्रोपवने । बगीचौ० इ० भा० ॥

प्रसेदिवान् । वि० प्रसन्ने ॥ सदेर्भाषायांसदवसश्रुवइतिलिटः क्वसुरादेशः लिटिधातोरितिद्वित्वम् । अत एकहल्मध्यइत्वे त्वाभ्यासलोपौ । वस्वेकाजाद्घसामितीडागमः । उगित्वान्नुम् । सान्तेतिदीर्घः ॥

प्रसेव: । पुं० वीणाङ्गे ॥ स्यूते । वस्त्रचर्मादिनिर्मिते० थैला० इतिख्याते ॥ सूत्ररचितभाण्डविशेषे । थैकडा० इ० गौड़० भा० ॥ दृतौ ॥ प्रसीव्यतेस्म । षिवु० । अकर्त्तरिचेतिघञ् ॥

प्रसेवक : । पुं० वीणाप्रान्तवक्रकाष्ठे । दण्डाग्र : शब्दगाम्भीर्यार्थकाष्ठभाण्डे । ० वीणाश्रितालावुफले । ० शाकुभे ॥ सूत्रनिर्मितभाण्डे । धौतकटे । स्यूते । थैकला० इ० गौड भाषा० ॥ प्रसीव्यति । षिवुसेवने । क्वुन् ॥

प्रस्कण्व: । पुं० ऋषिविशेषे ॥ प्रस्कण्वहरिश्चन्द्रावृषीइतिसाधुः ॥

प्रस्कन्दनम् । न० विरेके ॥

प्रस्कन्नम् । वि० अपगते ॥ पतिते ॥ प्रकर्षेणस्कन्न : ॥

प्रस्तर : । पुं० पाषाणे । ग्रावणि । पत्थर० इ० भा० ॥ मणौ ॥ प्रस्तृणाति । स्तृञ्० । पचाद्यच् ॥ दर्भमुष्टौ ० इ० कर्ममीमांसका: ॥ पल्लवादिभिरचिततल्पे ॥ प्रस्तारे ॥

प्रस्तरिणी । स्त्री० गोलोमिकायाम् ॥

प्रस्तार : । पुं० पत्रभिरततल्पे ॥ उपवने ॥ अध्यायाम् ॥ छन्द : प्रभृ

तीव्रप्रभेदस्थापकेसङ्केतविशेषे ॥ प्रस्तीर्य्यते । स्तृ ञ॰ । प्रस्तोऽयज्ञे इतिघञ् । भावेवा ॥

प्रस्तारितः । त्रि॰ प्रकीर्णे । विक्षिप्ते ॥

प्रस्तार्य्यर्म । न॰ नेत्ररोगभेदे ॥ तस्यलक्षणम् । प्रस्तारिअर्म तनुस्तीर्णंश्यावंरक्तनिभंसितं । इतिमाधवकरः ॥ अपिच । समन्ततोविस्तृतः श्यावोरक्तोवामांससञ्चयः । सन्निपातेनदोषाणांप्रस्तार्य्यर्मतदुच्यते ॥ तस्यौषधं यथा । कतकस्यफलंशङ्खं त्र्यूषणंसैन्धवान्वितम् । फेनोरसाञ्जनंक्षौद्रं विडङ्गंसमनःशिला ॥ कुक्कुटाण्डकपालानिवर्त्तिरेषाव्यपोहति । तिमिरंपटलंकाचमर्मशुक्रं तथैवच ॥ कण्डूक्लेदार्बुदंहन्ति मलमाशुसुखावहेति ॥

प्रस्तावः । पुं॰ प्रसङ्गे ॥ प्रकरणे ॥ अवसरे ॥ प्रस्तवनम् । ष्टु ञ॰ । प्रेद्रुस्तुस्रुव इतिघञ् ॥ पाञ्चभक्तिकस्यसाम्नोद्वितीयभक्तौ ॥ प्रारब्धे ॥

प्रस्तावना । स्त्री॰ आरम्भे ॥ प्रतिपाद्यार्थस्यकथायाम् । सूत्रधारेणसहनटीविदूषकाणांपरस्परविचित्रभाषणे । तस्याःपर्य्यायः । नटीविदूषकोवापिपारिपार्श्विकएववा । सूत्रधारेणसहिताः संलापंयत्रकुर्वते ॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखंतत्तुविज्ञेयंनाम्नाप्रस्तावनापिसेतिसाहित्यदर्पणः ॥

प्रस्तरः । पुं॰ पल्लवादिरचितशय्यायाम् ॥

प्रस्तीतः । त्रि॰ } ध्वनिते ।
प्रस्तीमः । त्रि॰ } संहते ॥ स्त्यैष्ट्यैशब्दसङ्घातयोः । क्तः । आत्वेकृते॰ संयोगादेरित्यस्यासिद्धत्वात्॰ पूर्वं॰ स्त्यः प्रपूर्वस्येतिसम्प्रसारणे पूर्वरूपेहलःइतिदीर्घः । यत्वाद्यसत्त्वात्संस्त्वयोर्विरामान्नत्वम् । प्रस्त्योऽन्यतरस्यामिति॰मिश्च तस्यपाक्षिकोमः ॥

प्रस्तुतः । त्रि॰ उपस्थिते । प्रतिपन्ने । प्रकरणप्राप्ते । आरब्धे । प्रासङ्गिके । निष्पन्ने । प्रकर्षस्तुतियुक्ते ।

प्रस्तुतिः । स्त्री॰ प्रकृष्टस्तुतौ ।

प्रस्तृतः । त्रि॰ आस्तरिते ।

प्रस्तोता । पुं॰ ऋत्विग्विशेषे । प्रस्तौति । ष्टुञ्॰ । बहुलमन्यत्रापीतितृन् ॥

प्रस्तोभः । पुं॰ परिहासे । प्रोत्साहे ।

प्रस्तोभितः । त्रि॰ उपहसिते ।

प्रस्थः । पुं॰ न॰ चतुष्कुडवपरिमाणमानभेदे । चत्वारः कुडवाः प्रस्थः । आढकचतुर्थभागे । पर्वतैकदेशे । सानौ । उन्नितवस्तुनि । द्विशरावपरिमाणे । इ॰ वै॰ प॰ ।

वमनेचविरेकेचतथाशोणितमोचने । अर्द्धत्रयोदशपलंप्रस्थमाहुर्मनीषिणः ॥ अर्द्धत्रयोदशपलंसार्द्धषट्कम् ॥ विस्तारि ॥ यथा । दीर्घेपृष्ठे समानस्वमकुर्यान्मन्दिरं बुधः इति ॥ प्रकर्षेणतिष्ठति । ष्ठा० । आतश्चोपसर्गे सू० क : प्रतिष्ठन्तेऽस्मिन्नऽनेन वा । घञर्थेकोवा ॥ प्रकर्षस्थितिविशिष्टे ॥

प्रस्थपुष्पः । पुं० स्वल्पपत्र तुलस्याम् । मरुवके । मरुवा० इ० भा० ॥ प्रस्थेसानौपुष्पति । पुष्प० । अच् ॥

प्रस्थानम् । न० विजिगीषोः प्रयाणे । यात्रायाम् । प्रव्याणाम् । अभिनिर्याणे ॥ गमनमात्रे ॥ प्रपूर्वात्तिष्ठतेर्ल्युट् ॥

प्रस्थानविघ्नः । पुं० गमनव्याघाते ॥

प्रस्थापितः । त्रि० प्रतिशिष्टे । प्रेरिते । पठाया० इ० भा० ॥ प्रकर्षेणस्थापिते ॥

प्रस्थायी । त्रि० प्रस्थास्यतितस्मिन् ॥ ष्ठा० । प्रे स्थइति इनिर्णिन् ॥

प्रस्थिका । स्त्री० अम्बष्ठायाम् ॥

प्रस्थितः । त्रि० कृतप्रस्थाने ॥ प्रष्ठा० । क्त : । अतिस्यतीतीत्वम् । निर्गच्छति ॥

प्रस्नः । पुं० स्नानार्थघटादविशेषे ॥ प्रस्नान्त्यस्मिन् । स्ना० । घञर्थेकविधानस्थास्नापाव्यधिहनियुध्यर्थम् ॥

प्रस्फुटः । त्रि० प्रफुल्ले ॥ प्रकर्षेणस्फुटः ॥

प्रस्फुटितः । त्रि० विकसिते । प्रकर्षेणस्फुटितः ॥

प्रस्फुरितः । त्रि० प्रचलिते ॥ प्रोल्लसिते ॥

प्रस्फोटनम् । न० शूर्पे ॥ ताडने ॥ विकाशने ॥ प्रस्फोट्यतेऽनेन । स्फुट् । करणेल्युट् ॥ पचने ॥

प्रस्रवः । पुं० प्रवाहे ॥ स्रवणंस्रवः । स्रु गतौ ॥ ऋदोरप् । प्रकृष्टः स्रवः ॥ क्षीरादेर्द्रवद्रव्यस्यक्षरणे ॥

प्रस्रवणः । पुं० किष्किन्ध्यासमीपवर्तिनिगिरिविशेषे ॥ माल्यवत्पर्वते ॥ स्वेदे ॥ न० पर्वतस्थानभेदे स्रवज्जलस्थितौ० पर्वतमूलादधिःस्रवज्जलेवा । झर्ने । झर्ना० इ० भा० ॥ तज्जलगुणायथा । प्रस्रवणजलंस्वच्छंलघुमधुरंरोचनन्दीपनकृदितिराजनिर्घण्टः ॥ स्रवन्त्यापोऽस्मात् । स्रु० । भीमादयइ० क्रत्यल्युटआ० अपादानेल्युट् । प्रकर्षेणस्रवणे ।

प्रस्रावः । पुं० मूत्रे । पिसाब० इ० भा० ॥ प्रस्रूयते । स्रु प्रस्रावे । प्रेद्रुस्तुस्रुवइतिघञ् ॥

प्रस्रुतः । त्रि० क्षरति ॥

प्रस्वानः । पुं० उच्चैःशब्दे ॥ प्रकृष्टः स्वानः ॥

प्रस्वेदः । पुं० अतिशयघर्मे । तदी

प्रहृत :

म् ॥
प्रहारः । आघाते । चोट॰फट॰इभा॰ ॥ प्रहरणम् । हृञ् । घञ्॰ ॥ यान्ते भीतैत्यत्कवचे पतितेवालके तथा । प्रहरन्तिनवीरास्ते धर्मएषसनातनः ॥
प्रहारवल्ली-स्त्री॰ मांसरोहिण्याम् ॥
प्रहासः । पुं॰ अट्टहासे । शिवे ॥ नटे ॥ सोमतीर्थे ॥ अत्यर्थहासे । अनुचिताचरणप्रकाशनेनलज्जोत्पादने ॥ प्रहसनम् । हसी॰ । घञ्॰ ॥
प्रहासी । पुं॰ वासन्तिके । विदूषके । प्रीतदे । भाण्ड॰ इ॰ भा॰ ॥ प्रकृष्टहासयति॰ हसतिना । णिनि : ॥ प्रहासोऽस्यास्तिवा । इनि : ॥
प्रहिः । पुं॰ कूपे ॥ प्रह्रियते । प्रेहरति : कूपैवृतिः इनि॰ ॥
प्रहितम् । न॰ सूपे ॥ वि॰ प्रक्षिप्ते ॥ प्रेरिते ॥ प्रधीयतीस्म । डुधाञ्॰ क्त : । इधातेर्हि : ॥
प्रहीणः । त्रि॰ विगते । परित्यक्ते । । विहीने ॥ ओहाक्॰ । क्तः ॥ पुमास्वेतीत्वम् । ओदितश्चेतिनि ष्ठातस्यन : ॥
प्रहीणदोषः । त्रि॰ नितान्तनिर्मलस्वान्त ॥ प्रहीणा : दोषारागाद्योयस्य ॥
प्रहृत : । पु॰ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ प्रकर्षेणहूयते । हु॰ । क्तः

प्रहेलिका

प्रहृष्ट : । त्रि॰ सन्तुष्टे ॥ प्रकर्षेणहृष्टे ॥
प्रहेणकम् ) प्रहेलकम् ) न॰ पिष्टकविशेषे । वायने : यापनके । प्रतोपायने । वायना॰ इ॰ भा॰ ॥
प्रहेलिका । स्त्री॰ प्रवह्लिकायाम् । प्रश्नदूत्याम् । दुर्विज्ञानार्थप्रश्ने । पहेली॰ इ॰ भा॰ ॥ तल्लक्षणंयथा । व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात् । यत्रवाह्यान्तरावर्थौकथ्येते साप्रहेलिका ॥ साद्विधार्थीवशाब्दी चप्रख्याताप्रश्नशालिनी । आर्थीस्यादर्थविज्ञानात्शाब्दीशब्दविभागत : ॥ आर्थीयथा । तरुण्यालिङ्गित : कण्ठे नितम्बस्थलमाश्रित : । गुरुणांसन्निधानेपि : कूजतिमुहुर्मुहुः ॥ पानीयकुम्भइति ॥ शाब्दीयथा । सदारिमध्यापि नवैरियुक्तानितान्तरक्ताप्यसितैवनित्यम् । यथोक्तवादिन्यपिनैवदूतीकानाममान्तेतिनिवेदयाशु ॥ सारिका । इति ॥ एवम्॰ सोदर्यवर्ग्यनिरालम्बादौ सम्भाविनोनिर्गतभी : सभीम : । राजन्भवद्वाहुबलेनतुल्यो निगूढनामाचक्रिरं वीति ॥ अस्यार्थ : । चादौसोत् ॰ चकारसहित : । भीसोनिर्गतभी : मकार : । चवर्ग्यवर्गस्याभिवाचकेनपतिशब्देनसम्भावित : पश्चाद्युक्त : । भवद्वाहुबलेनतुल्यो

ह्रीर्घ : । तथाच॰उमापतिरितिक वेर्नामाचनिगूढम् । प्रहेलिकायाम् नेयार्थत्वदूरान्वयादिमदूषणमिति ज्ञेयम् ॥ प्रहेलयति॰अभिप्रायंसूच ति । छिलभावकरणे । क्व् न्‌शिल्पि संज्ञयोरितिक्वुन् ॥

प्रह्लन्न : । त्रि॰ हृष्टे । प्रमुदिते । प्री ते । प्रह्लादंतेस्म । ह्लादीसुखेच क्त : । रदाभ्यामितिनत्वम् । ह्लादो निष्ठायामितिह्रस्व : ॥

प्रह्लाद: । पुं॰ निनदे । शब्दे । हर्षे । प्रमो दे ॥ प्रह्लादे । परमभागवतेहिरण्य कशिपो : पुत्रे ॥ प्रकर्षेणाह्लादय- ति॰आनन्दयति॰परमसात्त्विकत्वे नसर्वान्॰इति प्रह्लादोदैत्यानांमध्ये भगव तोविभूति : ॥

प्रह्व : । त्रि॰ प्रवणे । नम्रे । नते । नम नशीले । अनुकूले । प्रह्वयति । ह्वेञ्स्पर्धायांशब्दे च । कविधौसर्व त्रप्रसारणिभ्योडइतिड : ॥ प्रहूयतेऽ सौ । ह्वेञ्॰ । सर्वनिघृष्वेतिसा धु : । आकारवकारयोर्लोप : । व चारिवो । आसक्ते । शिरसानम्रे ॥ भवति । यथा । तदाप्रह्वा:सर्वे कार्येत्रिस्थानश्यन्तुमेस्थिते॰इतिदेवीभा गवतम् ।

प्रह्वत्वम् । न॰ शिरसानतौ ।

प्रह्वीभूत: । त्रि॰ प्रणते । शिरसानम्रे । नमस्कृतवति ॥

प्रांशु : । त्रि॰ उच्चे । उन्नते । तुङ्गे ॥ प्रकृष्टाअंशवोऽस्य । जगत्त्रयंक्रम मार्णोभगवतिवामने ॥ तोयेतुपति तेहस्तेवामनोभूद्वामन : । सर्वदेव- मयंरूपंदर्शयामासवैविभु : ॥ भू: पादौ॰द्यौ : शिरश्चास्यचन्द्रादित्यौ चचक्षुषी ॥ इत्यादिविश्वरूपंदर्शयि त्वा॰तस्याधिक्रमतोभूमिं॰ चन्द्रादि त्यौस्तनान्तरे । नभ : प्रक्रममाणस्य नाभ्यान्तौसमवस्थितौ ॥ द्विगमाक्र ममाणस्यजानुमूलेव्यवस्थिताविति प्रांशुत्वंदर्शितं॰ म॰ र्व॰ ॥

प्राकरणिक : । त्रि॰ प्रकरणागते ॥

प्राकाषिक : । पुं॰ षिड्गे ॥ मायान- र्तके ॥ परदारोपजीविनि ॥ प्राका षति । कषहिंसायाम् । प्राड्विर्पाण कप इतिणिकन् ॥

प्राकाम्यम् । न॰ महादेवस्याष्टविधैश्व र्यान्तर्गतैश्वर्यविशेषे ॥ स्वच्छन्दानु मतौ । अवसर्गे । स्वाच्छन्द्यानुमन ने॰॥ प्राकाम्यमिच्छानभिघात : । यतोभूमावुन्मज्जति॰निमज्जतिच॰ यथोदके ॥ प्रकामस्यभाव: । ष्यञ् ॥

प्राकार : । पुं॰ वरणे ॥ साले । च- मोवर्यन्यचवा॰इष्टकादिरचितवेष्ट ने ॥ अस्यपरिमाणं यथा । ऊर्द्ध विंशतिहस्तेभ्योनैवकुर्याद्गृहंगृही । ऊर्द्धंविंशतिहस्तेभ्य : प्राकारंनश्च भयदम् ॥ तस्यद्वारमानम् । प्रस्थेह

स्तदयात्पूर्वंदीर्घंहस्तचयंतथा । गृहिणांशुभदंद्वारंप्राकारस्यगृहस्यच । नमध्यदेशेकर्त्तव्यं किञ्चिन्न्यूनाधिकेशुभमिति । व्र० पु० ॥ प्रक्रियते । डुकृञ्० । कर्मणिघञ् । उपसर्गस्यघञीतिदीर्घः ॥

प्राकृतः । त्रि० नीचे । पृथग्जनमतमेकार्थमस्य ॥ स्वाभाविके ॥ भाषासंस्कारदुष्टे । यातसमे । संस्कृतेतरभाषायाम् । संस्कृतप्रकृतिके । भाषाप्रभेदे ॥ प्रकृतौसंस्कृतेभवः ; ततआगतोवा । तत्रभवः ततआगतइत्यणाऽण् ॥ पुं० प्रलयविशेषे । प्रकृतौसंस्थितंव्यक्तमतीतप्रलयेतुयत् । तस्मात्प्राकृतसंज्ञोयमुच्यतेप्रतिसञ्चरः ॥ प्रकृत्यासिद्धः ॥ पुं० प्रकृतिमवलम्बभवति ॥ गुणविशेषे ॥ यथाशैवानामतेधर्मंचाष्टैश्वर्यादयोबुद्धिगुणाभावसंख्या विख्याताः तेचसांसिद्धिकाः वैनयिकाः प्राकृताश्चेतित्रिविधाभवन्ति । तत्रप्राकृतोदेहसंयोगेव्यक्तः स्वप्रादिबोधवत् । यः स्वप्नमदमूर्च्छाप्रवृत्तस्य० यथाप्रस्तुतसंस्कारवद्देहसंयोगएव व्यज्यतेनदेहापायेपिसम्प्राकृतोनामगुणोपि ज्ञेयः । इतिशैवाः ॥ त्रि० प्रकृतिसम्बन्धिनि ॥

प्राकृतज्वरः । पुं० ऋतुज्वरे ॥ यथा । वर्षाशरद्वसन्तेषुविष्वातुप्तुक्रमेणवातपित्तकफाजज्वराः । यथा । वर्षाशरद्वसन्तेषुवाताद्यैः प्राकृतःक्रमात् । इति ।

प्राकृतदोषः । पुं० वर्षाशरद्वसन्तेषुक्रमेणाकुपितेषुवातपित्तकफेषु ॥ यथा । चयप्रकोपप्रशमाःपित्तस्यप्रावृडादिषु । स्युः पुनः शिशिराद्येषुवायोर्घर्मादिषुविषु ॥ इतिरक्षितः ॥

प्राकृतप्रलयः । पुं० प्रकृतेर्लये ॥ य० निर्गुणस्यचनित्यस्य चाद्यन्तरहितस्यच । निमेषार्धंसहस्रं यत्प्रकृतेर्दण्डउच्यते ॥ षष्टिदण्डात्मकस्तस्या सत्वप्रकीर्तितः । मासस्त्रिंशद्दिवागत्वैर्वर्षैर्द्वादशमासकैः ॥ एवञ्चशतवर्षेचस्त्रीक्षण्यं प्रकृतेर्लयः ॥ प्रकृत्यांचप्रलीनायांतदैवप्राकृतोलयः । सर्वाः संहृत्यसाचैकामत्राविष्णोः प्रसुप्तया । कृष्णवक्षसिलीनाचमूलप्रकृतिरीश्वरी ॥ ब्र०व्र० ॥ अपिच वा० पु० ॥ प्रकृतौसंस्थितोयस्मात्सर्वस्मुभावसंक्षयः । चाहङ्कारमहत्तत्त्व गतोयत्प्राकृतोलयः ॥ प्रकृतौसंस्थितोव्यक्तमतीतप्रलयस्तुयत् । तस्मात्प्राकृतसंज्ञोयमुच्यतेप्रतिसञ्चरः ॥ कू० ॥

प्राकृतमानुषः । पुं० सामान्यमनुष्ये ॥ यथा । एकादशचमूनाथंभीमपादेनमास्पृश । पञ्चानामपियोभर्त्ता नासौप्राकृतमानुषः ॥

प्राक्तनमित्रम् । न० स्वदेशव्यवस्थितदेशावस्थितेराजनि ॥

प्राक्तनशत्रुः । पुं० एकविषयाभिनिवेशिनिनृपादौ ॥

प्राकृतिक : । पुं० बन्धविशेषे ॥ सच-प्रकृतावात्मज्ञानात्-येप्रकृतिमुपासतेतेषांभवति । योगाद्युपुराणे-प्रकृतिलयादिरित्युच्यते । पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकादूति ॥ त्रि०प्रकृतिविकारे । प्रकृतिसम्बन्धिनि ॥

प्राक्कूल : । त्रि० प्रागग्रे ॥

प्राक्तन : । त्रि० प्राग्भवे ॥ कालवाचिनोऽव्ययात्ट्युट्युलौ ॥

प्राक्तनकर्म्म । न० अदृष्टे । भाग्ये ॥ पुराकृतकार्ये ॥

प्राक्फल : । पुं० पनसे ॥

प्राक्फल्गुनी । स्त्री० पूर्वफल्गुन्याम् ॥

प्राक्फल्गुनीभव : । }
प्राक्फाल्गुन : । } पुं० बृहस्पतौ । जीवे । त्रि०
प्राक्फाल्गुनेय : । }

गिखण्डिजे ॥ तीक्ष्णतायाम् । प्रखरत्वे ॥

प्रागभाव : । पुं० कार्यस्योत्पत्तेः पूर्व्ववर्त्तिनि-अभावविशेषे । सच-अनादिः सान्तः । आकाशादावतिव्याप्तिवारणायसान्तइति, घटादावतिव्याप्तिवारणायानादिरिति ताकिका : ॥ विद्यमानस्येवघटस्यमृत्पिण्डेऽभाव : प्रागभाव : आविर्भावजनकइतिसत्कार्य्यवादिन : ॥



प्रागल्भ्यम् । न० प्रगल्भतायाम् । प्रतिभातिशये ॥ यथा । प्रागल्भ्यहीनस्यनरस्यविद्या-शस्त्रं यथाकापुरुषस्यहस्ते । मल्लिनाथव्याख्यातिशरीरेहवस्त्यारावृद्ध्यनीयाः ॥ इ० ॥ स्त्रीणामयत्नजेभावविशेषे ॥ य० । प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः । दीप्तिश्चा-यत्नजा-भावहावहेलास्त्रयोऽङ्गजाः ॥ इ० ॥ प्रगल्भस्यभाव : । ष्यञ् । प्रागल्भ्यपराभिभवसामर्थ्यमितिगीताभाष्यटीका ॥

प्रागुदीची । स्त्री० पूर्वोत्तरदिशि ॥

प्रागयनम् । न० अग्रतोनिस्सरणे ॥

प्राग्ज्योतिष : । पुं० कामरूपे । नरकासुरपुरे । अत्रैवस्थितोब्रह्माग्रहनक्षत्रसस्मर्ज्ज । ततः प्राक्ज्योतिषाख्येयं पुरीशक्रपुरीसमा ॥

प्राग्भद्रपदा । स्त्री० पूर्वभाद्रपदनक्षत्रे ॥

प्राग्भाग : । पुं० पर्व्वतादेरग्रभागे ॥

प्राग्भार : । पुं० प्राकृतिविशेषे ॥ पर्व्वताग्रभागे ॥ तटे ॥

प्राग्रहर : । त्रि० प्रधाने । श्रेष्ठे ॥ प्रकृष्टमग्रम् । प्राग्रं हरति । हरतेरनुद्यमनेच् ॥

प्राग्राटम् । न० चघनेदघनि ॥

प्राग्र : । वि० चरौ । श्रेष्ठे ॥ प्रकृ-ष्टोग्र : ॥

प्राग्वंश : । पुं० घृताधारगृहात्पूर्वं गृहे । पत्नीशालाख्ये । हवि : शालाया : पूर्वभागेयजमानादीनांस्थित्यर्थंगेहे ॥ प्राश्वति । अष्टु० । कत्विगादिनाक्षिन् । प्राग् ० वंश : गोमंस्थूणावाऽत्र ॥ यज्ञशालायाःपूर्वपश्चिमस्तम्भयोर्मध्येपूर्वपश्चिमायते पाठे ॥

प्राघात : । पुं० युद्धे ॥ प्रकृष्टआघातोयस्मिन् ॥

प्राघार: । पुं० घृतादिक्षरणे । श्चोतने॥ प्राघरणम् । घृक्षरणदीप्त्यो: । घञ् । उपसर्गस्यघञ्यमनुष्ये बहुलमितिदीर्घ : ॥

प्राघुण : । ) पुं० अति-
प्राघुणिक : । ) पुं० थी ॥
प्राघूर्ण : । पुं० ) पुं० अति-
प्राघूर्णिक : । ) थी ॥
प्राङ्क : । ) पुं० भषक-
प्राङ्ग : । ) पुं० वाद्ये ॥

प्राङ्गणम् । न० अङ्गने । चत्वरे । अजिरे । अंगना० आंगन० इ० भा० ॥ सुर्वविदस्तत्स्वदेशोयथा । अभद्रहंस्सुर्ववेदंप्राङ्गणस्तथैवचेति ॥ अभिव्यक्तिस्थाने । गृहाद्बहि:स्थले ॥ प्रकर्षणाद्यो ॥ प्रकृष्टमङ्गनम् ॥

प्राङ्न्याय : । पुं० व्यवहारान्तर्गतो व्यवहारविशेषे ॥ यत्राभियुक्तएवंब्रूयात् । अस्मिन्नर्थेऽनेनाहमभियुक्त: सन्नाचार्यव्यवहारमार्गेणपराजित इति । उक्ताश्चकात्यायनेन । आचारेणावसन्नोऽपिपुनर्लेखयतेयदि । सोऽभिधेयोजित : पूर्वंप्राङ्न्यायस्तुसउच्यते ॥ इ० ॥

प्राच् । अ० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्राचिदेशे० । चोदेशात् ० पूर्वदेशोवा । दिक्शब्देभ्य : सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिरिति० अस्ताति : । अस्ते-र्लुक् । एवंदिशि० कालेच ॥ इष्टकस्यानभवति० पूर्वस्मिन्देशेवसतीति । नैपदेश: । देशविशेषणमेतत् । इ० भाष्यम् ॥ योदिदेशेनविशेष्यमाणोदेशोभवतितत : पुरस्योनविशेषणादित्यर्थ : ॥ पूर्वस्मिन् ॥ अवान्तरे ॥ अर्थे ॥ पुरातीते ॥ अतीते ॥

प्राङ् । वि० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्रकर्षेणाञ्चति । सुप्युपपदेश्वर्कत्विगादिनाक्विन् । अनिदितामितिनलोप : । उगिदचामितिनुम् । संयोगान्तस्यलोप: । नुमोनस्य० क्विन्प्रत्ययस्येतिकुत्वेनङ्कार : ॥

प्राचिका । स्त्री० दंशे । डांस० इ० भा० ॥ पक्षिविशेषे ॥ प्राञ्चति । अष्टु० । कन् । इत्वम् ॥

प्राची । स्त्री० पूर्वस्यांदिशि ॥ पूज्य पूजकयोरर्थे ॥ यत्रैवमानुस्तुवि यच्च देतिप्राचीतितांविद्विदोवदन्ति । तथा पुरः पूजकपूज्ययोस्सदागमत्वा: प्रपद्यन्तितस्ये ॥ प्रायस्योऽचप्रशब्दः । प्रथमसन्ततिप्रोतिसूर्यम् । अस्० । ऋत्विगादिनाक्विन् । उगितश्चेतिङीप् ॥

प्राचीनम् । न० वृत्तौ । प्राचीरे ॥ त्रि० प्राग्भवे । पूर्वदिग्देशकालभवे ॥ प्राचि । प्राचीन । विभाषाऽवरदिक्स्त्रियामिति० खः ॥

प्राचीनपनसः । पुं० बिल्वे । गौड रीतक्याम् ॥

प्राचीनयोग्यः । पुं० वेदप्रसिद्धे सत्ययोग्याख्यमुनौ ॥ प्राचीनयोगस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् । बहुत्वे प्राचीनयोग्याः ॥

प्राचीनवंशः । पुं० कर्ममीमांसायांप्रसिद्धे । मण्डपविशेषे ; यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्राभवन्ति सप्राचीनवंशइत्युच्यते ॥

प्राचीनबर्हिः । पुं० इन्द्रे ॥ पृथोः प्रपौत्रे० प्रचेतसांपितरि० राजर्षिविशेषे ॥ प्राचीनाग्राः कुशास्तस्यपृथिव्यांविश्रुतामुने । प्राचीनबर्हिरभवत्ख्यातो भुविमहाबलः ॥

प्राचीनशालः । पुं० वेदप्रसिद्धे मुनिविशेषे । औपमन्यवे ॥

प्राचीना । स्त्री० वनतिक्तिकायाम् । पाठायाम् । शाकनादि० इं० गौ० मा० ॥ मातुलुङ्ग्याम् । रास्नायाम् ॥ प्राचिभवा । विभाषाऽवरदिक्स्त्रियामितिखः । टाप् ॥ प्राग्भवायाम् ॥

प्राचीनामलकम् । न० वारिबदरे । पानीयामलके ॥ प्राचीनामलकं दोषत्रयजिद्गरघातिच ॥

प्राचीनावीतम् । न० अपसव्ये । आचारेवामकरेणदक्षिणस्कन्धेसति० दक्षिणस्कन्धापितयज्ञसूत्रे । विपरीतधृतयज्ञोपवीते ॥ तथाहि । सव्यंबाहुंसमुद्धृत्यदक्षिणेतुधृतंद्विजाः । प्राचीनावीतमित्युक्तंपित्र्येकर्मणियोजयेत् ॥ प्राचीनंप्रदक्षिणमावीयतेस्म । आङ्० । व्येञ्संवरणे । बीगस्यादिषु श । क्तः ॥ यद्वा । प्राचीनंप्रदक्षिणमाञ्जलिम० आवीतमस्याअत्यर्थेतिक्तः ॥

प्राचीनावीती । पुं० अपसव्यवतिद्विजे ॥ वामपार्श्वादुद्धृतेदक्षिणस्कन्धस्थितेवामकक्षावलम्बे यज्ञसूत्रे वर्तते वाप्राचीनावीतीद्विजोभण्यते ॥ प्राचीनावीतमस्यास्ति । अतइनिठनाविती इनिः ॥

प्राचीपतिः । पुं० इन्द्रे ॥

प्राचीरम्। न० प्रान्ततोहतौ । ग्रामादे रन्तेकण्टकादिवेष्टने ॥ दुर्गार्थं नगरादे : प्रान्तभागेवेणुकण्टकवेचादि मयीवृत्तिर्विष्टनिर्कीतिकश्चिद्भरत : ॥ मृन्मय्यामपिवृतौप्राचीरसुपचारादिरिस्तांस्वादय : ॥ प्राचीयते । प्राङ्पूर्वश्चिञ्चयने । शुसिधिमीनांदीर्घश्चे तिक्रन्दीर्घौ ॥

प्राचेतस : । पुं० प्राचीनवर्हिराजपुत्रेषु ॥ सान्तनित्यबहुवचनान्तोऽयम् ॥

प्राचेतस : । पुं० वाल्मीकिमुनौ । रामायणप्रवक्तरि ॥ प्रचेतसोऽपत्यम् । अण् ॥

प्राच्य : । पुं० शरावत्यानद्यामर्यादाया : प्रागुदक्षिणदेशे ॥ देशान्तरे ॥ यथा । अङ्गावङ्गामद्गुरकान्तगिरिवहिर्गिराः । ततः प्रवङ्गामातङ्गामलयामलवर्त्तकाः ॥ सुह्मोत्तराः प्रविजयाभार्गवाङ्गेयमालवाः । प्राग्ज्योतिषाश्च पुण्ड्राश्च विदेहास्ताम्रलिप्तकाः ॥ शाल्वामागधगोनर्दाः प्राच्याजनपदाः स्मृताः ॥ इ० मत्स्यपुराणम् ॥ त्रि० पूर्वदेशीये ॥ प्राच्यांभव : । युप्रागिति यत् ॥

प्राट् । पुं० प्रश्नकर्त्तरि ॥

प्राजक : । पुं० सारथौ । सूते ॥

प्राजनम् । न० तोदने । वृषभादिप्रेरणदण्डे ॥ प्रजीयते नेन । अज० । ल्युट् । वायाविति वी न ॥

प्राजापत्य : । पुं० प्रयागे ॥ जैनराजभेदे । त्रिपृष्ठे ॥ प्रजापतेरपत्ये । देवे ॥ असुरे ॥ विवाहविशेषे । कार्ये । सहोभौचरतांधर्ममितिवाचानुभाष्यच । कन्याप्रदानमभ्यर्च्य प्राजापत्योविधि : स्मृत : ॥ पञ्चसंवत्सरे ॥ नीरोगाश्चनिराबाधामानवाविगतद्विष : । बहुक्षीरास्तथा : गावः प्राजापत्ये वरानने ॥ पु० ॥ दैवसर्गान्तरे ॥ प्रजापतेरपत्यम् ० प्रजापतिर्देवताऽस्य ० प्रजापतेरिदमिति वा अर्थे ० दित्यदित्यादित्यपत्युत्तरपदाण्ण्य : ॥ न० तपसि ॥ पुं० न० द्वादशाहसाध्ये व्रतविशेषे ॥ यथा० त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् । त्र्यहंपरञ्चनाश्नीयात्प्राजापत्यंचरन्द्विज: ॥ अन्नग्रासपरिमाणमेवोयामास्पराशर: । सायंद्वाविंशतिर्ग्रासा : प्रात: षड्विंशतिस्तथा । अयाचितेचतुर्विंश : परंचानशनंस्मृतम् । कुक्कुटाण्डप्रमाणस्स्याद्यावान्वाप्रविशेन्मुखम् । एतंग्रासंविजानीयाच्छुद्धयर्थेकायशोधनम् ॥ हविष्यञ्चान्नमश्नीयाद्यथारात्रौतथादिवा । त्रींस्त्रीण्यहानिशास्त्रीयान्ग्रासान्षट्स्याकृतान्यथा ॥ अयाचितं

तथैवाद्यादुपवाससल्यईभवेदिति ॥ पुं॰ रोहिणीनक्षत्रे । त्रि॰ प्रजापतिसम्बन्धिनि ॥

प्राजापत्या । स्त्री॰ यजुर्वेदीयोपाख्यानप्रसिद्धायाम् । संन्यासग्रहणपूर्वकर्त्तव्यप्रजापतिदेवताकसर्वस्वदक्षिणायामिष्टौ ॥ यथा । प्राजापत्यांनिरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन्समारोप्यब्राह्मणः प्रव्रजेद्गृहादिति ॥

प्राजिता । पुं॰ सारथौ । यन्तरि । सूते । प्राजति । अज॰ । तृच् । अजेर्भावितव्यर्थीवा । वलादावार्द्धधातुकेवेष्यतइतिवीभावेन ॥

प्राज्ञ : । पुं॰ कश्चिदेवस्यश्च हैमात रि । परमात्मनि ॥ विदितवेदस्तुपकरणार्थे विवेकिनि ॥ प्रज्ञाप विनाशिस्वरूपानुभवरूपायस्यसप्रज्ञः । प्रज्ञएवप्राज्ञः । प्रज्ञाद्यण् । मध्विः विशेषे । राजशुकि । शतपत्रे । रा-जसूया॰ द्र॰ भा॰ । कारणशरीराऽभिमानिनिजीवे । मलिनसत्त्वप्रधानाविद्योपाधिकेजीवे । भूतभविष्यतिचविषयेज्ञातृत्वंतथासर्वस्मिन्नपि वर्त्तमानेविषयेज्ञातृत्वमस्यैवेतिमध्येकालानातीति॰प्रज्ञः । सएवप्राज्ञः ॥ सुषुप्तोपिदिषभूतपूर्वगत्याप्राज्ञउच्यते ॥ प्राज्ञंमन्य : त्रि॰ पण्डिते ॥ पण्डितेषगुणाःसर्वेमूर्खे दोषाश्चकेवलम् । तस्मान्मूर्खसहस्रेषुप्राज्ञएकोविशिष्यतइतिविष्णुशर्मा ॥ दक्षे ॥

प्राज्ञता । स्त्री॰ विदत्त्वे । यथा । पदं पदार्थमेकंवाद्याहरेत्सुभाषितम् । मूर्खोपिप्राज्ञतांयातिमद्भिः सागरोयथा इति ॥

प्राज्ञमानी । त्रि॰ पण्डिताभिमानिनि ॥

प्राज्ञा । स्त्री॰ बुद्धिमत्याम् । धीमत्याम् । प्रज्ञाऽस्त्यस्याः । प्रज्ञाश्रद्धार्चाभ्योणः । टाप् ॥

प्राज्ञी । स्त्री॰ स्वयंज्ञात्र्याम् । प्राज्ञायाम् । प्रजानाति । ज्ञा॰ पातघोपसर्गेकः । प्र॰ अण् ॥

प्राज्य: । त्रि॰ प्रचुरे । प्रभूते । अदभ्रे । प्रवीयते । अज॰ ण्यत् । वा॰ वीभावेन । आज्यसम्पन्ने ॥ प्रभूतमाज्यंयस्य : ॥

प्राञ्जल:। त्रि॰ सरले ॥

प्राञ्जलि : । त्रि॰ बद्धाञ्जलौ । पुटतम्पुटकरयुक्ते । अञ्जिनद्धे । प्रकृष्टेन्क्रियतोऽञ्जलिर्येन॰यस्य वा । प्रगत : अञ्जलिर्येनवा ॥

प्राड्विवाक:। पुं॰ अक्षदर्शके । विचारार्थेराजनियुक्तपुरुषे । व्यवहारद्रष्टरि । ऋणदानादीन्यष्टादशविवादपदानिव्यवहारा : तेषांनिर्णेतरि । ज-न॰ इति भाषायाम् । अस्त्वर्न । अक्षकीपायाम् । क्रियुगचिमस्ति

श्रिस् द्रु क्रटप्रुच्छां दीर्घोऽसम्प्रसार णश्चे त्युणादिसूत्रेण क्विप्दीर्घौ॰सम्प्र सारणाभावश्च । विवचनम् । घञ् । प्राट्चविवाकश्चप्राड्विवाकौ॰ प्रश्न विवेकावस्थस्त : । घर्थेन्यायच् । प्रश्नविचारयो : कुशलइत्यर्थ : ॥ यद्वा । पृच्छतिवादिप्रातिवादिवा क्यम्प्राट् । च्छ्वो : शूडनुनासिकेचे ति॰ शादेश: । विविच्यवक्तीतिवि वाक : । घञ् । प्राट्चासौविवा कश्चेति॰ प्राड्विवाक : ॥ यथा- ह : । विवादानुगतंपृष्ट्वापूर्ववा क्यप्रयत्नत : । विचारयतियेना सौप्राड्विवाकस्तत : स्मृत : इति ॥ अपिच । अर्थिप्रत्यर्थिनौपृच्छती तिप्राट् । तयोर्वचनंविकद्धाविरुद्ध स्वसभ्यै : संहविविनक्तिविवेचयति वेतिविवाक : । प्राट्चासौविवाक श्चेतिप्राड्विवाक: ॥ उक्तंच । विवा दानुगतंपृष्ट्वा ससभ्यस्तत्प्रयत्नत : । विचारयतियेनासौप्राड्विवाकस्त त : स्मृत : ॥ इति ॥

प्राण : । पुं॰ घ्राणलनवर्ति॰नासाग्र स्थानवर्तिनिवायौ ॥ नासाग्रे प्रत्य क्षमुपलभ्यमानत्वात् । प्राणनिती तिव्युत्पत्तेश्च ॥ तस्यकार्यंबहिर्गम नम् । तस्यरूपम्॰इन्द्रनीलप्रतीका शंप्राणरूपंप्रकीर्तितम् । तस्यस्थाना नि॰ चास्यनासिकयोर्मध्येवर्ततेनाभि मध्यगे । प्राणालयइतिप्राहु : पादा ङ्गुष्ठे पिकेचनेतियोगार्णव : ॥ शरी- रान्त : सञ्चारिणिवायौ ॥ सचैको प्युपाधिभेदात्प्राणापानादिकांसं- ज्ञांलभते ॥ इन्द्रियेषु ॥ प्राज्ञे॰वी आत्मनि ॥ समष्टिलिङ्गशरीराभिना निचैतन्ये॰ क्रियाशक्तिप्रधाने॰ हिरण्यगर्भे ॥ हंसरथे । ब्रह्मणि ॥ हन्मारुते ॥ बोले । गन्धरसे ॥ का व्यजीवे ॥ बले । धातु : पुंवि ॥ प्रा णितिअनेनवा । अच्॰ घञ्वा । चनितेरितिणत्वम् ॥ प्रसरणेन॰भ क्षितिवा ॥ यस्मिन्सतिजीवनम्॰ यदपगमेचमनेभवति॰ सपवायुविशे षोलोकेरूढ : प्राणइति ॥ निश्वासो च्छ्वासेवासैस्तुप्राणोजीवसमाश्रित : । प्रयाणंकुरुतेयस्मात् तस्मात्प्राण : प्रकीर्तित : ॥ त्रि॰ पूरिते ॥

प्राणा : । पुं॰ भूम्नि॰ असुषु ॥ अस व : प्राणाइति॰असुप्राणशब्दाभ्यां बहुवचनाभ्यांपत्नुप्राणादयउच्य न्ते पुनरेकैकाभिधानेबहुवचनम् । अतएव॰प्राणोऽपानइत्यसाम्॰हृदि प्राणोगुदेपानइत्यादिवक्ष्यते ॥ अ स्योत्पत्तिर्यथा । मिलितैस्तुप्राणो भवतिपञ्चधेति । मिलितै : पञ्चभू तानांरजोंशै : प्राणापानादिपञ्च सत्त्वात्मक : प्राणोभवतीत्यर्थ : ॥ शरीरस्थपञ्चप्राणायथा । प्राणोपान:

समानश्चोदानव्यानौचवायव : । श रीरस्थाइमे॰पञ्चमर : । इमेप्राणा दयपञ्चवायव: शरीरेतिष्ठन्तिवेचनि यतस्थानस्था: । यदाह॰ । हृदिप्राणो गुदेपान : समानोनाभिसंस्थित : । उदान : कण्ठदेशेचव्यान : सर्व- शरीरगइति ॥ तेषांव्यापाराश्च- यथा । अन्नप्रवेशनं॰मूत्राद्युत्सर्गो ऽन्नविपाचनम् । भाषणादि॰निमे षादि॰तद्व्यापारा : क्रमादमो ॥ इति ॥

प्राणक : । पुं॰ सत्त्वजातीये । प्राणि मात्रे ॥ जीवकद्रुमे । चोले । अ- न्नविशेषे ॥ बोले ॥

प्राणथ: । पुं॰ वायौ ॥ तीर्थे ॥ प्रजा पतौ ॥ बलवति ॥ प्राणिति, अन॰ । शीङ्शपिरुगमियञ्चिजीविप्राणि भ्योऽथ : ॥

प्राणद : । पुं॰ जीवकद्रुमे ॥ भगवति ॥ न॰ जले ॥ रक्ते ॥ प्राणान्ददा ति॰चेष्टयति । प्राणान्कालात्मना द्यति॰खण्डयतिवा । प्राणान्दापय ति॰शोधयतिवा । प्राणान्दातिलु- नातिवा । आतइतिक : ॥

प्राणदा । स्त्री॰ हरीतक्याम् ॥ ऋद्धि- वृद्धि ॥ टाप् ॥

प्राणधारणा । स्त्री॰ असूनांधृत्यर्थमा हारे ॥ यथा । अयं प्रदायसुतेभ्य : सीतायवरवर्णिनी । तयोरप्यददा दृभाचोर्मधुमांसस्वसम्भृतम् ॥ तयो स्तृप्तिमथोत्पाद्यवीरयो : कृतशौच यो : । विधिवज्ज्ञानकोपश्चाञ्चक्रे साप्राणधारणामित्यार्षेरामायणे॰ अयोध्याकाण्डेदृष्टम् ॥

प्राणनम् । न॰ जीवने ॥ पुं॰ गले ॥ त्रि॰ आप्यायनकरे ॥

प्राणनाथ: । पुं॰ पत्यौ ॥ यमे । त्रि॰ प्राणाधिपे ॥ प्राणानांनाथ: ॥

प्राणन्त : । पुं॰ रसाञ्जने ॥ वायौ ॥ प्राणात् । अन॰ । रुचिनन्दिजीवि प्राणिभ्य : पिद्दाशिषीतिझच् ॥

प्राणन्ती ॥ स्त्री॰ हिक्कायाम् ॥ क्षुति । छिक्कायाम् ॥ पित्त्वान्ङीप् ॥

प्राणपण : । पुं॰ अतिप्रयासे ॥ प्राण: पणोयस्मिन् ॥

प्राणप्रतिष्ठा । स्त्री॰ प्रतिमायांजीवन्या से ॥ प्राणानांप्रतिष्ठा ॥

प्राणप्रद : । त्रि॰ प्राणदातरि ॥

प्राणप्रदा । स्त्री॰ ऋद्धिनामस्त्रौषधौ ॥ प्राणंप्रददाति । डुदाञ्॰ । क : ॥

प्राणभास्वान् । पुं॰ अब्धौ । समुद्रे ॥

प्राणभृत् । पुं॰ जीवे ॥ प्राणान्बिभ र्ति । डुभृञ्॰ । क्विप । तुक् ॥

प्राणमय : । पुं॰ द्वितीयकोषे । कर्मे न्द्रियै : सहितेप्राणादिपञ्चके : क्रि याशक्तिमतिकार्यरूपे ॥ अस्यक्रिया त्मकत्वेनरजोगुणकार्यत्वम् ॥ स्थूल- समष्टिकारणीभूतेऽपंचीकृतपंचमभा

भूततत्कार्यात्मकेहिरण्यगर्भेसूत्रेऽमूर्तिरात्मौसूक्ष्मसमष्टौ । पूर्वोदिष्टे वर्त्तयच्छन्नघाणायाय : प्रवर्त्तक : । वायु : प्राणमयोनासावात्माचैतन्यवर्जनात् ॥

प्राणरोध : । पुं० नरकान्तरे ॥

प्राणलय : । पुं० मरणे ॥ परमात्मनि । प्राणानांलये ॥ प्राणलयेजाते०सद्रूपविकल्पाद्यपिमनसोनायासेन क्षीणीभवत्येव० प्राणमनसोर्दुग्धाम्बुवन्मिलितत्वात् । तदुक्तम् । दुग्धाम्बुवत्सम्मिलितावुभौतौतुल्यक्रियौमानसमारुतौतौ । तयैकनाशादपरस्यनाशस्तत्रैकवृत्त्यापर प्रवृत्तिरिति ॥ प्राणलयेसद्रूपविकल्पलयेचसमाधिर्भवति ॥

प्राणवान् । पुं० जीवे ॥ प्राणोस्यास्त्यस्मिन्वा । मतुप् ॥

प्राणवित् । पुं० हैरण्यगर्भादिषु ॥

प्राणसंयम : । पुं० प्राणायामे ॥

प्राणसमा । स्त्री० पत्न्याम् ॥

प्राणस्पन्दनिरोध : । पुं० चित्तशान्त्युपाये ॥ यस्तुवासनानामतिप्राबल्यात्०तास्त्यक्तुंनशक्नोति०तस्यप्राणस्पन्दनिरोधएवोपाय : । प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्०तयोर्निरोधेचित्तप्रशान्तिरुपपद्यते ॥

प्राणहार : । पुं० ) वत्स नाभे ॥ त्रि०

प्राणहारकम् । न० ) असुनाशके ॥

प्राणा । स्त्री० विहगो विशेषे ॥ साचारूपगरुडयो : प्रसूः ॥

प्राणाचार्य्य : । पुं० वैद्ये ॥

प्राणात्यय : । पुं० आपत्काले ॥ प्राणानामत्ययोयस्मिन्स : ॥

प्राणादिपञ्चकम् । न० प्राणापानव्यानोदानसमानात्मके ॥

प्राणाधिनाथ : । पुं० पत्यौ ॥ प्राणानामधिनाथ : ॥

प्राणाधिप : । पुं० प्रिये । पत्यौ ॥

प्राणान्त : । पुं० प्राणावसाने ॥

प्राणापानौ । पुं० अश्विनीकुमारयो: ॥

प्राणायाम : । पुं० प्राणसंयमे । रेचकपूरककुम्भकलक्षणेप्राणनियमोपाये ॥ तथाचयोगसूत्रम् । तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदलक्षण: प्राणायामइति । तस्मिन्नासनस्थैर्ये सतीत्यर्थ : । प्राण : प्रागुदितोवायुरायामोस्यप्रखेदनम् । निरोधा दिसंरोधनत्वथ : क्रतुदोपनुत् ॥ यवीयान्मध्यमोज्येष्ठ : ससालैर्दशादिभि: ॥ उक्तञ्च । तालमात्र-प्रकोर्त्तित : प्राणायामस्तुकन्यस: । मध्यश्चतुर्भिर्विंशत्याश्चेष्टस्तद्द्विगुणो भवेत् ॥ सोपिध्यानतपोपेत : सगर्भोऽन्यस्तदुज्झित : । यथासगर्भ स्थैर्यायमनसोन तथेतर : ॥अपिच । सव्याहृतिंसप्रणवांगायत्रीं शिरसासह । त्रि : पठेदायतप्राण.प्राण

यामःसउच्यते ॥ सर्वपापहरं प्रोक्तं प्राणायामंद्विजन्मनाम् । ततस्त्व स्यधिकंनास्तितपः परमपावनम् ॥ यच्चविष्णोर्देवीगीतायाम् । इड याकर्षयेद्वायुंबाह्यं षोडशमात्रया । धारयेत्पूरितंयोगीचतुःषष्ट्यातु-मात्रया ॥ सुषुम्णामध्यगंसम्यग्द्वा त्रिंशन्मात्रयाशनैः । नाड्यापिंगल यावैवरेचयेद्योगवित्तमः ॥ प्राणा-याममिमंप्राहुर्योगशास्त्रविशारदाः । भूयोभूयः क्रमात्तस्यवाह्यमेवंस-माचरेत् ॥ मात्रावृद्धिक्रमेणैवसम्य-क्द्वादशषोडश । जपध्यानादिभिः सार्धं सगर्भं तं विदुर्बुधाः ॥ तदपे तं विगर्भं चप्राणायामं परेविदुः । क्रमादभ्यसतः पुंसोदेहेस्वेदोद्गमो ऽधमः । मध्यमः कम्पसंयुक्तोभू-मित्यागः परोमतः । उत्तमस्यगु-णावाप्तिर्यावच्छीलनमिष्यतइति ॥ अध्यात्मविदस्त्वाहुः । चित्तादिस र्वभावेषुब्रह्मत्वेनैवभावनात् । नि-रोधः सर्ववृत्तीनांप्राणायामः स उच्यते ॥ इति ॥ प्राणस्यवायुविशेष स्यायामोरोधः ॥

प्राणायामयज्ञः । पुं० अपानेजुह्वति-प्राणं प्राणेऽपानंतथापरे । प्राणापा नगतीरुद्ध्वाप्राणायामपरायणाः ॥ अपरेनियताहाराःप्राणान्प्राणेषु जुह्वतीतिभगवदुक्ते ॥

प्राणिद्यूतम् । न० समाह्वये । मषपू-र्वानादिप्राणिसंयुगे ॥ प्राणिभिर्मेष कुक्कुटादिभिः कृतंद्यूतं ॥

प्राणी । पुं० प्राणविशिष्टे मनुष्यादौ ॥ चेतने । जन्मनि । जन्तौ । शरी-रिणि ॥ यद्वैनाशिकमते० यस्सगु णायथा । बुद्ध्यादिषट्कंसङ्ख्या दिपञ्चकं भावनातथा । धर्माधर्मौ-गुणाएतेह्यात्मनः स्युश्चतुर्दशेति ॥ चयमिन्द्रियाद्यधिष्ठाता०पुनरपा प्रयः । ज्ञानसुखादियोगतोमान सप्रत्यक्षविषयः । परदेहादौप्रवृ-त्त्यादिनानुमेयः । अहमित्याकार-प्रत्ययाश्रयः । मनोमात्रस्यगोचरः । विभुः परममहत्त्ववान् ॥ इति-भाषापरिच्छेदः ॥ प्राणाः सन्त्य-स्य । वरादृनिठनामिति० इनिः ॥

प्राणिमाता । स्त्री० गर्भदात्रीक्षुपे ।

प्राणिहितः । त्रि० लोकहितकारि-णि ॥

प्राणिहिता । स्त्री० पादुकायाम् । मन दिया०कृ०भा० ॥

प्राणीत्यम् । न० ऋणे ॥

प्राणेशः । पुं० पत्यौ ॥

प्राणेशा । स्त्री० भार्यायाम् ॥

प्राणसङ्गोद्भवः । पुं० गन्धविशेषे ॥ यथा । मृगनाभिसमुद्भूतस्सत्कोपो द्भवस्तथा । गन्धः प्राणसृजः प्रो क्तोमोदइःसर्ववासिनामिति ॥

प्राधान्यम् । न० प्रधानतायाम् ॥ च गुणीभावे ॥ भावेष्यञ् ॥

प्राधीत : । त्रि० प्रकृष्टाध्ययने ॥

प्राध्ययनम् । न० प्रकृष्टाध्ययने ॥

प्राध्वम् । त्रि० दूरपथे ॥ प्रह्वे । प्रणते ॥ बन्धने ॥ प्राध्वनति । ध्वनशब्दे । डम्प्रत्यय : ॥

प्राध्वङ्कृत्य । अ० बन्धनेनानुकूलङ्कृत्वेत्यर्थे ॥ प्राध्वन्बन्धने० इतिगतिसंज्ञा । कुगतीतिसमास : ॥

प्राध्वम् । अ० नर्मणि ॥ अनुकूले ॥ प्राध्वनति । ध्वन० डम् ॥

प्रान्त. । पुं० चरमे । अन्तभागे । शेषसीमायाम् । उपान्ते ॥ यथा । प्रान्तच्छायाविनिर्मुक्तानमनोज्ञाजलाशया: । तस्माद्धीकृतप्रान्तप्याराभानुर्विनिवेशयेदिति ॥

प्रान्तर : । अ० प्रान्तभागे ॥

प्रान्तरम् । न० ग्रामस्यदूरे० वृक्षलतादिशून्ये वर्त्मनि । दूरशून्यपथे ॥ विपिने । अरण्ये ॥ कोटरे ॥ प्रकृष्टमन्तरम्० व्यवधानमथवा शोवाश्च । प्रादिभ्यइतिबहुव्रीहि : ।

प्रान्तशून्यम् । न० छायादिरहिते० दूरशून्येऽध्वनि ॥

प्रान्त्य : । त्रि० प्रान्तभवे ॥

प्रापणम् । न० नयने । प्राप्तौ ॥ प्रकर्षेणव्यापने ॥

प्रापणिक : । पुं० पण्यविक्रयिणि । प्रापणाख्यते । पण्य० । आकृतिगणात्वादिति ठक्० ॥ प्रापणोव्यवहार: प्रयोजनमस्यवा । तदस्यप्रयोजनमितिठञ् ॥

प्रापणीय : । त्रि० फलमात्रे ॥ प्राप्ये ॥ प्राप्यतेयत् । प्रपूर्वापधातो : कर्मण्यनीयर् ॥

प्रापय्य । अ० गमयित्वेत्यर्थे ॥

प्रापित : । त्रि० निवेशिते ॥ नीते प्रकर्षेणप्रापित : ॥

प्रापिपयिषु : । त्रि० प्रापयितुमिच्छौ ॥ प्रापयते : सन्नन्तादुप्रत्यय. ॥

प्राप्य : । पुं० गन्धर्वगणविशेषे । यथा प्राप्यजनवत्सुवान्दिव्यान् वैगायनोत्सुकान् ॥ चतुर्दश देवगन्धर्वा : प्रापेया : परिकीर्तिता : ॥

प्राप्त : । त्रि० स्थापिते । प्रतिष्ठिते ॥ विन्ने । लब्धे ॥ यथा । प्राप्तकर्मविनाऽनेकोविधातुशक्यते गुण : । अप्राप्तेतुविधीयन्तेवह्वोऽप्येकयत्नत इतिन्याय : ॥ समस्यसे ॥ प्राप्यतेस्म ॥ आप्लृ० । गत्यर्थाकर्मकेतिक्त : ॥ कर्तरिक्त इति स्वामी ॥

प्राप्तपञ्चत्वम् । त्रि० मृते ॥ प्राप्तंपञ्चत्वमृयेन ॥

प्राप्तपात : । पुं० चडांशी : पारिपा

श्विँकी ॥

प्राप्तभावः । पुं० चारोचे ॥ त्रि० लब्धसत्पादौ ॥ मनोहरे ॥ पण्डिते ॥

प्राप्तरूपः । त्रि० प्राज्ञे ॥ रम्ये ॥ प्राप्तोरूपम् । प्राप्तापन्ने चद्वितीययेतिसमासः ॥ प्राप्तंरूपंयेन वा ॥

प्राप्तव्यः । त्रि० प्राप्ये ॥ प्राप्यतेयत् । प्रपूर्वापधातोः कर्मणितव्यप्रत्ययः ॥

प्राप्तिः । स्त्री० महोदये । धनादिवृद्धौ ॥ अधिगमे ॥ लाभे ॥ भूम्यन्तरे । अणिमाद्यष्टैश्वर्यान्तर्गतैश्वर्यविशेषे ॥ यतोऽङ्गुल्यग्रस्पृशतिचन्द्रमसम् ॥ प्राप्तणम् आप्लृ० । क्तिन्नाघादिभ्यः ॥ स न्नाऐकादशी ॥

प्राप्ता । त्रि० प्राप्तवति ॥ प्राप्नोति । तृच् ॥

प्राप्यः । त्रि० गम्ये । समासाद्ये । प्राप्तव्ये । आप्तुंयोग्ये ॥ प्राप्यते । आप्लृ० । ऋहलोर्ण्यत् ॥

प्रायोऽधिकः । पुं० उपःकाले ॥ प्रायोधिकोमिपाठः शब्दमालायाम् ॥

प्राभञ्जनम् । न० स्वातिनक्षत्रे ॥ त्रि० प्रभञ्जनसम्बन्धिनि ॥

प्राभवम् । न० श्रेष्ठत्वे ॥

प्राभवत्यम् । न० प्रभवतोभावे । ष्यञ् ॥

प्राभाकरः । पुं० आत्मनोचिद्रूपत्वादिनि० मीमांसकविशेषे ॥ प्राभाकरास्तार्किकाश्चाहुरस्याचिदात्मताम् । आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः ॥

प्राभूतिकः । त्रि० प्रभूतवादिनि ॥ प्रभूतमाह । आर्हीयप्रभूतादिभ्य इतिठक् ॥

प्राभृतम् । न० उपढौकने । प्रदेशने । देवताभ्योमित्रादिभ्यश्चदीयमाने । भेट० । इ० भा० ॥ प्राभ्रियतेस्म । भृञ्भरणे० डुभृञ्धारणपोषणयोर्वा । क्तः ॥

प्राभृतवाम् । न० कौशलिकायाम् । प्राभृते ॥

प्रामाणिकः । त्रि० प्रमाणलब्धे ॥ प्रमाणादागतः । ठक् ॥

प्रामाण्यम् । न० प्रमाणत्वे ॥ ज्ञानस्य अबाधितार्थविषयत्वम् प्रामाण्यमितिव्याख्यासारः ॥ संवादाधीनंप्रामाण्यमितितार्किकाः ॥ स्वतःप्रामाण्यमितिमीमांसकाः ॥ प्रमाणस्यभावः । ष्यञ् ॥

प्रामाण्यवादः । पुं० प्रमाकरणताकथने ॥ तत्तत्तत्प्रकारकत्वरूपप्रमात्वकथने । चिन्तामणिन्यायग्रन्थविशेषे ॥

प्रामादिकम् । त्रि० प्रमादादागते ॥
प्रामाद्यः । पुं० वासके । अटरूषे ॥
प्रामीत्यम् । न० ऋणे ॥ मृतत्वे ॥
प्रायः । पुं० सन्न्यासवति० मरणायान
शने ॥ प्रायोपविष्टं गङ्गायामिति
लक्ष्यम् ॥ बाहुल्ये ॥ यथा ॥ "प्रायेण
कृतकृत्यत्वान्मृत्योरुद्विजसे जनः"
॥ इति ॥ मृत्यौ । मरणे ॥ तुल्ये ॥
वयसि ॥ प्रायशः । अव्य० । वश् ॥
प्रकृष्टमयनम् । इण् ० । एरच्वा ॥
प्रायत्यम् । न० पवित्रतायाम् ॥ प्रयत
स्वभावः । ष्यञ् ॥
प्रायश्चित्तम् । न० शुद्धिसम्पादककर्म
विशेषे । अशुद्धत्वनिरसनेन शुद्धेरा
पादके० पापक्षयसाधनेकर्मणि ॥
प्रायः पापं विनिर्दिष्टं चित्तं तस्य वि
शोधनमिति स्मृतेर्व्युत्पत्तिः ॥ अ-
ङ्गिराश्चाङ्गिराः । प्रायो नाम तपः
प्रोक्तं चित्तं निश्चय उच्यते । तपोनि-
श्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम् ॥
निश्चयसंयुक्तं पापक्षयसाधनत्वेन नि
श्चितमित्यर्थः ॥ प्रायश्चित्तम् । पार
स्करादित्वात् साधु ॥ प्रायश्चित्तक-
र्माणि तु० पापक्षयसाधनानि चान्द्रा
यणादीनि । विहिताऽकरणप्रतिषिद्ध
सेवादिरूपनिमित्तविशेषानुयायीनि०
प्रायश्चित्तकर्माणि । पापक्षयमात्रोद्दे
शेन विहितानीति वा ॥ पापानामनु
रूपाणि प्रायश्चित्तानि कुर्यात् । यथा
तथैव संस्थात्यग्रोक्तानि परमर्षिभिः
॥ पापेषु गुरुषु गुरुणि स्वल्पान्यल्पे च
तद्विदः ॥ प्रायश्चित्तानि मैत्रेय जगुः
स्वायम्भुवादयः ॥ प्रायश्चित्तान्यशे
षाणि तपः कर्मात्मकानि वै । या-
नि तेषामशेषाणां कृष्णानुस्मरणं पर
मिति पराशरः ॥ प्रायश्चित्तमनुपापा
नां चीर्णदीनामसंस्थितिरिति भागव
तेव्यासः ॥
प्रायश्चित्तीयः । त्रि० प्रायश्चित्तयो
ग्ये । प्रायश्चित्तसाधनत्वेन भवः ।
। प्रायश्चित्तसाध्यपापशोधनाय श्रुति
स्मृतिविहितायकर्मणि चितो वा ।
छवाच्छः ॥
प्रायः । अ० भूम्नि । बाहुल्यार्थे ॥
प्रायनम् । अव्य० । अमुन् ॥
प्रायिकः । त्रि० प्रायोभवे ॥
प्रायुवेशी । पुं० घोटके ॥
प्रायोज्यम् । त्रि० प्रयोजनार्हे ॥
यथा । प्रायोज्यं न विभज्येत ।
यद्यस्य प्रयोजनार्हं पुस्तकादि तन्न-
तेन : सहनविभजनीयम् ॥ इति
दायभागः ॥
प्रायोपविष्टः । त्रि० प्रायोपवेशवि
शिष्टे ॥ प्रायेण मृत्युपर्यन्तानशने
न उपविष्टः ॥ अचरादित्यपुराणम्
॥ य० । समायुक्तो भवेद्यस्तु पातकै
र्महदादिभिः । दुश्चिकित्स्यैर्महा
रोगैः पीडितो वा भवेत्तु यः ॥

स्वयं देहविनाशस्य कालेऽप्राप्ते महा गतिः। आत्मत्यागस्स्वर्गादिमहा फलजिगीषया॥ प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा। एतेषा मधिकारोऽस्तिनान्ये षांसर्ववस्तुषु॥ नराणामथनारीणां सर्ववर्णेषुस र्वदा॥ इति॥

प्रायोपवेशः। पुं॰ सन्न्यासपूर्वकाऽ नशनस्थितौ॥

प्रारब्धम्। न॰ वर्त्तमानदेहारम्भके कर्म्मणि॥ कर्मा जन्मान्तरीयं यत् प्रारब्धमितिकीर्त्तितम्। टूर्वस ञ्चितंचेतिप्रारब्धं त्रिविधं विदुः॥ दुर्वलत्वमतीकारः सनाशिस्तस्य लक्षणम्॥ यथार्थं कामिनामाको प्रतीकारोभवेद्यदि। तदाद्युः खै र्नलिप्येरन् नलरामयुधिष्ठिराः॥ आत्मानं सततं जानन्कालं नय महामते। प्रारब्धमखिलं भुञ्जन् नोद्वेगं कर्त्तुमर्हसि॥ इच्छाप्रार ब्धं परेच्छाप्रारब्धमनिच्छाप्रारब्धमि तिभेदात्तत्त्रिविधं। तत्रस्वेच्छा- प्रातं भिक्षाटनादि॰ समाधिस्थावस्थायां शिष्यादिभिर्दीयमानं परेच्छाप्रारब्धम्। समाधिस्थावांच्छत्यानदशायांवा आकाशफलपातवदकस्माज्जायमा नं पापाग्यमनं कण्टकवेधादिकमप्रा निच्छाकृतं प्रारब्धमितिविवेकः॥ त्रि॰ प्रकर्षेणआरब्धे॥

प्रारब्धिः। स्त्री॰ गजबन्धनरज्जौ॥

प्रारम्भः। पुं॰ प्रकृष्टारम्भे॥ प्रक- र्षेणआरम्भः॥ प्रारम्भे कर्मणांविप्रः पुण्डरीकाक्षमिरिदम्॥

प्रारिप्सितः। त्रि॰ प्रकर्षेणआरब्धुमी प्सिते॥

प्रार्थनम्। न॰ प्रकर्षेणयाचने। प्रार्थ नायाम्॥

प्रार्थना। स्त्री॰ याञ्चायाम्। अर्थना याम्। याचनायाम्॥ प्रकृष्टाअर्थ ना॥ अभियाते॥

प्रार्थनीयम्। न॰ द्वापरयुगे॥ त्रि॰ प्रार्थनाविषये॥

प्रार्थितः। त्रि॰ याचिते॥ शत्रुसंरुद्धे॥ अभिहिते॥ प्रार्थ्यतेस्म। अर्थया ञ्चायाम्। क्तः॥

प्रार्थ्यमानः। त्रि॰ याच्यमाने॥

प्रालम्बः। पुं॰ पयोधरे। त्रपुषे। न॰ आकण्ठलम्बमुक्तास्रग्मानमाल्ये॥ प्रालम्बते। लम्बिअवसंसने। पचा द्यच्॥

प्रालम्बिका। स्त्री॰ हेमविरचितेनाभि लम्बिनिमाल्ये॥ प्रालम्बते। ण्वुल्॥

प्रालेयम्। न॰ मिहिकायाम्। हि- मे॥ प्रलीयन्तेपदार्थाअत्रेति॰ प्रल योहिमाद्रिः। ततआगतम्। अण्। केयायनिवप्रफलयानांयादेरियङ्। विषये यादेशः। उत्तके॥

प्रालेयांशु : । पुं० हिमांशौ । चन्द्रे । प्रालेयानि० हिमानि० यंशवोयस्य ॥

प्रालेयाचल : । पुं० हिमालये। मेनाधवे ॥

प्रावट : । पुं० यवे ॥

प्रावर : । पुं० प्राचीरे ॥

प्रावरणम् । न० संव्याने । उत्तरीयवस्त्रे ॥

प्रावादुक : । त्रि० शुष्कतर्कजल्पनशीले ॥

प्रावार : । पुं० उत्तरासङ्गे । उपरिवस्त्रे । उत्तरीये । प्रव्रियतेऽनेन । वृञ्० । ग्रहोसेराच्छादने० घ०। घञ् । उपसर्गस्यघञ्योतिदीर्घ : ॥

प्रावारकीट : । पुं० कीटविशेषे ॥

प्रावृडत्यय : । पु० शरदृतौ ॥

प्रावृत : । त्रि० निधौते । परिहितवस्त्रे । आव्रियतेस्मा । वृञ् ० । क्त. ।

प्रावृति : । स्त्री० प्राचीरे । शैवानामसतेः स्वाभाविक्यामशुद्धौ । मले । प्रधानधर्मे । प्रावृणोति०प्रकर्षेणया च्छादयतिमात्मनांह्रक्क्रिये० ह० । प्रावृति : ॥

प्रावृट् । स्त्री० वर्षाकाले । श्रावणभाद्रयो : ॥ वर्षणम्० वृट् । वृषुसेचने । सम्पदादित्वात्क्विप् । प्रकृष्टावृड् च । नहिवृतिवृषिव्यधिरुचिसहितनिपुक्षाविति दीर्घ : ॥ प्रवर्षतीति-वा ॥

प्रावृषा । स्त्री० वर्षाकाले । जलार्णवे ॥

प्रावृषायणी । स्त्री० कण्डूरायाम् । शूकशिम्बायाम् । प्रावृषामेति०अयनंवा । कर्त्तरिल्युट् । कृत्यचइतिणत्वम् । ङीप् ॥

प्रावृषिक : । पुं० मयूरे । त्रि० प्रावृषिजाते । प्रावृषेण्ये ॥

प्रावृषिज : । त्रि० प्रावृषिजाते । प्रावृट्शरत्कालदिवांजे० इत्यलुक् ॥

प्रावृषेण्य : । पुं० नीपे । कदम्बवृक्षे । कुटजवृक्षे । धाराकदम्बे ॥ त्रि० प्रावृट्कालभवे ॥ प्रावृट्देवतास्य०प्रावृषिभवोवा । कालेभ्योभववत्०इति० प्रावृषएण्यः ॥ प्राचुर्ये

प्रावृषेण्या । स्त्री० रक्तपुनर्नवायाम् ॥ कपिकच्छ्वाम् । प्रावृषिभवा । प्रावृषएण्य : । टाप् ॥

प्रावृष्य : । पुं० कुटजे । धाराकदम्बे ॥ विकङ्कते । न० वैदूर्यमणौ ॥

प्राट् । पुं० प्रश्नकर्तरि ॥ प्रश्ने ॥ पृच्छति । प्रच्छनवा । प्रच्छ्रोपायाम् । क्विब्वचिप्रच्छीतिक्विब्दीर्घोसम्प्रसारणञ्च । च्छ्वो. शूडितिश . । प्राशौ०प्राश : प्राड् भ्यामित्यादि ॥

प्राश : । पुं० अवलेहे ॥

प्राशस्त्यम् । न० उत्तमत्वे । बलवद्निष्टाननुबन्धित्वे ॥

प्राशितम् । न॰ पित्र्यश्वे । निच्यम्राशे । त्रि॰ भक्षिते ।

प्राश्निक : । पुं॰ सभ्ये । त्रि॰ प्रश्नकर्त्तरि ॥

प्रास : । पुं॰ कुन्तासे । भाला॰ इ॰ भा॰ । क्षौ॰ च॰ इ॰ गौ॰ भा॰ । प्रासनते । असु॰ । घञर्थे तिघञ् । प्रायोहसदीर्घस्यवेद्र॰ सामी ।

प्रासङ्ग : । पुं॰ युगे । वत्सानांशिचाथैकाष्ठवि॰ । वत्सानांदमनकालेस्कन्धेयत्काष्ठमासज्यतेतत् । प्र॰ सज्यते । पञ्जसा । घञ् । उपसर्गस्य तिदीर्घ : ।

प्रासङ्ग्य : । पुं॰ युगवोढरिवृषे । युग्यं । प्रासङ्गं वहति । तद्वहतिरथयुगप्रासङ्गमितियत् ।

प्रासाद : । पुं॰ देवभूपरिकृतौ । राजगृहे । प्रसीदन्त्यस्मिन्मनांसि । हलश्चेतिघञ् । उपसर्गस्य घञ्मनुष्येबहुलमिति दीर्घः । चाइ॰ । कृत्वाप्रभूतं सलिलमारामान्विनिवेश्यच । देवतायतनं कुर्याद्यशोधर्माभिवृद्धये ।

प्रासादकुक्कुट : । पुं॰ पारावते ॥

प्रासिक : । पुं॰ कौन्तिके । प्रासप्रहरणमस्य । प्रहरणमितिठक् ॥

प्रास्त : । त्रि॰ प्रक्षिप्ते ॥ निरस्ते ॥ प्रास्यतेस्म । असु॰ । क्त : ।

प्रास्तारिक: । त्रि॰ प्रस्तारव्यवहर्त्तरि । प्रस्तारेव्यवहरति । कठिनान्तप्रस्तारसंस्थानेषुव्यवहरति॰ इतिठक् ॥

प्रास्थानिकम् । त्रि॰ प्रस्थानकालोचिते । प्रस्थानेभवम् । कालाट्ठञ् ॥ प्रस्थानशब्दस्यगत्यर्थस्याकाङ्क्षितृकालेवर्त्तमानत्वात् ॥

प्रास्थिकम् । न॰ प्रस्थपरिमितव्रीह्यादियापयोग्येक्षेत्रे । प्रस्थस्यवापः । तत्यवापइतिठञ् । त्रि॰ आढकादिपाचातरि । प्रस्थंसम्भवति॰ सम्भवत्यवहरतिपचतीति॰ पचतितया । सम्भवत्यवहरतीत्यादिनाठञ् । टिड्ढाणञितिङीप् । प्रास्थिकीस्थाली । प्रस्थमुपस्पर्शतिपचतीत्यर्थः ॥ प्रस्थेनक्रीते ॥ ठञ् । प्रस्थपरिमाणमस्य । प्रास्थिकोराशि : । तदस्यपरिमाणमितिठञ् ।

प्राह्ण : । पुं॰ पूर्वाह्णे ॥

प्राह्णः । पुं॰ पूर्वाह्णे ॥ प्रथमसूत्रादप्रमाह्णः । राजाह : सखिभ्यष्टच् । अह्नोऽह्नएतेभ्यइत्यह्नादेशः । अह्नोऽदन्तादितिणत्वम् ॥

प्राह्णे । अ॰ पूर्वाह्णे ॥

प्राह्णेतन : । त्रि॰ पूर्वाह्णसम्बन्धिनि ॥ सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यइत्युट्युलौतुट्च ॥

प्रिय : । पुं॰धवे । पत्यौ । वृद्धिनामौषधौ ॥ जीवकौषधे । प्रीतिविषये । आत्मनि ॥ यथा । प्रियोह्या

त्मैवसर्वेषांनात्मनोऽन्यपरंप्रियम् । लोकेऽस्मिन्नात्मसम्बन्धाद्भवन्त्यन्ये प्रिया : शिवे ॥ प्राणबुद्धिमनः स्वा त्मदाराऽपत्यधनादयः । यत्सम्ब न्धात्प्रियास्सन्ति : कोऽन्यपर : प्रिय :॥ प्रीणाति । प्रीञ् तर्पणे । इगुपधेतिकः ॥ न०प्रीतुस्तत्कालश्रुतिसुखेयाख्ये ॥ त्रि०हृद्ये । इष्टे । प्रीतिविषये । स्वेच्छापतिपुत्रादौ ॥ प्रीतिकरे ॥ सर्वः प्रियः खलुभवत्यनुरूपचेष्टः ॥ स्त्रीं ॥ प्रीणयति शुश्रूषादिनास्वामिनम् ॥ प्रियोऽप्रियश्चकार्यवशाद्भवति । यथा । न चिकश्चिप्रियःकोनाप्रियोवाद्यगत्यये । कार्येकार्यवशात्सर्वेभवन्त्येवाऽप्रिया : प्रिया :॥

प्रियंवदः । पुं० खेचरे । गंधर्व विशेषे ॥ त्रि० प्रियवादि ॥ प्रियं वदति । वदत्यस्मादावाचि । प्रिय वशेवदः खच् । मुम् ॥

प्रियंवदा स्त्री० खर्वश्यायाम् ॥

प्रियकः । पुं० प्रीतसालतरौ । जीव की । असनकुसुमे । विजयसार० इ० भा० ॥ नीपे । धाराकदम्बे ॥ चित्रमृगे । कम्बलप्रकृतीमृग विशेषे ॥ प्रियकोरोमभिर्युक्तोस्त्र ह्ममस्रणोघनैरितिवैजयंती ॥ अलौ । चञ्चरीके ॥ प्रियङ्गौ ॥ कुङ्कुमे । काश्मीरजन्मनि ॥ प्रीणा ति । प्रीञ् ० । कुन्शिल्पिसंज्ञ योरितिक्कुन् ॥ यद्वा । प्रीणाति॰ प्रीयतेवा । इगुपधेतिकः । स्वा र्थेकन् ॥

प्रियकारः । त्रि० प्रियकरे । प्रियं करोति । डुकृञ्० । चेमप्रियेत्य ण् ॥

प्रियकृत् । पुं० नारायणे । भक्तानां प्रियंकरोति । क्विप् ॥ त्रि० प्रि यकारिणि ॥

प्रियङ्करः । त्रि० हितकारिणि । प्रियकारकेः । प्रियङ्करोति । चेम प्रियमद्रेण्चेतिपचेखच् ॥

प्रियङ्करी । स्त्री० वृहज्जीवन्त्याम् ॥ श्वेतकण्टकार्याम् ॥ अश्वगन्धा याम् ॥

प्रियङ्गुः । स्त्री० राजिकायाम् । राजसर्षपे ॥ कणायाम् । पिप्प ल्याम् ॥ गङ्गस्यॉ ॥ स्वनामख्या तसुगन्धिवृक्षविशेषे ॥ प्रियकेः । श्यामायाम् । लतायाम् । फलि न्याम् ॥ प्रियङ्गुः शीतलातिक्ता तुवरानिलपित्तहृत् । रक्तातियोग दौर्गन्ध्यस्वेददाहज्वरापहा ॥ गु ल्मतृड्विषमोहघ्नीतद्वद्गन्धप्रियङ्गु का । तत्फलंमधुरंरूक्षं कषा यसशीतलंगुरु । विबन्धाध्मानब लकृत्सङ्ग्राहिकफपित्तजित् ॥ प्रियंगच्छति,॥ मृगय्वादीनिपात

सिद्ध : ॥ मित॰ छुवां ॥ प्रियमङ्गतिका । अगिगतो । खञ्जोया । कुः पूर्वेत् । प्रकनुप्पादिः ॥ काटुक्याम् ॥

प्रियचिकीर्षुः । त्रि॰ प्रियकर्तुमिच्छौ ॥

प्रियजनः । पुं॰ हृष्यलोके । प्रौढभावके ॥ यथा ॥ प्रौढभावानुविज्ञोय स्तस्यप्रियजनोबसः ॥

प्रियजीव : । पुं॰ श्योनाकवृक्षे ॥

प्रियतम : । पुं॰ मयूरशिखावृक्षे ॥ आत्मनि ॥ यथा । वित्तात्पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात्तयेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राणप्राणात्मप्रियतमपराः ॥ त्रि॰ प्रेष्ठे ॥ अतिशयेनप्रिये ॥

प्रियता । स्त्री॰ हार्दे । प्रेमणि । स्नेहे ॥ प्रीणातीतिप्रियः । तस्य भावः । तल् ॥

प्रियतोषण : । पुं॰ षोडशबन्धातिरिक्तरतिबन्धविशेषे ॥ यथा । नारी पादौस्वहस्तेनधारयेत्स्तनोपरि । नानापीडकरः कामीकामयेरा प्रियतोषणः ॥ त्रि॰ प्रियस्यतुष्टिकारिणि ॥

प्रियत्वम् । न॰ प्रियतायाम् ॥ प्रियस्यभावः । त्वः ॥ प्रीतिविषये ॥

प्रियदर्शनः । पुं॰ कीरे । शुकविशेषे ॥ चौरिगन्धर्वे ॥ त्रि॰ मधुरे । सुदर्शने ॥ प्रियंदर्शनमस्य ॥

प्रियप्रायम् । नं॰ चटुनि । चाटुनि । प्रियवाक्ये ॥ इतिहेमचन्द्रः ॥

प्रियमेधुः । त्रि॰ इष्टार्थोद्युक्ते । उत्सुके ॥

प्रियमधुः । पुं॰ एकमुण्डलि । बलदेवे । अच्युताग्रजे ॥ प्रियंमधु मद्यंयस्य ॥

प्रियरूप: । पुं॰ कामे ॥ न॰ चपरः प्रभृतीनांरूपे ॥ त्रि॰ मनोहररूपवति ॥

प्रियवर्णी । स्त्री॰ उग्रतमायाम् । ग्रन्थायाम् । प्रियङ्गौ ॥

प्रियवल्ली । स्त्री॰ प्रियङ्गौ ॥

प्रियवादी । त्रि॰ तत्कालमधुरवाक्यवक्तरि ॥ मनोज्ञवक्तरि ॥ यथा । कोतिभारः समर्थानांकिन्दूरंव्यवसायिनाम् । कोविदेशः सुविद्यानांकः परः प्रियवादिनामिति ॥

प्रियव्रतः । पुं॰ स्वायम्भुवमनोः पुत्रे । यथा । प्रियव्रतोत्तानपादौमनोः स्वायम्भुवस्यतु । द्वौपुत्रौसुमहावीर्यौ धर्मज्ञौकथितौमम ॥

प्रियश्रवाः । पुं॰ भगवतिवासुदेवे ॥ प्रियंश्रवोयस्य ॥

प्रियसख : । पुं० खदिरे ॥

प्रियसत्यम् । न० सूनृतवाक्ये ॥

प्रियसन्देश : । पुं० चम्पकवृक्षे ॥ प्रिय संवादे ॥

प्रियसालक : । पुं० असनवृक्षे । विजयसार० इ० भा० ॥

प्रिया । स्त्री० भार्यायाम् ॥ नार्याम् । एलायाम् ॥ मदिरायाम् । मल्लिकायाम् ॥ वार्त्तायाम् ॥ प्रियङ्गौ ॥ सध्याक्षरिप्रभेदे ॥ यथा । खोऽर्णतः प्रियते । साप्रियाख्यये ॥ यथा । नौमिगोपालकम् । देवकीवालकम् ॥ मृगीतिनामानारम् । रोमृगीति पाठनात् ॥ सुप्रतिष्ठाप्रभेदेऽपि । स मगे : प्रिया ॥ यथा । व्रजसुभ्रुवो विलसत्कला : । अभवन्प्रियामुरवैरिण : ॥

प्रियाम्बु : । पुं० आम्रवृक्षे ॥ न० आम्रफले ॥ इक्षुवले ॥

प्रियार्ह : । पुं० नारायणे ॥ स्वेष्टदेवे प्रियाणीष्टान्यर्हतिअर्पयितुयोग्योभवतीतितथा । कर्मण्यण् ॥ यथा० यद्यदिष्टतमंलोकेयच्चास्यदयितंगृहे । तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ॥ इतिमार्कण्डेयपु० ॥ अपिच । यद्यदात्मप्रियद्रव्यं तत्तदिष्टायकल्पयेत् ॥

प्रियाल : । पुं० राजादने । पियालि ॥ पारस्पषफलंपक्वं सष्यंशीतलाम्लकं गुरु । रदीवंमधुरंसध्यं पित्तदाहार्ति

नाशनम् ॥ प्रीणाति । प्रीञ्० । वा० कालन् ॥

प्रियाला । स्त्री० द्राक्षायाम् ॥

प्रियोदितम् । न० प्रियवाक्ये ॥ प्रियस्वतत्तुउदितञ्च ॥ त्रि० प्रियवाक्येविषये ॥

प्रीण : । त्रि० पुरातने । प्रत्नं ॥ नव पुराणेप्राद्रितिनि० पीन्तसमुच्चित : स : ॥ प्रीते ॥

प्रीणनम् । न० तर्पणे । तृप्तौ ॥ प्रीञ् । स्वार्थणिजन्तात् ल्युट् ० धुञ्प्रीञो- रितिनुक् ॥

प्रीणयत् । त्रि० तर्पयति ॥ प्रीञोण्य न्तात् शतृ : शप्शानचाविस्थादिनाल ट : शत्रादेशे० धूञ्प्रीञोर्नुक्वक्तव्य इतिनुगागम : ॥

प्रीणस : । पुं० गण्डके ॥

प्रीत : । त्रि० हृष्टे । मत्ते । तृप्ते ॥ नर्मणि ॥ प्रीयतेस्म । प्रीञ्प्रीणने । क्त : ॥

प्रीति: । स्त्री० सुहृदि । प्रमदे । हर्षे । सुरते ॥ इष्टदर्शनजन्ये सुखे ॥ भोजनकालेऽनभिरुचिरादित्ये । दुष्टी- त्कण्ठे ॥ विष्कम्भादिषुद्वितीययोगे ॥ तज्जातस्यफलंयथा । प्रसूतिकालेयदिप्रीतियोगोनरोभवरोग : सुखवान्प्रमोदी । रमानुरागोविदुषां प्रपन्न : समार्जितोयक्ष्मतिवित्तमेव ॥ रूपया : सपत्न्योश्चरपत्न्याम् ॥

प्रेम्णि ॥ यथा । याप्रीतिरविवेका नांविषयेष्वनपायिनी । त्वामनुस्मरतः सामे हृदयान्मापसर्पतु ॥ सा प० हैश्रीपते । मापसर्पतु ॥ प्रेम सत्वया प्रीतिश्चात्मनि सुख्यान्यत्रगौणी । तथा चोक्तं शास्त्रिकसारे । सा स्वभोगस्य हेतुत्वात्प्राधान्येप्रीतिरिष्यते । यस्ततोभोगसाम्याच्चात्म-प्रीतिर्यथा तथा । प्रतीचि निर्निमित्तं वसर्वदस्थात्सुखोष्यते । प्रीतिरत्नैवा प्यागतत्वान्नस्यासाविनिगम्यता म् । सर्वान्तरतरत्वेनमुख्यते निर्निमित्तता । यात्तु पुत्रनिमित्तप्रीतिः स्वार्थत्वादिष्यते । व्याख्याद्य पद्भिः सौ देत्सुतिसम्यभियाव्यक्ति । निर्निमित्तप्रियत्वेतु देहादिसत्वमुच्यते ॥ इति । प्रीङ्तर्पणे । मानिक्तिन् ॥ यदीच्छेद्विपुलांप्रीतिंवीचितपनका रयेत् । गाविशद्दोर्घसम्बन्धः परोक्षेद्वारभाषणम् ॥

प्रीतिमुषा । स्त्री० उषायाम् । चनिरुद्धपत्न्याम् ॥

प्रीतिदः । पुं० वासनिके । कौतिकि छि । विदूषके । नाट० पु० भा० ॥ यामुकि ॥ त्रि० सुखप्रसादातरि ॥

प्रीतिदत्तम् । त्रि० प्रीत्यादत्तवस्तुनि । यथा । प्रीत्यादत्तन्तुयत्किञ्चिच्छ्वश्र्वाश्वशुरेणवा । पादवन्दनिकञ्चैव प्रीतिदत्तंतदुच्यते ॥ प्रीतिदाने ॥

मात्रेके ॥

प्रीतिदानम् । न० प्रसादे ॥

प्रीतिभोज्यम् । न० प्रीत्यामन्नणीयेऽन्नादौ । यथा । अन्नानिप्रीतिभोज्यानिश्यापन्नोज्यानिवापुनः । नचसम्मीयसेराजन्नचैवापद्गतावयम् ॥

प्रीतयुक् । त्रि० स्निग्धे ॥

प्रीत्यात्मक : । पुं० सत्वगुणे । प्रीतिः सुखमात्मायस्य : ॥

प्रुधि : । पुं० प्रधौ ॥

प्रुष्ट : । त्रि० दग्धे । प्रुष्यतेस्म । प्रुष दाहे । क्त : । यस्येतिनिट् ॥

प्रुष्व : । पुं० ऋतौ ॥ सूर्ये ॥ प्रोषति । प्रुष० । ऋष्रुप्रुषिमटीतिक्वन् ॥

प्रुष्वा । स्त्री० जलकणिकायाम् । टाप् ॥

प्रेक्षणम् । न० चक्षुषि ॥ दर्शने ॥

प्रेक्षणकूट : । पुं० चक्षुर्गोलके ॥

प्रेक्षणीय : । त्रि० दर्शनीये ॥

प्रेक्षा । स्त्री० उपलब्धौ । बुद्धौ ॥ नृत्यघने ॥ ईक्षणे ॥ प्रकृष्टमीक्षणमत्र । प्र० ईक्ष० । गुरोश्चहल : । टाप् ॥ वृक्षशाखायाम् ॥

प्रेक्षावान् । त्रि० प्रेक्षणविशिष्टे ॥ संप्रतिविशिष्टे ॥

प्रेङ्खा । स्त्री० पर्यटने ॥ अश्वगतौ ॥ संवेशनाकारे ॥ नृत्ये ॥ दोलायाम् ॥ प्रेङ्खति । इङ्गिगतौ ॥ घञ् । टाप् ॥

प्रेङ्खित : । त्रि० कम्पिते ॥ प्रेङ्खतिस्म । इङ्खि० । क्त : ॥

प्रेङ्खोलनम् । न० दोलायाम् । दोलने ॥

प्रेङ्खोलित : । त्रि० दोलिते । तरलिते । लुलिते ॥ न० रतबन्धान्तरे ॥ सर्वत : कटिपरिभ्रमोयदिप्रेङ्खपूर्वमिदमुक्तमारतम् ॥

प्रेत : । पुं० नरकस्थप्राणिनि ॥ भूतप्रभेदे ॥ स्वधर्मात्प्रच्युतोविप्रोदेहपातादूर्ध्वंवायवीयंदेहमापन्नउल्कामुखकटपूतनादिसंज्ञ : प्रेतउच्यते । यथा । वान्ताश्युल्कामुख : प्रेतोविप्रोधर्मात्स्वकाच्च्युत : । इति ॥ भूतप्रेतपिशाचानांलोकायथा । भरीधराधेषभूतप्रेतपिशाचका : । वर्जयित्वारुद्रगणांस्तेतथैवचरन्तिहि ॥ नोर्द्ध्वं विक्रमणेशक्तिस्तेषांसम्भूतपाप्मनाम् । अतऊर्द्ध्वं हिविप्रेन्द्रराक्षसाविकृतैनस : ॥ तेतुसूर्यादय : सर्वैविप्रनृत्यैर्विवर्जिता : । इतिपाद्मे स्वर्गखण्ड : ॥ वैदिकविधानेनौर्द्ध्वदैहिकाभावात्विष्णुर्वैशाचवहुनरकभोगान्ते प्रेतशरीरंभवतीति पुराणेप्रसिद्धमस्ति ॥ त्रि० मृते ॥ अर्वाक्सपिण्डीकरणात्प्रेतोभवति वैमृत : ॥ प्रैति । इण् । गत्यर्थेति क्त : ॥

प्रेतकार्यम् । न० मृतस्यदाहादिसपिण्डीकरणान्तकर्मणि ॥ यथा । अस्थिप्रेतकार्याणिप्रेतस्यधनहारक : । वर्णानांयद्वधेप्रोक्तं तद्व्रतंनियतश्चरेत् ॥ इति ॥

प्रेतकाला । स्त्री० पितृपक्षारार्धायांक्रियायाम् ॥ प्रकर्षेणइत : प्रेत : पितृणोकस्थएवोच्यते ॥

प्रेतगृहम् । न० श्मशाने ॥

प्रेततर्पणम् । न० मरणावधिसपिण्डीकरणपर्यन्तंप्रेतशब्दोल्लेखेनजलदाने ॥

प्रेतनदी । स्त्री० वैतरिण्याम् ॥ प्रेतानांनरकस्थप्राणिनांनदी ॥

प्रेतपटह : । पुं० भवकदि । मृत्युमङ्गरके । मृत्युकालिकवादनीयवाद्यविशेषे । भौष० इ० भा० ॥

प्रेतपति : । पुं० यमे ॥ प्रेतराजि ॥ प्रेतानांपति : ॥

प्रेतपिण्ड : । पुं० मरणावधिसपिण्डीकरणपर्यन्तं प्रेतसम्प्रदानकपिण्डाकारान्ने ॥ यथा । नस्वधाश्वप्रयुञ्जीतप्रेतपिण्डेदशाह्निके । भावितैतच्चदैपिंडंयद्दशसंपूरकम् ॥ प्रेतपिण्डानदीयन्ते यस्यतस्यविमोचनम् । श्माशानिकेभ्यो देवेभ्यआकल्पंनैव विद्यते ॥

प्रेतपुरम् । न० यमालये ॥

प्रेतमासा । स्त्री० काव्यादिषु ॥ कालीकरालीभद्राचभीमाचैवभयोत्कटा । साधारणीदुराधर्षासन्तता :

तुवन्यतरस्यामितिपक्षेइनि : ॥
वलिपुष्ट : । पुं॰ काके ॥ वलिनापुष्ट : ॥
वलिपोदकी । स्त्री॰ उपोदकायाम् ॥
वलिप्रिय : । पुं॰ लोध्रवृक्षे ॥
वलिभ : । त्रि॰ वलिभे । जरयाश्लथचर्मणि ॥ वलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिवलिवटेर्भ : ॥
वलिभुक् । पुं॰ वायसे ॥ वलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
वलिमन्दिरम् । न॰ पाताले ॥ वलेर्मन्दिरमत्र ॥
वलिमुख : । पुं॰ वलिमुखे ।
वलिशम् । न॰ वडिशे । मत्स्यवेधने । वलिनोमत्स्यान्॰ श्यति । शोतनूकरणे । आतोनुपेतिक : ॥
वलिष्ठ: । त्रि॰ वलवत्तमे ॥ अतिशयेनवलवान् । वलवच्छब्दात्मतुवन्तादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तं विनाप्नोत्यस्मैवमशुद्धमात्मता । अकामायावलिष्ठेनस्त्रीजारेणदुष्यति ॥
वलिष्णु : । त्रि॰ अपमानिते ॥
वलिसद्म । न॰ रसातले । पाताले । वले : सद्म ॥
वलिहा । पुं॰ विष्णौ ॥
वली । स्त्री॰ वलौ । त्वगूर्मौ । चर्मतरङ्गे ॥

वलीकम् । न॰ नीध्रे । पटलप्रान्ते । कांची॰इ॰गदे॰भा॰ । परावली॰इ॰भा॰ ॥ वलति । धातूपोतिभित्त्यादि । वलसंवरणे । वलीकादयश्चेतिकीकन् ॥
वलीमुख : । पुं॰ वानरे ॥ वलीयुक्तंमुखमस्य ॥
वलीयान् । त्रि॰ अतिशयेनवलयुक्ते ॥
वलीवर्द : । पुं॰ वृषे । बैल॰वरध॰वर्धी॰इ॰भा॰ । वरणम् । वर्द्धृप्याम् । सम्पदादित्वात्क्विप् । वैश्यवद्भ॰ईवरी । तांददाति । घातपुतिक : । अतिशयितंवलमस्य । अतस्तनि : । वलीचासौ॰ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथामात्स्ये । वलीवर्दसमारूढ: शृणुतस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेहिदारुणे । सलिलञ्चनगृह्णन्तिपितरस्तस्यदेहिनइति ॥
वलु : । स्त्री॰ हस्तिदन्तालिकायाम् ॥
वल्कक : । पुं॰ पद्ममूले । पत्रिविशेषे ॥ वलते । वल॰ । वलीकष : ॥
वल्कल: त्रि॰ वलवति ॥ वलनसहते । वल्वादूल : ॥
वल्मिक : । पुं॰ न॰वल्मीके ॥
वल्मीकि : । पुं॰ न॰वल्मीके ॥
वल्मीक : । पुं॰ न॰वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेमृत्स्तूपे । वावी॰इ॰भा॰ ॥ न॰ रोग

विशेषे । अस्यलक्षणं । यथा । ग्रीवांसकक्षाकरपाददेशेसम्भीगलेवाभिभिरेवदीर्घैः । ग्रन्थिः सवल्मीकवदंक्रियाणांजातैः क्रमेणैवगतप्रवृद्धिः ॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पतिचोन्नतार्यैः । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजंविशेषात् ॥ वाल्मीकिमुनौ ॥ वलन्तेप्राणिनोऽत्र । अलीकादयश्चेति कीकन्प्रत्ययोनिपातितः ॥

वल्मीकशीर्षम् । न० स्रोतोञ्जने ॥

वल्मीकिः । पुं० वाल्मीके ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्य : । पुं० बुद्धभिक्षुके । श्रमणे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० बलकरे ॥

वल्यरा । स्त्री० पतिव्रतायाम् ॥ श्वश्रूगन्धायाम् ॥ शिमृडीक्षुपे ॥ प्रसारिण्याम् ॥

वल्ल : । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जेपरिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ।

वल्लक : । पुं० निष्पावे । राजशिम्बायाम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्चयाम् ॥ वल्लते । वल्ल० । क्वुन् । गौरादित्वान्ङीप् ॥ सल्लकीवृक्षे ॥

वल्लभ : । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽत्रगवाध्यक्ष इति स्वामी ॥ वल्लते०वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपाल : | वल्लभपालक: । पुं० उत्तमाश्वपाले ॥ अश्वरक्षके ॥

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लरि ॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥

वष्कय : । पुं० तरुणवत्से । वरेडा० वृ० भा० ॥ वष्कते । वष्कगतौ । भा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० । बाखडी० वृ० भा० ॥ वष्कयस्तरुणवत्सः सोऽस्यस्याः । अतइनिठनावितीनिः । षट्कुप्वादिति णत्वम् । ङीप् ॥

वह्नि : । अ० वाह्ये । वहरि । वह० क्रस् । ववयोरभेदः ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहसे । वह्निबृंहौ ॥ वह्निर्बंहेर्नलोपश्च ॥ स्त्रियां० वह्वादित्वात्०पाक्षिकोङीप्रभावः । ङीप्पक्षे० वह्वी ॥

वहुक : । पुं० कर्कटे । अर्के ॥ दात्यू

र्थे । तलखातके ॥ त्रि॰वहुभिःक्री
ते ॥ सङ्ख्यायाअतिशदन्तायाः
कन् ॥
वहुकण्टकः । पुं॰ चुद्रगोक्षुरे । यवा
से । हिन्ताले ॥
वहुकण्टका । स्त्री॰ अग्निदमन्याम् ॥
वहुकण्टा । स्त्री॰ कण्टकार्याम् ॥
वहुकन्द : । पुं॰ शूरणे ॥
वहुकन्दा । स्त्री॰ कर्कट्याम् ॥
वहुकर : । पुं॰ वक्रग्रीवे ॥ उष्ट्रे ॥
त्रि॰ खलपू ॥ स्त्रियांवहुकरा ॥
वहुकार्यकर्तरि । वहुकरोतिसुवसं
नादि । क्रियतहुपुक्तओज्वापा
नमित्यच् ॥
वहुकरी । स्त्री॰ वहुकरभार्यायाम् ॥
पुंयोगलक्षणोङीष् ॥ सम्मार्जन्या
म् ॥
वहुकर्णिका । स्त्री॰ आखुकर्ण्याम् ॥
वहुकूर्च : । पुं॰ मधुनालिकेरके ॥
वहुक्षम : । पुं॰ वुद्धे ॥ वहुक्षमते ।
पचाद्यच्॰ । ईषिचमिभ्याख्ठे तिष : ॥
वहुगन्धम् । न॰ त्वचे । पुं॰कुन्दुरुके॥
वहुगन्धदा । स्त्री॰ कस्तूर्याम् ॥
वहुगन्धा । स्त्री॰ चम्पककलिकायाम् ।
यूथिकायाम् ॥ कृष्णजीरके ॥
वहुगर्ह्यवाक् । त्रि॰ कुत्सितवहुभाषि
नि । जल्पाके । वहुगर्ह्यावागस्य ।
वहुग्रन्थि : । पुं॰ झावुके ॥ ०ग्रन्थी
न्ययोयस्मिन् ॥

वहुच् । पुं॰ प्रत्ययविशेषे । सचप्रकृ
ते : पूर्वंभवति॰ प्रकृतेर्लिङ्गंचभज
ते : । स्त्र्यादीपदसमाप्तौतुवहुच्प्रकृ
तिलिङ्गक : ॥
वहुच्छिन्ना । स्त्री॰ कन्दगुडूच्याम् ॥
वहुतन्त्री: । त्रि॰ वहुतन्त्रीविशिष्टे ॥ यथा
। वहुतन्त्रीःकायः । वहुतन्त्रीर्वीणा ।
वहुतन्त्रिशरीरम् । वह्व्यस्तन्त्र्योयस्मि
न् । नाडीतन्त्र्योःस्वाङ्गे॰इ॰नकप् ॥
वहुतन्त्रीकः । पुं॰ वहुतन्त्रविशिष्टे ।
यथा । वहुतन्त्रीक : पटः । वहुत-
न्त्रीकावीणा । वहुतन्त्रीकंवासः । वह्व्य
स्तन्त्र्योयस्मिन्कप् ॥
वहुतरकणिश . । पुं॰ रागीधान्ये ।
वहुता । स्त्री॰ वहुत्वे ॥
वहुतिक्ता । स्त्री॰ काकमाच्याम् ॥
वहुतिथ : । त्रि॰ वहुसङ्ख्याके ॥
वहूनांपूरण : । तस्यपूरणेडट् । व
हुपूगगणसङ्घस्यतिथुक् ॥
वहुतृणम् । न॰ तृणकल्पे ॥ ईषदस-
माप्तं तृणम् । विभाषासुपोवहुच
पुरस्तात् ॥
वहुत्वम् । न॰ वहुतायाम् । वहोर्भा
व : । तस्यभावस्त्वतलौ ॥
वहुत्वच : ।
वहुत्वक् पुं॰ भूर्जद्रुमे ॥
वहुदुग्ध : । पुं॰ गोधूमे ॥
वहुदुग्धा । स्त्री॰ वन्ध्यायाम् । वहु
क्षीरायांगवि । वहुदुग्धंयस्याम् ॥

वहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥

वहुधा । अ० अनेकप्रकारे ॥ वहव : प्रकारा: । सङ्ख्याया विधार्थे धा वा ॥ यथा । वहुवारान् इति० क्रियाभ्यावृत्तिगणने० विभाषा वहोर्धाऽविप्रकृष्टकाल इति धा । वहुधा वहुकृत्वो वा दिवसस्य भुङ्क्ते ॥

वहुधान्य : । पुं० वत्सरविशेषे ॥ सुभिक्षं क्षेममारोग्यं प्रशान्ता : पार्थिवा : प्रिये । तस्करोपद्रवं वित्तं वहुधान्ये वरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥

वहुधारम् । न० वज्रे ॥

वहुनाडि : । त्रि० काये ॥ नाडीतन्त्र्यो : स्वाङ्ग इति नकप् ॥

वहुनाडीक : । त्रि० स्तम्भे ॥ दिवसे ॥ वह्वीर्नाड्योयस्मिन् । कप् ॥

वहुनाद : । पुं० शङ्खे ॥

वहुनामा । पुं० असङ्ख्यातनामनि परमेश्वरे ॥ वहूनि नामानि यस्य ॥ सर्वाण्येतानि नामानि परस्य ब्रह्मणो हरेरिति पुराणोक्ते : ॥

वहुपट् । त्रि० ईषदूनेपटौ । वहुपु ष्कर्मसुदक्षे ॥

वहुपत्र : पुं० पलाण्डौ अ० अभ्रके ॥ त्रि० अनेकपत्रयुक्ते ॥

वहुपत्रा । स्त्री० तरुणीपुष्पे ॥

वहुपत्रिका । स्त्री० भूम्यामलक्याम् । मेथिकायाम् ॥ महाशतावर्याम् ॥

वहुपत्री । स्त्री० लिङ्गिन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ जतुकाकायाम् ॥ वृहत्याम् ॥ गोरक्षदुग्धायाम् ॥

वहुपर्ण : । पुं० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्रयुक्ते ॥

वहुपर्णिका । स्त्री० आखुकर्ण्याम् ॥

वहुपर्णी । स्त्री० मेथिकायाम् ॥

वहुपात् । पुं० वटवृक्षे ॥ ॥ वहव : पादा यस्य । सङ्ख्यासुपूर्वस्य ॥

वहुपाद : । पुं० वटवृक्षे ॥

वहुपुत्र : । त्रि० अनेकसुतविशिष्टे ॥

वहुपुत्रा । स्त्री० भूम्यामलक्याम् ॥

वहुपुत्री । स्त्री० शतमूल्याम् ॥

वहुपुष्प : । पुं० पारिभद्रवृक्षे ॥

वहुपुष्पिका । } स्त्री० { धातक्याम् ॥
वहुपुष्पी ।

वहुप्रज : । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥

वहुप्रतिज्ञ : । पुं० अनेकपदसङ्कीर्णपूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥

वहुप्रद : । त्रि० अतिदातरि । वदान्ये । दानशौण्डे । वहुप्रददाति । प्रेदाज्ञ इति क : ॥

वहुप्रसू : । स्त्री० कमिलायाम् । वहुसन्तानप्रसवकारिण्याम् ॥

वहुफल : । पुं० कदम्बे । नीपे ॥ वि

फङ्गते ॥ रीछ : फली ॥
बहुफला । स्त्री॰ भूम्यामलक्याम् ॥ घविकायाम् ॥ मापपर्ण्याम् ॥ काकमाच्याम् ॥ चपुष्याम् ॥
बहुफलिका । स्त्री॰ भूबदर्याम् ॥
बहुफली । स्त्री॰ आमलक्याम् ॥ मृगेर्वारौ ॥
बहुफेना । स्त्री॰ सातलायाम् ॥
बहुबल : । पुं॰ सिंहे ॥ त्रि॰ अतिशयबलयुक्ते ॥
बहुमञ्जरी । स्त्री॰ तुलस्याम् ॥
बहुमत : । त्रि॰ बहूनांसम्मते ॥ नाल्पसंस्कृतैर्नैवनात्यन्तदेशभाषया । कथांगोष्ठीषुकथयंल्लोकेबहुमतोभवेत् ॥
बहुमल : । पुं॰ सीसके ॥ त्रि॰ घने मलयुक्ते ॥
बहुमार्ग : । पुं॰ न॰ चत्वरे ॥ बहूनां मार्ग : समाहारोवा । त्रि॰ अनेकपथयुक्ते ॥
बहुमूर्ति : । स्त्री॰ वनकार्पासे ॥ त्रि॰ नानाकारे ॥
बहुमूर्द्धा । पुं॰ विष्णौ ॥
बहुमूल : । पुं॰ इत्कटे ॥ शिग्रौ ॥ स्थूलशरे ॥ त्रि॰ अनेकमूलयुक्ते ॥
बहुमूलक : । पुं॰ इत्कटे ॥ न॰ उशीरे ॥
बहुमूला । स्त्री॰ शतावर्याम् ॥
बहुमूली । स्त्री॰ माकन्द्याम् ॥

बहुमूल्य : । त्रि॰ महाधने । महार्घवस्तुनि ॥
बहुयाज्य : । पुं॰ अनेकयजमाने ॥ बह्वीभूर्यासोयाज्यायाजनीयायस्य ॥
बहुरश्मिका । स्त्री॰ मेदायाम् ॥
बहुरसा । स्त्री॰ महाज्योतिष्मत्याम् ॥
बहुरहा । स्त्री॰ कन्दगुडूच्याम् ॥
बहुरूप : । पुं॰ शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ बुद्धभेदे ॥ केशे ॥ युगभेदे ॥ बालयुवादिरूपे देवनरादिरूपेजीवे ॥ बहुरूपइवभातिमाययायद्बहुरूपया । रसमात्रोगुणोयस्माममाबलितिमन्यते ॥ नानाकृतिगम्यत्वात्॰ बहूनिरूपाण्यस्य ॥ त्रि॰ नानारूपयुक्ते ॥
बहुरूपक : । पुं॰ जाहकजन्तौ ॥
बहुरूपा । स्त्री॰ दुर्गायाम् ॥
बहुरेखा । स्त्री॰ प्रचुरदीर्घचिन्तायाम् ॥ बहुरेखायुक्तायाःस्त्रियाद्दीर्घायथा । रेखाभिर्बहुभि : क्लेशंस्वल्पाभिर्धनहीनताम् । रक्ताभि : सुखमाप्नोतिकृष्णाभि:प्रेष्यतांव्रजेत् ॥
बहुरेता : । पुं॰ ब्रह्मणि ॥
बहुरोमा । पुं॰ मेषे ॥ त्रि॰ लोमशे ॥
बहुल : । पुं॰ अग्नौ ॥ कृष्णपक्षे ॥ न॰ विडालवणे । आकाशे ॥ सितमरिचे ॥ त्रि॰ प्राज्ये ॥ कृष्णवर्णे ॥ बहूनूपर्थानुलाति । ला॰ । आतो

नुमैतिक : ॥ बहूनिबीजानिलाति वा ॥
बहुलगन्धा । पुं॰ एलायाम् ॥
बहुलच्छद: । पुं॰ रक्तशिग्रौ ॥
बहुलधयाम् । न॰ चौषधौ ॥
बहुलवल्कल : । पुं॰ भूर्जे ॥ चारे पियाले ॥
बहुला । स्त्री॰ नीलिकायाम् ॥ एलायाम् ॥ गवि । धेनौ ॥ देवीविशेषे ॥ टाप् ॥
बहुला : । स्त्री॰ भूमि॰कृत्तिकासु ॥
बहुलिमा । पुं॰ । बहुलत्वे ॥ बहुलस्वभाव : । इमनिच् ॥
बहुलीकृतम् त्रि॰ अपनीततुच्छधान्ये धान्यादौ । पूते ॥ अबहुलंबहुलमकारि । अभूततद्भावेच्चि : । ष त्वम् ॥
बहुवचनम् । न॰ येनवहवोर्थाउच्यन्ते तस्मिन् ॥ बहूनामर्थानांवचनम् । वचे : करणेल्युट् । कर्मणिषष्ठी समास : ॥
बहुवल्क : । पुं॰ प्रियाले ॥
बहुवर्मी । स्त्री॰ छोडिचुपे ॥
बहुवार : । पुं॰ उद्दाले । शेलौ । श्लेष्मांतके । लसोडा॰ इ॰ भा॰ ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनुत् । मधुरस्तुवरस्तिक्त: केश्यश्च कफपित्तहृत् ॥ फलमामन्तुविष्टम्भि रूक्षंपित्तकफास्त्रजित् । तत्पक्वं मधुरंस्निग्धंश्लेष्मलंशीतलंगुरु ॥
बहुवारक : । पुं॰ श्लेष्मांतके । बहुवारे ॥ बहून्वारयति । ण्वुल् । शिल्पिन : । क्षुन्शिल्पिसंज्ञयोरपूर्वस्यापि ॥
बहुविध : । त्रि॰ विविधे । नानारूपे । पृथग्विधे ॥ बहवोविधायस्य ॥
बहुविस्तीर्णा । स्त्री॰ कुचिताकाम् ॥
बहुवीजम् । न॰ गरुडगाने । आताफ्ये ॥
बहुवीर्य : । पुं॰ विभीतके ॥ तरुड़लीयशाके ॥ शाल्मलिवृक्षे ॥ मरुवे ।
बहुवीर्या । स्त्री॰ भूम्यामलक्याम् ॥
बहुव्रीहि : । पुं॰ प्रायोन्यपदार्थप्रधानेसमासविशेषे ॥ सचसप्तधा । द्विपद: । बहुपद: संख्योत्तर:'संख्योभयपद:॰दिगन्तराललक्षण: व्यतिहारलक्षण : सहपूर्वपदश्चेतिभेदात् ॥ त्रि॰ प्रचुरधान्ययुक्ते ॥
बहुशत्रु : । पुं॰ चटके ॥
बहुशल्य : । पुं॰ रक्तखदिरे ॥ त्रि॰ अनेकशल्ययुक्ते ॥
बहुश : । अ॰ भूरिशब्दार्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥
बहुशाख : । त्रि॰ अनेकभेदे ॥
बहुशाल : । पुं॰ स्नुह्याम् ॥
बहुशिखा । स्त्री॰ जलपिप्पल्याम् ॥
बहुश्रवा । स्त्री॰ शल्लकीतरौ ॥
बहुसन्तति : । पुं॰ त्वक्सारभेदे ।

वैदुर्यास॰ इ॰ गी॰ भा॰ ॥ वि॰ अनेकसम्मानवति ॥

बहुसम्पुट : । पुं॰ विष्णुकन्दे ॥

बहुसार : । पुं॰ खदिरे ॥

बहुसुता । स्त्री॰ शतमूल्याम् ॥

बहुसू । स्त्री॰ शूकर्याम् ॥ बहुप्रसवायाम् ॥

बहुसूति : स्त्री॰ परिष्टुकायाम् । बहु मत्यायगयि ॥ बह्वीसूतिर्यस्या : ॥ बहुसन्तानप्रसवायाम् ॥

बहुस्वा । स्त्री॰ शतकोशर्यां ॥ नाना स्वरयुक्तायाम् ॥

बहुस्वन : । पुं॰ पेचके ॥ वि॰ अनेक शब्दयुक्ते ॥

बहुपत्य : । पुं॰ शूकरे ॥ मूषके ॥ वि॰ बहुसन्तानयुक्ते ॥

बह्वाशी । वि॰ बहुभोजनशीले ॥ बह्वा शाविशिष्टे ॥

बह्वी । स्त्री॰ बहुर्वे । बह्वादित्वात् ङीष् ॥

बह्वृक् । स्त्री॰ ऋग्वेदे ॥ न॰ सूक्त विशेषे ॥

बह्वृच : । पुं॰ ऋग्वेदिनिब्राह्मणे ॥ बह्व्यऋचोऽध्येतव्यायेन । ऋक् पूरित्य : ॥

बह्वृची । स्त्री॰ ऋग्वेदाम् । ऋग्वे दशाखाध्येत्र्याम् ॥ बह्व्यऋचोऽ ध्येतव्यायस्यासेतिविग्रह । अनृच बह्वृचावध्येतर्येवेतिवचनात् ॰ ऋक्पूरित्यप्रत्यय समासान्त । यद्यपि॰ स्त्रीणांस्वाध्यायाध्ययनं प्रतिषिद्धम् ॰ तथापिपुराकल्पे त्वेतदासीत् । यथा । पुराकल्पे पुनारीणामौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्रीवच नं तथे तियमवचनात् ॥ शौनस्त्व वरणं : सर्वेतिजातित्वात् ङी ष् ॥

बा । स्त्री॰ गतौ ॥ गन्धने ॥ तत्सं तापे ॥

बाढम् । न॰ दृढे ॥ प्रतिज्ञायाम् ॥ भृशे । अतिशये ॥ बाहते । बाहृ प्रयत्ने । क्षोभादि । गत्यर्थेति क्तप्रत्यये॰क्षुब्धस्वान्तेतिनिपातित म् । वि॰ अतिशयिनि ॥ क्रिया विशेषणे ऽव्ययीस्वम् । द्रव्यविशे षणत्वे तुवाच्यलिङ्गत्वम् ॥

बाण । पुं॰ पञ्चवर्गे ।

बाधि । स्त्री॰ बन्धादीनापनक्रिया याम । वृत्तौ ॥

बाणिज : । पुं॰ वणिजि ॥ बाडवाऽ ग्नौ ॥ पचते । पच॰ । पणे रिज्या देशश्च । स्वार्थे प्रज्ञाद्यण् ॥

बाणिजक । पुं॰ वणिजि । बाडवा ग्नौ । धूर्ते ॥

बाणिज्यम् । न॰ सत्यानृताख्यवै श्य वृत्तौ । वणिज्यायाम् । क्रयविक्रया दिलक्षणे वणिजकर्मणि । वणि जाकर्म भावोवा । ब्राह्मणादित्वा

सिताधिकत्वम् ॥ त्रि० बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

बाधिर्य्यम् । न० बधिरत्वे ॥ बधिरस्य भावः । ष्यञ् ॥ कर्णरोगविशेषे । तस्य निदानम् बधिरेऽवलोकनीयम् । औषधम् । शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् । शतं चतुर्गुणं दद्यात्तैलमेतैर्विपाचयेत् । बाधिर्यकर्णशूलस्य पूयस्रावस्य कर्णयोः । क्रमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥

बाध्य : । त्रि० निराकरणयोग्ये । बाधितव्ये । बाधनीये ॥ न्यूनत्वबाधस्य हेतुः ॥

बांधकिनेय : । पुं० बंधुले । असतीसुते ॥ कौलटेये ॥ बंधक्या अपत्यम् । स्त्रीभ्योढगित्याद्यधिकृत्य दिनकादेश्च ॥

बांधव : । पुं० मित्रे । सुहृदि ॥ सगोत्रे । बंधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधाः । आत्मबांधवाः पितृबांधवा मातृबांधवाश्चेति । यथोक्तम् । आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबांधवाः ॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबांधवाः ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवाः ॥ इति ॥ बंधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री० दुर्गायाम् ॥ पश्यबाभ्रवीम् ॥

बारक : । पुं० अश्वगतौ ॥ त्रि० निषेधके ॥

बारकी । पुं० अश्वे ॥ भिषाश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

बारकीर : । पुं० द्वारपालके ॥ वाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

बारण : । पुं० मतङ्गजे ॥ न० प्रतिषेधे ॥

बारबाण : । पुं० कञ्चुके ॥

बार्वटीर : । पुं० रङ्गे । चम्पुषि ॥ आम्रास्थ्नि । अङ्कुरे ॥ गणिकासुते ॥

बाल: । पुं० कुन्तले । चिकुरे । कचे ॥ अश्वस्य बालधौ । किशोरे ॥ अश्वस्य बालधौ । इभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयदन्तिनि ॥ य० । पञ्चवर्षो गजो बालः स्यात्पोतो दशवर्षकः । इति ॥ पुच्छे ॥ मत्स्यविशेषे ॥ पुं० न० ह्रीवेरे । बर्हिष्ठे । उदीच्ये । बाला० इ० अ० गन्धद्रव्ये । सुगन्धिबाला० इ० च० भा० ॥ त्रि० मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पवयस्के ॥ अर्भ

संप्रकीर्तितावसानारे । मयान्तलब्धे पू
र्वसप्तिसप्तागिनि ॥ मुनिविशेषेषु
॥ कैशजाताबालखिल्या : ॥ येके
मासे बालखिल्या इतिश्रुतिः ॥

बालगर्भिणी । स्त्री॰ प्रथमगर्भवत्यां
गवि । प्रष्ठौह्याम् ॥ बालाचा-
सौगर्भिणीचे ॥

बालगोपाल : । पुं॰ श्रीकृष्णमूर्त्ति
विशेषे ॥

बालग्रह : । पुं॰ बालकर्त्तृग्रहविशेषे
॥ यथा बालग्रहाअनाचारात्पी
डयन्तिशिशुंयत : । तस्मात्तदुप-
सर्गेभ्योरक्षेद्बालंप्रयत्नत : ॥ ग्रहते-
षांनामानि । स्कन्दग्रहस्तुप्रथम :
स्कन्दापस्मारएवच । शकुनीरेवती
चैवपूतनागन्धपूतना । पूतनाशी-
तपूर्वाचतथैवमुखमण्डिका । नव
मोनैगमेयश्चप्रोक्तावालग्रहामसी ॥

बालचर्य्य : । पुं॰ शिवसेने ॥ कार्त्ति
केये ॥

बालजीवनम् । न॰ क्षीरे । दुग्धे ॥

बालतनय : । पुं॰ खदिरे ॥ बाला :
तनया : पत्राण्यस्य ॥ बालकपुत्रे ॥

बालतन्त्रम् । न॰ कुमारभृत्यायाम् । ग
र्भिण्यादिवैद्यके । बालचिकित्सायाम् ॥

बालतृणम् । न॰ शष्पे । नवतृणे ॥
बालतृणम् ॥

बालधि : । पुं॰ केशसंयुते लाङ्गूले ॥
बालाधीयन्तेऽत्र । कर्मण्यधिकरणे

रिति : ॥

बालपत्र : । पुं॰ खदिरे ॥ यवासे ॥
दुरालभायाम् ॥ न॰ नूतनपर्णे ॥

बालपत्रक : । पुं॰ खदिरवृक्षे ॥

बालपाश्या । स्त्री॰ पारितथ्यायाम् ।
सीमन्तस्थितस्वर्णादिपट्टिकाया
म् ॥ यन्द्री॰ वैद्यौ॰ पू॰ भा॰ ।
सिंति॰ दू॰ गौ॰ भा॰ ॥ बालपाशि
॥ कीमसमूहेसाधु : । तत्रसाधुरिति
यत् ॥ बालेषुपाश्यापाशसमूहोवा ॥

बालपुष्पिका । बालपुष्पी । स्त्री॰ यूथिकायाम् ॥

बालभद्र : । बालभद्रक : । पुं॰ विषभेदे । शाङ्ग वे ॥

बालभैषज्यम् । न॰ रसाञ्जने ॥ बाल
स्त्रीषधे ॥

बालभोज्य : । पुं॰ चणके ॥ त्रि॰ बा
लकभक्षणीये ॥

बालमुकुन्द : । पुं॰ श्रीविष्णोर्मूर्त्यन्तरे
॥ यथा । करारविन्देनपदारविन्दं
मुखारविन्देविनिवेशयन्तम् । वट
स्यपत्रस्यपुटेशयानं बालंमुकुन्दंमन
सास्मरामि ॥

बालमूलकम् । न॰ लघुमूलके ॥ मूल
कंबालकंकच्चंस्वर्द्धीयं पाचनं लघु ।
दोषत्रयज्वरश्वासनासात्यक्षाचिरो
गनुत् ॥ तदेवसत्वेवरूक्षोष्णं गुरुदो
षत्रयप्रदम् । तच्चस्विन्नं सदेवस्यात्दो
षत्रयविनाशनम् ॥

धुक्‌दीर्घह्रकारास्येतिकुर्वद्याऽनृत्य स ॥ सगर्ये० पुं० ॥ रवेः पार्श्वगे ॥

बाहुक : । पुं० नलाभिधनृपे । पुण्यश्लोके । अश्वविदि । नैषधे ॥ त्रि० बाहुभ्यांतरतियस्तस्मिन् ॥ नौद्व्यचञ्चम् । स्त्रियाम्० । बाहुका ॥

बाहुकुण्ठ : । त्रि० कुण्ठिताबाहुयस्य । कुम्भे । दोर्गण्डी ॥

बाहुकुन्थ : । पुं० गरुति । पक्षे । पतत्रे । षड्रत्न० द्र० भा० ॥

बाहुज : । पुं० क्षत्रिये । कीरे ॥ स्वयञ्जाततिले ॥ त्रि० बाहुजाते ॥ बाहुभ्यांजात : । पञ्चम्यामजातादिविति डः ॥ बाह्वोर्जातोवा । सप्तम्यांजनेर्डः ॥

बाहुत्राणम् । न० अस्त्राघातवारणार्थं बाहुवस्त्रीशादौ । बाहुली ॥

बाहुदन्ती । पुं० इन्द्रे ॥

बाहुदा । स्त्री० तीर्थविशेषे ॥ सैतवाहिन्यांनद्याम् ॥ कदाचिल्लिखित-तस्यर्षे भ्रातुः शून्याश्रमेफलभक्षणाद्राज्ञावाहुच्छिन्नौ० तीव्रायांतस्यां स्नानात्सञ्जाताविच्चत : ० बाहू० छिन्नौदत्तयस्तोलिखितस्यर्षे : । डुदाञ्० ॥ आतोनुपसर्गेक : ॥ यद्वा । बहुदत्सुवार्त्तवीर्यस्येयम् । सेनावतारितत्वात् । तस्येदमित्य-

ण् ॥

बाहुभूषा । स्त्री० केयूरे ॥ बाहुभूषणमात्रे ॥

बाहुमूलम् । न० कक्षे । कान्द० द्र० भा० ॥ बाह्वोर्मूलम् ॥

बाहुयुद्धम् । न० नियुद्धे । दोर्भ्याम् सङ्ग्रामे । बाहुभिर्युद्धम् ॥

बाहुल : । पुं० कार्त्तिकमासे । कार्त्तिके ॥ बहुलाःकृत्तिका० तयायुक्तापौर्णमासी० बाहुली । बाहुलीपौर्णमास्यस्मिन् । अस्मिन्पौर्णमासीत्यण् ॥ अग्नौ ॥ शाक्यमुनेः सुते । यशोधरेये ॥ न० बाहुत्रणे ॥

बाहुलकम् । न० प्राचुर्ये ॥ यथा । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानम् बहुधासमीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ बहुलस्यभाव : । द्वन्द्वमनोज्ञादिभ्यश्चेतिवुञ् ।

बाहुलेय : । पुं० कार्त्तिकेये । गुहे । स्कन्दे ॥ बहुलानां कृत्तिकानाम पत्यम् । स्त्रीभ्योढक् ॥

बाहुल्यम् । न० बहुत्वे । बहुलस्यभाव : । ष्यञ् ॥

बाहुशर्द्धी । पुं० इन्द्रे ॥ बाह्वोः स्वोवयोर्वीर्यश्रद्धीनरांयस्य ॥

बाहुसहस्रभृत् । पुं० कार्त्तवीर्यार्जुने ॥ बाहूनांसहस्रम्० बिभर्त्ति

चिप्रं करोसि खलु पीनसमं पक्वाप-
क्वास्यतीव मधुराफलकारिणीच ॥
सु॰ रा॰ नि॰ ॥

वालुङ्का। वालुङ्की। (स्त्री॰) दूर्वारी। कर्कट्याम् ॥

वालूक :। पुं॰ विषप्रभेदे।

वालेय :। पुं॰ गर्दभे ॥ रासभे ॥ अङ्गारवल्लर्याम् ॥ दैत्यविशेषे ॥ चाणक्यमूलके ॥ त्रि॰ मृदौ। कोमले ॥ बलिहिते। बल्यर्थे। पूजायोग्ये बलये उपहाराय हितम्। छदिरुपधिबलेर्ढञ् ॥ दधिरपत्यं वा। गृष्ट्यादित्वात् ढञ् ॥

वालेयशाक :। पुं॰ अङ्गारवल्ल्याम्। बर्बरे। भार्ग्याम्। वालेयस्य शाकः। गर्दभभक्ष्यशाकत्वात् ॥

वालिष्ट :। पुं॰ बटरे ॥ त्रि॰ बालकाभिलषिते ॥

वालोपवीतम्। न॰ वालाङ्गपरिधान-वस्त्रे। पच्चावटे ॥

वाल्मीकि :। पुं॰ मुनिविशेषे। रामायणकर्तरि ॥ वल्मीकस्य अपत्यम्। वल्मीकप्रभवो यस्मात्तस्माद्वाल्मीकिरित्यसौ ॥ इति ब्रह्मवैवर्तोक्तेर्वल्मीकप्रभवत्वेन गौणपुत्रादिवद्गौणमस्य वल्मीकापत्यत्वं गृहीत्वैव साधुरपत्यार्थः ॥ यद्वा। वल्मीक इति ऋषिविशेषस्य संज्ञेत्याहुः ॥

वाल्मीकीय :। त्रि॰ वाल्मीकिसम्बन्धिनि ॥ तस्येदमित्यर्थे। वृद्धाच्छः ॥

वाल्यम्। न॰ अवस्थाविशेषे। शैशवे ॥ तिथिर्यावदर्भकं बाल्यमित्युक्तेः षोडशवर्षपर्यन्तावस्थायामित्यर्थः ॥ चापल्ये ॥ ज्ञानिनोऽवस्थाविशेषे। ज्ञानमनाविष्कुर्वन्नगर्वितत्वे। दम्भदर्पाहङ्कारादिराहित्ये। युक्तितः श्रुतार्थानुसन्धानकुशलत्वे ॥ बालस्य भावः कर्म वा। ब्राह्मणादित्वात्ष्यञ्। पुरोहितादित्वाद्यक्वा ॥

वाष्प :। पुं॰ न॰ नेत्रजले। ऊष्मणि ॥ बाधते नेत्रम्। बाधृ॰। खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः। इति पप्रत्ययः ॥ धातोः धादेशश्च निपात्यते ॥ बाष्पमूष्माश्रु॰ इत्यमरः ॥

बाहु :। पुं॰ स्त्री॰ कक्षाद्यङ्गुल्यन्तावयवविशेषे। भुजे। प्रवेष्टे। दोष्णि। बाहा॰ इ॰ भा॰ ॥ अस्य शुभाशुभलक्षणं यथा। महद्बाहुः पुरुषो धनधान्यवान् भवेत्। दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ॥ प्रलम्बबाहुरैश्वर्यं प्राप्नुयाद्बहुसंयुतम्। ह्रस्वबाहुर्भवेद्दासः परप्रेष्यकरस्तथा। वामावर्तभुजा ये तु ये च दीर्घा नरः। संपूर्णबाहवो ये तु राज्याः क्षेत्रकीर्तिता इति॰ ॥ कूर्परस्योर्ध्वभागे ॥ बाधते। बाधृ॰। अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्

युक्दीर्घहकारार्थ इति कुर्क्याऽनृत्य स्य । सगरे० पुं० । रवेः प्राग्वं गे ॥

बाहुकः । पुं० नलाभिधनृपे । पुण्य श्लोके । अश्वविदि । नैषधे ॥ त्रि० बाहुभ्यांतरतियस्तस्मिन् ॥ नौद्व्यघटन । स्त्रियाम् । बाहु का ॥

बाहुकुण्ठः । त्रि० कुण्ठितबाहुयुक्ते । कुम्रे । शीर्णस्त्री ॥

बाहुकुन्थः । पुं० गकति । पक्षे । पतत्रे । पड्क० द्व० भा० ॥

बाहुजः । पुं० क्षत्रिये । कीरे ॥ स्वयञ्जाततिले । त्रि० बाहुजाते ॥ बाहुभ्यांजातः । पद्मभ्यामला तावितिडः ॥ बाहोर्जातोवा । स प्तम्यांजनेर्डः ॥

बाहुत्राणम् । न० भस्त्राघातवारणा र्थबाहुवस्त्रीरादौ । दाकृषे ॥

बाहुदन्ती । पुं० इन्द्रे ॥

बाहुदा । स्त्री० तीर्थविशेषे । मैत वाहिन्यांनद्याम् । कदाचिल्लिखि तस्यर्षे भ्रातुः शून्याश्रमेफलभक्ष णाद्राज्ञाबाहुच्छिन्नौ तीचास्यांतप स्यतस्तस्यजातावित्यतः । बाहु० छिन्नौददतीलिखितर्षेः । डुदा ञ्० । पातीनुमेतिकः ॥ यद्वा । बहुदस्यकार्त्तवीर्यस्येयम् । ते नावतारितत्वात् । तस्येदमित्य

ण् ॥

बाहुभूषा । स्त्री० केयूरे ॥ बाहुभूष णमात्रे ॥

बाहुमूलम् । न० कक्षे । काख० इ० भा० ॥ बाहोर्मूलम् ॥

बाहुयुद्धम् । न० नियुद्धे । दोर्भ्याम् सङ्ग्रामे । बाहुभिर्युद्धम् ॥

बाहुलः । पुं० कार्त्तिकमासे । अग्नौ ॥ बहुलाःकृत्तिकाः० तयायुक्तापौर्ण मासी० बाहुली । बाहुलीपौर्ण मास्यस्मिन् । सास्मिन्पौर्णमासी त्यण् ॥ अग्नौ । शाक्यमुनेः भुजे । यशोधरेये ॥ न० बाहुत्राणे ॥

बाहुल्यम् । न० प्राचुर्ये ॥ यथा । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधे र्विधानम् बहुधासमीक्ष्य चतुर्वि धं बाहुलकं वदन्ति ॥ बहुलस्यभा वः । ब्रह्मणोऽज्ञादिभ्यष्यं इति ष्य ञ् ।

बाहुलेयः । पुं० कार्त्तिकेये । गुहे । स्कन्दे ॥ बहुलानां कृत्तिकानाम पत्यम् । स्त्रीभ्योढक् ॥

बाहुल्यम् । न० बहुत्वे । बहुलस्य भावः । ष्यञ् ॥

बाहुशर्द्धी । पुं० इन्द्रे ॥ बाह्वोः स्तोययोरिवशर्द्धोबलंयस्य ॥

बाहुसहस्रभृत् । पुं० कार्त्तवीर्यार्जुने ॥ बाहूनांसहस्रम् । बिभर्त्ति ।

हु भृञ् । क्रिप् । तुक् ॥

वाहूवाहवि । अ० वाहुयुद्धे ॥ बाहुभ्यांबाहुभ्यांप्रहृत्येदं युद्धं प्रवृत्तम् । तथते नेदमितिसरूपे० इतिच्छन्द्रौ श्रौ० इच् कर्म व्यतिहारदृतीच समासान्तः । अन्येषामपिदृश्यत इतिदीर्घः । बोर्गुणः । अव् । तिष्ठद्गुप्रभृतिषु पाठाद्व्ययीभावाद्व्ययत्वम् ॥

विदूरः । पुं० देशविशेषे ॥ वृषवाल वायज : संस्क्रियते ॥

विभित्सा । स्त्री० भेत्तुमिच्छायाम् ॥ भिदिर्० । सन् हलन्ताच्चेति कित्वाद्गुणाभावः । अप्रत्ययादित्यकारप्रत्यये० टाप् ॥

विभ्यत् । त्रि० बिभ्यमाने ॥ बिभेतेः शतरि० नाभ्यस्ताच्छतुरितिनुमभावः ॥

विभाषः । त्रि० दधाने ॥ भञः शार्तविधानञ् ॥

वीभत्सः । पुं० अर्जुने । पार्थे ॥ त्रि० क्रूरे ॥ घृणात्मनि ॥ विकृते ॥ रस विशेषे ॥ जुगुप्सास्थायिभावस्तुवीभत्सःकथ्यतेरसः । नीलवर्णोमहाकाल दैवतोयमुदाहृत ; ॥ बधेर्निन्दायांसन् । भावे० घञ् ॥ यद्वा । अप्रत्ययात् । वीभत्साऽस्त्यस्य । अर्श आदच् ॥ यद्वा । वीभत्सते० वीभत्स्यतेवाऽनेनवा । बधबन्धने । सन्तः । मान्बधेत्यभ्यासदीर्घः । पचाद्यच् ० घञ् ० वोवा ॥

वीभत्सा । स्त्री० वीभत्से ॥

वीभत्सुः । पुं० अर्जुने । विजये ॥

बुक्कः । पुं० बुक्के ॥

बुक्कः । पुं० छागे ॥ न० अग्रमांसे । बुक्कायाम् ॥ बुक्कते । खादुत्वात् बुक्कते । बुक्कभषणे । घञ् ॥ हृदये ॥ पुं० स्त्री० समये० इतिरभसः ॥

बुक्कनम् । न० भषणे । श्वरवे ॥

बुक्का । स्त्री० बुक्के । हृदयान्तर्गतमांसविशेषे ॥ मेदः शोणितयोः सारात् बुक्कयोर्गलभवेत् । तौतुपुष्टिकरौप्रोक्तौजठरस्थस्य मेदसः ॥ हृदये ॥

बुक्कारः । पुं० सिंहनादे वीरध्वनी ॥

बुक्की । स्त्री० बुक्के ॥

बुक्किलः । पुं० ऋषिविशेषे । आश्वतराश्वी ॥

बुद्धः । पुं० सर्वज्ञे । पिचव्ये । विदुषि । पण्डिते ॥ परमार्थदर्शिनि । ब्रह्मविदि ॥ विष्णोरवतारविशेषे । सर्वज्ञे । सुगते । धर्मराजे । जिने । चलिनसुते । मुनीन्द्रे ॥ यथा । ततः कलौसंप्रवृत्ते सम्मोहायसुरद्विषाम् । बुद्धोनाम्नाऽजिनसुतः कीकटेषुभविष्यति ॥

ज्ञानमिल्यनर्थान्तरम् । नतुसाङ्ख्या नामिव॰बुद्धितत्त्वस्य॰महत्तत्वापर पर्यायस्यपरिणामविशेषोज्ञानम् । तथाच॰बुद्ध्यादिपदवाच्यत्वमनुभव सिद्धज्ञानत्वजातिरेववा॰लक्षणम् ॥ ज्ञानस्त्रभार्यायाम् । यथामेधा र्म् । मतौ । शेमुष्याम् ॥ चाध्यात्म बुद्धिरित्याहुःषडिन्द्रियविचारिणी । अधिभूतश्चमन्तव्य ब्रह्मातस्याधि दैवतम् ॥ इत्याश्वमेधिकपर्व । स- त्त्वादिगुणभेदेनबुद्धेर्वैविध्यमीरितम् । गीतायांवासुदेवेनचार्जुनायानु पृच्छते । यथा । प्रवृत्तिंचनिवृत्तिंच कार्याकार्येभयाभये । बन्धंमोक्षंच यावेत्तिबुद्धि : सापार्थसात्त्विकी । १ ॥ ययाधर्ममधर्मंचकार्यंचाकार्य मेवच । अयथावत्प्रजानातिबुद्धिः सापार्थराजसी ॥ २ ॥ अधर्मंधर्म मितियामन्यतेतमसावृता । सर्वा र्थान्विपरीतांश्चबुद्धि:सापार्थतामसीति ॥ ३ ॥ भारतेमोक्षधर्मेस्यागु णा : पञ्चप्रकीर्तिता : । यथा । इ ष्टानिष्टविपत्तिश्चव्यवसाय : समा धिता । संशयः प्रतिपत्तिश्चबुद्धेःप ञ्चगुणान्विदुरिति ॥ इष्टानिष्टानां वृत्तिविशेषाणां॰विपत्तिर्नाश : ॰ निद्राद्युपरतिरित्यर्थ : । व्यवसाय: उत्साह : । समाधिता॰ चित्तवृत्ति निरोधइत्यर्थ : । संशय :॰ कोटि

द्वयस्पृक्ज्ञानम् । प्रतिपत्ति : प्रत्य क्षादिप्रमाणवृत्ति : ॥ इतितट्टीका ॥ अस्या:सप्तगुणायथा । शुश्रूषाश्रव णञ्चैवग्रहणंधारणन्तथा । ऊहापो होर्थविज्ञानंतत्त्वज्ञानञ्चधीगुणाः ॥ इति ॥ अस्याइत्तयःपञ्च । यथा । ॥ मानविपर्ययविकल्पनिद्रास्मृतयइ ति ॥ बुध्यतेऽनया । बुध॰ । क्तिन्॥ बुद्धितत्त्वम् न॰ बुद्धिस्वभावे ॥ तच्च प्राकृतत्वादचेतनमिति॰तदीयोध्य वसायोप्यचेतनोघटादिवत् । एवं बुद्धितत्वस्य॰सुखादयोपिपरिणाम भेदाअचेतनाः॰ एकृपस्तुसुखाद्यन नुषङ्गीचेतनः । सोयंबुद्धितत्त्ववर्ति नाज्ञानसुखादिनातत्प्रति बिम्बित स्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीतिचेतनोनुगृह्यते॰ चितिच्छा यापत्त्याच॰अचेतनापिबुद्धिस्त दध्यवसायश्चचेतनइवभवति । उक्त ञ्च । तस्मात्तत्संयोगादचेतनं चे तनावदिवलिङ्गम् । गुणकर्तृत्वेच तथा कर्तेवभवत्युदासीन इति ॥ बुद्धिधर्म : । पुं॰ धर्मादिषु । धर्मो ज्ञानंविरागऐश्वर्यम्॰सात्त्विकमेत द्रूपंतामसमस्माद्विपर्यस्तम् ॥ बुद्धिभेद : । पुं॰ बुद्धेर्विचालने ॥ बुद्धिरेषमेतत्कर्मकरिष्ये॰एतत् फलञ्चभोक्ष्ये॰ इति॰तस्याः॰ भेदो विचालनम्॰अकर्त्तात्मोपदेशेन ॥

बुद्धिभ्रंश : । पुं॰ मतेर्विपर्ययेपुपतनक र्तरि ॥ रजोगुणे ॥

बुद्धिमान् । त्रि॰ बुद्धियुक्ते । ज्ञानवति ॥ तद्भुज्यतेयद्द्विजभुक्तशेषंसबुद्धिमान्योनकरोतिपापम् आत्मज्ञानवति । विवेकिनि ॥ प्रशस्तबुद्धौ ॥ बुद्धे.प्राशस्त्यंनाम । शुश्रूषाश्रवणंचैवग्रहणंधारणंतथा ।ऊहा पोहोर्थविज्ञानंतत्त्वज्ञानञ्चधीगुणा: ॥ प्रशंसायांमतुप् ॥

बुद्धियुक्त : । त्रि॰ बुद्धिमति ॥ परमात्मसाक्षात्कारवति । समत्वबुद्ध्यायुक्ते ॥

बुद्धियोग : । पुं॰ आत्मबुद्धिसाधनभूतेनिष्कामकर्मयोगे । आत्मतत्त्वविषयेसम्यग्दर्शने ॥ अप्रचलितेनसम्यग्ज्ञानस्थैर्यलक्षणेनसमाधिनाबुध्यते इति ॥ बुद्ध्याव्यवसायात्मिकयाकृत : कर्मयोग : बुद्धियोग : ॥ बुद्धिसाधनभूतोवायोग : ॥

बुद्धिवित् । पुं॰ बौद्धे ॥ बुद्धिरेवात्मेतिबौद्धानांभ्रान्तिमात्रमेव । सुप्तेव्यभिचारात्॰वेद्यत्वाच्चघटवद् तिरिक्तवेद्यत्वात् ॥

बुद्धिसम्पत्ति : । स्त्री॰ धीमत्तौ ॥ बुद्धे : सम्पत्ति : ॥

बुद्धिसहाय : । पुं॰ धीसचिवे मन्त्रिणि ॥ मते : साहाय्यकर्तरि ॥

बुद्धिस्कन्धमय : । पुं॰ संसारवृक्षे ॥ वृक्षस्यस्थिशाखा : स्कन्धादुद्गच्छन्ति संसारस्यच बुद्धे : सकाशान्नानाविधा : परिणामाभवन्ति॰तेनसाधर्म्येण॰ बुद्धिरेवस्कन्धस्तन्मयस्तत्प्रचुरोयंसंसारवृक्ष : ॥

बुद्धीन्द्रियम् । न॰ ज्ञानेन्द्रिये । धीन्द्रिये ॥ तत्रेन्द्रियंतावत्त्रिविधंभवति । बुद्धीन्द्रियंकर्मेन्द्रियमन्तरिन्द्रियञ्च ।यथाहमनु: । बुद्धीन्द्रियाणिपञ्चश्रोत्रादीन्यनुपूर्वश : । कर्मेन्द्रियाणिपञ्चपाय्वादीनिप्रचक्षते ॥ एकादशंमनोज्ञेयंस्वगुणेनोभयात्मकम् । यस्मिन्जितेजितावेतौभवत : पञ्चकौगणाविति ॥ बुद्धे : करणत्वाद्बुद्धीन्द्रियम् । सङ्कल्परूपंधीयस्यरूपेन्द्रियगणप्रवर्तकस्वरूपम् ।मनस्त्वन्तरिन्द्रियंज्ञातव्यं। बुद्ध्यर्थमिन्द्रियं ॥

बुद्ध्यमान : । त्रि॰ गम्यमाने ॥

बुद्बुद : । पुं॰ जलस्फोटे । वर्तुलाकारेजलविकारे । बुल्बुला॰ इ॰ भा॰ ॥ यथाच्छायाप्रकाशाद्भिन्नौ प्रतिवापयेजलम् । वेश्यारागः खलेप्रीतिः पञ्चेतेबुद्बुदोपमाः ॥ गर्भस्यावयवविशेषे यथा । पञ्चरात्रेणकललंबुद्बुदाकारतांव्रजेत् ॥

बुद्बुदाक्षि : । त्रि॰ पुष्पिताक्षे ॥

बुध : । पुं॰ विदुषि । विपश्चिति । दोषज्ञे । सति । पण्डिते ॥ विवे-

क्तिनि । विवेकेनावगततत्त्वे । अ-
धिष्ठानसाक्षात्कारेणनिवृत्तभ्रमे ।
आत्मतत्त्वज्ञे । ब्रह्मविदि ॥ चतु
र्थग्रहे । रौहिणेये सौम्ये ॥ अस्य
वारेजातश्चफलम् । यथा । गुणीगु
णज्ञ : कुशल : क्रियासौविलासशी
लोमतिमान्विनीत :। मृदुस्वभा
व : कमनीयमूर्त्तिर्बुधस्यवारेप्रभवो
मनुष्य : ॥ सूर्य्यवंशीयवेगामीढनृप
स्यपुत्रे । बुद्ध्यते । बुध० । इगुप
धेतिक : ॥ बुद्धमुनौ ॥ सर्व्वज्ञ : ॥
सुगतोबुध : ॥ इ० व्याडिकोषः ॥
बुधगृहम् । न० मिथुनराशौ ॥ कन्या
राशौ ॥ बुधस्यगृहम् ।
बुधचार : । पुं० पञ्चवाराष्टौम् ॥
बुधतात : । पुं० विधौ । चन्द्रे ॥
बुधरत्नम् । न० मरकतमणौ ॥
बुधराशि: । पुं० मिथुने । कन्यायाम् ॥
बुधसुत : । पुं० पुरूरवसि ॥
बुधा । स्त्री० जटामांस्याम् ॥
बुधान : । पुं० गुरौ । जीवे । बृहस्प
तौ । त्रि० विज्ञे ॥ ब्रह्मवादिनि ॥
प्रियवादिनि ॥ बुध्यते० बोधयति
वा । बुध० । युधिबुधिदृश : किच्चे
त्यानच् ॥
बुधाष्टमी । स्त्री० व्रतविशेषे ॥ पराह्णे
मकरेयातेदेवेशायतिमाधवे । बुधा
ष्टमींप्रकुर्वीतयवान्पिष्ट्वातुचैकम्-
॥ प्रसृतेकजमश्नाचिसन्ध्याकालेसभो
तथा । बुधाष्टमींनकुर्वीतकृताहन्ति
पुराकृतम् ॥
बुधित : । त्रि० ज्ञाते । बुद्धे । विदि
, ते ॥ बुध्यतेस्म,। बुध०भ्वादि : सेट्
,।.क्त.: ॥
बुधिन : ।) बुधिल : ।) त्रि० पण्डिते ॥
बुध्नः । पुं० मूले ॥ रुद्रे । गिरिशे ॥ बध्ना
ति० बध्यतेवा । बधबन्धने । बन्धे
र्ब्रधिबुधीचेतिनक् ॥ वर्तुले । यथा
। पृथुबुध्नोदराकारोघटइति ॥
बुभुक्षा । स्त्री० क्षुधि । अशनायायाम्
॥ भोक्तुमिच्छा । भुजपालनाभ्यव
हारयो : । धातो : कर्मणइतिसन्
। अप्रत्ययादित्य : । टाप् ॥
बुभुक्षित : । त्रि० क्षुधार्त्ते । क्षुधिते ॥
बुभुक्षासञ्जाताऽस्य । तारकादित्वा
। दितच् ॥
बुभुक्षु : । त्रि० संसारभोगासक्तजने ॥
बुभुत्सा । स्त्री० बोद्धुमिच्छायाम् ॥
बुभूषु : । त्रि० भवितुमिच्छौ ॥ भुव :
सन्नन्तादुप्रत्यय : ॥
बुब्बारव : । पुं० हस्तमुखयोगेनक्रिय
माणेशब्दे ॥ कस्मिंश्चिदनर्घेसम्प्रा
प्तेएवंशब्दंलोका : कुर्वन्ति ।
यथा । गन्धाढ्यैस्तपतिंसर्वेचक्रुर्बु
ब्बारवंमुहु : । स्वरसमहाकालभक्त
यस्तदाकालिकेविभुभ्रंप्रतिरयात्
पराह्णयागतानांदैत्यानामुग्रभाग

वते ॥ धोंबी इ॰ भा॰ ॥

बुलिः । स्त्री॰ भगे ॥

बुषम् । न॰ बुसे ॥

बुसम् । न॰ तुच्छधान्ये । कडङ्गरे । भुस॰ भूसा॰ इ॰ भा॰ ॥ बुस्यति बुस उत्सर्गे । इगुपधेतिकः ॥

बुस्तः । पुं॰ न॰ मांसपिण्डविशेषे ॥ स्थालीभृष्टमांसे ॥ पनसादिफलस्यासारभागे ॥ बुस्यतिस्म । बुस॰ । क्तः ॥

बृद्धः । पुं॰ पथ्याम्लशाकादिम् ॥

बृहच्चञ्चुः । पुं॰ महाचञ्चुशाके ॥

बृहच्चित्तः । पुं॰ बीजपूरे ॥

बृहच्छल्कः । पुं॰ चिङ्गटमत्स्ये ॥

बृहच्छुकः । पुं॰ दार्यावाटे । कठकोरणा॰ इ॰ भा॰ ॥

बृहच्छ्रवाः । त्रि॰ महायशसि ॥

बृहच्छ्लोकः । पुं॰ भगवति वासुदेवे । बृहन्तः श्लोकाः कीर्त्तयो यस्मिन् ॥

बृहज्जीरकः । पुं॰ कृष्णजीरके ॥ मगरैला इति लोके इति भावप्रकाशः ॥

बृहज्जीवन्ती । स्त्री॰ क्षुपविशेषे । पत्रभद्रायाम् । जीवपुष्टायाम् ॥

बृहड्ढक्का । स्त्री॰ दण्डढक्कायाम् ॥

बृहत् । त्रि॰ महति ॥ वर्द्धते । बृह वृद्धौ ॥ वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्चेति प्रत्ययान्तो निपातितः ॥ ब्रह्मणि ॥ बृहत्त्वाद्बृंहणत्वाच्च ब्रह्म बृहत् । अत्राधिप्रत्ययेन हेतुकर्तृसाधारणकर्तृत्वसामान्यं प्रतिपाद्यते । वर्द्धते वृद्धिं प्राप्नोति बृंहयति वर्द्धयति चेति योगात् । तथा च बृंहिधात्वर्थवृद्धिं प्रति स्वतन्त्रो हेतुकर्त्ता चेत्थं भवमपि कर्तृत्वेन रूपेण लभ्य-तद्वति वर्द्धिता वर्द्धयिता चेति बृहत्पदेनोच्यते ॥ आदित्यदैवत्ये सामविशेषे ॥ बृहत्साम तथा साम्नामिति भगवदुक्तेः ॥

बृहतांपतिः । पुं॰ सुराचार्य्ये ॥

बृहतिका । स्त्री॰ उत्तरीये । उपरिवस्त्रे । उपर्ना॰ इ॰ भा॰ ॥ बृहती वस्त्रान्तरं बृहत्येव । बृहत्या माच्छादने॰ इति कन् ॥ कण्टकार्याम् ॥

बृहती । स्त्री॰ वसनान्तरे ॥ वारिधान्याम् ॥ वाचि ॥ विततायाम् ॥ महत्याम् ॥ क्षुद्रायां क्षुद्रवार्त्ताक्याम् बृहतीति निगद्यते । अङ्गे तु क्षुद्रा चन्द्रहासा लक्ष्मणा चेद्धृतिका ॥ गर्भदा चन्द्रभा चन्द्रा चन्द्रपुष्पा प्रियङ्करी ॥ बृहतीयाद्वयं ग्राहि पाचकं कफवातहृत् । कटुतिक्तास्यवैरस्यमलारोचकनाशिनी । तथा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित् ॥ कण्टकार्याम् ॥ विश्वावसोर्वीणायाम् ॥ नवाचरायां वृत्तौ ॥ वर्द्धति । वृह॰ । वर्तमाने पृषदिति साधुः । शतृवत्त्वान्ङीप् ॥

बृहतीपति : । पुं॰ बृहस्पतौ ॥
बृहतीसहस्रम् । न॰ मद्दत्कृथे ॥
बृहत्कन्द : । पुं॰ गृञ्जने ॥ विष्णुकन्दे ॥
बृहत्कालशाक : । पुं॰ कासमर्दान्तरे ॥
बृहत्काष्ठ : । पुं॰ पीटशाके ॥
बृहत्कुक्षि : । वि॰ तुन्दिले ॥ विशालजठरेजने ॥ बृहत्कुक्षिरस्य ॥
बृहत्ताल : । पुं॰ पाठायाम् ॥
बृहत्तृण : । पुं॰ वंशे ॥
बृहत्त्वक् । पुं॰ सप्तपर्णे ॥ रोध्रे ॥ यवनामनवृक्षे । क्षातिमान् । द॰ भा॰ ॥
बृहत्पत्रमूलम् । न॰ पद्ममूले ॥
बृहत्पत्र : । पुं॰ दीर्घपत्रे ॥ पट्टिकालोध्रे ॥ हस्तिकन्दे ॥
बृहत्पत्रा । स्त्री॰ त्रिपर्णिकायाम् ॥
बृहत्पाटलि : । पुं॰ धुस्तूरे ॥
बृहत्पाद : । पुं॰ वटवृक्षे ॥
बृहत्पारेवतम् । न॰ महापारेवते ॥
बृहत्पाली । पुं॰ वनजीरे ॥
बृहत्पीलु : । पुं॰ महापीलौ ॥
बृहत्पुष्प : । पुं॰ कुलके ॥
बृहत्पुष्पी । स्त्री॰ घण्टारवायाम् ॥
बृहत्फल : । पुं॰ पनसे ॥ कुष्माण्डे ॥ चचेण्डायाम् ॥
बृहत्फला । स्त्री॰ कटुतुम्ब्याम् ॥ महेन्द्रवारुण्याम् ॥ कुष्माण्डाम् ॥

महाजम्बाम् ॥
बृहत्साम । न॰ गीतिविशेषे ॥
बृहद्गज : । पुं॰ मत्तगजे ॥
बृहद्गृह : । पुं॰ कुशाकारे । कामरूपे ॥
बृहदारण्यकम् । न॰ यजुर्वेदीयोपनिषद्विशेषे ॥ यथा । अरण्येऽध्ययनादेतदारण्यकमुदाहृतम् । बृहत्त्वाद्ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ बृहत्त्वात्तदारण्यकत्वेतिविग्रहः ॥
बृहदेला । स्त्री॰ पृथ्वीकायाम् । स्थूलैलायाम् ॥
बृहद्गुरवः । (पुं॰)भू॰ कारूषदेशेषु ॥ विन्ध्या
बृहद्गृहाः । (पुं॰)द्वि॰ पश्चान्मालवदेशस्य समीपस्थदेशावर्तन्ते ॥
बृहद्गोलम् । न॰ तरम्बुजे । तरबूज द॰ भा॰ ॥
बृहद्दल : । पुं॰ पट्टिकालोध्रे ॥ हिन्तालै ॥
बृहद्दलम् । न॰ हस्ते । शिल्यायाम् ॥
बृहद्द्वारिका । स्त्री॰ दुर्गायाम् ॥
बृहद्भानु : । पुं॰ अनले । वह्नौ ॥ बृहन्तोभानवोऽस्य ॥ चित्रके ॥
बृहद्रथ : । पुं॰ पराशरशिष्ये । शार्ङ्गरवे ॥ इन्द्रे ॥ यज्ञपात्रे ॥ मन्त्रविशेषे ॥ सामवेदांशे ॥
बृहद्रावी । पुं॰ क्षुद्रोलूके ॥
बृहद्वनम् । न॰ गोकुले ॥ महद्वने ॥
बृहद्वल्क : । पुं॰ पट्टिकालोध्रे ॥
बृहद्वात : । पुं॰ अश्मरीहरे । देवधा

न्ये ।

बृहद्वारुणी । स्त्री० महेन्द्रवारुण्याम् ॥

बृहद्बीज : । पुं० आम्रातके ॥

बृहन्नल : । पुं० महापोटगले ॥ अर्जुने । सुभद्रेमे ॥

बृहन्नला । स्त्री० अर्जुने ॥ द्वादशवर्षवनवासानन्तर मज्ञातवासे विराटभवने विराटकन्यायामुत्तरागीतादिशिक्षार्थं स्त्रीवेशेनार्ज्जुनो बृहन्नलेति नाम्ना ख्यातो ऽभूत् । यथा । अर्ज्जुन उवाच । गाथामिन्द्र्यस्म्ययशाद्वर्षसि भद्रोस्मिनृत्यकुशलोस्मिगीती । त्वमुत्तरायै प्रदिशस्वमास्य भवामिदेव्यानरदेवनर्त्तकः ॥ इदन्तुरूप ममयेनकिल्बिषप्रकीर्त्तयित्वा भृशशोकवर्द्धनम् । बृहन्नलामानरदेवविद्धिमुत सुतावापितृमातृवर्ज्जिताम् विराटउवाच । ददामितेहन्तवरं बृहन्नले सुतांचमेनर्त्तययाश्चतादृशी : ॥ इति महाभारते विराटपर्व ॥

बृहस्पति : । पु० सुराचार्ये । गीष्पतौ ॥ पंचमवारे ॥ तद्वारजातफलम् । नृपेन्द्रमन्त्रीनृपलब्धकामो विद्याविनोदीचतुर : प्रगल्भ : । आचार्य पूज्योमधुरस्वभावीवारेसवेदेव वगुरोर्मनुष्य : ॥ बृहताम्पति : । तद्बृहतोरितिसुट्तलोपौ ॥

बृहस्पतिक्षेत्रम् । न० धनूराशौ ॥ मीनराशौ ॥

बेटक : । पुं० वैकटिके मणिकारे ॥ मत्स्यप्रभेदे । भेयटी० इ० गौ० दे० भा० ॥ यूनि । आततायिन्ये ॥ चिटूपक्षि ॥

बेटमिका । स्त्री० बेटमी० बेटकी० इ० भा० प्र० खाद्ये ॥ यथा । माषपिष्टिकयापूर्णगर्भागोधूमचूर्णत: । रचितारोटिकासेवप्रोक्ताबेटमिकाबुधै : ॥ भवेद्वेटमिकाबल्यावृष्यारुच्य निशापहा । उष्णासन्तर्पिणीगुर्वीबृंहणीशुक्रलाऽपरम् ॥ भिन्नमूत्रमलास्तन्य मेद : पित्तकफप्रदा गुदकीलादितश्वासपक्तिशूलानिनाशयेत् ॥ पङ्क्तीत्यत्र० यकृदिति पाठान्तरम् ॥

बोकडी । स्त्री० वस्रान्त्याम् ॥

बोद्धव्य : । त्रि० ज्ञातव्ये । प्रतिमायां ॥

बोद्धा । त्रि० बोधकर्त्तरि ॥ बुद्ध्यति । बुधअवगमने । तृच् ॥

बोद्ध्यमान : । त्रि० उपदिश्यमाने ॥

बोध. । पुं० ज्ञाने ॥ यथा । बोधविहीने शास्त्रविलासे कथं प्रयातिवैफल्यम् । नयनविहीनेभर्त्तरिलावण्यमिवयुवत्याश्चापिमिति ॥ साक्षान्मोक्षसाधनेज्ञाने ॥ यथा हरा

न्यार्था : । बोधोन्यसाधनेभ्योहिसा क्षान्मोचैकसाधनम् । पाकस्यवह्निवत् ज्ञानं विनामोचोनसिद्ध्यती ति ॥ वृत्तिज्ञाने ॥ जागरणकाले चैतन्ये ॥ निर्णयात्मकज्ञाने ॥ आत्मसाक्षात्कारे ॥ प्रमाणे नयर्थे तनाणतो रत्नुग्रहस्तत् फल प्रमाणो धहृतिसाङ्ख्याः । बोधनम् । बुध ० । बुद्ध्यतेयेनबाघञ् ॥

बोधक : । पुं० सूचके ॥ प्रमाणे ॥ त्रि० बोधकर्त्तरि ॥ बोधजनके ।

बोधकर : । पुं० निशान्ते बोधका रकेस्तुत्यादिनाप्रातर्बोधके ॥ बोधं करोति । कृञ् ० । कृञोहेतुताच्छील्यानुलोम्येषु ट : ॥

बोधघ्न : । पुं० श्रीकृष्णे ॥ स० । सः वं भावयिताये ह्लीबोधघ्न : कामया स्ववित् । कामिनीबोधयामासवा सयामासयासि ॥ त्रि०अभिप्राया भिज्ञे ॥

बोधद : । पुं० अर्हति ॥ त्रि०बोध- दातरि ॥

बोधनम् । न० गन्धदीपने ॥ विज्ञाप ने । वेदने ॥

बोधनी । स्त्री० कार्त्तिकशुक्लैकादश्याम् ॥ बोधी ॥ पिप्पल्याम् ॥ शिव- चक्रे पु केलासादुपरिस्थे ॥

बोधनीय : । त्रि० बोध्ये । बोधित- व्ये । बोधयोग्ये ॥

बोधभानु : । पुं० ज्ञानार्के ॥ यथा । सततमस्तिमोहरूपे विश्वमपश्यन्त देतदिश्यखिलम् । उदितवतिबोध- भानौकिमपिनपश्यामिकिन्त्विदं चि त्रम् ॥

बोधवासर : । पुं० भगवतः प्रबोधदि ने । उत्थानैकादश्याम्

बोधात्मा । पुं० ज्ञानस्वरूपे ०परमा- त्मनि ॥ यथा । कदाचिद्व्यवहारेतु द्वैतंयद्यपि:श्यति । बोधात्मव्यति रेकेणनपश्यतिचिदन्वयात् ॥ किन्तु पश्यतिमिथ्येदिङ्मोहेन्दु विभाग वत् ॥

बोधायन : । पुं० ऋषिविशेषे । ज्यो तिष्टोमादियज्ञपरमार्थवादिनि ॥

बोधि : । पुं० बौद्धसमाधौ ॥ पि प्पलपादपे ॥ बोधे ॥ त्रि०ज्ञातरि ॥ बुद्ध्यते । बुध० । सर्वधातुभ्य- इन् ॥

बोधित : । त्रि० ज्ञापिते ॥ सञ्जातबो धे ॥ ता० कृतच् ॥

बोधितरु : । पुं० अश्वत्थद्रुमे ॥ बो- धिस्तस्यतरुः ॥

बोधितव्य : । त्रि० ज्ञापितव्ये ॥

बोधिद्रुम : । पुं० पिप्पलवृक्षे ॥ बो- धिस्तसौद्रुमस्य ॥

बोधिवृक्ष: । पुं० अश्वत्थे । चलदले ॥

बोधिसत्त्वम् । न० बुद्धे । श्रीघने ॥

बौद्ध: । पुं० बुद्धशास्त्रावलम्बिनि ॥

भिन्नके । क्षपणे । अर्हति । वैनायिके । अस्तिनास्तीत्यादिसप्तप्रकारैः पदार्थानामनेकरूपत्ववादिनि दिवसने । वैशेषिके ॥ न० बुद्धमुनिप्रणीतेनिरीश्वरशास्त्रे ॥ त्रि० बुद्धिभवेप्रत्यये ॥

बौद्धैकदेशी । पुं० माध्यासिद्धमादिनि ॥

बौध: । पुं० पुरूरवसि । बुधस्याऽपत्यम् । अण् ॥

व्रतति: । स्त्री० लतायाम् । विस्तारे । व्रतनीततिर्विस्तृतिरस्याः । पृषोदरादिः ॥ यद्वा । प्रतनोति । तनु० । क्विप् तोपस्य छायामितिक्षिप् । पृषोदरादित्वात्पस्य वः ॥ व्रतमिवकरोति । व्रतशब्दात् तत्करोतीति ण्यन्तात् डुलकाकृतिर्वा ॥

व्रतती । स्त्री० वल्ल्याम् । लतायाम् ॥ विस्तारे ॥

व्रध्न: । पुं० सूर्ये । वृक्षमूले । गिरिशे । रुद्रे । अर्कवृक्षे ॥ वध्नाति । बन्ध० । बन्धेर्ब्रधिबुधोघेरिनक्० धातोर्ब्रधादेशश्च । रोगविशेषे ॥

ब्रह्मकन्यका । स्त्री० सरस्वत्याम् । ब्राह्मीनामौषधौ ॥

ब्रह्मकर्म । न० ब्राह्मणजातेः कर्मणि । शमोदमस्तपः शौचं क्षान्तिरार्जवमेवच । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥

ब्रह्मकर्मसमाधि: । पुं० ब्रह्मण्येव कर्मात्मकेचिते कार्ये ॥ यथा । ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतम् । ब्रह्मैवतेनगन्तव्यं ब्रह्मकर्मसमाधिना ॥

ब्रह्मकल्प: । पुं० सृष्ट्युपक्रमे ॥

ब्रह्मकुण्डम् । न० ब्रह्मणानिर्मिते सरोविशेषे ॥ य० यावद्गुत्रायक्षोत्तरस्यां ब्रह्मकुण्डाख्यंसरः । ब्रह्मणानिर्मितंपूर्वमानायस्वर्गवासिनाम् ॥ आयामेनशतव्यामंविस्तीर्णेनतदर्द्धकम् । सर्वपापहरंपुण्यंदेवलोकात्समागतं ॥

ब्रह्मकूट: । पुं० पर्वतविशेषे ॥ यथा । ब्रह्मकुण्डजलेस्नात्वा पूजयित्वाऽऽचमापतिम् । ब्रह्मकूटंसमारुह्यमुक्तिमेवाप्नुयान्नरः ॥

ब्रह्मकूर्चम् । न० व्रतविशेषे ॥ तत्तु उपवासपूर्वंपञ्चगव्यपानम् । य० । अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः । पंचगव्यंपिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥ इति प्रायश्चित्तविवेकः ॥

ब्रह्मकोशी । स्त्री० अजमोदायाम् ॥

ब्रह्मगर्भा । स्त्री० आदित्यभक्तायाम् ॥

ब्रह्मगिरि: । पुं० ब्रह्मशैले ॥

ब्रह्मघातक: । त्रि० ब्राह्मणवधकर्त्तरि ॥ यथा । रागाद्द्वेषात्प्रमादाद्वास्वतः

परतप्तश्च । ब्राह्मणं घातवेद्यस्तु स भवेत्ब्रह्मघातकः ॥ अपिच । गोभूहिरण्यहरणे स्त्रीसम्बन्धं कृते पिवा । यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥

ब्रह्मघोषः । पुं० मन्त्रपाठे ॥ ब्रह्मणो वेदस्य घोषः ॥

ब्रह्मघ्नः । पुं० आत्मघातिनि ॥ यथा । भूमिसंप्राप्तजंघापि च्छायामभयंतिथे । ब्रह्मघ्नांस्तान्विजानीयाद् ब्रह्मवादिविगर्हितान् ॥

ब्रह्मती । स्त्री० गृहकन्यायाम् ॥

ब्रह्मचर्य्यम् । न० आश्रमविशेषे ॥ गुरुकुलवासादिलक्षणे तपसि ॥ ब्रह्मचर्यस्थितो नैकमन्नमद्यादनापदि । ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ मधुमांसं तथोच्छिष्टमित्यादि परिवर्जयेत् । प्रतिवेद ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ॥ यद्वापि ग्रहणान्तिकमित्येके । केशान्तश्चैव षोडशे ॥ सच कलौ नास्त्येव । ब्रह्मचर्याश्रमो नास्ति वानप्रस्थोपि न प्रिये । गार्हस्थो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे इति महानिर्वाण तन्त्रोक्तेः ॥ स्त्रीविषयस्पृहात्यागे ॥ निषिद्धमैथुन निवृत्तौ ॥ अष्टाङ्गमैथुनाभावे ॥ यथोक्तम् । स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणमिति ॥

ब्रह्मचारिणी । स्त्री० भार्य्याम् ॥

ब्रह्मचारी । पुं० प्रथमाश्रमिणि ॥ उपनयनानन्तरं नियमं कृत्वा गुरोः सन्निधौ स्थित्वा साङ्गवेदाध्ययनकारिणि ॥ स द्विविधः । उपकुर्वाणो नैष्ठिकश्चेति ॥ यथा । ब्रह्मचार्य्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः । योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥ उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकइति ॥ ब्रह्म वेदः । तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म । ब्रह्म चरितुं शीलमस्य । व्रतेइति०--सुपीति वा णिनिः ॥ यद्वा ब्रह्म० तपो० ज्ञान वा० आचरत्यवश्यं वा । आवश्यके० णिनिः ॥

ब्रह्मचारिणी । स्त्री० दुर्गायाम् ॥ वेदे सुचरितेयस्मात्तेनसा ब्रह्मचारिणीति देवीपुराणम् ॥ करुणीदृत्ते ब्रह्मीशाके ब्रह्मचर्यव्रतधारिण्याम्

ब्रह्मजः । पुं० अग्नौ ॥ ब्रह्मणो हिरण्यगर्भाज्जाते ॥

ब्रह्मजज्ञः । पुं० अग्नौ ॥ ब्रह्मजश्चासौ ज्ञश्च ॥

ब्रह्मजन्म । न० उपनयनजन्मसंस्काररूपे ॥ ब्रह्मणो वेदस्य ग्रहणार्थं जन्म ॥

ब्रह्मजटा । स्त्री० दमनकवृक्षे ॥

ब्रह्मजिज्ञासा । स्त्री० ब्रह्मविचारार्थेच्छायाम् ॥

ब्रह्मजीवी । पुं० द्विजकार्येषुमूल्येन परिचारके ॥

ब्रह्मज्ञः । त्रि० ब्रह्मविदि ॥ ब्रह्म जानाति । ज्ञा० । आतङ्कतिकः ॥ यथा । सब्रह्मज्ञः सवेदज्ञः सोऽग्निहोत्रीसदीक्षितः । चीनाचारक्रमाचारैर्योयजेत् तारिणींनरः ॥ पवित्र । सांसारिकसुखासक्त ब्रह्मज्ञोऽसौनिशादिनम् । त्यजेत्तंसततंवीरश्चण्डालमिवदूरतः ॥ इति श्रीरुद्रयामलवचनम् । न० श्रीकृष्णे । परमात्मनि ॥ ब्रह्मशब्दार्थभूतान्वेदान्प्रलयेप्रलयेस्वात्मनिप्रलीनान्सृष्ट्यादौहिरण्यगर्भोपदेशार्थंजानात्यनुसन्धत्ते इतितथा ॥

ब्रह्मज्ञानम् । न० ब्रह्मविषयकज्ञाने इतिसमस्तसायतिः ॥ मिथ्याभासनाविरहविशिष्टात्मभिन्नभिन्नज्ञाने० इतिमुक्तिवादः । प्रकृतिपुरुषयोर्विवेकविषयज्ञाने० इतिसाङ्ख्यमतम् । क्लेशकर्मविपाकाशयनिवर्तकहिरण्यगर्भविषयकज्ञाने० इतिपातञ्जलमतम् ॥ सत्त्वमहदादिसाक्ष्यजन्यप्रतिफलितस्याकूटज्ञाने इतिवेदान्तलघुचन्द्रिका ॥ प्रत्यक्तयापरोक्षज्ञाने ॥ प्रतिजीवमवभासाश्रितप्रतिबिम्बास्तेषांप्रत्यगात्मतयाऽव्यभिचरितस्वरूपेणबिम्बस्थानीयेनैकेनरूपेणयद्ब्रह्मवेदनंतद्ब्रह्मज्ञानम्० सदेवसम्यग्दर्शनमितिव्याख्यातारः ॥

ब्रह्मज्ञानी । त्रि० ब्रह्मज्ञानविशिष्टे ॥ यथा । कुशलाकुशलाद्युक्तिरहितः समदर्शनः । लिङ्गाश्रमपरित्यागीब्रह्मज्ञानीनिगद्यते ॥ सांख्यभक्तिस्तुतीनाविकर्तव्येतिपुराणगी ॥ ॥ यथा । ब्रह्मानन्देनपूर्णोऽहंतेनानन्देनपूर्णधीः । तथापिशून्यमात्मानंमन्येस्वस्मरतिंविना ॥ इति पाद्मे पातालखण्डे नाथाखिंप्रतिब्रह्मविद्यायचनम् ॥

ब्रह्मण्यः । पुं० विष्णौ ॥ ब्रह्मदारुवृक्षे ॥ शनैश्चरे ॥ मुञ्जतृणे ॥ तूलवृक्षे ॥ त्रि० ब्रह्मसाधौ ॥ ब्रह्मरते ॥ ब्रह्मणिवेदे० साधुः । तत्रसाधुरितियत् । येषांभायकर्मधोरित्यनुप्रकृत्य । ब्रह्मणिति ॥ तपोवेदाध्ययनादिज्ञानस्वब्रह्मसंतम् । तेभ्योहितः । खलयवमाषतिलवृषब्रह्मणश्चेतियत् ॥

ब्रह्मण्यदेवः । पुं० श्रीकृष्णे ॥

ब्रह्मतालः । पुं० चतुर्मुखतालो ॥ सतुदशतालात्मकः । तत्र ७ मात्राः । मात्रास्तु० क च ट त प०- इतिपञ्चाक्षराणामुच्चारणकालः ।

सैवलघुमात्रा । तदर्द्धं द्रुतमात्रा । तन्मध्ये ४ लघव: ६ द्रुता :० । ० । ०० । ००० । यथा । चतुर्मुखाभिधितालेनगणानन्तरं द्रुत : । इति सङ्गीतदामोदर : ॥

ब्रह्मतीर्थम् । न० पुष्करतीर्थे ॥ पुष्करमूले ॥ ब्राह्मेतीर्थे ॥ तीर्थविशेषे ॥

ब्रह्मत्वम् । न० ब्रह्मभूये । ब्रह्मसायुज्ये ॥ ब्रह्मणोभाव: । तस्यभावस्त्वतलौ ॥ ब्रह्मणोऽर्त्विग्विशेषस्यकर्मभावयो: ॥ ब्रह्मणस्त्व : । नेतिवाच्ये० त्वप्रत्ययलोपाबाधनार्थम् । ब्राह्मणपर्यायात्ब्रह्मन्शब्दात्त्वतलौभवतएव । ब्रह्मत्वम्० ब्रह्मता ॥

ब्रह्मदण्ड : । पुं० ब्राह्मणशापे ॥ वशिष्ठमुने : सिद्धयष्टाम् ॥ यथा । धिग्बलंक्षत्रियबलं०ब्रह्मतेजोबलंबलम् । एकेनब्रह्मदण्डेनसर्वाणोनाशितानिमे ॥ माघे ॥ केतुविशेषे ॥ वसन्तराजनारदसंहितायाम् । पितामहात्मज : क्रूरशिखावर्णशिखरान्वित : ब्रह्मदण्डोऽर्यकेतु : सर्वभूतविनाशन : ॥ इति ॥ ब्राह्मणयष्टिकायाम् ॥

ब्रह्मदण्डी । स्त्री० क्षुद्रक्षुपविशेषे ॥ अजदण्डाम् कण्टपत्रफलायाम् ॥

ब्रह्मदत्त : । पुं० इक्ष्वाकुवंशीयराजविशेषे । ब्रह्मसूनौ ॥

ब्रह्मदर्भा । स्त्री० यमान्याम् ॥ अजमोदायाम् ॥ ब्रह्मणादृश्यते । दृभीग्रन्थे । घञ् । कर्त्तरिकृतेतिसमास : ॥

ब्रह्मदर्भिका । स्त्री० यमान्याम् ॥

ब्रह्मदारु । न० समानाख्यातेऽश्वत्थाकारवृक्षविशेषे । तूदे । तूरी । क्रमुके । ब्रह्मवृक्षे । अश्वत्थाकारे पार्श्वपिप्पलइतिख्याते । तूत इ० भा० ॥ ब्रह्मकाष्ठ० ब्रह्मणिदारु ॥

ब्रह्मदेया । स्त्री० ब्राह्मविवाहेनोढायाम् ॥

ब्रह्मदैत्य : । पुं० प्रेतयोनिप्राप्तब्राह्मणे ॥

ब्रह्मद्विट् । त्रि० ब्राह्मणानांद्वेष्टरि ॥ ब्राह्मणान्द्वेष्टि । द्विष् । क्विप् ॥

ब्रह्मा । पुं० चतुर्मुखे । वेधसि । विश्वसृजि । हिरण्यगर्भे ॥ तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् । तस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपितामह : ॥ ऋत्विग्विशेषे ॥ विष्कम्भादिसप्तविंशतियोगान्तर्गतपंचविंशयोगे । तत्रजातस्यफलम् । नानाशास्त्राभ्याससंनीतकालोधर्माचारै : संयुतश्चारुकीर्त्तिः । शान्तोदान्तोजायतेचात्रकर्मासूतौयस्यब्रह्मयोगप्रयोग : ॥ इति ॥ विप्रे । ब्राह्मणे ॥ अर्हदुपास

कर्मविशेषे ॥ बृंहति वर्द्धयति प्रजाः
। बृहि वृद्धौ । अन्तर्भावितण्यर्थः ।
बृंहेर्नोऽच्चेति मनिन् धातोर्नकारस्या
कारादेशः ॥ बृंहति वर्द्धते वा ॥
ब्रह्म । न० वेदे । तपसि । अव्यक्ते ।
सर्वकारणकारणे परमात्मनि ।
यत्तत्कारणमव्यक्तं नित्यं सदसदा
त्मकम् । तद्विसृष्टः स पुरुषो लोके
ब्रह्मेति कीर्त्यते ॥ अध्यात्मे । ज्ञा
ने ॥ तपोवेदाश्चजातिश्चज्ञानंचब्रह्
मसंज्ञितम् । प्रत्यस्तमितभेदं यत्स
त्तामात्रमगोचरम् । वचसामात्म
संवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ इ०
वि० पु० ॥ बृहत्त्वाद्बृंहणत्वाच्चात
त्परमात्मादिलक्षणम् । यद्ज्ञानन्तं हि
विज्ञेयं शास्त्राचार्योपदेशतः ॥ सा
क्षात्परोक्षात्सर्वान्तरे आत्मनि
अशनायाद्यतीते नेतिनेत्यस्थूलम
नणिव्यादिलक्षणे औपनिषदे
तत्त्वे अव्यावृत्ताननुगतवस्तुब्रह्मणि
रोच्यते । अकारणमकार्यन्तद्ब्रह्म
नोदितिभवेत् ॥ अव्यावृत्तपदेन अ
कार्यम् । अननुगतपदेन वस्तुतोऽ
कारणमिति तत्रोक्तं भवतीत्यर्थः ॥ न
व्यावृत्तं विशेषेभ्यो नानुवृत्तं च गोत्व
वत् । अव्यावृत्ताननुगतं चैतन्यं ब्रह्म
वीच्यताम् ॥ तदिदं तादृशमीदृश
मेतावत्तावदिति च यन्न भवेत् । ब्रह्
मतदित्यनधेयनोचेहियदोभवेत्परो

क्षेत्र ॥ यल्लाभान्नापरो लाभो यत्सुखा
न्नापरं तु सुखम् । यज्ज्ञानान्नापरं ज्ञा
नं तद्ब्रह्मेत्यवधारयेत् ॥ यद्दृष्ट्वा नाप
रं दृश्यं यद्भूत्वा न पुनर्भवः । यज्ज्ञा
त्वा नापरं ज्ञेयं तद्ब्रह्म ॥ तिर्यगू
र्द्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्
अनन्तं नित्यमेकं यत्तद्ब्रह्म ॥
अतद्व्यावृत्तिरूपं यद्वेदान्तैर्लक्ष्यते
ऽद्वयम् । अखण्डानन्दमेकं यत्तद्ब्र
ह्म ॥ दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्य
न्न तद्भवेत् । तत्त्वज्ञानाच्च तद्ब्रह्म सच्चि
दानन्दमद्वयम् ॥ सर्वगं सच्चिदा
त्मानं ज्ञानचक्षुर्निरीक्षते । अज्ञा
नचक्षुर्नेक्षेत भास्वन्तं भानुमन्धव
त् ॥ इत्यादि ॥ ब्रह्मचतुर्विधम् ।
यथा । विराट् १ हिरण्यगर्भः २
ईश्वरः ३ तुरीय ४ । इतिभेदा-
त् ॥ अपि च । सत्यमानन्दमद्वयम-
मृतमेकरूपं वाङ्मनसागोचरं स-
र्वगं सर्वातीतं निर्विकारं सदेशकालाप
परिच्छिन्नमपाढमपिणीभगमपाणि
पादमचक्षुरपि सर्वद्रष्टृ अश्रोत्र
मपि सर्वश्रोतृ अचिन्त्यमपि सर्वज्ञं
सर्वनियन्तृ सर्वशक्ति सर्वोपास्यं सृष्टि-
स्थितिप्रलयकारि किमपि वस्तु ब्रह्मे
ति वदन्ति । तच्च शुद्धबुद्धस्वभाव
मित्यौपनिषदाः । १ । आदिविद्वा
न्सिद्ध इति कापिलाः । २ । क्ले
शकर्मविपाकाशयैरपरामृष्टो निर्मा-

गकायमधिष्ठासम्प्रदायप्रद्योतकोऽनु ग्राहकस्ते तिपातञ्जला: । ३ । लोक वेदविरुद्धे २पिनिर्लेप:स्वतन्त्रस्ते तिम हापाशुपता : । ४ । शिवइतिशैवा: पुरुषोत्तम इ० वैष्णवा : । ६ । पितामहइतिपौराणिका : । ७ । यज्ञपुरुषइतियाज्ञिका : ८ । स र्वज्ञइतिसौगता : । ९ । निरावर णमितिदिगम्बरा: । १० । उपास्य त्वे नदेशितइतिमीमांसका: । ११ । लोकव्यवहारसिद्धइतिचार्वाका : । १२ । यावदुक्तोपपन्नइतिनैयायिका । १३ । विश्वकर्मेतिशिल्पिन : । १४ । इतिकुसुमांजलि : ॥ वि- श्वे शे०परमेश्वरे०विश्वात्मनि०वि- श्वाश्रये ॥ सएकएवसद्रूप : सत्यो ऽनन्तपदात्पर : । स्वप्रकाश:सदापूर्ण: सच्चिदानन्दलक्षण: ॥ निर्विकारोनि राधारोनिर्विशेषोनिराकुल : गु णातीत : सर्वसाक्षीसर्वात्मासर्वदृ ग्विभु : ॥ गूढ : सर्वेषुभूतेषुसर्व व्यापीसनातन : । सर्वेन्द्रियगुणा भास . सर्वेन्द्रियविवर्जित . ॥ लोकातीतोलोकहेतुरवाङ्मनसगो चर : । सवेत्तिविश्वं सर्वज्ञस्तं नजा नातिकश्चन ॥ तदधीनंजगत्सर्वं त्रै लोक्यं सचराचरम् । तदालम्बनत स्तिष्ठ दवितर्क्यमिदंजगत् ॥ तत्सत्व तामुपाश्रित्यसद्वद्भातिपृथक्पृथक् ॥



तेनैवहेतुभूतेनवयंजातामहेश्वरि कारणंसर्वभूतानांसएक : परमेश्व र : ॥ लोकेषुसृष्टिकरणात्स्रष्टाव्र ह्मे तिगीयते । विष्णु: पालयिताद्वे विसंहर्त्ताशिवइतीष्यते ॥ इन्द्रादयो लोकपाला : सर्वे तद्वशवर्तिन : । स्वे स्वे धिकारेनिरतास्ते शासतितद- दाज्ञया ॥ त्वं पराप्रकृतस्तस्यपूज्यासि भुवनत्रयी । तेनान्तर्यामिरूपेणतत् तद्विषययोजिता : ॥ स्वस्वकर्मप्र कुर्वन्तिनस्वतन्त्रा : कदाचन ॥ यद्भ याद्वातिवातोपिसूर्यस्तपतियद्भयात् । वर्षन्तितोयदा: कालेपुष्प्यन्तितरवो वने । कालंकालयतेकालेमृत्योर्मृ त्युर्भियोभयम् । वेदान्तवेद्योभगवा नततत्तच्छब्दोपलक्षित : ॥ सर्वदे वात्मदेव्यस्तन्मया : सुरवन्दिते । आब्रह्मस्तम्बपर्यन्ततन्मयसवासजग त् ॥ तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितजगत् । तदाराधनतोदेवि सर्वेषाप्रीणनंभवेत् ॥ तरोर्मूलाभि षेकिण्यथातद्भुजपल्लवा : । तृप्यन्ति तदनुष्ठानात्तथासर्वेमरादय : ॥ यथातवार्चनाद्ध्यानात्पूजनाज्जप नात्प्रिये । भवन्तितुष्टा: सुदंर्यस्त याज्ञानीहिसुव्रते ॥ यदागच्छन्तिस रितोऽवशेनापिसरित्पतिम् । तथा चाहीनिकर्माणितद्दे ष्यानियान्ति ॥ योयोयान्यान्यजेद्देवानृय

नान्यपर्त्तं निमित्तकात् । पर्त्त निमित्तकान् जलस्नतर्पणादिनि मित्तं विना ॥

ब्रह्मयष्टिः । स्त्री० भार्ग्याम् ॥ विप्र यष्ट्याम् ॥

ब्रह्मयष्टिका )। स्त्री०

ब्रह्मयष्टी । )स्त्री० भार्ग्याम् । विप्र यष्ट्याम् ॥

ब्रह्मयोनिः । पुं० ब्रह्मगिरौ ॥ तौ र्थविशेषे ॥

ब्रह्मयोनी । स्त्री० कुरुक्षेत्रे सरस्व तीतीरे पृथूदकनिकटे तीर्थविशे षे ॥ तत्रब्रह्मणाचत्वारोवर्णाः सृ ष्टाः ॥

ब्रह्मरन्ध्रम् न० दशमाङ्गे ॥

ब्रह्मरातः । पुं० शुकदेवे ॥

ब्रह्मराक्षसः । पुं० भूतविशेषे ॥ यथा । संयोगपतितैर्गत्वापरस्य चयोषितम् । अपहृत्यचविप्रस्वंभ वतिब्रह्मराक्षसः ॥ महादेवगणय विशेषे ॥ पारिभाषिकब्रह्मराक्षसा यथा । मूर्खः स्त्रीकण्ठपद्मबधा जीवधिरएवच । गृहीतार्थंनमुंच न्ति पञ्चैते ब्रह्मराक्षसाः ॥ इ ति ॥

ब्रह्मरातिः । पुं० याज्ञवल्क्यमु नौ ॥

ब्रह्मरात्रः । पुं० ब्राह्ममुहूर्त्ते ॥

ब्रह्मरात्रिः । पुं० याज्ञवल्क्यमुनौ- ॥ ब्रह्म० ज्ञान० राति० ददा तिय : । वृद्धोपंपदाद्रातेस्कि- प् ॥

ब्रह्मरीचिः । स्त्री० ब्रह्मणोनिशायाम् ॥ सर्द्वैवसहस्रयोगेनभवति ॥

ब्रह्मरीतिः । स्त्री० पित्तलप्रभेदे ॥ राजरीतौ ॥ इ० रा० नि० ॥

ब्रह्मरूपम् । न० असत्यादिषु ॥ यथा । यत्किभासिप्रियरूपनाम चैत्यंशपञ्चकम् । आद्यंत्रयंब्रह्म रूपंजगद्रूपंततोद्वयम् ॥

ब्रह्मर्षिः । पुं० सप्तर्षिषु । ब्रह्म योमानसतनयेषु ॥ तद्यथा । भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा । मरीचिंदक्षमत्रिञ्चवसिष्ठञ्चैव मानसान् । नवब्रह्मणइत्येते पुराणे निश्चयं गताः ॥

ब्रह्मर्षिदेशः । पुं० कुरुक्षेत्रादिदेश चतुष्टये । यथा । कुरुक्षेत्रञ्चमत्स्याश्च पञ्चालाःशूरसेनकाः । एषब्रह्म र्षिदेशोवैब्रह्मावर्त्तादनन्तरः ॥ एत द्देशप्रसूतस्यसकाशादग्रजन्मनः । स्वस्वचरित्रंशिक्षेरन् पृथिव्यांसर्व्व- मानवाः ॥

ब्रह्मलोकः । पुं० ब्रह्मणि , लोकनलो कः । ब्रह्मैवलोकोब्रह्मलोकः । कार्यब्रह्मणि । ब्रह्मणः कार्यसतब्र नि । ब्रह्मणोभुवने ॥ यथा । सत्य स्तुसप्तमोलोकोह्यपुनर्भवशासिना

म. । ब्रह्मलोकः समास्यातोह्यप्रतीघातलक्षणः ॥ इ०देवीपुराणम् ॥ अपिच । षड्गुणे नतपोलोकात्सत्यलोकोविराजते । अपुनर्मारकायचब्रह्मलोकोऽस्यसःस्मृतः ॥ जनलोकात्रयैवपङ्गुणं नद्वादशकोट्युच्छायैतपोलोकानतरं सत्यलोकः । नतुतपोलोकात्षड्गुणं नैतिमन्तव्यम् । तथासत्यष्टाचत्वारिंशत्कोट्युच्छायत्वं नब्रह्माण्डे तस्यावकाशाभावात् । सूर्याण्डगोलयोरन्तः कोट्यः स्युः पञ्चविंशतिरितिप्रोक्तेः । सत्यलोकएवब्रह्मोपदेनब्रह्मभिधया त्यात् परमेष्ठलोकादिशब्देयम् । एवञ्च भूतलात्पञ्चदशकोटचुत्तराखयीविंशतिकोट्योभवन्ति । सत्यलोकादूर्ध्वञ्च पञ्चदशसहस्रानकोटिद्वयाद्ग्दरषटाहड्तिज्ञेयम् । अपुनर्मारकाः पुनर्मृत्युशून्याः इतिविष्णुपुराणे २ अंशे ७ अध्यायः ॥

ब्रह्मभवम् । न० ब्रह्मेवोदें ॥ ब्रह्मभेदसत्रग्रदनम् । वद: मुखिक्वपच्चेति भावेयत् ॥

ब्रह्मवद्या । स्त्रि० ब्रह्मोद्यायाम् । टाप् ॥

ब्रह्मवनम् । न० संसाररूपे । ब्रह्मणोजीवरूपस्यभोग्यवनंजीवसमञ्जनीयम् ॥

ब्रह्मवर्चसम् । न० ब्राह्मणस्य०वृत्ताध्ययनजाते । वेदाध्ययनादयत्ताना- दिप्रकर्षकृततेजसि । ब्रह्मयोविंदातपसीवा०वर्चः ब्रह्महस्तिभ्यांवर्चसदुत्तय ।

ब्रह्मवर्चसी । पुं० तपस्वाध्यायनिमित्ततेजोब्रह्मवर्चसम्तद्वति ॥

ब्रह्मवर्चसम् । त्रि० ब्रह्मवर्चसोनिमित्तं । ब्रह्मवर्चस२ ०निमित्त०संयोग० : उत्पाती २ । ब्रह्मवर्चसाद्दुपसङ्ख्यानमितियत् ॥

ब्रह्मवर्चसी । पुं० ब्रह्माध्ययनसम्पत्तियुक्ते ॥

ब्रह्मवर्धनम् । न० ताम्रे ॥

ब्रह्मवाद: । पुं० वेदपाठे । ब्रह्मताडाने ॥

ब्रह्मवादी । त्रि० मुनौ । वेदान्तिनि ॥ वेदार्थज्ञे । ब्रह्मवदितुमवश्यात् शीलमस्य । वद० । सुप्यजातावित्य० ब्रह्मवदद्वितिणिनिः ॥ वेदवक्तरि ॥

ब्रह्मवादिनी । स्त्री० गायत्र्याम् । स्त्रीप्रभृतिषु । ब्रह्मवदितुंशीलमस्याः । णिनिः । ङीप् ॥

ब्रह्मवित् । पुं० वेदार्थाभिज्ञे । परमार्थदर्शिनि । ब्रह्मसाक्षात्कारवति । चकमार्थि ॥ ब्रह्मवेदवेदार्थंस्वयथावद्वेत्ति० विन्दतेर्वा । विद्ज्ञाने० विद्लृलाभेवा । क्विप् । प्रसन्नेन्द्रि

न्तिपशुभिश्चसमानराः ॥

ब्रह्मविद् :। पुं॰ ब्रह्मज्ञानी

ब्रह्मवेदिः। स्त्री॰ देशविशेषे । यथा। ब्रह्मवेदिः कुरुक्षेत्रं पञ्चरामह्रदान्तरमितिहेमचन्द्रः ॥

ब्रह्मवैवर्त्तम्। न॰ अष्टादशमहापुराणान्तर्गतदशमपुराणे ॥ य॰। अष्टादशमहत्त्वञ्च ब्रह्मवैवर्त्तमीप्सितम्। सर्वेषाञ्चपुराणानांसारमेवविदुर्बुधाः ॥

ब्रह्मवल्यः। पुं॰ सोमवल्ली। यथू र॰इ॰भा॰। इतिरत्नमाला ॥

ब्रह्मशासनम्। न॰ ब्रह्मविचारणे। धर्म्मकौलके। ब्रह्मयाचायाम् ॥ पत्रविशेषे ॥

ब्रह्मसंस्थः। पुं॰ मुख्यपरिव्राजि। ब्रह्मणिसम्यक्स्थिते। नित्यसर्वकर्मत्यागधर्म॰ परिव्राज्यस्याश्रमिणि॰परमहंसे। ब्रह्मणिपरमात्मनि॰सम्यगव्यभिचारिणिस्थितिर्निष्ठायस्यपरब्रह्मसाक्षात्कारवतः सः॥ नित्यसकर्माभिद्युक्षत ब्रह्मसंस्थइतिभाष्यम्॥

ब्रह्मसंस्पर्शः। पुं॰ ब्रह्मतादात्म्ये॥

ब्रह्मसंहिता। स्त्री॰ भगवत्सिद्धान्तसद्यन्यग्रन्थविशेषे॥ अध्यायशतसम्पन्नाभगवद्ब्रह्मसंहिता। कृष्णोपनिषदांसारैः सञ्चितां ब्रह्मणोदितेति जीवगोस्वामी ॥

ब्रह्मसत्त्वम्। न॰ अध्यापने ॥ आत्मनोविचारे॥ यत्समानाएवब्रह्मवादिनोवक्तृश्रोतृभावेनब्रह्ममीमांसन्ते तद्ब्रह्मसत्त्वमित्युच्यते ॥

ब्रह्मसभा। स्त्री॰ चतुर्मुखसभायाम् ॥ सभाविशेषे ॥ यथा। यस्मिन्देशेनिषीदन्तिविप्रावेदविदस्त्रयः। राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभांविदुः। ब्रह्मणः सभेवसभा ॥

ब्रह्मसंभवः। पुं॰ द्विपृष्ठनामकजैनविशेषे ॥

ब्रह्मसर्प्पः। पुं॰ सर्प्पविशेषे। हलाहली ॥

ब्रह्मसात्। अ॰ ब्रह्माधीने ॥

ब्रह्मसायुज्यम्। न॰ ब्रह्मत्वे ॥ युनक्ति। युजिर्॰। इगुपधेतिकः। युजेनसह। तेनसहेति बहुव्रीहिः। वोपसर्जनस्येतिसहस्य सः। यद्वा। योजनंयुक्। सम्पदादित्वात्क्विप्। सहयुजा। सयुजस्सयुजोभावः। ब्राह्मणादित्वात्ष्यञ्। ब्रह्मणः सायुज्यं ॥

ब्रह्मसावर्णिः। पुं॰ दशमेमनौ ॥

ब्रह्मसुवर्चला। स्त्री॰ सुवर्चलायाः

प्रभेदे । कुयंतिक्ताकषायोष्णासराक्
चालघु : कटु:। निहन्तिकफपित्ता
स्रश्वासकासारुचिज्वरान् ॥ विस्फो
टकुष्ठमेहास्रयोनिरुक्कृमिपाण्डु-
ता ॥

ब्रह्मसूः। पुं॰ ऋष्यकेतौ । काम
देवे ॥ अनिरुद्धे । उषापतौ ॥ ब्रह्
मतप : सुवतिप्रापयति । प्रूप्रेरणे
। अन्येभ्योधीतीक्विप् । इतिकाम
पक्षे । अनिरुद्धपक्षेतु । ब्रह्माणं
सूतवान् । कल्पान्तरे किलानि
रुद्धमूर्त्ते र्भगवतोब्रह्माजात : ॥
तथाचब्रह्मपुराणम् । अनिरुद्धात्
ततोब्रह्मातन्नाभिकमलोद्भव : ॥
इति ॥

ब्रह्मसूत्रम् । न॰ यज्ञसूत्रे । पवित्रे
। यज्ञोपवीते ॥ व्याससूत्रे ॥ ब्रह्म
सूच्यते॰ एभिरितिव्याख्यातार :
॥ तटस्थलक्षणपरैरुपनिषद्वाक्ये
षु ॥

ब्रह्मसूनुः। पुं॰ ऋष्वाकुवंशोद्भव
राजविशेषे । ब्रह्मदत्ते ॥

ब्रह्मस्थानम् । न॰ तीर्थविशेषे ॥

ब्रह्मस्थूणा । स्त्री॰ तीर्थविशेषे ॥

ब्रह्मस्तेयी । त्रि॰ आचार्यानुमतिं वि
नायेनकेनाधिप्रकारेणवेदं गृह्णा
ति । यथाहमनु : । ब्रह्मयस्त्वननु
ज्ञातमधीयानादवाप्नुयात् । सब्र
ह्मस्तेयसंयुक्तो नरकं प्रतिपद्यतइ
ति ॥

ब्रह्मस्वम् । न॰ ब्राह्मणसम्बन्धिधने ॥
तद्धरणेदोषोयथा । ब्रह्मस्वं धागुरु
स्वंवादेवस्वंवापियोहरेत् । सकृत
ग्नइतिज्ञेयोमहापापीचभारत ॥
अवटोदेवस्तुसोपियावदिन्द्रशतं
शतम् । ततोभवेत्सुरापीतिस्तत :
शूद्रस्तत : शुचिरिति । ब्रै॰
पु॰ ॥

ब्रह्महत्या । स्त्री॰ ब्राह्मणवधे । ब्रा
ह्मणस्यहननजन्ये महापातकविशे
षे ॥ ब्राह्मणप्राणवियोगरूपफलके
व्यापारे ॥ सचव्यापार : साक्षाद
न्यंवानियुज्य । तथागोहिरण्यादि
निमित्त कार्यकस्यापि तदुद्देशेन
प्राणत्यागस्तद्ब्रह्महत्या । एव
मुपास्ततोयस्यब्राह्मणबधस्त्वं प्रती
यते । सएवब्रह्महन्तेतिज्ञेयम्
॥ ब्रह्महणोऽहनम् । इन॰
॰ । इन्नस्येति॰इन्तेर्भावेक्यप्॰
तकारश्चान्तादेश : ॥ अनृतञ्चसमु
त्कर्षेराजगामिचपैशुनम् । गुरोश्चा
लीकनिर्बन्ध : समानिब्रह्महत्य
येति मनु : ॥ निद्राभङ्ग : कथा
च्छेदोदम्पत्यो:प्रीतिभेदनम् । शि
शुमातृविभेदश्चब्रह्महत्यासमंस्मृ
तमिति देवीभागवतम् ॥

ब्रह्महा । पुं॰ ब्रह्मघ्ने । ब्राह्मण
घातकर्त्तरि । ब्रह्मसूकरखरोष्ट्रा

शांगीनामभिरूपपत्नीनाम् । चण्डा-
लपुक्कसानाञ्च ब्रह्महा योनिमृच्छ-
ति ॥ ब्रह्मा च ब्रह्मवाहितवान्
। हन० ब्रह्मसम्भूयवचे पुंक्षिप् ॥
ब्रह्मस्थानभवस्त्वन्यो ब्रह्महा वृष-
लीपतिः । यस्तस्यामाहितो गर्भः
स तेन ब्राह्मणोहतः ॥

ब्रह्महुतम् । न० पञ्चमहायज्ञान्तर्ग-
तयज्ञविशेषे । नृयज्ञे । अतिथि-
पूजने ॥

ब्रह्माक्षरम् । न० प्रणवे ॥

ब्रह्माङ्गभूः । पुं० क्रतुपर्णे । घोट-
के ॥

ब्रह्माञ्जलिः । पुं० वेदपाठका-
लाञ्जलौ । अध्ययनस्यादावन्ते च
गुरवे प्रणामोच्चारणाय कृतोऽञ्जलौ ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ
गुरोः सदा । संहत्य हस्तावध्येयं
स हि ब्रह्माञ्जलिः स्मृत-
तुः ॥

ब्रह्माणी । स्त्री० ब्रह्मणः पत्न्या-
म् ॥ ब्रह्माणमणति प्रशंसयति ॥
अण शब्दे । कर्मण्यण् । ङीप् ।
यद्वा । ब्रह्माणमानयति० जीव-
यति । अन प्राणने । तस्मात् कर्म-
ण्यणि० णेरनिटीति णिलोपे० टि-
ड्ढेति ङीपि० पूर्वपदात्संज्ञाया-
म० ब्रह्माणीतिरूपसिद्धिः । अ-
न्यथाऽन्द्रवरुणेतिसूत्रे ब्रह्मन्शब्द-
स्यापाठाभावादलुगनुपपन्न एव ।
दुर्गायाम् ॥ ब्रह्माणी ब्रह्मजन-
नाद् ब्रह्माक्षरपरा मतेति देवीपुरा-
णम् ॥ रेणुकानामगन्धद्रव्ये ॥ रा-
जरीतौ । पित्तलविशेषे ।

ब्रह्माण्डम् । न० भुवनकोषे । वि-
श्वगोलके ॥ चतुर्दशलोकाः सा-
वरणभूतलोकालोकपर्वततद्बाह्य-
पृथिवीतद्बाह्यसमुद्रैः सहितां ब्र-
ह्माण्डमित्युच्यते ॥ अथ ब्र-
ह्माण्डगोलमाह भास्कराचार्यः
। भूभूधरत्रिदशदानवमानवाद्यै-
र्यावधिष्ण्यगगनेचरचक्रकक्षाः
। लोकव्यवस्थितिरपत्र परिप्रदिष्टा
ब्रह्माण्डभाण्डजठरे तदिदं सम-
स्तमिति ॥ द्वादशवर्षसहस्राणि ब्र-
ह्माण्डस्यायताधिकमित्युक्तसंख्या-
कैमहापुराणविशेषे ॥ महादान-
विशेषे ॥

ब्रह्माण्डकपालम् । न० योजनार्बुद-
कोटिविस्तृते ॥

ब्रह्मात्मभूः । पुं० अश्वे ॥

ब्रह्मादनी । स्त्री० हंसपद्याम् ॥

ब्रह्माद्रिः । पुं० गिरिविशेषे ॥

ब्रह्माद्रिजाता । स्त्री० गोदावर्या-
म् ॥

ब्रह्मानुभवः । पुं० अविपर्यस्तार्थ-
विषयानुपरक्तचित्स्फुरणे ॥ ब्र-
ह्मणोऽनुभवः ॥

अर्द्धरात्रप्रयोगेणस्वरोभवतिकौकि-
कः ॥ माससेकंप्रयोगेणभवेच्छ्रु
तिधरोनरः । पञ्चगुञ्जान्प्रमेयांश्च
कासंपञ्चविधंलयेत् ॥ वन्ध्यानांचैव
नारीणांनराणामल्परेतसाम् । घृतं
सारस्वतंनामबलवर्णवपुःप्रदमिति
— चिकित्सारत्नसङ्ग्रहः ॥
ब्रह्मीयम् । त्रि० ब्रह्मणोवेदस्यवदने
। ब्रह्मवद्ये ॥ यद् : सुपक्वम् ॥
ब्रह्मोद्याख्यकथा : कुर्यात्पितृणामे
तदीप्सितम् ॥
ब्रह्मोपनिषद् । स्त्री० वेदसूक्ते ॥
ब्रह्मोपनेता । पुं० पलाशवृक्षे ॥
ब्रह्मौदनम् । न० ऋत्विग्भ्योद
- त्तेऽन्ने ॥
ब्राह्मः । पुं० ब्रह्मोपासके । ब्रह्मा
राधनतत्परे । ब्रह्मज्ञे । विवाह
विधिभेदे । वरमाहूययथाशक्त्यलङ्कृता
याः कन्यायादाने ॥ यथा । आच्छा
द्यचार्चयित्वाचश्रुतिशीलवतेस्वयम्
। आहूयदानंकन्यायाब्राह्मोधर्मः
प्रकीर्तितः ॥ कनकचापिकरणां-
शरीरायायथासकृत् । दानन्त
थैवकन्यायाब्राह्मोविवाह . सकल्पक
त् ॥ ब्रह्मणइदायम् । नतुब्रह्म
देवतात्त्वविवाहस्यसम्भवति । ना
रदे ॥ न० ॥ मानसेसरसि ॥ ब्रह्म
तीर्थे ॥ अङ्गुष्ठमूलस्यतलेब्राह्मतीर्थं
प्रचक्षते . अनेनद्विजस्याचमन य

था । अन्तर्जानुशुचौदेशेउपविष्ट
उदङ्मुखः । प्राग्वाब्राह्मेणतीर्थेन
द्विजोनित्यमुपस्पृशेत् ॥ अंगुष्ठोत्तर
तोरेखायापाणेर्दक्षिणस्यच । एतद्
ब्राह्ममितिख्यातंतीर्थमाचमनायवै
ब्रह्मपुराणे ॥ त्रि० ब्रह्मदेवताके
॥ ब्रह्मादेवतास्य । सास्यदेवते त्य
ण् । ब्रह्मोजाताविति साधुः ॥ तस्ये
दमित्यण्वा ॥ नस्तद्धितइतिटिलोप
ब्राह्मणः । पुं० प्रथमवर्णेसत्त्वप्रधाने
द्विजातौ । अग्रजन्मनि । भूदेवे ।
वाडवे । विप्रे । वक्त्रजे । वर्णज्येष्ठे
। षट्कर्मणि । द्विजोत्तमे । द्विजे ॥
ब्राह्मणोब्रह्मामूर्तिःश्रीविष्णोः प-
रमात्मनः । अतएवद्विजख्याता
भूदेवास्तेमहामते ॥ दशवर्षीयस्य
पितृवन्मान्यउक्तोमनुना । ब्राह्मणं
दशवर्षन्तुशतवर्षन्तुभूमिपम् । पिता
पुत्रोविजानीयाद्ब्राह्मणस्तुतयोः
पितेति वचनात् ॥ जात्याकुलेनवृ
त्तेनस्वाध्यायेनश्रुतेनच ॥ एभिर्युक्तो
हियस्तिष्ठेन्नित्यंसद्विजउच्यते ॥ इ०
वह्निपुराणम् ॥ अपिच । तपःश्रु
तञ्चयोनिश्चएतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यांयोहीनोजातिब्राह्म
णएवसः ॥ अविदुषोब्राह्मणस्यापू
ज्यत्वंयथा । अविद्वान्ब्राह्मणः कोपि
नैवपूज्यः कदाचन । आहारादधि
कनैवदेयमुख्यायकिञ्चित् इतिभाग

ब्राह्मण :

यताम्। ब्राह्मणस्यतुदेहोयंनकामार्था
यजायते। इहक्लेशायतपसेप्रेत्यत्व
नुपमंसुखमितिभारते मोक्षधर्मेपाव
काध्ययनाध्याय:। १४५ ॥ अस्व-
धर्म्मीयानिकर्माण्याहनारद:।
। ज्याकर्षणंशत्रुनिबर्हणस्त्रपिवर्णि
ज्यापशुपालनञ्च। शुश्रूषणञ्चापि-
तथार्थहेतोरकार्यमेतत्परमंब्राह्मण
स्य ॥ राजन्वैश्य कृषिधनकीवनञ्च
वणिज्यया। कौटिल्यंकौलटीयंच
कुर्वीदचविवर्जयेत ॥ शूद्रोराजन्
सभवतिधर्मात्मेतोदुराचर:। इयत्तौ
रमतेयस्तुपिशुनोनर्तनस्तथा। या
मप्रेष्योविकर्माश्चयोद्विजश्चरिताच्च्यु
त: ॥ वेदानधिजगन्शूद्रै: सम:
सपरिकीर्तित:॥ कृत्वे पुनर्वणीयो
सौवैदिकीताम्त्रिकीपिच। निर्मर्यादि
चाशुचौत्रूरक्षत्ते हिंसात्मकेत्यक्तध-
र्मेश्वनस्ते। हव्यञ्चकाव्यं चनदेयमेवदा
नंचद्त्तं यिफलंभवेदिति ॥ ब्राह्मणी
क्षत्रियावैश्यासुब्राह्मणाज्जातोब्रा
ह्मणाज्जातोब्राह्मण:। यथा।
ब्राह्मण्यांब्राह्मणाज्जातोब्राह्मण:
स्यान्नसंशय:। क्षत्रियायास्तुय:
पुत्रोब्राह्मण: सोप्यसंशय:॥ च
त्रियायांयथैवस्याद्वैश्यायामपिचैव
हीतिमहाभारते: दानधर्म:॥ ब्र
ह्मणोऽपत्यम्। तस्यापत्यमित्यण्।
अन्निति॰ टिलोपोन ॥ यद्वा। ब्रह्

ब्राह्मण :

" म॰वेद:। तदधीतेवेदवा तदधीते
तद्वेदवेत्ति ॥ अपरोक्षीकृतपरमार्थ
तत्वे॰ब्रह्मविदि ॥ यन्नसन्तंनचा-
सन्तंनाश्रुतंनबहुश्रुतम्। नसुवृत्तं-
नदुर्वृत्तं वेदकश्चित्सब्राह्मण:॥
गूढधर्माश्रितोविद्वान्अज्ञातचरितं
चरेत्। अन्धवज्जडवच्चापिमूकव-
च्चमहींचरेत्॥ नक्रुध्येन्नप्रहृष्येच्च
मानितोमानितश्च य:। सर्वभू-
तेष्वभयदस्तं देवाब्राह्मणंविदु:॥
अनाशिषमनारम्भं निर्नमस्कारम-
स्तुतिम्। अक्षीणं क्षीणकर्माणं
तंदेवाब्राह्मणंविदु:॥ अक्षीणं
पूर्णम्॥ अनुत्तरीयवसनमनुपस्ती
र्णशायिनम्। बाहूपधानीयंशान्तं
तंदेवाब्राह्मणंविदु:॥ येनकेनचिदा
च्छन्नोयेनकेनचिदाशित:। यत्र
क्वनशायीचतंदेवाब्राह्मणं विदु:॥
कन्थाकौपीनवासास्तुदण्डधृग्ध्यान
तत्पर:। एकाकीरमतेनित्यंतंदेवा
ब्राह्मणं विदु:। योऽहिरिवगणाद्भी
त: सम्मानान्नरकादिव। कुणपा
दिव.स्त्रीभ्यस्तं देवाब्राह्मणं विदु:॥
येनपूर्णमिवाकाशंभवत्येकेनसर्वदा
। शून्यं यस्यजनाकीर्णं तंदेवाब्राह्मण
विदु:॥ सन्यासिनि ॥ अमौनश्चमौ
नञ्चनिर्विद्याथब्राह्मणइतिश्रुति:।
ब्राह्मणोबुद्धवाक्यार्थ: साक्षात्कृत
द्विजवर: । ब्राह्मण गौणमन्त्रस्य-

ब्रह्मबोधार्हजन्मनि । विप्रजन्मनि ब्रह्माधीयीयत्वात्तत्र ब्राह्मणशब्दो-गौण: । विदुषि मुख्य इत्यर्थ: ॥ ब्रह्मणो वेदस्यायम् । तस्येदमित्यण् ॥

ब्राह्मणम् । न० ब्रह्मसङ्घाते । विप्रसंघे ॥ मन्त्रेतरवेदभागे ॥ स च विधिवचनत्वे नार्थवादवचनत्वे नानुवा-दवचनत्वे न च त्रिविध: स्मृत: ॥

ब्राह्मणक: । पुं० आयुधजीविब्राह्मणानां देशे ॥ ब्राह्मणकोऽप्युक्तिसंज्ञायां कन् ॥

ब्राह्मणकीय: । त्रि० ब्राह्मणकजाते । ब्राह्मणको नाम जनपद: । यत्र ब्राह्मणा आयुधजीविन: । तत्र जात: । छ: ॥

ब्राह्मणचाण्डाल: । पुं० ब्राह्मणजा यद्राख्याति ।

ब्राह्मणधर्मम् । न० ब्राह्मणानां समतादिकर्मविशेषे ॥ नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीले स्थितिर्दण्डनिधानमार्जवं तत-स्ततश्चोपरम: क्रियाभ्य: । वृह्मसे ।

ब्राह्मणप्रिय: । पुं० नारायणे । भगवति । वासुदेवे ॥ ब्राह्मणानां प्रिय: । ब्राह्मणा: प्रिया अस्य वा । घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्याथाहम् । स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दण्ड्यश्च न चास्मदीय: ॥ इति भगवद्वचनम् ॥ अपि च । यद्देवदेव

कीदेवी वसुदेवाद्देवजनत् । भीमस्य ब्राह्मणोगुप्त्यै दीप्तमग्निरिवारणिरि सि भारतम् ॥

ब्राह्मणब्रुव: । पुं० जातिब्राह्मणे । जातिमात्रोपजीविब्राह्मणे । यो ब्राह्मण: क्रियारहितत्वान्न ब्राह्मणं ब्रवीति स इत्यर्थ: ॥ यथा । विप्र: संस्कारयुक्तो न नित्यं सन्ध्यादिकर्मय: । नैमित्तिकस्तु नो कुर्याद्ब्राह्मणब्रुव उच्यते ॥ युक्त: स्यात् सर्वसंस्कारैर्द्विजस्तु नियमव्रतै: । कर्म किञ्चित्प्रकुरुते वेदोक्तं ब्राह्मणब्रुव: ॥ गर्भाधानादिभिर्युक्तस्तथोपनयनेन च । न कर्मकृन्न चाधीते स ज्ञेयो ब्राह्मणब्रुव: ॥ अध्यापयति य: शिष्यान् नाधीते वेदमुत्तमम् । गर्भाधानादिसंस्कारैर्युक्त: स्याद्ब्राह्मणब्रुव: ॥ इति ॥ तस्मै दाने फलविशेषो यथा । सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रमनन्तं वेदपारगे ॥ इ० मनु: ॥

ब्राह्मणयष्टिका । स्त्री० फञ्जिकायाम् । पद्मायाम् । भार्ग्याम् । ब्राह्मणे टी० इ० मा० भारको० इ० च० ॥

ब्राह्मणयष्टी । स्त्री० अङ्गारवल्ल्याम् । वालेयशाके । भार्ग्याम् ॥

ब्राह्मणहित: । त्रि० ब्राह्मणस्य हितकारिणि । ब्राह्मण्ये ॥ यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।

भकूटम् । न० वैवाहिकविचारोप योगिनिपोटकविशेषे ॥ यथा । एकराशौ च दम्पत्योः शुभस्यात्समसप्तके । चतुर्थे दशके चैव तृतीयैकादशे तथेति ॥

भक्तः । त्रि० भक्तियुक्ते । तत्परे । पूज्यविषयकानुरागोभक्तिः ० तद्वति । भगवदनुरक्तिविशिष्टे । शरणागतत्वे सत्यत्यन्तप्रीतिमति ॥ भज्यते स्म । भज सेवायाम् । कर्मणि क्तः ॥ भक्तत्यागे दोषउक्तः श्रीदेवीभागवते ॥ ब्रह्महत्या सुरापानं गोवधः स्त्रीवधस्तथा । तुल्यमेभिः कृतं पापं भक्तत्यागादुदाहृतम् । भजन्तं भक्तमत्याज्यं त्यजतः स्यात् कथं सुखमिति ॥ न० अन्ने । अन्धसि । ओदने । भात ० इ० भा० । तत्करणविधिर्यथा । यथा । अक्षिचतुर्दशगुणे तण्डुलानांचतुष्पलम् । विपचेत् स्रावयेन्मण्डं तद्भक्तं मधुरं लघु ॥ चक्रदत्तः । अन्नपञ्चगुणे तोये यवागूः षड्गुणे पचेत् । अत्रान्नं भक्तम् ॥ अपि च । सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत् । तद्भक्तं प्रस्रुतं चोष्णं विशदं गुणवन्मतम् ॥ भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु । अधौतमस्रुतं शीतं गुर्वरुच्यं कफप्रदम् ॥ अपिच । वारिणा भूरिणा शालितण्डुलान् क्षालितान् बहु । तक्रे च सिञ्चेत् तप्ते स्थाल्यग्निनिः क्षिपेत् । ततः पयो घृतं क्षिप्त्वा प्रक्षिप्तान् स्रावयेदिमान् । राजार्हं तद्भवेद्भक्तं गन्धवर्णरसान्वितम् ॥ यस्य धान्यस्य यद्भक्तं तस्य तद्गुणमाहरेत् । भक्तं लघु पुराणस्य शालेस्तच्चिपिटो गुरुः ॥

भक्तचारः । पुं० क्षुद्रमधूपे ॥

भक्तकारः । पुं० पाचके । औदनिके ॥ भक्तं करोति । डुकृञ्० कर्मण्यण् ॥

भक्ततूर्यम् । न० नृपाभेरि । भूभुजां भोजनकालावेदके वाद्यविशेषे ॥

भक्तदासः । पुं० पंचदशदासान्तर्गत दासविशेषे । दुर्भिक्षे भक्तेनाङ्गीकृतदासे ॥

भक्तमण्डः । पुं० अन्नावस्रावे । मासरे । मांड० इ० भा० ॥

भक्तवत्सलः । पुं० श्रीहरौ । भक्ताः वत्सला यस्य ॥ त्रि० भक्तस्नेहवति ॥

भक्तिः । स्त्री० विभागे ॥ गौणवृत्तौ ॥ भङ्ग्याम् ॥ श्रद्धायाम् । भजने ॥ अनुरक्तौ ॥ अनुरागविशेषे ॥ पूज्येष्वनुरागो भक्तिरित्युपदेशः ॥ परमेश्वरविषये परमप्रेमणि । न चेष्टदेवात् परमस्ति किंचिदिति

पूजादिपूर्विकायां प्रीतौ ॥ उपास
नायाम् । उपास्याकारचित्तवृत्ति
प्रवाहरूपायांविपक्षानिदिध्यासना
ख्यायांश्रवणमननाभ्यासफलभूताया
मनुरक्तौ । तात्पर्यं । जन्मान्तर
सहस्रेषु तपोध्यानसमाधिभिः ।
नराणांक्षीणपापानांकृष्णे भक्तिःप्रजा
यते ॥ इत्यादिलक्षणाभिगौतमी
यतन्त्रे । देवतायांमन्त्रे च तथा
मन्त्रप्रदेगुरौ । भक्तिरष्टविधायस्य
तस्याकृष्णः प्रसीदति ॥ तद्भक्त
जनवात्सल्यं पूजायांचानुमोदनम्
। सुमनाश्चर्चयेन्नित्यं तदर्थे दम्भ
वर्जनम् ॥ तत्कथाश्रवणे रागस्तदर्थे
चाङ्गविक्रिया । तदनुस्मरणंनित्यं
यस्तन्नाम्नोपजीवति । भक्तिरष्ट
विधाह्येषा यस्मिन्म्लेच्छेऽपिवर्त्त
ते । समुनिः सत्यवादीचकीर्त्ति
मान्सभवेन्नरः ॥ श्रीभागवते
प्रह्लादोक्तिर्यथा । श्रवणं कीर्त्तनं
विष्णोः स्मरणम्पादसेवनम् । अर्च
नंवन्दनंदास्यं सख्यमात्मनिवेद
नम् ॥ इतिपुंसार्पिताविष्णौभक्ति
श्चेन्नवलक्षणा । क्रियते भगवत्यद्धा
तन्मन्येऽधीतमुत्तमम् ॥ इति ॥
उदाहरणम् यथा । विष्णोस्तुश्रवणे
परीक्षिदभूद्वैयासकिः कीर्त्त
नेप्रह्लादः स्मरणे तदङ्घ्रिभजने
लक्ष्मीः पृथुःपूजने । सुग्रीवस्त्व

भिवन्दनेऽथ हनुमान् दास्येऽथ
सख्येऽर्ज्जुनः सर्वस्वात्मनिवेदने
बलिरभूत्कैवल्यमेषाम् परमिति
॥ हिमालयउवाच । कीदृशीभक्ति
र्वदस्वाद्ययेनज्ञानंसुखेनहि । जा
यते मनुजस्याद्यमध्यमस्याविरागि
णः ॥ मध्यमस्य मध्यमाधिकारि
णः विरागिणोभक्ति रहितस्यापि
दुःखंभज्ञानं येनभक्तिहेतुनाजायेत
तांभक्तिं वदेत्यर्थः ॥ श्रीदेव्यु
वाच । मार्गास्त्रयोमेविख्यातामो
क्षप्राप्तौनगाधिप । कर्मयोगोज्ञान
योगो भक्तियोगश्चसत्तम ॥ मोक्ष
प्राप्तौत्रयोमार्गाः ते चकर्मोपासना
ज्ञानभेदेनत्रिविधाः । तत्रज्ञान
मार्गः साक्षान्मोक्षसाधनम् इत
रौचित्तशुद्धिद्वारेतिविवेकः । तान्मा
र्गान् दर्शयतिकर्मयोगइतिभक्तियोग
उपासनायोगइत्यर्थः ॥ त्रयाणाम
प्ययंयोग्यः कर्त्तुं योगोऽस्तिसर्वथा
। सुलभत्वात्मानसत्वात्कायचित्ता
द्यपीडनात् ॥ गुणभेदान्मनुष्याणां
साभक्तिस्त्रिविधामता । परपीडाम
मुद्दिश्यदम्भंकृत्वा पुरस्सरम् ॥
मात्सर्यं क्रोधयुक्तोयस्तस्यभक्तिस्तु
तामसी । परपीडादिरहितः स्वक
ल्याणार्थमेवच ॥ नित्यंसकामहृद
योयशोर्थीभोगलोलुपः । तत्तत्
फलसमावाप्त्यै मामुपास्तेतिभक्ति

भक्तिमान्। त्रि॰ भक्तियुक्ते ॥

भक्तियोगः। पुं॰ प्रेमलक्षणे॥ यथोक्तं देवीगीतायाम्। त्रयाणामप्ययंयोग्यः कर्त्तुं शक्योस्तिसर्वथा। सुलभत्वान्मानसत्वात्कायचित्ताद्यपीडनात् ॥ अस्यार्थः। त्रयाणामपियोगानां यांतन्मार्गगामिनांत्रयाणांपुरुषाणां मध्ययंभक्तियोगः कर्त्तुं योग्यः शक्यश्चभवति। कुतइतिचेत्॰ अस्य भक्तियोगस्यान्ययोगापेक्षयासुलभत्वान् मानसत्वात्॰ द्रव्यव्ययशरीरायासमन्तरेणक्रियत्वे मनोवृत्त्यैवसम्पाद्यत्वात्। यस्मिन्भक्तियोगे। कायचित्तद्रव्यव्ययादिपीडनाभावो भवति तस्मादित्यर्थः। तस्मात्सर्वैरप्ययं भक्तियोगोनियमेनाश्रयितव्य इत्यर्थः॥

भक्तिल:। पुं॰ साधुहये ॥

भक्षक:। त्रि॰ भक्षणतत्परे। घस्मरे। अद्मरे॥ भक्षयति। भक्षप्रदने। ण्वुल्॥

भक्षट्कः। पुं॰ क्षुद्रगोक्षुरे॥

भक्षणम्। न॰ द्रवेतरद्रव्यस्यगलाधःकरणे। नादे। खदने। खादने। भखना॰ खाजा॰ इतिभाषा॥ भक्षल्युट्॥ अथशार्ङ्गधरामासंकरेणकघितदधि। तजंत्यादन्यथाचख्योगोमांसभक्षणम्॥

भक्षणीयम्। त्रि॰ भक्ष्यद्रव्ये। भक्षणयोग्ये॥ भक्ष्यतेयत्। भक्ष॰। अनीयर्॥

भक्षपत्रा। स्त्री॰ नागवल्ल्याम्॥

भक्षित:। त्रि॰ कृतभक्षणवस्तुनि। चर्विते। प्रत्यवसिते। खादिते। अभ्यवहृते। अशिते। भुक्ते। खायछिया॰ इ॰ भा॰॥ भक्ष्यतेस्म। भक्ष॰। क्त:॥

भक्ष्य:। त्रि॰ अदनीयद्रव्ये। अपूपादौ॥ दन्तैरथखण्डशवखण्डयत् भक्ष्यते॰ तद्भक्ष्यम्। खरविशदमभ्यवहार्यंभक्ष्यमितिव्याख्यातार:। खरंकठिनम्॰ विशदंविविक्तावयवंखाद्यं॰ भक्ष्यमित्यर्थः॥ यत्प्रत्याख्यातस्यचभक्षयतेस्तचप्रयोगात्॥ भक्ष्यत्वनामक्षुत्प्रतिघातार्थमुपादीयते॰ यथक्षानेनश्वमांसादिभिरपिक्षुत्प्रतिहन्तुम्। तत्रनियमः क्रियतेइदंभक्ष्यमिदमभक्ष्यमितिभेदोभाष्यम्॥ भक्ष्यत्वनामेत्यस्यतद्भवतियदितिशेषइतिविवरणम्॥

भक्ष्यकार:। त्रि॰ पिष्टकादिखाद्यद्रव्यविक्रयजीविनि। आपूपिके। कांदविके। कांदोइ॰हलवाई॰ इ॰ भा॰॥ भक्ष्यंकरोति। कर्मण्यण्॥

भक्ष्याभक्ष्यम्। न॰ खाद्याखाद्यद्रव्ये॥ यथा। भक्ष्याभक्ष्याण्यनेकानिब्राह्मणस्तुविशेषतः। अकशिष्टायथान्युक्तशास्त्रार्थोविनिर्णयः॥

त : ॥ भेदबुद्ध्यादिमांस्त्वस्मादन्यं
जानासि पामर : । तस्य भक्ति : स
माख्याता नगाधिप तु राजसी ॥ पर
मेशार्पणं कर्म पापसङ्क्षालनाय
च । वेदोक्तत्वादवश्यं तत्कार्यं त्व
तु मयाभिधम् ॥ इति निश्चितबु
द्धिस्तु भेदबुद्धिमुपाश्रित : ।
करोति प्रीतये कर्म भक्ति : सा नग
सात्त्विकी ॥ परभक्ते : प्रापिकेयं
भेदबुद्ध्यवलम्बनात् । पूर्वप्रोक्ते
ह्युभे भक्ती नपरप्रापिके मते ॥
अधुना परभक्तिन्तु प्रोच्यमानां
निबोध मे । मद्गुणश्रवणं नित्यं मम
नामानुकीर्त्तनम् ॥ कल्याणगुण
रत्नानामाकरायां मयि स्थिरम् ।
चेतसो वर्त्तनञ्चैव तैलधारासमं
सदा ॥ हेतुस्तु तत्र को वापि न कदा
चिद्भवेद्यदि । सामीप्यसार्ष्टिसा
युज्यसालोक्यानां न च वा ॥ मत्
सेवातोऽधिकं किञ्चिन्नैव जानाति
कर्हिचित् । सेव्यसेवकताभावा
त् तत्रकीथ नवाञ्छति ॥ परा
नुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रि
त : । स्वाभेदेनैव मां नित्यं जाना
ति न विभेदत : ॥ मद्रूपत्वेन जी
वानां चिन्तनं कुरुते तु य : । यथा
स्वस्यात्मनि प्रीतिस्तथैव च परात्म
नि ॥ चैतन्यस्य समानत्वान्न भेदं
कुरुते तु य : । सर्वत्र वर्त्तमानानां



सर्वरूपाणि सर्वदा ॥ नमते यजते
चैवाप्याचाण्डालान्तमीश्वरम् ।
न कुत्रापि द्रोहबुद्धिं कुरुते भेदवर्ज
नात् ॥ मत्स्थानदर्शने श्रद्धा मद्
भक्तदर्शने तथा । मच्छास्त्रश्रवणे
मन्त्रतन्त्रादिषु प्रभो ॥ मयि प्रे
माकुलमती रोमाञ्चिततनु : स
दा । प्रेमाश्रुजलपूर्णाक्ष : कण्ठ
गद्गदनिस्वन : ॥ अनन्येनैव भावे
न पूजयेद्यो नगाधिप । मामीश्वरीं
जगद्योनिं सर्वकारणकारणाम् ॥
व्रतानि मम दिव्यानि नित्यनैमित्ति
कान्यपि । नित्यं य : कुरुते भक्
त्या वित्तशाठ्यविवर्जित : ॥ मदुत्स
वदिदृक्षा च मदुत्सवकृतिस्तथा ।
जायते यस्य नियतं स्वभावादेव भू
धर ॥ उच्चैर्गायंस्तु नामानि ममैव
खलु नृत्यति । अहङ्कारादिरहितो
देहतादात्म्यवर्ज्जित : ॥ प्रारब्धे
न यथा यच्च क्रियते तत्तथा भवेत् ।
न मे चिन्तास्ति तत्रापि देहसंरक्षणा
दिषु ॥ इति भक्तिस्तु या प्रोक्ता पर
भक्तिस्तु सा स्मृता । यस्यां देव्यति
रिक्तन्तु न किञ्चिदपि भाव्यते ॥
इत्थं जाता परा भक्तिर्यस्य भूधर तत्त्व
त : । तदैव तस्य चिन्मात्रे मद्रूपे
विलयो भवेत् ॥ भक्तेस्तु या परा
काष्ठा सैव ज्ञानं प्रकीर्त्तितम् ।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं

यत : । भक्तौक्तस्याथापि प्रार-
ब्धवशतोनग । नजायते ममज्ञानं म
णिद्वीपं सगच्छति ॥ तत्रगत्वाखिला
न् भोगाननिच्छन्नपिचर्च्छति ॥
तदन्ते ममचिद्रूपज्ञानं सम्यग्भवे
ध्रुवम् । तेन मुक्त : सदैवस्याज्ज्ञाना
न् मुक्तिर्नचान्यथा ॥ इहैवयस्य
ज्ञानं स्याद्हृद्गतप्रत्यगात्मन : ॥
ममसंवित्परतनोस्तस्यप्राणानगच्छ
न । ब्रह्मैवसंस्तदाप्नोतिब्रह्मैव
ब्रह्मवेद्य : । कण्ठचामीकरस
मज्ञानात्तुतिरोहितम् । ज्ञाना
द्ज्ञाननाशेनलब्धमेवहिलभ्यते ॥
विदिताविदितादन्यन्नगोत्तमवपु
र्मम । यथादर्शे तथात्मनियथाजले
तथापितृलोके । छायातपौयथा
स्पष्टौविविक्तौतद्वदेवहि । मम
लोकेभवेज्ज्ञानं द्वैतभानविवर्ज्जि
तम् ॥ यस्तुवैराग्यवानेवज्ञानही
नोम्रियेतचेत् । ब्रह्मलोकेव
से न्नित्यं यावत्कल्पं तत : परम् ।
। शुचीनांश्रीमतांगेहेभवेत्तस्य
सनि : पुन : । करोतिसाधनं
पश्चात्ततोज्ञानं हिजायते ॥ य
नेकजन्मभीराजन्ज्ञानं स्यान्नैक
जन्मना । तत : सर्वप्रयत्नेनज्ञाना
र्थं यत्नमाश्रयेत् ॥ नोचेन्महा-
विनाश : स्याज्जन्मैतद्दुर्लभं-
पुन : । तत्रापिप्रथमेवर्णेवेदप्रा
प्तिश्चदुर्लभा ॥ शमादिषट्कसम्प
त्तिर्योगसिद्धिस्तथैवच । तथोत्तम
गुरुप्राप्तिः सर्वमेवात्रदुर्लभम् ।
तथेन्द्रियाणांपटुतासंस्कृततनुस्त
नोस्तथा । अनेकजन्मपुण्यैस्तु
मोक्षेच्छाजायते तत : । साधने
सफलेप्येवं जायमानेपियोनर : ।
ज्ञानार्थंनैवयततेतस्यजन्मनिरर्थक
म् ॥ तस्माद्राजन्यथाशक्त्याज्ञा
नार्थं यत्नमाश्रयेत् । पदेपदेऽश्व
मेधस्यफलमाप्नोतिनिश्चितम् ॥
घृतमिवपयसिनिगूढं भूतेभूतेचवस
तिविज्ञानम् । सततंमन्थयितव्यंमन
सामन्थानभूतेन ॥ ज्ञानंलब्ध्वा
कृतार्थ : स्यादितिवेदान्तडिण्डिम:
। सर्वमुक्तमयासिनकिंभूय : श्रोतुमि
च्छसि ॥ ४५ ॥ इतिश्री देवीभाग
वतेमहापुराणे सप्तमस्कन्धे देवी-
गीतायांसप्तत्रिंशोऽध्याय : ॥ ३७ ॥
भक्तिश्चवैराग्यस्यपत्नी । यथा । वैरा
ग्यस्यचद्वेभार्येश्रद्धाभक्तिश्चपूजिते ।
याभ्यांशश्वज्जगत्सर्वंधर्मौयन्मुक्ति
मन्मुने। इति । भज्यतेसेव्यते । भज
सेवायाम् । कर्म्मणिक्तिन् । भजइ
त्येषवैधातुः सेवायांपरिकीर्तित :
। तस्मात्सेवाबुधै : प्रोक्ताभक्तिसा
धनभूयसी ।

भक्तिकर : । पुं० मक्षे । भक्तिं करोति
दिवाभिर्मिसिट : ।

भिहितम् । भगवत् ० योनिवत् ॥ कटीकपालनिस्तोदद्दाहकण्डूरुजादयः । भवन्तिपूर्वरूपाणिभविष्यति भगन्दरे ॥ कटीकपालमचकटीफलकम् । अथास्य पिडकामेवतथायत्नादुपाचरेत् । शुद्ध्यस्त्रुतिर्सेकाद्यैर्यथापाकंनगच्छति ॥ लङ्घनं स्वेदम लेप विरतापमविरेचनैः । रक्तमोक्षादिभिः शीघ्रं गुदजांपि डकांजयेत् ॥ तथायत्नभिषक्‌र्यात्यथापाकं नियच्छति । अपक्कं वाथ पक्वं वा जलौकापातनंहितम् ॥ तस्मात्तुणूह्यास्यासिदंरक्तमोक्षणम् ॥ गुग्गुलुत्रिफलायुक्तपीत्वानश्येद्भगन्दरः ॥

भगभक्षकः । पुं० कुण्डाशिनि । कुट्टना० शू० भा० ॥ तस्मान्न भक्ष्यं निषेधोयथा । योदाम्बैः परित्यक्तः साधुभिर्ब्राह्मणैरपि । कुण्डाशीयस्तस्मान्न भुक्त्वाचान्द्रायणं चरेदिति ॥

भगवान् त्रि० ऽचिन्त्यैश्वर्यादिगुणे ० ऐश्वरशब्दवाच्ये ॥ भगं माहात्म्यं षड्विधमैश्वर्यं चनित्यमप्रतिबन्धेनयत्रवर्त्तते ०सभगवान् नित्ययोगेमतुप् ॥ उत्पत्तिंनिधनञ्चैवभूतानामागतिङ्गतिम् । वेत्तिविद्यामविद्याञ्चसवाच्योभगवानितिविष्णुपुराणम् ॥ पूज्यावति



। पूज्ये । आत्मनि ॥ जिने ॥

भगवती । स्त्री० ऽचिन्त्यैश्वर्यायामाद्यायाम् । गौर्याम् । दुर्गायाम् । परस्यांप्रकृतौ ॥ तस्याः स्वरूपंयथा । यथानित्योहिभगवान्नित्याभगवतीतथा । स्वमाययातिरोभूतातत्रेशेप्राकृतेलये ॥ आब्रह्मस्तम्बपर्यन्तं सर्वंमिथ्यैवकृत्रिमम् । दुर्गासत्यस्वरूपासाप्रकृतिर्भगवान्यथा सिद्ध्यैश्वर्यादिकंसर्वंयस्यामस्तियुगेयुगे । सिद्ध्यादिकेभगोज्ञेयस्तेनभगवतीस्मृता ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥ अपिच । सेव्यतेयासुरैः सर्वैस्तास्वेवभजतेयतः । धातुर्भजेतिसेवायांभगवत्येवसास्मृतेति ॥ चतुर्व्यूहात्मकंभगवत्याः स्वरूपंक्रमेणदर्शितंश्रीदेवीभागवते । तद्यथा । सर्वस्याद्यामहालक्ष्मीर्वरेण्याशक्तिरुत्तमा । सात्त्विकीयमहीपालाजगत्पालनतत्परा ॥ सृजतीयारजोरूपासत्त्वरूपाचपालने । संहारेचतमोरूपात्रिगुणासासदामता ॥ निर्गुणापरमाशक्तिः सर्वकामफलप्रदा । सर्वेषांकारणंसाहिब्रह्मादीनांनृपोत्तमः ॥ सर्वस्याद्येति । रक्षापालयित्रीसात्त्विकीमहालक्ष्मीर्विष्णुशक्तिः सर्वप्रपञ्चस्याद्येयम् । द्वितीयात्तु०सृजतीयारजोरूपासा०सत्त्वरूपाचपालने० इतिपुनस

शक्तिरनुवादरूपा : संहारितमोरूपा-
यासेयंतृतीयाशक्तिः। एतासांना-
मानिप्रथमस्कन्धएवोक्तानि। तथा
नुसारिणीचतुर्थीराजसीतामसीत-
था। महालक्ष्मीसरस्वतीमहाकाली
तिताः स्त्रियइति। मनुरहस्ये तु०
सत्वाख्येनातिशुद्धेनगुणेनेन्दुप्रभं-
दधानिर्णयवर्णेनमहालक्ष्मीरजोगु
णासरस्वतीसत्वगुणेतिलभ्यतइति-
वेद्य। नात्वभेदेनगुणभेदव्यवस्था-
याःसुस्थत्वात्। एतासांचशक्ती-
नांयत्तासरूपाव्यतिरेकाद्ब्रह्माश्रयं
विहायावस्थानासम्भवेन० तत्तद्-
गुणविशिष्टंब्रह्मैवमहालक्ष्म्यादिना
मकमितिबोध्यम्॥ निर्गुणेति।
अथयात्रिगुणत्रयकारणभूतासाम्याव-
स्थात्मिकासानिर्गुणा० तस्यास्त्रिगुण
राशक्तिर्न० ब्रह्माश्रयंविनाऽवस्था
नासम्भवेन० साम्यावस्थमायोपाधि
कंब्रह्मैव० पराशक्तिमायाभुवनेश्व-
रीशब्दवाच्यंभवति। सर्वैचेद्रमुपो-
त्वातेस्पष्टम्। तत्रनिर्गुणासर्वे-
षांकारणमित्याह। सर्वेषांकारणं
साहीति। सर्वकारणस्यानवस्था-
भियाकस्मादप्युत्पत्त्यभावेननित्य-
त्वमुक्तम्। तेनचकेयंशक्तिःकुतो
जातेत्याक्षेपोत्तरंदत्तंभवति॥ रूपच
तुष्टयमध्येप्याह। निर्गुणासर्वेषा-
ज्ञातुमशक्यायोगिभिर्नृपः। सगु-
णासुखसेव्यासाचिन्तनीयासदाबुधैः
॥ अयोगिभिरितिच्छेदः। अयो
गिभिर्निर्विकल्पसमाधिरहितैर्निर्गु
णाज्ञातुमशक्यायोगिबुद्धिगम्यैवेत्ये
त्यर्थः। तथाचश्वेताश्वतरेतेध्या-
नयोगानुगताअपश्यन्देवात्मशक्तिं
स्वगुणैर्निगूढामिति। मध्यमाधि-
कारिणामयोगिनान्तुसगुणामहा-
लक्ष्म्यादिरूपाचिन्तनीयेत्यर्थः।
सद्वरामूलप्रकृतिरेवसर्वेषामाश्र-
यमितिरहस्यम्। सर्वमेतदंशतिस-
त्वविमर्शिन्यांस्पष्टम्॥ पूज्यायाम्
॥ उगित्वान्ङीप्॥

भगवत्पदी। स्त्री० गङ्गायाम्॥

भगवत्पूज्यपादः। पुं० श्रीशङ्कराचा-
र्ये॥

भगवद्द्रुमः। पुं० तगरवृक्षे॥

भगवद्धर्मः। पुं० हरिपरितोषकैकाद
श्यादिनियमस्वरूपधर्मे॥ त्रि० त
द्विशिष्टे॥

भगवद्भक्तः। त्रि० स्थितप्रज्ञे॥ य०।
दैवाधीनंजगत्सर्वंसजन्मकर्मशुभा
शुभम्। संयोगाश्चवियोगाश्चनचदै
वात्परंबलम्॥ कृष्णायत्तस्तद्दैवं
सदैवात्परतस्ततः। भजन्तिसततं
सन्तः परमात्मानमीश्वरम्॥ दै-
वंवर्धयितुंशक्तःक्षयंकर्तुंसनी
लया। नदैवयस्तद्भक्तश्चाविनाशी
चनिर्गुणः॥

भगालम् । न० नृकरोटिकायाम् । नृमस्तके ॥ भनक्ति । भञ्जो चामर्दने । घाघुलकात् कालन् । नलोपः । न्यङ्क्वादित्वात् कुत्वम् ॥

भगाली । पुं० चन्द्रमौली । सदाशिवे ॥ भगालमस्यास्ति । इनिः ॥

भगिनी । स्त्री० सहोदरायाम् ॥ स्वसरि ॥ भगं कल्याणम् । इच्छा वास्त्यस्याः । इनिः । ङीप् ॥

भगनीपतिः । पुं० आवुत्ते ॥ भामे । । भगिन्याः पतिः ॥

भगीरथः । पुं० सूर्यवंशीयनृपतिविशेषे । दिलीपात्मजे ॥ योहि गङ्गांस्वर्गादानीयभागीरथीतिसंज्ञां चकार ॥

भगोलः । पुं० भपञ्जरे । नक्षत्रचक्रे ॥

भगो । अ० ) हेभगवन्०

भगोः । अ० ) इतिसम्बोधने ॥

भग्नः । त्रि० पराजिते ॥ स्फुटिते । स्फुटा०इ०भा० ॥ भङ्गे । तीक्ष्णा० इ०भा० ॥ यथा । विरक्तमोचितं-जीर्णकौटनिष्क्यूतधनुः । किं स्वित्रं यदिरामेणभग्नंक्षत्रियकान्तिनी ॥ भञ्जः क्तः ॥ न०रोगविशेषे । अस्थिविश्लेषलक्षणे ॥

भग्नपादर्चम् । न० पुष्कराख्यनक्षत्रषट्के ॥ यथा । पुनर्वसूत्तरापाढा कृत्तिकोत्तरफल्गुनी । पूर्वभाद्रः विशाखाचेत्यषडेतेपुष्कराः स्मृताः ॥ भग्नपादर्चसंयोगात् द्वितीया द्वादशीयदि । सप्तमीचार्कमन्दारे-ष्वावर्तेजारजोध्रुवम् ॥

भग्नपृष्ठः । पुं० सम्मुखे ॥ इ०वि० शेषः ॥

भग्नसन्धिः । पुं० शरीरस्थसन्धिस्थानभग्नरोगविशेषे ॥ तस्यौषधं यथा । अभयात्रिफलाव्योषैः सर्वैरेभिः समीकृतैः । तुल्योगुग्गुलुनायोज्योभग्नसन्धिप्रसारकः ॥

भग्नसन्धिकम् । न० घोले ॥

भग्नात्मा । पुं० चन्द्रमसि ॥

भग्नाशः । त्रि० हताशे ॥

भग्नी । स्त्री० भगिन्याम् ॥

भङ्गारी । स्त्री० दंशे ॥

भङ्क्ता । त्रि० भङ्गकर्त्तरि ॥ भनक्तिः । भञ्जो० । तृच् ॥

भङ्गः । पुं० तरङ्गे । वीच्याम् । कल्लोल्याम् ॥ भज्यते । भञ्जो० । कर्मणिघञ् ॥ जयविपर्यये । पराजये । भञ्जनम् । घञ् ॥ भेदे ॥ रोगविशेषे ॥ रोगजन्ये ॥ स्फोटने ॥ कौटिल्ये ॥ भये ॥ विच्छित्तौ ॥ वक्रनिर्याणे । न० खण्डे ॥

भङ्गवासा । स्त्री० हरिद्रायाम् ॥

भङ्गसार्थः । त्रि० कुटिले ॥

भङ्गा । स्त्री० शणाख्यशस्यान्तरे । मा

दुभयमतनिष्णातोभट्टाचार्य : ॥

भट्टार : । त्रि॰ पूज्ये । भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि : ॥ भट्टं करष्कतिवा । कर्मण्यण् ॥

भट्टारक : । पुं॰ नाट्यभाषा॰नृपे । नाट्योक्ता॰देवे ॥ तथा॰ तपोधने ॥ त्रि॰ पूज्ये ॥ भटति : भटपरिभाषणे । क्विप् । भट्चासौताएकश्च । पृषोदरादित्वात्॰ ट्त्वनिषेधोत्न ॥ भट्टं स्वामित्वम्॰करष्कतिवा । कर्मण्यण् । तत : स्वार्थेक : ॥

भट्टारकवार : । पुं॰ आदित्यवारे ॥

भट्टि : । पुं॰ सनाम्नाप्रसिद्ध रामकथाश्रयमहाकाव्ये ॥

भट्टिनी । स्त्री॰ नाट्योक्ताऽकृताभिषेकायांराजयोषायाम् । ब्राह्मण्याम्

भड : । पुं॰ सर्वसङ्करजातिविशेषे ॥ सतुलेटात्तीवरकन्यायांजात : । यथा । लेटस्तीवरकन्यायांजनयामासषण्नरान् । माल मल मातरश्च भडकोलकन्दरम् ॥ ब्र॰ व॰ वै॰ पु॰ ॥

भडाग्नि : । पुं॰ अग्निविशेषे ॥ भड भडइतिशब्दयुक्तो यस्त्रो ॥

भडिल : । पुं॰ शूरे । सेवके । भडइतिसौत्रोधातु । सलिकल्यनिमहिभडिभंडिशडिपिंडितुंडिकुकिभूभ्यइलचिति॰ इलच् ।

भणित : । त्रि॰ कथिते । शब्दिते ॥

भणिति : । स्त्री॰ वाचि ॥

भण्टाकी । स्त्री॰ वार्ताक्याम् ॥ भण्यते॰ भक्ष्यते ऽ। भटभृती॰ भवाण्ट्वेवा । पिनाकादयश्चेतिसाधु : ॥ बृहत्याम् ॥

भण्टिका । स्त्री॰ बृन्ताकि । भटा॰ भण्टा॰ इ॰ भा॰ ॥

भण्टुक : । पुं॰ श्योनाकवृक्षे ॥

भण्ड : । पुं॰ वाट्वटौ । परिहासभाषिणिभांड॰इ॰भा॰ ॥ भंडते । भडिकल्याणे॰ पचाद्यच् ॥

भंडक : । पुं॰ खञ्जनखगे ॥

भंडनम् । न॰ कवचे ॥ युद्धे ॥ खलीकारे ॥

भडहासिनी । स्त्री॰ वेश्यायाम् ॥

भडि : । स्त्री॰ वीच्याम् ॥

भडिका । स्त्री॰ मञ्जिष्ठायाम् ॥

भंडिर : पुं॰ भडिले ॥ . शिरीषवृक्षे ॥ रलयोरैक्यत्वम् ॥

भण्डिल: पुं॰ । शिरीषवृक्षे । भण्डते । भडिकल्याणे ॰ परिभाषणे वा । सलिकलीति॰ इलच् । त्रि॰ दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री॰ मञ्जिष्ठायाम् ॥ भण्डति । भण्डश्चाभण्डने । पचाद्यच् । गौ॰ ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री॰ मंजिष्ठायाम् ॥

भण्डीर : । पुं॰ कोविदारे । प्राद्य

नारे ॥ तण्डुलीयशाके ॥ गिरी पबुघे ॥ भण्डे वीरन् ॥

भण्डीरलतिका । स्त्री॰ मञ्जिष्ठायाम् ॥

भण्डीरी । स्त्री॰ मञ्जिष्ठायाम् ॥ भण्डति । भण्डयामर्दनी । वा॰ डरन् गौ॰ ॥

भण्डील : । पुं॰ मञ्जिष्ठायाम् ॥

भण्डुक: । पुं॰ मत्स्यविशेषे । भाण्डुर॰ दू॰ गौ॰ दे॰ भा॰ ॥

भण्डूक : । पुं॰ श्योनाकवृक्षे ॥

भदन्त : । पुं॰ सौगतादिबुधे ॥ सुतिजसि ॥ मायादेवीसुते ॥ त्रि॰ प्रव्रजिते ॥ पूज्ये ॥ भंदते ॥ भदिकल्याणेसुखेच । भन्देर्नलोपश्च तिभच् ॥

भद्राकः । पुं॰ न॰ मंगले ॥ भन्दते । भदि॰ । पिनाकादित्वात्साधुः ॥

भद्रम् । न॰ कल्याणे ॥ शर्मणि । सौख्ये ॥

भद्र : । पुं॰ शिवे । खञ्जरीटे ॥ वृषभे ॥ कदम्बके । करिजातिविशेषे ॥ नवशुक्ल्यन्तर्गतवलदेवे । रामचरे । सुद्यामन् । न॰ मङ्गले । मुस्ते । काञ्चने ॥ त्रि॰ श्रेष्ठे । भन्दनीये ॥ साधौ । पुं॰ स्त्री॰ करणान्तरे । विष्टिसञ्ज्ञके ॥ सुवर्णे ॰ । भन्दते । भदि॰ । ऋज्रेन्द्रेति रन् ॰ भन्देर्नलोपश्चनिपात्यते ॥

भद्रक : । पुं॰ देवदारुणि ॥ सुपार्श्वाख्यगिरिस्थकदम्बके ॰ घृतिमद्राणकाननम् ॰ तत्रस्थहृदे ॥ न॰ भद्रमुस्तके ॥ त्रि॰ मनोज्ञे

भद्रकण्ट : । पुं॰ गोक्षुरे ॥

भद्रकर्ण : । पुं॰ शिवस्थानविशेषे । भद्रास्याभद्रकर्णके ॥

भद्रकर्णहृद : । पुं॰ तीर्थविशेषे ॥

भद्रकर्णी । स्त्री॰ गवाक्षिकायाम् ॥ ॥ गोकर्णाधिवासिन्यांदेव्याम् ॥

भद्रकाली । स्त्री॰ कात्यायन्याम् ॥ महिषमर्दिन्याम् ॥ औषधीभेदे । गन्धोल्याम् ॥ भद्रं कल्याणं कालयति वर्द्धयति । कर्मण्यण् भद्रासौकालीचेतिवा ॥

भद्राश्री । स्त्री॰ भद्रमुस्तायाम् ॥

भद्रकुम्भ : । पुं॰ पूर्णकुम्भे । भद्रस्य ॰ भद्रोवाकुम्भः ॥

भद्रगन्धिका । स्त्री॰ मुस्तके ॥

भद्रङ्कर : । त्रि॰ क्षेमङ्करे । शुभङ्करे ॥

भद्रचूड : । पुं॰ स्नुहीभेदे । लङ्कास्थायिनि ॥

भद्रदल : । पुं॰ इन्द्रयवे ॥

भद्रतरुणी । स्त्री॰ कुब्जकवृक्षे ॥

भद्रतुरगम् । न॰ जम्बूद्वीपस्थभद्रवर्षान्तर्गतवर्षविशेषे ॥ यथा ।

माल्यवज्जलधिमध्यवर्त्ति यत् तस्य भद्रतुरग जम्बुधा :॥ इ० सिद्धान्तशिरोमणि : ॥

भद्रदन्तिका । स्त्री० दन्तीवृक्षप्रभेदे । कैशरुहायाम् । जयावल्लायाम् ॥

भद्रदारु : । पुं० न० देवदारुणि ॥ न० सरलद्रुमे ॥ भद्रदारु ॥

भद्रदार्व्वादिक : । पुं० औषधगणविशेष ॥

भद्रनामा । पुं० काष्ठकुट्टखगे ॥

भद्रनासिका । स्त्री० वायमाणवृक्षे । वहला० गौ० दे० भा० प्र० ॥

भद्रनिधि : । पुं० महादानविशेषे ॥

भद्रवल्ली । स्त्री० सुभगायाम् ॥ भद्रः । पतिर्यस्या : ० इतिविग्रहे० नित्यं सपत्न्यादिष्विति पतिशब्दस्य नान्तादेशे० नान्तलक्षणो ङीप् ॥

भद्रपदा : । स्त्री० प्रोष्ठपदासु । पूर्वभाद्रपदोत्तरभाद्रपदनक्षत्रयो : ॥ भद्रं पदं यासाम् ० ता : । पचाद्याद्युत्वं ॥

भद्रपर्णी । स्त्री० गम्भार्याम् । भद्राणि पर्णान्यस्या : । पाककर्णेतिङीष् ॥ प्रसारण्याम् ॥

भद्रपीठ : । पुं० सिंहासने ॥

भद्रबलन : । पुं० बलरामे ॥

भद्रबला । स्त्री० लताविशेषे । प्रसारण्याम् । कटम्भरायाम् । भद्रं बलमस्या : ॥ बलायाम् ॥

भद्रमल्लिका । स्त्री० गवाक्षीतिख्यातक्षुपे ॥

भद्रमल्ली । स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज : । पुं० शरे । इक्षुविटपे । सरकण्डा० इ० भा० ॥

भद्रमुस्त : । पुं० भद्रमुस्तके ॥ भद्रश्चासौमुस्तश्च ॥

भद्रमुस्तक : । पुं० नागरमुस्तके ॥ भद्रश्चासौमुस्तश्च ॥

भद्रमुस्ता । स्त्री० भद्रमुस्तके । गुन्द्रायाम् ॥

भद्रयवम् । न० कुटजफले । कलिङ्गे । इन्द्रयवे ॥ यशाकारबीजस्य यवम् । भद्रञ्चतद्यवंच ॥

भद्ररेणु : । पुं० ऐरावतहस्तिनि ॥

भद्रवट : । पुं० भीमतीर्थविशेषे ॥

भद्रवत् । न० देवदारुणि ॥

भद्रवती । स्त्री भद्रपर्ण्याम् ॥ कट्फले ॥

भद्रवर्मा । पुं० नवमालिकायाम् नवाख्याम् । नवारा० इ० भा० ॥

भद्रवल्लिका । स्त्री० गोपवल्ल्याम् । अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली । स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे । आरामशीतलायाम् । अष्टापदिकायाम् ।

मदनमाली॰टी॰ हारमाली॰टी॰ च॰गौ॰दे॰भा॰ ॥

भद्रश्रयम्, न॰ चन्दने ॥

भद्रश्रीः । पुं॰ चन्दनवृक्षे ॥ भद्राश्रीरस्य ॥

भद्रसोमा । स्त्री॰ गङ्गायाम् ॥

भद्रा । स्त्री॰ रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा । भद्रा तथोत्तरगिरीन् उत्तरांश्च तथा कुरून् । अतीत्योत्तरमम्भोधिमभ्येति च महामुने ॥ प्रसारिण्याम् ॥ कट्फलि ॥ अनन्तायाम् ॥ तिथिभेदे । द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम् । अपराजितायाम् ॥ नीलदूर्वायाम् ॥ बलायाम् ॥ शम्याम् ॥ वचायाम् ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे ॥ गवि ॥ काकोदुम्बरिकायाम् ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ छायागर्भजात सूर्यकन्यायाम् ॥ श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम् । दुर्गायाम् ॥ यथा । भद्रा स्याद्भद्रकर्त्री॰ इति ॥ विष्ट्याम् ॥ यथा । शुक्ले पूर्वार्द्धेऽष्टमी पञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे । कृष्णेऽन्त्यार्द्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः ॥ विहायविपरीतां च विष्टिं सर्वं चवर्जयेत् । विष्टिशेषे निदण्डे

च्छिप्र् पश्चिमे कार्यं जयावहम् ॥

भद्राकरणम् । न॰ मुण्डने ॥

भद्राक्षः । त्रि॰ शोभननेत्रे ॥

भद्रात्मजः । पुं॰ खड्गे ॥

भद्रारकः । पुं॰ अष्टादशक्षुद्रद्वीपान्तर्गतद्वीपविशेषे

भद्रावर्णिका । स्त्री॰ )

भद्राली । स्त्री॰ ) गन्धाल्याम् ॥

भद्रावती । स्त्री॰ कट्फलवृक्षे ॥

भद्राश्वम् । न॰ भुवोनववर्षान्तर्गतवर्षविशेषे । इलावृतवर्षे । भद्राश्वमाख्यवत्प्राच्यां वर्षं भद्रजनाकुलम् ॥

भद्रासनम् । न॰ नृपासने ॥ भद्रञ्च तदासनञ्च । तृतीययोगाङ्गविशेषे तद्यथा । सीवन्याः पार्श्वयोन्यस्येद्गुल्फयुग्मं सुनिश्चलम् । वृषणाधः पादपार्ष्णी पाणिभ्यां परिबन्धयेत् ॥ भद्रासनं समुद्दिष्टं योगिभिः सारकल्पितम् ॥

भद्रेश्वरः । पुं॰ केलपग्रामस्थशिवे ॥ शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्थमार्धिवणिवलिङ्गे ॥

भद्रैला । स्त्री॰ स्थूलैलायाम् ॥

भद्रोदनी । स्त्री॰ बलायाम् । परिभाषा॰टी॰ भा॰ ॥ नागबलायाम् ॥

भन्दम् । न॰ कल्याणे ॥ प्रसादे च ॥

भन्दिल : । पुं॰ दूते न॰ शुभे ॥ कम्पे ॥

भन्धुक : । पुं॰ भारतवर्षान्तर्गतदेशविशेषे ॥

भपञ्जर : । पुं॰ भचक्रे ॥

भपति : । सुधांशौ ॥ भानांपति : ॥

भम : । पुं॰ धूमे ॥

भम्भरालिका । स्त्री॰ मक्षिकायाम् । इति त्रि ॥

भम्भराली । स्त्री॰ मक्षिकायाम् ॥ इति ॥

भम्भासार : । पुं॰ मगधराजविशेषे । श्रेणिके ॥

भयम् । न॰ घोरे । भयङ्करे ॥ कुब्जक प्रसूने ॥ प्रतिभये । दरे । त्रासे । भीतौ । भिये । साध्वसे । अना गतप्रतिकूलप्रतिसन्धाने ॥ तद्व्याख्या नियथा । रौद्रशक्त्यातुजनित चित्तवैक्लव्यदं भयम् । व्याघ्रादिदर्शनाधीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु : खरूपम् । रागविषयस्य विनाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनोमन्यमानस्यदैन्यात्मकश्चित्तवृत्तिविशेषः ॥ सर्वान् विषयान्परित्यज्य ज्ञानमार्गैकधनो भवितव्यमितित्रास: ॥ अनिष्टहेतूपनिपाते तत्परिहारानर्हत्वाज्ञानम् ॥ परत : स्वानिष्टसम्भावनायाम् । भयं द्वितीयाभिनिवेशत : स्यात् ॥ यथा व्याघ्राद्बिभेति । व्याघ्राधीनत्वेनस्वीयमरणं सम्भावयतीति ॥ बिभेत्यस्मात् । ञिभी भये । घञ्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ बिभेत्यनेनेति विग्रहे॰ एरजित्यकरणेऽच् ॥ भयं द्विविधम् । दैवम्॰मानुषञ्च । यथा दुष्कामकन्दक : । हुताशनोनल व्याधिर्दुर्भिक्षं मरणं तथा । इतिपञ्चविधं दैवं मानुषव्यसनं तत : ॥ आयुक्तकेभ्यश्चौरेभ्य : परेभ्योराजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधाभयमिति ॥ आगते भये अभीतवत्स्थातव्यम् । यथा । तावद्भयस्यभेतव्यं यावद्भयमनागतम् । उत्पन्ने तु भये तीव्रे स्थातव्यं वै अभीतवत् ॥ पुं॰ रोगे ॥

भयङ्कर : । पुं॰ डुण्डुलपक्षिणि ॥ त्रि॰ भयोत्पादके । भैरवे । दारुणे । भीषणे । भयानके ॥ भयं करोति । मेघर्त्तिभयेषु कृञः इति खच् । मुमागम : ॥ पुं॰ यात्रायोगान्तरे ॥ यथा । एकर्क्षगौशुक्रजीवौस्यातामन्योन्यसप्तगौ । भयङ्कराख्योयोगोयं यातुर्भीति प्रदायक : ॥

भयडिण्डिम : । पुं॰ सङ्ग्रामपटहे ॥

भयद्रुतः । त्रि॰ कान्दिशीके । भीत्यापलायिते ॥ भद्रुद्रुतवत् । द्रुगतौ । कर्त्तरिक्तः । भयात्द्रुतः । पंचमीतियोगविभागात्समासः ॥

भयनाशिनी । स्त्री॰ भयनाशकर्त्र्याम् । विद्यायाम् ॥ त्रायमाणालताम् ॥

भयभीतः । त्रि॰ त्रासेनातङ्किते ॥ यथा । एकतोभयभीतस्यप्राणिनः प्राणरक्षणम् । नातोगुरुतमोधर्मः कश्चिदन्योस्तिभूतले ॥ वह्निपुराणे शिबिरोपाख्याने ॥

भयभ्रष्टः । त्रि॰ भयद्रुते ॥

भयानकः । पुं॰ व्याघ्रे ॥ राहौ । शृङ्गाराद्यष्टरसान्तर्गतरसे ॥ त्रि॰ भयानके । भीषणे ॥ बिभेत्यस्मात् । ञिभी॰ आनकः । भीङ् भियद्रुग्यानकः ॥

भयापहः । पुं॰ राजनि ॥ परमेश्वरे ॥ भय संसारजमुपहन्तीति । हन॰ । अन्येष्वपिदृश्यतइतिडः । भयमपवद्धात । आशिषिहनःसतिड ॥ त्रि॰ भयापहरणकर्त्तरि ॥

भयावहः । त्रि॰ भयङ्करे ॥

भरः । पुं॰ अतिशये । भरति । भृञ्॰ । पचाद्यच् ॥ भरण भरः ॥ पुंसीतिघोवा ॥ भरश्चद्रव्यवाचित्वेपि पुंस्त्वमेव । धनञ्जयस्तुः पुंसी त्रिवचनात् ॥ चन्द्रे ॥ भ इत्यव्यं राति । रा॰ कः । यद्वा ॥ भारे ॥ शेतेभराभराक्रान्ते शेषे नारायणः स्वयम् । लक्ष्मीवल्लोनजानन्ति दुःसहांपरवेदनाम् ॥

भरटः । पुं॰ कुम्भकारे ॥ भृत्ये ॥ विभर्त्ति । डुभृञ्॰ शकादिभ्यादिना॰ अटच् ॥

भरणम् । न॰ वेतने । भृतौ । मूल्ये ॥ भ्रियते ऽनेन । भृञ्॰ ल्युट् ॥ पोषणे ॥ यथा । भरणं पोष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नरकं पीडनेचाऽस्यतस्माद्यत्नेनतं भरेत् ॥ पुं॰ भरणीनक्षत्रे ।

भरणी । स्त्री॰ द्वितीयनक्षत्रे । यमदैवतं ॥ तच्चत्रिकोणाकारम् ॥ यथा ॥ सदाप्रकीर्त्तिः प्रियसाधुवादो नानाविनोदैर्गमितोतकालः । जनो विलासीचपलः खलः स्यात् प्रायेणपीतो भरणीप्रजातः ॥ माणिप्रयोग प्राणिविशेषः ॥ घोषकी ॥ टित्वान्ङीप् ॥

भरणीभूः । पुं॰ राहुग्रहे ॥

भरणीयः । त्रि॰ पोष्ये । भरणायोग्ये ॥

भरण्डः । पुं॰ स्वामिनि । कृमौ ॥ नृपे ॥ वृषे ॥ भरति । भृञ्॰ । अण्डन् कृसृभूवृञः । इत्यण्डन् ॥

भरण्डा । स्त्री॰ भूमौ ॥

भरण्यम् । न० वेतने । मूल्ये ॥ भरणे साधु । तत्रसाधुरितियत् ॥

भरण्यभुक् । त्रि० वैतनिके । कर्मकरे । मूल्येनकर्म्म कुर्वति ॥ भरण्यं वेतनंभुङ्क्ते । क्विप् ॥

भरण्या । स्त्री० वेतने ॥

भरण्याह्वा । स्त्री० रामदूतीतिगौ०दे० ख्यातायांपूर्व्वपुष्प्याम् ॥

भरण्युः । पुं० शरण्ये ॥

भरतः । पुं० नाट्यशास्त्रे ॥ अलङ्कारादिशास्त्रस्यसूत्रकारे॰मुनौ ॥ रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरतात्मजे ॥ देवर्षिविशेषे ॥ तन्तुवाये ॥ नटे ॥ भरतस्यमुनेः शिष्यः । तस्येदमित्यण् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वा । बिभर्त्तिलोकं । डुभृञ्० । भृमृदृशीत्यतच् ॥ चन्द्रवंशीयनृपविशेषदुष्यन्तस्यपुत्रे । शाकुन्तलेये । दौष्यन्तौ । सर्वदमने ॥ निरुक्तिश्चास्यश्रीभागवते । मातामस्त्रापितुः पुत्रोयेनजातः सएवसः । भरस्वपुत्रंदुष्यन्तमावमंस्थाः शकुन्तलाम् ॥ इति ॥ ऋषभदेवादिन्द्रदत्तजयन्त्यांकन्यायामुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥ यथा । अथाहभगवानृषभदेवः स्वंवर्षंकर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षमाणोजयन्त्यामिन्द्रदत्तायामुभयविधंकर्मसमाम्नाय मभियुञ्जन्नात्मजानामात्मसमानानांशतंजनयामास । येषांखलुमहायोगीभरतोज्येष्ठः श्रेष्ठगुणआसीत्॰येनेदंवर्षंभारतमितिव्यपदिशन्तीति ॥ पावकस्यपुत्रे ॥

भरतखण्डम् । न० भारतवर्षान्तर्गतकुमारिकाखण्डे ॥

भरतज्ञः । त्रि० नाट्यशास्त्रज्ञे ॥

भरतपुङ्गवः । पुं० गाङ्गेये । भीष्मे ॥

भरतपुत्रकः । पुं० शैलूषे । नटे ॥

भरतप्रसूः । स्त्री० कैकेय्याम् ॥

भरताग्रजः । पुं० श्रीरामचन्द्रे ॥

भरथः । पुं० लोकपाले ॥ बिभर्त्ति । डुभृञ्० । भृञशिदिभ्यथः ॥

भरद्वाजः । पुं० मुनिविशेषे ॥ व्याघ्राटे । भारद्वा०गौ०दे०भा०प्र०पक्षिणि । भदुँइ०इं०भा० ॥ गुरोः पुत्रे । उतथ्यपत्न्याम्ममतायांबृहस्पतेरौरसजातेमुनिविशेषे ॥ यस्य नामनिर्वचनं यथाविष्णुपुराणे । मूढेभरद्वाजमिमं॰भरद्वाजंबृहस्पते । यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयम् ॥ इति ॥ भरन्द्वाजकोषाच्छोऽस्य ॥ यद्वा । भरद्वाजस्यापत्यम् । ऋष्यण् । संज्ञापूर्वकत्वादवृद्ध्यभावः ॥

भरवान् । पुं० शिवे ॥ भरवन्तीमस्य

ख । मतुप् ॥ भरसद्दिष्णी ॥
भरिणी । स्त्री॰ हरिद्वर्णे इरा॰ इ॰ भा॰ ॥
भरित : । पुं॰ हरिद्वर्णे ॥ त्रि॰ तद्वति ॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा॰ इ॰भा॰ ॥ भर : सञ्जातोऽस्य । ता॰ रकच् ॥
भरिता । स्त्री॰ हरितायाम् ॥
भरिमा । पुं॰ भरणे ॥ कुटुम्बे ॥ भरति॰विभर्त्ति वा । भृञ्॰ड्भृञ्॰ वा । हृभृधृसृस्तृशृभ्यइमनिच् ॥
भरु : । पुं॰ स्वर्णे । कनके । हरे । शिवे ॥ भर्त्तरि । स्वामिनि ॥ भरति॰विभर्त्ति वा । भृञ्॰ड्भृञ् वा । भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ : ॥
भरुज : । पुं॰ भृष्टगोधूमे ॥
भरुटम् । न॰ निष्क्वाथपक्वमांसे ॥
भरुटकम् । न॰ भृष्टामिषे ॥
भर्ग : । पुं॰ स्मरहरे । शिवे ॥ भर्जते । भृज्जोभर्जने । घ॰ अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ भृज्यन्ते पापानाद्योऽनेनेतिवा । हलश्चेतिघञ् । भृज्यन्ते पच्यन्ते जगदनेनेति वा ॥ संविद्रूपमण्डलगतादित्यरूपं पुरुषं ॥ चिन्तयामोवयं भर्गं धियोयोनःप्रचोदयात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्तीःपुन : पुन : ॥ अपिच । भस्व

पाकेभवेधातुर्यस्मात्पाचयते ह्यसौ । भाजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ कालाग्निरूपमास्थाय सप्तार्चि : सप्तरश्मिभि : । भ्राजते यत्स्वरूपेण तस्माद्भर्ग : सउच्यते ॥ भे तिभीषयते लोकान् रेति रञ्जयते प्रजा : । गच्छत्यागच्छते यस्मात् सभगवान्भर्ग उच्यते ॥ इतियोगियाज्ञवल्क्य : ॥
भर्ग : । न॰ तेजसि ॥ भर्जते । भृज्जोभर्जने । अञ्च्यञ्जियुजिभृज्जिभ्य : कुश्चेत्यसुन्॰ कवर्गश्चान्तादेश : । भर्गसी॰ इत्यादि ॥ स्वरूपभूते तेजसि ॥
भर्ग्य : । पुं॰ शिवे ॥ भर्जते । भृज्जो॰ । ऋहलोर्ण्यत् । चजोरिति कुत्वम् ॥
भर्जनम् । न॰ भृष्टौ । भूनना ॥ इ॰ भा॰ ॥
भर्त्सित : । त्रि॰ दग्धे ॥ भृज्जो॰ । क्त : ॥
भर्त्तव्य : । त्रि॰ भरणीये । पोषणीये ॥ वृद्धौचमातापितरौसाध्वीभार्यासुत : शिशु : । अप्यकार्यशतं कृत्वा॰ तव्यामनुरब्रवीत् ॥
भर्त्ता । पुं॰ स्वामिनि । नाथे । पत्यौ । परिवृढे । नेतरि ॥ विष्णौ ॥ प्रपञ्चस्याधिष्ठानत्वेभरणात् । बिभर्त्ति वाध्वस्तं सर्वमधिष्ठान

तयाधारयति सत्तास्फूर्त्तिप्रदानेनपोषयतियेति विभर्त्ति धारणपो
षणार्थात्तृच् ॥ त्रि० धातरि । धारके ॥ सुखसाधनसम्पादातरि ॥
देहेन्द्रियमनोबुद्धीनांसंघातानां० चैतन्याभासविशिष्टानां० स्वसत्तया
स्फुरणेन धारयितरि ॥ विभर्त्ति भरतिवा । डुभृञ्० भृञ्०वा । तृच् ।।

भर्तृदारक : । पुं० नाट्योक्त्यायुवराजे । ध्रियते । दृङ् आदरे० तुदादि : । खल् । भर्त्तू राज्ञो दारक : ॥

भर्तृदारिका । स्त्री० नाट्योक्तौराजकन्यायाम् ॥ भर्त्तू राज्ञोदारिका ॥

भर्तृप्रपञ्च : । पुं० श्रौपनिषदमन्त्यवेदान्तानांव्याख्यातृविशेषे ॥

भर्तृस्थानम् न० तीर्थविशेषे ॥ यत्रकार्त्तिकेयस्तिष्ठति ॥

भर्तृहरि : । पुं० व्याकरणकारिकाकर्त्तरिदृविविशेषे ॥ स्वनामप्रसिद्धे काव्यकर्त्तरिराजविशेषे ॥ सचविक्रमादित्यराजभ्राता ॥

भर्त्सनम् । न० अपकारगिरि । चौरोसित्वंघातयिष्यामित्वामित्याद्यपकारार्थवचने ॥ भर्त्सतर्ज्जसन्तर्ज्जने । ल्युट् ।

भर्त्सपत्रिका । स्त्री० मदानोल्वाम् ॥

भर्मित : । त्रि० पोषिते ॥

भर्मन् । न० ॥ स्वर्णे ॥ भृतौ ॥ नाभौ ॥

भर्मकम् । न० रोगविशेषे ॥ विडङ्गे ॥ कलधौते । सुवर्णे ॥

भर्मण्या । स्त्री० गणिकाभृत्ये ॥

भर्म । न० भारे ॥ काञ्चने ॥ भृतौ । भरणे । पोषणे । कुमारभृत्याकुशलैरधिष्ठितेभिषग्भिराप्तैरथ
गर्भभर्मणीति रघु : । अवगर्भेहेमप्रभृतिष्वपिमतिनाथधृत:शाश्वत:
॥ नाभौ ॥ धुस्तूरे ॥ विभर्त्ति० भरतिवा । भ्रियतेऽनेनवा । डुभृञ्०भृञ्० । मनिन् ॥

भलता । स्त्री० प्रसारण्यामोषधौ । राजबलायाम् ॥

भलन्दन : । पुं० कान्यकुब्जदेशीयनृपविशेषे ॥

भलुक : । पुं० भालुके ॥ भलते । भलभलपरिभाषणहिंसादानेषु । उलूकादयश्चेतिसाधु : ॥

भल्ल : । पुं० भल्लूकी । शस्त्रे ॥ पुं० न० शस्त्रभेदे । भाला० इ०भा० ॥ वाणविशेषे ॥ क्षुद्रोद्धलफलो भल्लद्वतियादव : ॥ भल्लते । भल्ल० । पचाद्यच् ॥ न० भद्रे । शिवे ॥ पु० त्रि० श्री ० ॥

भल्लक : । पुं० भल्लूकी ॥ संज्ञायां

कान् ॥
भल्लपुच्छी । स्त्री॰ गवेधुकायाम् ॥
भल्लाट : । पुं॰ न॰ शशिध्वजराजपुरे
भल्लात : । पुं॰ भल्लातके ॥
भल्लातक : । पुं॰ अग्निमुख्याम् । अ रुष्करे । शोथकृति । भिल्लावा॰ हि॰ भा॰ । भल्लातकफलंपक्वं स्वादुपाकरसंलघु। कषायंपाचनंस्निग्धं तीक्ष्णोष्णं छेदिभेदिनम् ॥मेध्यंवह्निकरंहन्तिकफवातव्रणोदरम् ॥ कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥ तन्मज्जामधुरोवृष्योबृंहणोवातपित्तहा । वृन्तमारुष्करंस्वादुपित्तघ्नं केश्यमग्निकृत् ॥ भल्लातक : कषायोष्ण : शुक्रलोमधुरोलघु : । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥ हंतिगुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥ भल्लइवातति अत॰ । क्वुन् ॥
भल्लातकी । स्त्री॰ वीरवृक्षे । अग्निमुख्याम् । भल्लातके ॥ गौरादित्वान्ङीष् ॥
भल्लिका । स्त्री॰ ) भल्ला
भल्ली । स्त्री॰ )तके ॥
भल्लु : । पुं॰ भल्लूके ॥ भल्लते । भल्ल॰ बाहुलकादु : ॥
भल्लुक : । पुं॰ दुर्द्धीपे । ऋच्छे । रीछ भालू॰ इ॰ भा॰ संज्ञायांकन् ।
भल्लूक : । पुं॰ ऋच्छे । भल्लुके ॥ भल्लते । भल्ल॰ । उलूकादित्वात्साधु : ॥ श्योनाकप्रभेदे ॥ कुक्कुरे ॥
भव : । पुं॰ ईशे । शिवे । शङ्करे । हरे ॥ क्षेमे । श्रेयसि ॥ सम्हौ ॥ यस्यावतारोभूतानांक्षेमायचभवायच ॥ संसारे ॥ अपामार्गलतेवायं विरुद्धफलदोभव : । प्रत्यग्दृष्टांयि मोक्षायसंसारायपराग्दृशाम् ॥ सत्तायाम् ॥ प्राप्तौ । भद्राप्तौ ॥ जन्मनि ॥ लग्नादेकादशे ॥ भवसि॰ भवतेवासर्वम् । भू प्राप्तौ । पचाद्यच् । अन्तर्भावितण्यर्थोवा ॥ जन्मनितु॰आवे॰ऋदोरप् ।। भ॰ फलविशेषे । भव्ये । चालता॰ इ॰ गौ॰ दे॰ भा॰ चि॰ चैमाञ्चिते ॥
भवघस्मर : । पुं॰ दावानले ।
भवच्छिद् । त्रि॰ संसारनिवर्तके ॥ भवच्छिनत्ति । छिदिर्॰ । सत्सूद्विषेत्यादिना॰ क्विप् ॥
भवान् । त्रि॰ युष्मदर्थे॥ भाति । भादीप्तौ भातेर्डवतु : ॥ लिंगत्रयेरूपन्तु । भवान्॰ भवती॰भवदिति॥ पूज्ये ॥ सति । विद्यमाने ॥ भवतेर्लट : शत्रादेशे । भवन्॰ भवन्तीभवत्॰ इतित्रिलिंगेरूपंबोध्यम् ॥ जायमाने ॥
भवती । स्त्री॰ विषात्तवाणे ॥ पूज्यायाम् । दीप्तमत्याम् ॥ उगितश्चेति ङीप् ॥

भवदारु । न० देवदारुवृक्षे ॥
भवदीय : । त्रि० भावत्के । भवताम यम् । भवतष्ठक्छसाविति०छस् ॥
भवनम् । न० आगारे । मन्दिरे । गृहे । भावे ॥ भवन्त्यत्र । भू० । ल्युट् । राशौ ॥ क्षेत्रे ॥
भवनाशन : । पुं० भवनाशनदेवे ॥
भवनाशिनी । स्त्री० सरयूनद्याम् ॥
भवनीय : । त्रि० भवितव्ये ॥ उत्पत्त्यर्हे ॥
भवन्त । पुं० कालसामान्ये ॥ वर्तमानकाले ॥ भवति०भूयाद्दा ॥ भू० । तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चे ति०झच्० सचवित् ।
भवन्ति । पुं० वर्तमानकाले ॥ भवति । भू० । भुवोझिच् ॥
भवन्ती । स्त्री० पूर्वाचार्याणामट सञ्ज्ञायाम् ॥ यथा । अभिभवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ विलानुभवेल् ।
भवभावन : । त्रि० संसारकारके । भव : संसारस्तस्यभावनकेन ॥ तस्य शिकृत्ये ॥
भवभूति : । पुं० भोजराजसभास्थे कविविशेषे । मालतीमाधवादिनाटककर्तरि । भूगर्भे ॥ महादेवस्य प्रवर्ये ॥
भवरुत् । पुं० प्रेतपटहे ॥
भवाघनाशिनी । स्त्री० गङ्गायाम् ।
भवात्मजा । स्त्री० मनसादेव्याम् ॥
भवादृक्ष : । त्रि० भवादृशे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्प्रेक्षणे । त्यदादिष्वित्यत्र० क्सोपि वाच्यइति०क्स: ० । आसर्वनाम्न इत्यत्र०दृग्दृशवतुष्विति वार्तिकादाकारोऽन्तादेश : ॥
भवादृश् । त्रि० भवादृशि ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्० । त्यदादिष्विति क्विन् । आसर्वनाम्न : ॥
भवादृश : । त्रि० युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्०त्यदादिषुदृशोनालोचनेकञ्चेति०कञ् । आसर्वनाम्न : इत्याकारोऽन्तादेश : ॥
भवानी । स्त्री० पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना०ङीषानुकौ । परदेवतायाम् ॥ एकैवशक्ति : परमेश्वरस्याभिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु : कोपेषुकाली समरेषुदुर्गा ॥ चन्द्रपीठवासिन्याम्बायाम् ।
भवानीगुरु : । पुं० हिमालये ॥
भवानीपति : । पुं० महादेवे ॥
भवापवर्ग : । पुं० मोक्षे ॥ भवस्यापवर्ग : नाश : ॥
भवाभीष्ट : । पुं० गुग्गुलौ ॥

भवाब्धि :। पुं॰ संसाररूपसमुद्रे ॥ भवाब्धितरणोपाय : कुलमार्गोहि-नापर : ॥

भवायना। स्त्री॰ गङ्गायाम् ॥

भविकम्। न॰ भव्ये। कुशले ॥ भवो-भद्रमिस्त्यस्ति। अतइनिठनाविति ठन् ॥ त्रि॰ तद्वति ॥

भवित :। त्रि॰ अतीतोत्पत्तिके। भूते॥

भवितव्यम्। त्रि॰ भवनीये। भवितव्य मुभवत्वेवनारिकेलफलाम्बुवत्। ग न्तव्यं गतमित्याहुर्गजभुक्तकपित्थव-त् ॥

भवितव्यता। स्त्री॰ नियतौ। भाग्ये। अर्थानामनर्थानाञ्चावश्यं भावित्वे। कालभार्यायाम् ॥

भविता। त्रि॰ भविष्यौ ॥ भवनशील: भू॰। तृन्निति तृन् ॥

भविन :। त्रि॰ काव्यकर्त्तरि ॥

भविल :। पुं॰ भव्ये ॥ भवति। भू॰। सलिकल्यनीत्यादिना॰ इलच् ॥ वि ट्गे। विदूषके ॥

भविष्णु : त्रि॰ भवितरि। भूष्णौ ॥ भवनशील :। भुवश्चेति॰ भवतेरि-ष्णुच् ॥

भविष्यम्। न॰ पञ्चशताधिकचतुर्दश सहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा। चतुर्दश भविष्यं स्यात् तथा पञ्चशतानिचेतिश्रीभागवतम् ॥ चमिष। चतुर्दशसहस्राणिसंघा पञ्चशतानिच। भविष्यं परिसंख्या तं मुनिभिस्तत्त्वदर्शिभिरितिदेवी भागवतम् ॥ त्रि॰ भविष्यत्का ले ॥

भविष्यत्। त्रि॰ आगामिकाले। वर्त्तमानप्रागभाव प्रतियोगिनिकाले- ॥ वर्त्तमानकालोत्तरकालीनोत्प त्तिकत्वे। अनागते। प्रवर्त्त मे ॥

भव्य :। पुं॰ कर्म्मरङ्गतरौ ॥ न॰ अ स्थनि ॥ फलविशेषे चालता॰ इ॰ गौ॰ दे॰ प्र॰। वर्म्मरङ्गद्दयोधनी ॥ भव्यं स्वादुकषायाम्लं हृद्यमास विशोधनम्। तदेवपक्वं दोषघ्नं गुरु ग्राहिविषापरम् ॥ पुं॰ न॰ रस भेदे ॥ त्रि॰ शुभे ॥ सत्त्वे ॥ योग्ये ॥ भाविनि ॥ जनिष्यमाणे ॥ भवति॰ भाव्यमनेनवा। भव्य गेयप्रवचनीयोपस्थानीयजन्याप्ला व्यापात्याविति ॰ कर्त्तरि॰ भावे वायत्ताधु : ॥

भव्या। स्त्री॰ उमायाम्। करिकणा याम् ॥

भष :। पुं॰ कुक्कुरे ॥ भषति। भष॰। अच् ॥

भषक। पुं॰ कुक्कुरे। शुनि ॥ भषति। भषपैशुन्ये। वुन् ॥

भषणम्। न॰ वुक्कने। श्वरवे ॥

भष॰ल्युट् ॥
भषा । स्त्री॰ स्वर्णक्षीर्याम् ॥
भषी । स्त्री॰ शुन्याम् ॥ भषतिपाल्य म् । भषभत्सने । पचाद्यच् । भष इतिपाठात् । टिड्ढेतिङी प् ॥
भसद् । स्त्री॰ भास्करे ॥ योनौ ॥ लवणे ॥ काले ॥ मांसे ॥ कारण्ड वखगे ॥ प्लवे । भेलके । बभस्ति । भसभर्त्सनदीप्त्योः । शृदृ भसोर्दिः ॥
भसन : । पुं॰ भ्रमरे ॥
भसन्त : । पुं॰ काले ॥
भसितम् । क्ली॰ भस्मनि ॥
भसूचकः । पुं॰ दैवज्ञे ॥
भस्त्रका । स्त्री॰ चर्मप्रसेविका याम् ॥
भस्त्रफला । स्त्री॰ औषधिविशेषे ॥ भस्त्रेवफलान्यस्याः । पाककर्णेति प्राप्तंङीषंबाधित्वा॰सम्भस्त्राजिने तिटाप् । ङ्यापोरितिह्रस्वः ॥
भस्त्रा । स्त्री॰ अग्निदीपकचर्मनिर्मि तयन्त्रविशेषे । चर्मप्रसेविकाया म् ॥ जलादिनीयते येनलौहादि ध्मायते तथा । चर्मणोविकृतिः सावभस्त्राशास्त्रे प्रकीर्त्तिता ॥ भस्यतेऽनया । भसदीप्तौ । हुयामा श्रुभसिभ्यस्त्रन् । तित्वात्तिनेट् । अजादित्वात् टाप् ॥

भस्त्राका । स्त्री॰ भस्त्रिकायाम् । भस्त्रा यां ॥
भस्त्रिकः । त्रि॰ भस्त्रयाजलाहरणक र्त्तरि । भिक्षी॰न्न॰भा॰ ॥ भस्त्रया हरति । भस्त्रादिभ्यः ष्ठन् । स्त्री॰ भस्त्रिकी । षित्वान्ङीष् ॥
भस्मकः । पुं॰ रोगविशेषे ॥ तस्य निदानसम्प्राप्तिपूर्वकंलक्षणं । य था । कट्वादिरूक्षान्नभुजांनराणांक्षीणे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तंक्षणाद्भस्म करोतियस्मात् । तस्मादसौभस्मक संज्ञकोऽभूदुपेक्षितोयंपचतेच धा तून् ॥ भस्मकोपद्रवमाह यथा । तृट्स्वेददाहमूर्च्छादीन् कृत्वात्य ग्निसम्भवान् । पक्वस्त्वाममाशुधात्वा दीन्सद्यपिनाशयेद्भसम् ॥ इ॰
भस्मकारः । पुं॰ रजके ॥
भस्मगन्धा । स्त्री॰ रेणुकायाम् । हरे णौ ॥
भस्मगन्धिका । स्त्री॰ हरेणुनामौषधौ । रेणुकायाम् ॥ भस्मनोगन्धः । भस्म गन्धोस्त्यस्याः । अतइनि । ठनावि तिठन् । टाप् ॥
भस्मगन्धिनी । स्त्री॰ रेणुकायाम् । ह रेणवाख्यौषधौ ॥ गन्धद्रव्यमेतदिति स्वामी ॥ भस्मगन्धोस्त्यस्याः अत इनिठनावितीनिः । ङीप् ॥
भस्मगर्भः । पुं॰ तिनिशद्रुमे ।

भस्मगर्भा । स्त्री० कपिलवर्णपुष्पायां शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । श्रोषधिभेदे ॥ भस्मगर्भेयस्याः शुक्लसारत्वात् ॥

भस्मतूलम् । न० ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न० काष्ठादेरग्निकृतेविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ । क्षमसि । भसभर्त्सने दीप्त्यो : । सर्वधातुभ्योमनिन् । विनाभस्मत्रिपुण्ड्रेणविनारुद्राक्षमालया । पूजितोपिमहादेवोनस्यात् तस्यफलप्रदः ॥ अश्मरीविकारे ॥

भस्मरोहा । स्त्री० दग्धारुहावृक्षे ॥

भस्मविधस : । पुं० कर्पूरे ।

भस्मसात् अ० भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकात्स्न्यें । इतिसाति : प्रत्यय : ॥

भस्मस्नानम् । न० सप्तविधस्नानान्तर्गतस्नेयस्नाने ॥ यथा । पायने वंभस्मनास्नानंवायव्यंगोरजः स्मृतम् ।

भस्माह्वय : । पुं० कर्पूरे ॥

भस्मित : । त्रि० दग्धे ॥

भा । स्त्री० भासि ॥ प्रभायाम् । छवौ । दीप्तौ । शोचिषि ॥ ज्ञाने । चैतन्यरूपे ॥ यथा । अभारूपस्यविश्वस्य भानंभासन्निदिविना । कदाचिन्नावकल्पेतभावाहंतेनसर्वग : । भातिभादीप्तौ । इगुपधात् ० ङ : । टाप् ॥

भाकुट : । पुं० भेकुटी० इ० गौ० दे० भा० प्र० मत्स्ये ॥

भाकूट : । पुं० शैलप्रभेदे ॥ मत्स्यविशेषे । भेकुटी० इ० भा० ॥ भाकूटोमधुर : शीतोवृष्यः श्लेष्मकरोगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरःस्मृत : ॥

भाकोष : । पुं० सूर्ये ॥

भाक्त : त्रि० औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ यत्नेनपोष्ये ॥ आश्रिते ॥ भक्तमस्मैनियुक्तं दीयते । भक्तादणन्यतरस्याम् । न० शालिधान्ये ॥ भक्तेसाधु । भक्ताण : । इतिण : ॥

भाक्तिक : । त्रि० यत्नेनपोष्ये । भाक्ते ॥ भक्तमस्मैनियुक्तंदीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भाग : । पुं० अंशे । वण्टके । स्तौकिकसमांशे ॥ रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागाःस्युर्वाद्विधाांशसूत्रोवा । घञ् ॥ राशित्रिंशभागैकभागे ॥ त्रिंशांशकस्ययाराशिर्भागइत्यभिधीयतेइत्युक्तः ॥

भागत्याग : । पुं० जहदजहल्लक्षणायाम् विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री० जहदजहल्लक्षणायाम् । अंशान्तरपरित्यागेना-

भाज्य : । त्रि० भागार्हे । भाजनीये ॥

भाटक : । पुं० न० व्यवहारार्थं दत्त गृहशकटादिसम्बधने । भाड़ा० इ० भा० ॥

भाट्ट : । पुं० भामिनश्चिदचिद्रूपत्व-धर्म्मादिनिभट्टाचार्यमतानुसारिणि-मीमांसके । गुडं च तन्यमुत्प्रेत्य द्रव्यबोधस्वरूपताम् । आत्मनोभ्युप तिभाट्टाश्चिदुत्प्रेक्षोत्थितस्य वे : ॥ जडोभूत्वातदाऽस्मापरिमितजाड्य स्मृतिसदा । विनाजाड्यानुभूतिं नकाय चिदुपपद्यते ॥ द्रष्टुर्दृष्टेरलो पश्यतः सुप्तोत्थितस्स्वयम् । प्रकाशप्रकाशाभ्यामात्माखद्योतव-द्युतः ॥

भाण : । पुं० नाटकादिदशरूपकान्त र्गतरूपकविशेषे ॥

भाण्ड : । पुं० गर्दभाण्डवृक्षे ॥

भांण्डम् । न० पात्रे । घटकर्कादि-भाजनमात्रे ॥ पण्यद्रव्ये । वणि-ङ्मूलधने । भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यते । भणशब्दे । अमन्ताड्डः । ॥ भणतिवा । डः । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखे च । अच् । पृषोदरादिः । भण्डह-री । भंडीका० इ० भा० ॥

भाण्डपुट : । पुं० नापिते । भाण्डे-पुटाः यस्य सः ॥

भाण्डपुष्प : । पुं० सर्पविशेषे । कौकुटिकन्दले ॥

भाण्डागारम् । न० गृहविशेषे । धन्यादिद्रव्याधारगृहे ॥ भाण्डानामागारम् ॥ धनागारे ॥

भाण्डागारिक : । त्रि० भाण्डागारे-नियुक्ते । भण्डारी० इ० भा० ॥ आगाराभ्याट्ठन् ॥

भाण्डागारी । त्रि० भाण्डारिणि । भाण्डागारवति ॥ भाण्डागारमस्या-स्ति । इनिः ॥

भांडारी । पुं० भांडागाराध्यक्षे । स्वनामप्रसिद्धे । यथा क्षुधितस्तृषितः कामी विद्यार्थी कृषिकारकः । भांडारीचप्रवासीचसप्तसुप्तान् प्रबोधयेत् ॥

भाण्डि : । पुं० नापितक्षुराद्याधारे ॥

भाण्डिक : । पुं० ) नापिते ॥

भाण्डिवाह : । पुं० )

भाण्डीर : । पुं० वटवृक्षे । व्रजमण्डलान्तर्गतगोकुलवटवनमध्ये द्वितीयवटवृक्षे ॥

भातम् । न० प्रभाते ॥ भा० । क्त ॥ दीप्ते ॥ त्रि० तद्वति ॥

भाति : । स्त्री० शोभायां ॥

भातु : । पुं० आदित्ये । सूर्ये ॥ भाति । आदीप्तौ । कमिगमीतितुः ॥

भाद्र : । पुं० नभस्ये । प्रौष्ठपदे । भा

भामकः । पुं॰ भगिनीपतौ ॥ स्वार्थे कः ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्ययमितिपूर्वपदलोपः ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम् ॥ अवश्यंभासते । भाम॰ । आवश्यके णिनिः । ग्रहादित्वाणिनिर्वा ॥ स्त्रीमात्रे ॥

भामिनीविलासः । पुं॰ जगन्नाथमिश्रपण्डितराजकृते विलासचतुष्टयात्मके ग्रन्थविशेषे ॥

भारः । पुं॰ वीवधे ॥ विष्णौ । विंशतितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विगुणीगौण्यद्वादशता ॥ तामेवभारंजानीयाद्दशाभारचतुष्टयम् ॥ बिभर्ति । भृञ् भरणे । अकर्त्तरि चकारके संज्ञायामितिघञ् ॥

भारंडः । पुं॰ उत्तरकुरुदेशजशकुनपक्षिणि ॥

भारतः । पुं॰ छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुनेः शिष्यः । अण् ॥ भरतात्मजे ॥ भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोयम् । तस्येदमित्यण् ॥ सङ्ग्रामविशेषे ॥ भरतायोद्धारोऽस्यसङ्ग्रामस्य । सङ्ग्रामेप्रयोजनयोद्धृभ्यइत्यण् ॥ त्रि॰ ज्ञाननिरते ॥ भाःज्ञानम् । तत्ररतः ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोकात्मकमहाभारतसंज्ञके॰ इतिहासे ॥ तत्श्रवणादिफलंयथा । भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत् । भारतं भवने यस्य तस्य हस्तगतो जयः ॥ योगोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय । पुण्यां च भारतकथां शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा । ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् । यथैतानीतिहासानां तथा भारतमुच्यते । यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः । अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति । कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते । भ्रूणहत्याकृतं चापि पापं जह्यादसंशयम् ॥ इति । जम्बुद्वीपनवमांशेवर्षविशेषे ॥

भारतवर्षः । पुं॰ न॰ जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता । तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मनः ॥ तस्य नव भागा यथा

भारतस्यास्यवर्षस्यनवभेदान्निबोध मे । समुद्रान्तरिताज्ञेयास्तेत्वगम्याः परस्परम् ॥ इन्द्रद्वीपः कशेरुस्ताम्रवर्णोगभस्तिमान् । नागद्वीपस्तथा सौम्योगान्धर्वोवारुणस्तथ ॥ अयन्तु नवमस्तेषांद्वीपः सागरसंवृतः । योजनानांसहस्रंवैद्वीपोयंदक्षिणोत्तरात् ॥ पूर्वेकिरातायस्यान्ते पश्चिमेयवनास्थिताः । ब्राह्मणाः क्षत्रियावैश्याः शूद्राश्चान्तः स्थिताद्विज ॥ इज्यायुद्धवणिज्याद्यैः कर्मभिः कृतपावनाः । तेषां संव्यवहारश्चैभिः कर्मभिरिष्यते । स्वर्गापवर्गप्राप्तिश्चपुण्यंपापंचवैतथा । महेन्द्रोमलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्चपारियात्रश्चसप्तैवात्रकुलाचलाः तेषांसहस्रशश्चान्ये भूधरायेसमीपगाः ॥ विस्तारोच्छ्रायिणोरम्याविपुलाश्चित्रसानवः । कोलाहलः सवैभ्राजोमन्दरोदर्दुराचलः ॥ वातन्धमोवैद्युतश्चमैनाकः सुरसस्तथा । तुङ्गप्रस्थोनामगिरिर्गोधनः पाण्डुराचलः ॥ पुष्पगिरिर्जयन्तो रैवतोर्बुदएवच । ऋष्यमूकः सगोमन्तः कूटशैलः कृतः स्मरः ॥ श्रीपर्वतश्चकोरश्चशतशोन्येऽल्पपर्वताः । तैर्विमिश्राजनपदाम्लेच्छाचार्यादिभागशः । तैः पीय



न्तेसरिच्छ्रेष्ठायास्ताः सम्यङ्निबोधमे । गङ्गासरस्वतीसिन्धुश्चन्द्रभागातथापगा । यमुनाचशतद्रुश्चवितस्तैरावतीकुहूः । गोमतीधूतपापाचबाहुदाचदृषद्वती ॥ विपाशादेविकाचर्चुर्विशालागण्डकीतथा । कौशिकीचापगाविप्रहिमवत्पादनिः सृताः ॥ वेदस्मृतिर्वेदसिनीराविघ्नीसिन्धुरेवच । वेणाचस्यन्दनाचैवसदानीरामहीतथा ॥ पाराचर्मण्वतीलूपीविदिशावेत्रवत्यपि । शिप्राह्यवन्तीचतथापारिपात्राश्रयाः स्मृताः ॥ शोणोमहानदश्चैवनर्मदासुरसाक्रिया । मन्दाकिनीदशार्णाचचित्रकूटातथापगा ॥ चित्रोत्पलाचतमसाकरतोयापिशाचिका । तथान्यापिप्पलश्रोणीविपाशावञ्जुलानदी ॥ सरोमकाशुक्तिमतीमङ्कुणीत्रिदिवाक्रमुः । ऋक्षपादप्रसूतावैतथान्यावेगवाहिनी ॥ शिप्रापयोष्णीनिर्विन्ध्यातापीचनिषधावती । वेणावैतरणीचैवसिनीवालीकुमुद्वती । तोयाचैवमहागौरीदुर्गाचान्तःशिवातथा । विन्ध्यपादप्रसूतास्तानद्यः पुण्यजलाः शुभाः ॥ गोदावरीभीमरथीकृष्णावर्णातथापगा । तुङ्गभद्रासुप्रयोगावाह्याकावेरीचापगा । सह्यपादविनिष्क्रान्ताइमास्ताः सरिदुत्तमाः ॥

न्तान्निबोधमे । सौपारिकाः कालनदादुर्गास्तालीयकैः सह ॥ कारस्करलोहजङ्घावानेयाराजभद्रकाः । तोसलाः कोशलाश्चैवत्रैपुराविदिशास्तथा ॥ तुमारास्तुम्बराश्चैवपाटवोनैषधैः सह । पुलिन्दाश्चसुयौलाश्चरूपमांस्तामसैः सह । तथाकुरुमिनश्चैवसर्वेचैवकरस्कराः नासिकाख्याश्चयेचान्येयेचैवान्तरनर्मदाः ॥ भानुकच्छाः समाहेयाः सर्वेसारस्वतैः सह । कच्छीयाश्चसुराष्ट्राश्चआवन्त्याश्चार्बुदैः सह ॥ इत्येतेह्यपरान्ताश्चशृणुविन्ध्यनिवासिनः । मलजाश्चकरूषाश्चमेकलाश्चोत्कलैः सह । उत्तमर्णादशार्णाश्चभोजाः किष्किन्धकैः सह । अनूपास्तुण्डिकेराश्चवीरहोत्राह्यवन्तयः ॥ एतेजनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः ॥ अतोदेशान्प्रवक्ष्यामिपर्वताश्रयिणश्चये ॥ निर्हारा हंसमार्गाश्चकुपथास्तङ्गणाः खशाः । कुत्साः प्रावर्णाश्चैवऊर्णादर्वाः सहूहुकाः ॥ त्रिगर्तामालवाश्च किराताःतामसैः सह । कृतत्रेतादिकश्चात्रचतुर्युगकृतोविधिः ॥ एततुभारतंवर्षंचतुःसंस्थानसंस्थितम् । दक्षिणेपरतोह्यस्यपूर्वेणचमहोदधिः ॥ हिमवानुत्तरेणास्यकार्मुकस्ययथागुणः । तदेतद्भारतं



वर्षंसर्वबीजंद्विजोत्तम ॥ देवत्वममरेशत्वंदेवत्वंमर्त्यतांतथा । मृगपश्वप्सरचरायोनीस्तद्वत्सरीसृपाः ॥ स्थावराणाञ्चसर्वेषामतोब्रह्मन्शुभाशुभैः । प्रयान्तिकर्मभूर्ब्रह्मन्नान्यालोकेषुविद्यते ॥ देवानामपिविप्रर्षेसदैवैषमनोरथः ॥ अपिमानुष्यमाप्स्यामोदेवत्वात्प्रच्युताः क्षितौ । मनुष्याः कुर्वतेतत्तुयन्नशक्यंसुरासुरैः ॥ स्वकर्मनिगडाक्रान्तैः स्वकर्मक्षपणोत्सुकैः । नकिञ्चित्क्रियतेकर्मसुखलेशोपवृंहितैः ॥ इतिश्रीमार्कण्डेयपुराणेभारतखण्डवर्णनं नामाध्यायः ॥

भारतिः । पुं॰ दशनामसन्न्यासिनां मध्येसन्न्यासिविशेषे ॥ यथा । नानाशास्त्रेषुयोविद्वान्नानाकर्मविशारदः । सद्देष्टदेवीभावेनभावयेद्योहिपावनाम् । तएवभारतिर्वीरोमहाज्ञानीजितेन्द्रिय इति ॥

भारती । स्त्री॰ वचने ॥ सरस्वत्याम् । अथ परिज्ञानफलाहि भारती गरुडोर्धिनिषद्धिविशेषे । भार॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ब्राह्मणमोषधौ ॥ नाट्यवृत्तिप्रभेदे ॥ शृङ्गारेकौशिकी वीरेसात्वत्यारभटीपुनः । रसेरौद्रे चबीभत्से वृत्तिः सर्वत्रभारती ॥ भारतीवृत्तिस्तुसंस्कृतप्रायोवाग्व्यापारोनराश्रयः ॥ विभर्ति । डुभृञ

नन्तरितसजातीयप्रत्ययप्रवाहरूपायाम् ॥ भावनालिङ्प्रत्ययवाच्येति मीमांसका ॥ उत्पादनायाम् ॥ ० उत्पत्त्यर्थाद्भवतेर्ण्यन्तात् ० युच् । त्रिविधाभावनायथा । त्रिविधाभावनाविप्रविप्रर्षे तन्निबोधमे । ब्रह्माख्याकर्मसंज्ञाच तथाचैवोभयात्मिका ॥ ब्रह्मभावात्मिकाह्येका कर्मभावात्मिकापरा । उभयात्मिकातथैवान्यात्रिविधाभावभावना ॥ सनन्दनाद्योब्रह्मभावभावनयायुता । कर्मभावनयाचान्ये देवाद्याः स्थावराचराः ॥ हिरण्यगर्भादिषुचब्रह्मकर्मात्मिकाद्विधा । बोधाधिकारयुक्तेषुविद्यतेभावभावना ॥ इति विष्णुपुराणे ६ अंशे ७ अध्याय. ॥ त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेणत्रिविधाभावनेत्युच्यते । एतद्विवरे : स्वरूपम् । यत : परूपप्राप्त्युपायत्वात् ० तत्प्रथमंमनः सम्भार्यमितिभाव : । भावनानाम ध्यानविशेषज्ञायासना । सात्रिविधा मपिसद्मामादिशक्ति ० ब्रह्माख्येति । तामिनविषयत्रैविध्येनविविनक्ति ० ब्रह्मभावनात्मिकेति ॥ । भावभावना ० भावोवस्तु ० तद्विषयाभावनात्रिविधा । तत्रनयब्रह्मैवभावयाम : । वयंकर्मैवकुर्म : । वयन्तूभयमिदमनुसन्दध्मइत्येवंत्रिविधाभावना । भावनायुक्तान्जीवानुदाहरति ० सनन्दनादयइतिदाभ्याम् । इतितट्टीका ॥

भाववोधक : । पुं ० अनुभावे ॥ भावस्यरत्यादेर्बोधक : सूचकोगुण : क्रियादिरनुभाव : । अनुभावस्तंप्रतीतिर्योग्यतात्मीयतिरत्यादिरनेनेति ० अनुभाव: । घञ् ॥ तत्ररतेरनुभावाः लोचनचातुर्यभ्रूक्षेपादयः । हासस्यच कपोलाकुञ्चना: ० नासोत्फुल्लनादयोऽनुभावाः ० एवमन्यत्रानुसन्धेयम् ॥

भावरूपम् । न ० द्रव्ये ॥

भाववृत्त : । पुं ० ब्रह्मणि ॥ भाव: सृष्टि: ० तत्रवृत्त : प्रवृत्त : ॥

भाववृत्ति: । स्त्री ० घटाद्याकारवृत्तौ ।

भावशुद्धि : । स्त्री ० अन्त: करणशुद्धौ ॥ कलियुगपयुक्तानांसर्वदास्थिरचेतसाम् । निद्रालस्य प्रसक्तानां भावशुद्धि : कथंभवेत्इतिमहाभिर्वाचितंच ॥

भावसंशुद्धि : । स्त्री ० हृदयस्यकामक्रोधलोभादिमलनिवृत्तौ । पुनरशुद्ध्युत्पादकाद्विषयेभ्यसाम्यत्वेनविशिष्टायाम् ॥ परै : सह्व्यवहारकालेमायाराहित्ये ॥

भावसरोरुहम् । न ० हृदयकमले ॥

भावाट : । पुं ० भावके । साधुनिवेशे ॥ कामुके । नटे ॥

भावानुगा । स्त्री ० छायायाम् ॥

स्युर्देशभेदतः ॥ इतिसङ्गीतदामोदरः ॥ भाषासुदाहरणंमुरारेरनर्घराघवे० भवभूतेरुत्तरचरिते० कालिदासस्याभिज्ञानशाकुन्तलेऽवलोकनीयम् ॥

भाषापादः । पुं० चतुष्पाद्व्यवहारान्तर्गतप्रथमपादे ॥ तस्यलक्षणंयथा । अर्थवद्धर्मसंयुक्तंपरिपूर्णमनाकुलम् । साध्यवद्वाचकपदंप्रकृतार्थानुबन्धिच ॥ प्रसिद्धमविरुद्धंचनिश्चितंसाधनक्षमम् । संक्षिप्तंनिखिलार्थञ्चदेशकालाविरोधिच ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥ साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामच । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते ॥ इतिमिताक्षरा ॥ अस्यविवरणं भाषाशब्देकल्पद्रुमेद्रष्टव्यम् ॥

भाषितम् । न० वचने । वचसि ॥ यथा । आचारः कुलमाख्यातिदेशमाख्यातिभोजनम् । सम्भ्रमः स्नेहमाख्यातिवपुराख्यातिभोजनम् ।

भाषितम् । न० वचने । वचसि ॥ यथा । आचारः कुलमाख्यातिवपुराख्यातिभोजनम् । सम्भ्रमः पुण्यमाख्यातिदेशमाख्यातिभाषितमिति । भाषणम् । भाष० । भावे क्तः ॥ त्रि० कथिते । उक्ते । अभिहिते ॥ भाष्यतेस्म । भाषेः कर्मणि क्तः ॥

भाष्यम् । न० चूर्णम् ॥ सूत्रोक्तार्थप्रपञ्चके । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्वपदानाख्यविवरणपरे० ग्रन्थविशेषे ॥ तथाचभरतः । सूत्रार्थोवर्ण्यतेयत्रपदैः सूत्रानुसारिभिः । स्वपदानिचवर्ण्यन्तेभाष्यंभाष्यविदोविदुरिति ॥ त्रि० कथनीये ॥

भाष्यकारः । पुं० श्रीशङ्कराचार्ये ॥ महाभाष्यकर्त्तरिमुनौ । गोनर्दीये । पतञ्जलौ । चूर्णिकृति ॥ महाभाष्यकारस्यकुण्डलीयधियावुभौ । नैवशब्दाम्बुधेः पारंकिमन्येजडबुद्धयः ॥ भाष्यंकरोति । डुकृञ्० । कर्मण्यण् ॥

भाष्यकृत् । पुं० भाष्यकारे ॥

भाः । स्त्री० प्रभायाम् ॥ दीप्तौ ॥ प्रभावे ॥ मयूखे ॥ कृष्णायाम् ॥ भासते । भासदीप्तौ । भ्राजभासेतिक्विप् । भाः० भासौ० भासः ॥

भासः । पुं० प्रभायाम् ॥ विहगविशेषे । शकुन्ते । गृध्रे ॥ कुक्कुटे ॥ गोष्ठे ॥ व्याप्यव्यापकत्वादिप्रतिभासे ॥

भासनम् । न० दीप्तौ ॥ प्रकाशने ॥ यत्प्रकाशवदिदंजगच्चिज्जडोभयात्मकंभासते । यद्यपिशब्दस्पर्शादिजडवस्तुभासनायैवेन्द्रियाधिष्ठातानितथापितेनस्वचिद्गतव्यवहारस्य० उपादानतयाचैतन्यपूर्वकमेवजड

भासते । तथासति । पश्चाज्ज्ञ समानस्य जडस्य प्रथमतो भासमान चैतन्य मेव भास्वरं रूप मिति निश्चित्य । जडमुपेक्ष्य चिन्मात्र चित्ते वासयेदिति जीवन्मुक्तिप्रकरणम् ॥

भासन्त : । पुं० भासपक्षिणि । शकुन्ते । सूर्ये । भे । नक्षत्रे ॥ चन्द्रे ॥ त्रि० रम्ये । सुन्दराकारे ॥ भासते । भास० । तृभूवहिवसिभासिसाधीति झच् षित् ॥

भासन्ती । स्त्री० नक्षत्रे । ङीष् ॥

भासमान : । त्रि० प्रकाशमाने ॥

भासित : । त्रि० प्रकाशिते ॥

भासु : । पुं० सूर्ये ॥

भासुर : । पुं० स्फटिके । वीरे ॥ प्रभावनिरपेक्षसर्वभासनशीले । आत्मनि ॥ न० कुष्ठौषधे ॥ त्रि० भासनशीले । दीप्तियुक्ते ॥ भासते तच्छील : । भास० । भञ्जभासमिदो घुरच् ॥

भासुरपुष्पा । स्त्री० वृश्चिकाल्याम् ॥

भास्कर : । पुं० आदित्ये । प्रभाकरे ॥ यथा । सदायजन्तियज्ञेनसदा दानं ददन्ति च । सदाचशत्रुभयात्त निस्तरन्त्येवंच त्वाभास्करमितिभ ज्ञिष्यपुराणम् । अग्नौ । वह्नौ ॥ भा : करोति । दिवाविभेति ट : । कास्कादित्वात् स : । तेनविसर्ग नीयजिह्वामूलीयौसकारस्तुनभवत : वीरे । अर्कवृक्षे ॥ न० सुवर्णे ॥

भास्करद्युम् । न० प्रयागे ॥

भास्करप्रिय : । पुं० पद्मरागमणौ । चुन्नी० इतिकेचित् ॥

भास्करेष्टा । स्त्री० आदित्यभक्तायाम् ॥

भास्मन : । त्रि० भस्ममये ॥ भस्मनो विकार : । अण् । अन्निलिप्रकृतिभावान्नस्तद्धितइतिटिलोपोन ॥

भास्वान् । पुं० सूर्ये । अर्कवृक्षे । दीप्तौ । प्रभायाम् ॥ भास : सन्त्यस्य । तदस्यास्तीतिमतुप् ॥ त्रि० भास्वरे । दीप्तिविशिष्टे । प्रभाशवति ॥

भास्वर : । पुं० दिने ॥ न० कुष्ठौषधौ । कुष्ठ० इ० भा० ॥ त्रि० प्रकाशवति । भासनशीले ॥ भासते० तच्छील : । भासदीप्तौ । स्थेशभासपिसकसोवरच् ॥

भि : सटा । स्त्री० भिस्सटायाम् ॥

भिक्षा । स्त्री० भृतौ । याच्ञायाम् । अर्चनायाम् । सेवायाम् । भिक्षितवस्तुनि । यत्नयाससमाना भवेद्भिक्षे तिशातातप : । सग्रवेस्त्वधिकमपिदेयमिति । भिक्षाञ्चभिक्षवेदद्याद्विधिवद्ब्रह्मचारिणे । इत्यनकुम्भभट्ट : ॥ यदैव यतिब्रह्मचारिणोरूपस्थितिस्तदैव ।

ते । भिदिर्० । क्तिन् ॥ प्रदेशे ॥ प्रशस्ते ॥ मतल्लिकोद्घमिश्रा : स्यु: प्रकाण्डस्थालमित्ययइतिगम रत्नमकोद्भि : ॥

भित्तिका । स्त्री० भित्तौ ॥ मल्लिकायाम् । मल्लयाम् ॥ भिनत्ति ०भि द्यतेवा । भिदिर् ० ॥ क्तिभिदित तिभ्य : किदिति ० तिकन् ॥

भित्तिचौर : पुं०. चौरविशेषे । कुड्या च्छेदिनि । सीधचौर० इ० भा०

भित्तिपातन : पुं ० महामूषके । चूंस ० इ० भा० ॥

भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । सम्पदादिषु ० अन्यतोपिह श्यतइतिक्विप् ॥ त्रि ० भेदकारि ॥

भिदक: । पुं० खड्गे ॥ न ० वज्रे ॥

भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाडा० फटा ० फाडना ० इ ० भा० ॥ भेदनम् । भिदिर्० । भिदादयइ् । टाप् ॥ धन्याकि ॥

भिदि: । पुं० वज्रे ॥ भिनत्ति । भिदिर्० । कुगुघूपूकुटिभिदिछिदिभ्यश्चेति ० इ : सचकित् ॥

भिदिरम् । न० वज्रे ॥ भिनत्ति । भिदिर्० । इषिमदोत्यादिनाकिरच् ।

भिदुः । पुं० पवौ ॥ वज्रे ॥ भिनत्ति । भिदिर्० । पृभिदिव्यधीतिकु : ।

भिदुरम् । न० कुलिशे वज्रे ॥ भिनत्ति । भिदिर्० । विदिविदिच्छिदेकुरच् । न ० प्लक्षवृक्षे । त्रि० भिन्ने ॥

भिदेलिम: । त्रि ० भेत्तव्ये ॥ भिद्यते कर्मविभिदे : केलिमर ॥

भिद्य: । पुं० नदे । भिनत्तिकूलम् । भिदिर् ० । भिद्योद्ध्यौनदे ० इति० लक्षपवाद: कर्त रिक्यप्निपात्यते ॥

भिद्रम् । न० शतधारे । वज्रे भिनत्ति । भिदिर ० स्फायीतञ्चीत्यादिनारक् ॥

भिन्दि : स्त्री ० ।छापाभिकायाम् ॥ भिनत्ति । भिदिश्वयवे ।, सर्वधातुभ्य इन् ॥

भिन्दिपाल: । पुं० । घे पयोर्ये । सृगे ॥ गोफण ० इ० ।र० ॥ भिभिन्दि पालयति । पालरक्षणे । कर्मण्यण्

भिन्न: । त्रि० भेदविशिष्टे । दारिते । भेदिते । खण्डितावयवे । अन्यवसङ्गते ॥ फुल्ले । विकृते । भिद्यतेस्म ॥ भिदिर् ० । क्त : । रदाभ्यांनिष्ठातो न: पूर्वस्यचदइति०दकारतकारयो र्नो ॥ न० अन्यार्थवचने । पुं० न० घतरोगविशेषे । तल्लक्षणं यथा । शक्तिकुन्तेषु खड्ग्यायविषाणैराशयोहत : । यत्किञ्चित्प्रस्रवेत्तद्धिभिन्नमित्यभिधीयते ॥ आशय : कोष्ठ : ।

भिन्नक : । पुं० क्षपणे । बौद्धे । त्रि० ईषद्भिन्ने । अनन्तस्यन्तगतीकादितिकन् ॥

भिन्नगात्रिका । स्त्री० कर्कटीविशेषे । फूट० इ० भा० ॥ भिन्नं गात्रमस्या.

भिन्नदर्शी । त्रि० अज्ञे । पृथग्दर्शिनि । अविद्यामोहितात्मान : पुरुषाभिन्नदर्शिन : ॥ भिन्नं द्रष्टुं शीलंयस्य । णिनि : ॥

भिन्नधी : । त्रि० भ्रंसितमतौ ॥

भिन्नभिन्नात्मा । पुं० चणके ॥

भिन्नयोजनी । स्त्री० पाषाणभेदवृक्षे ॥

भिन्नार्थक : । त्रि० अन्यस्मिन् । भिन्नार्थकाअन्यतरएकत्वान्यतरावपि इत्यमर : । भिन्न : पर्यायस्यस. ।

भिया । स्त्री० भये ॥ ञिभीभये । भिदादिद्यत्यङ् । टाप् ॥

भिरिण्टिका । स्त्री० श्वेतगुञ्जायाम ॥

भिल्ल. । पुं० म्लेच्छजात्यन्तरे । भील इ० भा० ॥ यथाह । हेमचन्द्र : । मालाभिल्लाकिरातास्यसर्वेपिम्लेच्छ जातय. इति ॥ सचब्राह्मणकन्यायां तीवराज्जात : । यथा । पुलिन्द मेदभिल्लाश्चपुत्रोमत्स्यघातक : । कुन्दकारोडोमस्त्रीवामृतयोरपियस्तथा ॥ एतेवैतीवराज्जाता : कन्यायांब्राह्मणस्यचेतिप० पद्दवति : ॥

भिल्लगवी । स्त्री० गवय्याम् ॥

भिल्लतरु : पुं० लोध्रे ॥

भिल्ली । स्त्री० लोध्रे ॥

भिषक्पाश : । पुं० निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ।

भिषक्प्रिया । स्त्री० गुडूच्याम् ॥

भिषग्जितम् । न० औषधे ।

भिषग्भद्रा । स्त्री० भद्रदन्तिकायाम् ।

भिषङ्माता । स्त्री० वासके ॥

भिषक् । पुं० वैद्ये ॥ हेतौलिङ्गेप्रशमनेरोगाणामपुनर्भवे । ज्ञानंचतुर्विधंयस्यसराजार्हीभिषक्तम. ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्रस्तुयश्चव्याधेरतत्त्ववित् । रोगिभ्योऽर्थंसमादत्ते सदण्ड्यश्चौरवद्भिषक् ॥ भिषजोऽन्नस्याभोज्यत्वं यथा । शूद्रान्नवाह्मणोभुक्त्वातथारङ्गावतारिण । चिकित्सकस्यक्षुद्रस्यतथास्त्रीमृगजीविनाम् ॥ शौण्डिकान्नं सूतिकान्नं भुक्त्वामासमतोभवेत् । व्रतीयावकेन । सवधेनुव्रतमितिप्राय श्चित्तविवेक : ॥ अपिच । पूयंचिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठावार्द्धुषिकस्यान्नशस्त्रविक्रयिणोमलम् । इतिमानवे ४ अध्याय : ॥ भिषज्यति । भिषज्रुग्जये । कण्ड्वादि : । क्विप् ॥ ञिभेतिवा । ञिभी० । भिय . पुगभ्रस्वश्च इत्यृचि : ॥

भिष्टा । स्त्री० दग्धान्नायाम् दग्धान्ने । भिष्टांटीकते । टीकृगतौ ।

अन्यं भ्योपीतिङ : । ङ्यापोरितिह्र स्वः ॥

भिस्सा । स्त्री० अन्ने । ओदने । भक्ते ॥ बभस्ति । भसदीप्तौ । बाहुलकात्स छन्दसिवघृलमितीत्वम् । ब्राह्मण भिस्सेतिभाष्यप्रयोगाल्लोकेपि ॥ थ ह्या । भेदनम् ० भित् । सम्पदादि त्वात्क्विप् । भिदंस्यति । योचक्ष कर्मणि । धातोनुमे तिक : । पृषो दरादि : ॥

भिस्साएडम् । न० शाल्मूके । भसौंड० पू० भा० प्र० खण्डे ॥

भी : । स्त्री० भये ॥ ञिभीभये । सम्प दादित्वात्क्विप् ॥

भीतम् । न० भये त्रि० भययुक्ते ॥ वि भेति । ञिभी० क्त : ० ॥

भीतभीत : । त्रि० अतिशये नभीते । भीतप्रकारे ॥

भीति : । स्त्री० भये ॥ ञिभीभये । क्तिन् ॥ बाम्यै ॥

भीम : । पुं० अम्लवेतसे ॥ शिवे ॥ पीठविशेषे ॥ यथा । भीमेश्वरोभी मपीठे शिवाभीमेश्वरीतथेत्यागम . ॥ सर्वसम्प्रतिमनुपराक्रमेपाण्डुतन ये । वृकोदरे ॥ त्रि० भयहेतौ । घो रे ॥ भयानके ॥ बिभेत्यस्मात् । भी माद्योऽपादाने० भिय . षुग्वेति मक् ॥

भीमकर्मा । पुं० भीमसेने ॥ भीमं० हिडम्बवधादिरूपंकर्मास्य ॥

भीमनाद : । पुं० सिंहे ॥

भीमनिर्ह्राद : । पुं० राक्षसान्तरे ॥

भीमपूर्वज : । पुं० भीमाग्रजे । युधि ष्ठिरे ॥

भीमरथ : । पुं० तामसमनुवंशजाता सुरविशेषे ॥ हरिणाकूर्मरूपेणहतो भीमरथोऽसुरइतिगारुड़े गयामाहा त्म्ये ८६ अध्याय : ॥

भीमरथी । स्त्री० जनानामवस्थाविशे षे ॥ यथा । वैदकेसप्तसप्ततिकेवर्षे सप्तमेमासिसप्तमी । रात्रिर्भीमरथी नामनराणामतिदुस्तरा ॥ नराणां दुरितक्रमेतिपाठ : ॥ तामतीत्यन रोयोसौ दिनानि यानिजीवति । क्रतुभिस्तानितुल्यानिसुवर्णशतदक्षि णै ॥ गति : प्रदक्षिणविष्णोर्नाम्न मस्काराविधम् । ध्याननिद्रासुधा पानं भीमरथ्या : फलश्रुति : ॥ न दीविशेषे ॥

भीमविक्रान्त : । पुं० करिमोचले । सिंहे ॥ भीमश्चासौविक्रान्त : ॥ त्रि० भयानकविक्रमवति ॥

भीमशासन : । पुं० यमे ॥ भीमंशास नयस्य ॥

भीमसेन : । पुं० मध्यमपाण्डवे । भी मोदकोदरे ॥ कर्पूरभेदे । भीम सेनीकर्पूरइतिभाषा । यथा । पो तासोभीमसेनस्तदनुगितवार : शङ्क

रायामसंज्ञ : । यथा : पिष्टोऽन्न सारस्तदनुहिमयुतावालुकासृटिका च । पश्चादस्मात्पारसदुपरिसद्भिः शीतलः भक्षिकाख्याकरङ्गो रिभे दाशुपरसमष्टपाथैसदृश्ये नदृश्या : ॥

भीमसुता । स्त्री॰ दमयन्त्याम् ॥

भीमा । स्त्री॰ दुर्गायाम् ॥ रोचनाख गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । भीमादेवी । स्त्री॰) दुर्गायाम् ॥

भीमाख्यानम् । न॰ तीर्थविशेषे ॥

भीमेश्वरी । स्त्री॰ भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री॰ माघशुक्लैकादश्याम् ॥ भैम्याम् ॥

भीर : । त्रि॰ भयदे ॥ भियंराति । रा । क : ॥

भीरु : । पुं॰ इक्षुभेदे ॥ यथा । भीरु : स्वेपाकर : स्वादुरविदाहीगुरुः स्मृत : इति ॥ व्याघ्रे ॥ शृगाले ॥ त्रि॰ पार्थे । कातरे ॥ भीरुके ॥ यथा । हरीतक॰ इ॰ भा॰ ॥ स्वे शीरो : स्वर्गाभाव : ॥ बिभेति । ञिभीभये । भिय : क्रुकनाविति॰क्रु : ॥ स्त्री॰ भयशीलायाम् । वरयोषिति ॥ कण्टकार्याम् ॥ शतावर्याम् ॥ छागायाम् ॥ दासायाम् ॥ स्त्रीमात्रे ॥

भीरुक : । पुं॰ इक्षुभेदे । भीरुरि॰ इ॰ दे॰ भा॰ प्र॰ ॥ शीतविदाय्य

मनोमधुरोरसपाकयो: । सुशीतोबृंहणीयश्च : पौण्ड्रकोभीरुकस्तथा ॥ पेचके ॥ न॰ वने ॥ त्रि॰ भयशीले । भीरुके । यथा ॥ बिभेति । ञिभी॰ । क्रुकन् ॥

भीरुहृदय : । पुं॰ मृगे ॥

भीरू : । स्त्री॰ भयशीलायांयोषिति ॥ ऊडुतश्चत्यूङ् ॥

भील : । पुं॰ भिल्ले ॥ भियंलाति । ला॰ क:॰ ॥

भीलभूषणा । स्त्री॰ गुञ्जायाम् ॥

भीलुक : । त्रि॰ भयप्रकृतिकजने । यथा ॥ बिभेति । ञिभी॰ । भिय : क्रुक्लुकनाविति क्लुक न् ॥

भीषण : पुं॰ भयानकरसे ॥ शल्लक्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि॰ गाढे ॥ दारुणे ॥ भीकरसाम्निरे ॥ भीषयते । ञिभी॰ । नन्द्यादित्वाल्ल्युः । भियोहेतुभयेषुगिति षुक् ॥

भीष्म : । पुं॰ गाङ्गेये । पाण्डवानां पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भयानकरसे ॥ त्रि॰ भयंकरे । भयदे ॥ बिभेत्यस्मात् । ञिभी॰ । भिय : षुक्वे ति॰मक्॰ पृषोदरादि॰

भीष्मक : । पुं॰ रुक्मिण्या : पितरि ॥

भीष्मजननी । स्त्री॰ गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्तिकशुक्लपक्षीयैकादश्यादि पूर्णिमान्तपञ्चतिथिकर्तव्यव्रतविशेषे ॥

भीष्मरत्नम् । न० हिमालयोत्तरदेशजातशुक्लवर्णप्रस्तरविशेषे । भीष्मपाषाणे ॥

भीष्मसूः । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । पूङ्० । क्विप् ॥ शान्तनोर्महिषीभूत्वाभीष्मं सुतमसीयत । तस्मात्साभीष्मसूः प्रोक्तागङ्गात्रैलोक्यपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् । तत्रभीष्मस्यतर्पणंकर्त्तव्यम् ॥

भीसटम् । न० श्मेमान्तके ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त भुक्तात्राह्मणा इत्यत्रतु क्तामेषामस्तीत्यर्थेऽशआदित्वादच्प्रत्ययोनतुकर्त्तरिक्तः । सकर्मकेभ्यस्तद्विधानाभावात् ॥ यद्वोत्तरपदलोपोद्रष्टव्यः । भुक्तान्नाभुक्ताः । यथान्नस्यभुक्तत्वं ब्राह्मणेषूपचर्य्यते ॥

भुक्तसमुज्झितः । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात् समुज्झितम् । पूर्वकालैकेतिसमासः ॥

भुक्तिः । स्त्री० भोजने । भोजनम् । भुजपालनाभ्यवहारयोः । स्त्रियांक्तिन् ॥ भोगे । यथा । भुक्तिस्त्रिपुरुषीसिध्येदिति ॥

भुक्तिप्रदः । पुं० मुद्गे ॥ त्रि०भोगदातरि ॥

भुक्तोज्झितः । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्०पश्चादुज्झितम् । पूर्वकालैकेतिसमासः ॥

भुग्नः । त्रि० रोगादिनाकुटिलीकृतेऽङ्गे ॥ नम्रे ॥ भुज्यतेस्म । भुजोकौटिल्ये । क्तः । ओदितश्चेतिनत्वम् ॥ भुजतिस्मवा । गत्यर्थेतिक्तः ॥

भुजः । पुं० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । बाहाश्वत्वद्दलाश्चैवासुगन्धिन्यूर्द्धरोमिका । अन्यथाचार्थहीनानामसौनिःस्वस्वरोमशौ । निर्मांसौचैवमल्लान्यौघृष्टौचविपुलौभुजौ । आजानुलम्बिनौबाहूवृत्तौपीनौनरेश्वरे ॥ निस्वानांरोमशौह्रस्वौश्छोकरिवारम्भौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयोः । भुजन्युब्जौपाण्युपतापयोरितिसाधुः ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुपधेतिकः ॥ चतुष्कविशेषगुरुसंज्ञायाम् ॥ ० ॥ पुं० ॥

भुजकोटरः । पुं० कक्षे ॥

भुजगः । पुं० सर्पे ॥ भुजः सन्गच्छति । अन्यत्रापीतिडः ॥ भुजेनकौटिल्येनगच्छतिवा ।

भुजगदारण : । पुं० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराज : । पुं० शेषाहौ ॥ भुजगानां राजा । टच् ॥

भुजगशिशुभृता । स्त्री० वृहतीछन्द : प्रभेदे ॥ भुजगशिशुभृतानौम : । यथा । छुदलटनिकटचौर्षीभुजगशिशुभृतायासीत् । मुररिपुदलितो नारीवजजनसुखदासा ऽभूत् ॥

भुजगान्तक : । पुं० गरुडे ॥

भुजगाभोजी । पुं० मयूरे ॥

भुजगाशन : । पुं० पक्षिसिंहे । गरुडे ॥ भुजगानश्नाति । अश० । ल्यु : । भुजगाशनं यस्यवा ॥

भुजङ्ग : । पुं० अहौ । सर्पे ॥ पिङ्गे ॥ भुजं नकौटिल्यं नगच्छति । गमे : सुपिखच् खच्चडिद्वाच्य इतिडित्वमचे टिलोप : ॥ सीसके ॥

भुजङ्गघातिनी । स्त्री० सर्पाक्ष्याम् । चुल्लार्याम् । कङ्कालिका० इ० गौ० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्द : प्रभेदे ॥ भुजङ्गप्रयातं चतुर्भिर्यकारै : ॥ यथा । सदारात्मजञ्चाति भृत्योविहायन्वमेतं हृदं जीवितं लिप्समान : । मयाक्रंशित : कालिये त्यं कृतत्वं भुजङ्गप्रयातं द्रुतंसाग राय ॥

भुजङ्गभुक् । पुं० मयूरे ॥ भुजङ्गं भुङ्क्ते । भुज० । क्विप् ॥ गरुडे ॥

भुजङ्गभोजी । पुं० राजसर्पे ॥

भुजङ्गम : । पुं० सर्पे । भुजं नकौटिल्यं नगच्छति । गमे : सुपिवा च्यइतिखच् । खच्चडिद्वावाच्य इति डिद्भावे टिलोपाभाव : ॥ न० सीसके ॥

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृति छन्द: प्रभेदे ॥ वसौशाश्वैश्छेदो यो तं ममतनयुगलसभलगै र्भुजङ्गविजृम्भितम् ॥ यथा । हेलोद्यन्यञ्चत्पादप्रपातविकटनटनभरोरणत्कारतालकप्राकम्रं क्रमन्डाक्ष : शुलितरलनवक्षितप्रलयतरङ्गितरा र भुवः । चञ्चन्नागस्त्रीभिर्भक्त्या-मुकुलितकरकमलयुगं कृतस्तुतिरच्युत : पायादम्र छिन्दन्कालिन्दीहृदकूलनिलवसतिहुष्ट भुजङ्ग विजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० वृहतीछन्द: प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ॥ यथा । तरलातरङ्गरिङ्गितैर्य मुनाभुजङ्गसङ्गता । कथमेतिर-

सदाचारकाशपाल : सर्द्दयताहरि : ॥
भुजङ्गहा । पुं० श्रीकृष्णस्यन्दन ध्वजे । गरुडे ॥
भुजङ्गाक्षी । स्त्री० रास्नायाम् ॥ भुजङ्गान् पचति । अश्नात्यासौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोक्षियस्याः । फणोदर्शनादित्यच् । जातेरिति० गौरादित्वाद्वा० ङीष् । भुजङ्गशब्दस्यभुजङ्गादिसदृशस्वरूपा ॥
भुजङ्गाख्य : । पुं० नागकेसरे ॥
भुजशिर : । न० स्कन्धे ॥ भुजस्यशिर : ॥
भुजा । स्त्री० बाहौ ॥ करे ॥ भुजादाप् ॥
भुजाकण्ट : । पुं० हस्ताङ्गुलीनखे ॥
भुजान्तर : । पुं० वक्षसि ॥ भुजान्तरम् न० क्रोडे ॥ भुजयोरन्तरम् ॥
भुजि : । पुं० वह्नौ ॥ भुनक्ति० भुज्यतेवा । भुज० । भुजे : किदिति० इ : ॥
भुजिष्य : । पुं० स्वतन्त्रे ॥ हस्तसूत्रे । दासे ॥ भुङ्क्ते० स्वाम्युच्छिष्टम्० भुज्यतेवा । भुज० । रुचिभुजिभ्यां किष्यन् ॥
भुजिष्या । स्त्री० दास्याम् ॥ गणिकायाम् ॥ टाप् ॥
भुज्यु : । पुं० भोजने ॥ अग्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यांयुक्त्युकाविति युक् । भोजनेच ॥ भाजने ॥ पात्रविशेषे ॥
भुञ्जान् । त्रि० भोगकर्तरि । भुञ्जाने ॥ भुजे० लट : शतृ ॥
भुञ्जान : । त्रि० भुञ्जति । यथा । त्रिपुधामसुयद्भोग्यं भोक्तायच्चप्रकीर्तितं । वेदैतदुभयंयस्तसभुञ्जानो नलिप्यत इति । त्रिषुधामसुजाग्रदादिषु ॥ भुजे : कर्त्तरिलट : शानच् ॥
भुरिक् । स्त्री० पृथिव्याम् ॥ बिभर्त्ति० भरति मनुष्यादीन् । भृञ्० । भृञ उच्चेति० इक्प्रत्यय :
भुवनम् । न० सलिले ॥ जले ॥ गगने ॥ जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानि यथा । भूर्भुव : स्वर्महश्चैव जनश्चतप एवच । सत्यलोकश्चसप्तैते लोकाःप्र परिकीर्तिता : । अतलंसुतलंचैव वितलञ्चगभस्तिमत् । महातलं रसातलंपातालंसप्तमंस्मृतम् ॥ इति ॥ भवन्त्यस्मिन् भूतानि० इति भुवनमयंलोक : ॥ भुवदे । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति० उत्पद्यन्तेऽनेन करणेल्युट् । संज्ञापूर्वकत्वाद्गुणाभाव : ॥
भुवनकोष : । पुं० भूगोले ॥
भुवनकोषवित् त्रि० । चतुर्दशभुवना

निवसन्ति० इतितात्पर्य्यंवाभिन्ने ॥ कल्पनामात्रमेतत् । तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम् । तेषांमिथोविप्रतिपत्तिदर्शनात् ॥

भुवनेश्वरः । पुं० एकाम्रे ॥

भुवनेश्वरी । स्त्री० महाविद्याविशेषे । साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम् ॥ यथा । पाशाङ्कुशवराभीतिधरांदेवीं चिद्रूपिणीम् । वन्देसमन्दहसितां मणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाधःकरमारभ्यदक्षिणाधःकरपर्य्यन्तम् । तदुक्तंमहाम्बोधनतन्त्रे । दक्षिणेचाङ्कुशंदद्यात् वामेपाशंप्रदापयेत् । अभयंदक्षिणे दद्याद्वरंवामेप्रदापयेदिति । इयम् टङ्कायामपिभुवनेशीध्याने । दक्षेङ्कुशाभयेमोक्षिवामेपाशमथेष्टदमिति ॥

भुवन्युः । पुं० भानौ ॥ सूर्य्ये ॥ व्यसने । वह्नौ ॥ शशलाञ्छने । शशिनि ॥ भवति । भू० । कन्युच्चिपेश्चेति० भाभुवः कन्युच् ॥

भुवर् । अ० अन्तरिक्षे । गगने ॥ पष्ठ्यन्तप्रतिरूपकमव्ययम् । भवति । भू० । भूरञ्जिभ्यांकिदित्यसुन् । उवङ् ।

भुवर्लोकः । पुं० भूरादिसप्तलोकान्तर्गत द्वितीयलोके ॥ यथा । भूमिसूर्य्यान्तरंयच्चसिद्धादिमुनिसेवितम् । भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच । स्थितिर्ज्ञेयोभुवर्लोकोध्रुवमान्योमहीतलात् ॥ भूपृष्ठादारभ्यध्रुवप्रान्तेइति० ज्योतिश्चक्रावच्छिन्नभूतध्रुवपर्य्यन्तपद्मदलचोक्तायोभुवर्लोकस्त्वर्थः ॥

भुविः । न० अब्धौ । समुद्रे ॥ भवत्यस्मिन् । भू० । भुवः किदिति० इन् ॥

भुशुण्डी । स्त्री० अस्त्रान्तरे । अनियतम् ॥ यथा । चक्रीयोशीयचप्राप्यमत्स्योदयकदम्बका । भ्रमतेचानतान्तीयासाभुशुण्डीभिगद्यते ॥

भू । अ० रसातले ॥

भूः । स्त्री० स्थानमात्रे ॥ एकाङ्के ॥ व्याहृत्यन्तरे ॥ धरण्याम् । भूमौ ॥ दृष्टात्मविनयव्ययान्नृपाननुहसति भूरियम् । अहोमांविजिगीषन्तिमृत्योः क्रोडनयानराः ॥ भवति० भवन्त्यस्मिन्वा । भू० सत्तायाम् । सम्पदादिभ्योवाक्विप् ॥ भवन्त्यस्यांसर्वाणीत्यधिकरणेबहुलवचनात्क्विप् इत्येके । भवन्त्यस्माद्भूतानीत्यपादानेवाक्विपित्येके ॥ उत्पत्तौ ॥

भूकः । पुं० न० काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू० । मृहभूशिमुषिभ्यः कक् ।

भूकदम्बः । पुं० अलम्बुषवृक्षे । कोकसिम० इ० गौ० दे० भा० ॥

भूकादम्बक : । पुं० यवान्याम् ।

भूकदम्बिका । स्त्री० महाश्रावणिकायाम् ॥ मुण्डाम् ॥

भूकन्द : । पुं महाश्रावणिकायाम् ॥

भूकम्प : । पुं० उत्पातविशेषे ॥ स-यथा । यामद्वमाद्यभूकम्पोदिवादौ नामनिष्टद : । यनिष्टद : क्षिती शानां सन्ध्ययोरुभयोरपि ॥ द्वितिय थिष्ठ : । यदाविक्षुभतेनन्तोमदाघू-र्णितलोचन : । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुवः कम्पो भूकम्पः ॥ केचित्त्विकभेगज : प्र-चलितव्यासादिभि : कथ्यते चापि मीनकुलीरभेचद्यवमेसम्भ चलेत्क-म्पम : । यूकेणुभधरेमृगेन्द्रमिथुने-कन्यासुगेपन्नगस्ते यानेकातमोयदि प्रचलितिर्वीतदाकम्पते ॥ कच्छ पेमरगंजे यंमरया चापिपन्नगे । सर्व मसुखदश्चै षपृथिव्यां चलितेगजे ॥ प्रथितनरेश्वरमरणंव्यसनान्याम्ने य मारुतयो : । क्षुद्भयमतिवृष्टिभि रुपपीडान्तेजनाद्यापि ॥ चिपतु र्थंपञ्चमदिनेमासेपचेभिपचके। भव तियदाभूकम्पःप्रधाननृपनाशनंकुरु ते।सचायंभूमिजोत्पातविशेषः॥यथा । चरस्थिरभवंभौमंभूकम्पमपिभूमि जम् । जलाशयानांवैकृत्यंभौमंतद पिकीर्तितम् ॥ भौमंयाम्यफलंज्ञे यंचिरेणपरिपच्यते ॥ अपिच । चि



तिकम्पमाहुरेके बृहदन्तर्जलनिवा सिसत्वकृतम् । भूभारखिन्नदिग्ग जविश्रामसमुद्भवंचान्ये ॥ अनिलो ऽनिलेननिहत : क्षितौपतन्सस्व-नंकरोत्यन्ये । केचित्त्वदृष्टकारित मिदमन्ये प्राहुराचार्या : ॥ गिरि भि : पुरासपक्षैर्वसुधाप्रपतद्भिरुत्प तद्भिश्च । आकम्पितापितामहमा हामरसदसिसव्रीडम् ॥ भगवन्नाम ममैतत्त्वयाकृतंयद्चलेतिसन्नैतया । क्रियतेऽचलैश्चलद्भि : शक्ताहंना स्यखेदस्य ॥ तस्या : सगद्गदगिरं किञ्चित्स्फुरिताधरंविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपिता मह : प्राह ॥ मन्युंहरेन्द्रधात्या : क्षिपवुलिशंशैलपक्षभङ्गाय । शक्र:क्र-समित्युक्त्वामाभैषीरितिचवसुमतो माह ॥ किन्त्वनिलदहनसुरपति वरुणा : सदसत्फलावबोधार्थम् । प्राग्द्विचितुर्भागेषुदिननिशो : क म्पयिष्यन्ति ॥ चतोविशेषोद्रष्टव्यो वाराह्यांसुविचक्षणै : ॥

भूकर्बुदार : । पुं० ) क्षुद्रश्लेष्मातके ।

भूकर्बुदारक : । पुं०) भूश्लेष्मे । छोटा लसोडा० इ० भा० । भूकर्बुदा रोमधुर : कृमिशूलापह : परम् । वातःकोपन : किञ्चित्शीतल : स्वर्णमारक : ॥

भूकल : । पुं० दुर्विनीताश्वे ।

भूकश्यपः । पुं॰ वसुदेवे ॥

भूकाकः । पुं॰ खल्पकाके । क्रौञ्चे । नीलकपोते ॥

भूकुम्भी । स्त्री॰ भूपाटल्याम् ॥

भूकुष्माण्डी । स्त्री॰ विदार्य्याम् ॥

भूकेशः । पुं॰ शैवले ॥ वटे ॥

भूकेशा । स्त्री॰ राक्षस्याम् ॥

भूकेशी । स्त्री॰ ववभूखे ॥

भूक्षित् । पुं॰ सूचीरोमणि । शूकरे ॥

भूखर्जूरी । स्त्री॰ क्षुद्रखर्जूर्याम् । भूयुक्तायाम् । भूखर्जूरीतुमधुरा शिशिरादाहपित्तनुत् ॥

भूगरम् । न॰ विषे ॥

भूगर्भः । पुं॰ भगवति । भूर्गर्भे यस्य भूःसर्वभूताश्रयभूतागर्भइवास्ते तिनौचस्य भूतस्तागर्भोऽस्येतिवा ॥ भवभूतिनामनि॰ कवौ ॥

भूगोलः । पुं॰ ज्योतिःशास्त्रप्रसिद्धे भुवनकोषे । भौज्यं यथासर्वरसंविभाज्यं राज्यं यथाराजवियर्जितस्य । सभानभातीवसुवक्तृहीनागोलानभिज्ञोगणकस्तथैव ॥ यादीव्याकरणं विनैवविदुषांधृष्टःप्रविष्टः सभां जल्पन्नल्पमतिः स्मयात्पटुवटुभ्रूभङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित् सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥

भूचरः । त्रि॰ भूमिचारिणि ॥

भूच्छायम् । न॰ अन्धकारे ॥ भुवः छाया । छायाबाहुल्ये॰ इति क्लीवता ॥

भूजन्तुः । पुं॰ भूनागे ॥

भूजम्बूः । स्त्री॰ गोधूमे । विकङ्कतफले ॥ भूमिजम्ब्वाम् ॥

भूतः । पुं॰ देवयोनिविशेषे ॥ स च अधोमुखोर्द्ध्वमुखादिपिशाचभेदोरुद्रानुचरोबालग्रहः ॥ कुमारे ॥ कृष्णचतुर्दश्याम् ॥ योगीन्द्रे ॥ यक्षोगणविशेषेषु । न॰ क्ष्मादौ । पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पिशाचादौ । जन्तौ । युक्ते । न्याय्ये । वस्तुतत्त्वानुसरणे ॥ त्रि॰ उचिते ॥ प्राप्ते ॥ विश्वे ॥ सते । सत्ये । प्राणिनि । कालविशेषे । वृत्ते । अतीते । गते । परमार्थे । विद्यमानेवस्तुनि । अतीतोत्पत्तिके । जाते ॥ समे ॥ उपरमदृश्यपदं भूतशब्दः समार्थ इतिशाब्दिकाः । यथा पितृभूतः । देवभूतोयमिति शि भूवमपिविद्यमाने ॥ अन्यधर्मिणि ॥ भाव्यते स्म । भूप्राप्तौ । आधृषाद्वेतिणिजभावः पक्षे॰ क्तः ॥ भूतिरस्यास्तिवा । अर्शआद्यच् ॥ अभवद्वा । भुवोगत्यर्थेति ॰ भूतार्थेकर्त्तरिक्तः ॥ अर्द्धर्चादिः ॥

भूतकृत् । पुं॰ धातरि । द्रुहिणे ।

भूतानि करोति । डुकृञ् । क्विप् । तुक् ॥ रुद्रे ॥ भूतानि कृन्तति । छिनत्ति । कृती छेदने । क्विप् ॥ कृणोति हिनस्ति वा । कृञ् । क्विप् तुक् ॥ विष्णौ ॥ रजोगुणं समाश्रित्य विरिञ्चिरूपेण भूतानि करोतीत्यर्थः ॥

भूतकेशः । पुं० तृणविशेषे । गोलोम्याम् । श्वेतकिण्याम् ॥ भूतानां केश इव । भूतः केशोऽस्य वा ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिन्दुवारे ॥

भूतक्रान्तिः । स्त्री० भूतावेशे ।

भूतगणः । पुं० पृथिव्यादिपञ्चके ॥ भूतानां गणः ॥

भूतगन्धा । स्त्री० मुरानामगन्धद्रव्ये ॥

भूतग्रामः । पुं० देहे इन्द्रियसङ्घाताकारेण परिणते पृथिव्यादिभूतसमुदाये ॥ स च० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधो भवति । भूतानां पृथिव्यादीनां ग्रामः ॥

भूतघ्नः । पुं० भूर्जपत्रे ॥ उष्ट्रे ॥ लशुने ॥ त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकायां ॥

भूतचतुर्दशी । स्त्री० कार्तिककृष्णचतुर्दश्याम् । यमचतुर्दश्याम् ॥

भूतजटा । स्त्री० जटामांस्याम् ॥ गन्धमांस्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वंसप्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्राह्ययोग्यविशेषगुणवत्त्वे ॥ पृथिव्यादयस्तज्जातिविशेषः ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूताद्युपद्रवे ॥ रक्तकरवीरे ॥

भूतद्रुमः । पुं० श्लेष्मातकवृक्षे ॥

भूतधुक् । पुं० भूतानामपकारके ॥ भूतान्निद्रुह्यति । द्रुह० । सत्सूद्विषेति क्विप् ॥ भूतधुक्कीलभेतयम् ॥

भूतधात्री । स्त्री० भूमौ । भूतानां धात्री ।

भूतनाथः । पुं० शिवे ॥ भूतानां नाथः ॥ भूतैर्नाथ्यते याच्यते० तानुपतापयति० तेभ्य आशास्ते० तेषामभीष्टमिति वा भूतनाथः ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशनः । पुं० श्वेतसर्षपे ॥ सर्षपे । भल्लातके ॥ न० रुद्राक्षे ॥ भूतान् नाशयति । णश अदर्शने ण्युट् ।

भूतपतिः । पुं० महादेवे ॥ भूतानां पतिः ।

भूतपची । स्त्री॰ तुलस्याम् ॥

भूतपुष्प : । पुं॰ श्योनाकवृक्षे ॥

भूतपूर्णिमा । स्त्री॰ आश्विनपूर्णिमायाम् । शारद्याम् । कोजागरायाम् ॥

भूतपूर्व : । त्रि॰ अतिक्रान्ते ॥ पूर्वं भूत : । सुप्सुपेतिसमास : । भूतपूर्वेचरडितिनिर्देशाद्भूतशब्दस्यपूर्वनिपात : ॥

भूतप्रादुर्भाव : । पुं॰ अतिक्रान्तोत्पत्तौ ॥ भूतस्यप्रादुर्भाव : ॥

भूतभावन : । पुं॰ सर्वभूतपितरि । ईश्वरे । भूतानिभावयतिजनयति॰ प्रापयतिवा । भवतीयर्न्त्वाद्युच् ॥

भूतभृत् । पुं॰ विष्णौ ॥ भूतानिबिभर्त्तिधारयति॰ पोषयतिवा॰ । डुभृञ्॰ । क्विप् । तुक् ॥

भूतभैरव : । पुं॰ भैरवविशेषे ॥ औषधविशेषे । यथा । पलाशजातिफलव्योषविष्णुतालीरसेन : । सविडङ्गसितायुक्तं चूर्णंभूतभैरवमिति ॥

भूतमाता । स्त्री॰ शब्दादिषु । पृथिव्यादिषुविषयेषु ॥

भूतमार्गी । स्त्री॰ चौडानामगन्धद्रव्ये ॥

भूतयज्ञ : । पुं॰ पञ्चमहायज्ञान्तर्गतबलिरूपवैश्वदेवकर्म्मणि भूतेभ्योबलिहरणे ॥

भूतयोनि : । पुं॰ परमात्मनि ॥ भूतानांयोनि : ।

भूतलिका । स्त्री॰ पृक्कायाम् ॥

भूतवास : । पुं॰ कलिद्रुमे ॥ भूतानांवास : । भूतानांवासोस्मिन्वा ॥

भूतविक्रिया । स्त्री॰ अपस्माररोगे ॥

भूतवित् । पुं॰ लौकायतिके ॥ तन्मते पृथिव्यप्तेजोवायवस्तत्त्वानि॰ तानिचत्वारिभूतानिजगत्कारणानीति मन्यते ॥

भूतविद्या । स्त्री॰ भूततन्त्रे ॥ यथा । भूतविद्यानाम॰ देवासुरगन्धर्वयक्षरक्ष : पितृपिशाचनागग्रहाद्युपसृष्टचेतसां॰ शान्तिकर्मबलिहरणादिग्रहोपशमनार्थमितिसुश्रुत : ॥

भूतवृक्ष : । पुं॰ शाखोटवृक्षे । श्योनाकवृक्षे ॥ कलिद्रुमे ॥

भूतवृक्षक : । पुं॰ शाखोटे ॥ बहुवारके लसोड़ा॰ इ॰ भा॰ ॥

भूतवेशी । स्त्री॰ श्वेतशेफालिकायाम् । श्वेतसुरसायाम् । श्वेतनिर्गुण्डी॰ इ॰ भा॰ ॥ भूतानिविशन्ति । विशप्रवेशने । कर्मण्यण् ॥

भूतब्रह्मा । पुं॰ देवले ।

भूतसञ्चार : । पुं॰ भूतोन्मादरोगे । भूताक्रान्तौ । ग्रहावेशे ॥

भूतसञ्चारिणी । स्त्री॰ कृष्णचतुर्दश्याम् ॥

भूतसञ्चारी । पुं॰ दावानले ॥

भूतसर्गः । पुं॰ भूतसृष्टौ । देवासुरभेदेन भूतानां सृष्टौ ॥ यथा । ब्राह्मः प्राजापत्यस्तथा सौम्यऐन्द्रस्तथैव च । गान्धर्वोऽथ यक्षो वैरोरक्षः पैशाचमानुषाः ॥ स्थावरः पाशवो मार्गः सार्पः शाकुनिकस्तथा । चतुर्दशविधो ह्येष भूतसर्गः प्रकीर्त्तितः ॥

भूतसारः । पुं॰ श्योनाकप्रभेदे ॥

भूतसृट् । पुं॰ ब्रह्मणि ॥

भूतसन्त्री । स्त्री॰ वंध्याकर्कोटक्याम् । नीलदूर्वायाम् ॥

भूतहरः । पुं॰ गुग्गुलौ ॥

भूतहारि न॰ देवदारुणि ॥

भूता । स्त्री॰ कृष्णचतुर्दश्याम् ॥ यथा । स्कान्दे । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । पूजिता निभवन्तीह भूतायां पारणे कृते ॥ अपि च । शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् ॥

भूताङ्कुशः । पुं॰ गौ॰ दे॰ सनामप्रसिद्धे वृक्षे । चर्चके । यष्ट्याह्वये ॥ भूताङ्कुशस्तीव्रगन्धः कटुरुष्णस्तथोत्कटः । भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः ॥

भूतात्मा । पुं॰ देहे पृथिव्यादिभूतारब्धत्वात् ॥ भूतान्येवात्मास्वभावो यस्य सः ॥ परमेष्ठिनि । द्रुहिणे । हिरण्यगर्भे ॥ भूतानां व्यष्टिपार्थी नामात्मा नियन्ता समष्ट्युपाधित्वात् ॥ इति ॥ सदाशिवे ॥ जीवात्मनि ॥ विष्णौ ॥ भूतानां प्राणिनामात्मा अन्तर्यामी ॥

भूतादिः । पुं॰ सर्वजगत्कारणे । तामसाहङ्कारे ॥ भूतानामादिः ॥ परमेश्वरे ॥ भूतानां भवनधर्मकाणामुत्पत्तिमतां सर्वेषामादिः कारणं कार्य्युपादानोभयात्मकमिति यावत् ॥

भूतादिसर्गः पुं॰ भौतिकसर्गे ॥ भूतादेः सर्गः ॥

भूतारि । न॰ हिङ्गुनि॰ ॥

भूतार्त्तः । वि॰ भूताविष्टे ॥ भूतेनग्रस्तोऽर्द्दितः । अतः तृतीयासमास इतिवृत्तिः ॥ भूतेनार्त्तोऽपि ॥

भूतार्थः । पुं॰ सिद्धार्थे ॥

भूतार्थवादः । पुं॰ प्रमाणान्तराविरोधवस्तुनिरूपितार्थबोधकवेदवाक्ये ॥ यथा । इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः ॥

भूताली । स्त्री॰ भूपाटल्याम् ॥ सुपल्याम् ॥

भूतावासः । पुं॰ विभीतके । वटेद्रा॰ दु॰ मा॰ ॥ भूतानामावासः ॥ आकाशाद्याश्रये॰ वासुदेवे ॥ भूतान्यभिमुख्येनवसन्त्यत्र ॥ यस्मिंस्त्वयि भूतानि भूतावासस्ततो भवान् । इति हरिवंशः ॥ काये ॥

भूताविष्टः । वि॰ पिशाचग्रस्ते ॥ भ

तोक्रान्ते । भूतादिनारोगग्रस्ते ॥

भूताविष्ट : । पुं० पाविष्टे । भूतस-ञ्चारे ॥

भूति : । स्त्री० भस्मनि । सम्पत्तौ । हस्तिशृङ्गारे । मांसपाकविशेषे । उत्पत्तौ । शिवस्याणिमाद्यष्टविधैश्वर्ये । अणिमामहिमाचैवलघिमा गरिमातथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतय : ॥ शम्भुधृतभस्मनि ॥ भूतृणे ॥ उत्पत्तौ । जातौ ॥ वृद्धिनामौषधे । रोहिषतृणे ॥ विभूतौ । भवनम्-भूति : । स्त्रियां क्तिन् ॥ भवत्यनया । क्तिन्वा ॥

भूतिकः । पुं० यवान्यामोषधौ ॥ न० कट्फलौषधौ । घनसारे ॥ भूमिस्थे । भूस्तृणे । भवति । भू० । क्तिन्स्त्रीवत्संज्ञायामिति-क्तिच् । संज्ञायांकन् ॥

भूतिकाम : । पु० ऐश्वर्याभिलाषिणि ॥

भूतिकील : । पुं० भूखाते ।

भूतिगर्भ : । पुं० भवभूतिकवौ ॥

भूतिनिधानम् । न० धनिष्ठानक्षत्रे ॥

भूतिमान् । त्रि० ऐश्वर्ययुक्ते ॥

भूतिकम् न० [illegible]भूनिम्बे ॥ यवान्याम् । कर्पूरे । भूस्तृणे । तृणे ।

भूतृणम् । न० गन्धतृणे । गन्धखेडे । रोहिषे ॥ पुं० रोहिषे । भूतिके । मालातृणे । सुगन्धरोहिष-द्र०



परिमलदगङ्गनि-द्र०धान्यभापाप्रसिद्धे ॥ भूतृणं कटु कं तिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहिदीपनं रूक्षं सनेत्र्यं मुखशोधनम् ॥ वृष्यं बहुविट्कं स्वपित्तरक्तप्रदूषणम् । भुवस्तृणम् ॥

[illegible]तेशः । पुं० शिवे । सर्वभूतनियन्तरि । भूतानामपस्मारादीनामधिपत्यत्वात् प्रायश्चिताधीश : ।

भूतमम् । न० स्वर्णे । सुविस्तृतम् ।

भूदरीभवा । स्त्री० वाराहीकन्दाम् ॥

भूदार : । पुं० वराहे । सूकरे । भुवं दारयति । द्र० कर्मण्यण् ॥

भूदेवः । पुं० ब्राह्मणे । ब्राह्मणोब्रह्मामूर्ति : श्रीविष्णो : परमात्मन : । अतएवहिविख्यातोभूदेवास्तेमहात्मते । भुव : सुविषादेव : ॥

भूधन : । पुं० राज्ञि ॥ भूपतौ ॥

भूधरः । पुं० पर्वते । महीध्रे ॥ धरति धृञ : पचाद्यच् । भुवोधर : ॥ यन्त्रविशेषे ॥ यथा । जलकच्छपपातालदोलाभूधरवालुका : । बकाद्या यन्त्रभेदा: स्युरितिशब्दचन्द्रिका ॥

भूधात्री । स्त्री० भूम्यामलक्याम् ॥ भूधात्रीवातकृत्तिक्ताकषायामधुराहिमा । पिपासाकासपित्तास्रकफकण्डुक्षतापहा ॥

भूध्र : । पुं० पर्वते ॥ भुवन्धरति । धृ-

न्० । मूलविभुजादित्वात्कः ॥

भूनागः । पुं० उपरसविशेषे । चितिनागे ॥

भूनिम्बः । पुं० क्षुपविशेषे । किराततिक्ते । चिरायता० इ० भा० ॥ भुवोनिम्बइव ॥

भूनीपः । पुं० भूमिकदम्बे । भूकदम्बे । लघुपुष्पे ॥ निकदम्बा: कदूम्बास्तृष्णादोषहराहिमा: । कषायतिक्ता: पित्तघ्नावीर्यवृद्धिकरा: परा: ॥

भूनेता पुं० राज्ञि । भुवोनेतानायकः ॥

भूपः । पुं० राजनि ॥ भुवंपाति । पारक्षणे । कातोनुपेतिकः । १६ संख्यायाम् ॥

भूपतिः । पुं० नृपे । राज्ञि ॥ भूपश्चौयस्यपत्नीसत्तुभवसिकच भूपती रामचन्द्रः । इतिरामायणे कैकयीवाक्यम् ॥ भुवःपतिः ॥ ऋषभौषधे ॥

भूपदः । पुं० वृक्षे ॥ भुविपदानियस्य ॥

भूपदी । स्त्री० मल्लिकायाम् । वेलो० इ० भा० ॥ भुविपदमस्याः । गौरादिः ॥

भूपलाशः । पुं० हचविशेषे । विशाखी इ० सी० दे० भा० ॥ भुवः पलाशः ॥

भूपाटला । स्त्री० भूपाटल्याम् ॥

भूपाटली । स्त्री० भूकुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुवः पाटली ॥

भूपालः । पुं० राज्ञि ॥ भुवंपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्यंपालयतीनित्यं सत्यधर्मपरायणः । निर्जित्यपरसैन्यानिक्षितिंधर्मेणपालयेत् ॥

भूपुत्री । स्त्री० सीतायाम् ॥ भुवः पुत्री ॥

भूपेष्टः । पुं० राजादनीवृक्षे ॥

भूबदरी । स्त्री० लघुबदर्याम् । चितिबदर्याम् । झडबेरी० इ० भा० ॥

भूभर्त्ता । पुं० नृपे ॥ भुवोभर्त्ता । पत्यर्थभर्तृशब्दस्ययाजकादित्वात् याजकादिभिश्चेतिसमासः । तेन० षष्ठी० भर्त्तरिपत्० तज्काभ्यांकर्त्तरीति० नसमासनिषेधः ॥

भूभुक् । पुं० राज्ञि ॥ भुवंभुनक्तिपालयति । भुज० । क्विप् ॥

भूभृत् । पुं० पर्वते । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवंबिभर्त्ति । डुभृञ् । क्विप् तुक् ॥

भूमा । पुं० बहुत्वे ॥ भूमामहान्निरतिशयंबृहद्विपुलपर्याय: ० इतिभाष्यम् । सकलसांसारिकव्यवहाराभावोपलक्षितंतत्त्वे । ब्रह्मणि ॥ यत्रनान्यद्विजानातिनान्यच्छृणोतिच । नान्यत्पश्यतियस्मिन्वैसभूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृत: प्रोक्तः सुखंनाल्पेविचारय ॥ बहोर्भावः । पृथ्वादित्यादिमनिच्

। बहोर्लोपोभूचबहो : ॥ त्रि॰ बहुत्वविशिष्टे ॥

भूमय : । त्रि॰ मृदात्मके । भूमिमये

भूमयी । स्त्री॰ सूर्यपत्नाम् । छायायाम् ॥

भूमिः । स्त्री॰ स्थानमात्रे वसुन्धरायाम् । क्षितौ । अचलायाम् । रसायाम् । स्थिरायाम् ॥ विष्णुर्भूमिसम्यज्योवाच । सर्वाधाराभवशुभेसर्वे : सम्पूजितासुभम् । मुनिभिर्मनुभिर्देवै: सिद्धैर्दानवादिभिः ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । वापीतडागारम्भे चगृहेचकृषिकर्मणि । तवपूजाकरिष्यन्तिमद्वरेणसुरादय : । मूढायेनकरिष्यन्तियास्यन्तिनरकंचते । इति ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । तद्दिनेतवपूजाकरिष्यन्तीत्यन्वयः । अस्या : गुणामहाभारते मोक्षधर्मे यथा । भूमेस्थैर्यंगुरुत्वञ्चकाठिन्यं प्रसवार्थता । गन्धोगुरुत्व शक्तिश्च सङ्घात : स्थापनाधृति : ॥ इति ॥ अस्यार्थः । स्थैर्यमचाञ्चल्यम् १ । गुरुत्व पतनप्रतियोगीगुण॰ २ । काठिन्यम् ३ । प्रसवार्थता॰ धान्याद्युत्पत्तिसमर्थता ४ । गन्ध ५ । गुरुत्व पिण्डपुष्टि ६ । शक्ति॰ गन्धग्रहणसामर्थ्यम् ७ सङ्घात॰ श्लिष्टावयवत्वम् ८ । स्थापना॰ मनुष्याद्याश्रयत्वम् ९ । धृति : पाञ्चभौतिकेमनसियोधृत्यंश: १० । इति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति भूमिद: । उच्छेत्ताचानुमन्ताचतान्येवनरकंवसेत् ॥ योगिनामवस्थाविशेषे ॥ यथा । निरुद्धे चेतसिपुरा सविकल्पसमाधिना । निर्विकल्पसमाधिस्तुभवेदत्रत्रिभूमिक : ॥ व्युत्तिष्ठतेसतस्त्वाद्येद्वितीयेपरबोधित । अन्ते व्युत्तिष्ठतेनैवसदाभवतितन्मय : ॥ एवंप्राग्भूमिसिद्धावप्युत्तरभूमये । विधेयाभगवद्भक्तिस्ताविनासानसिध्यति ॥ भवन्त्यस्यांभूतानि । भूसत्तायाम् । भुव . क्तिदिति॰ मि : ॥

भूमिकदम्ब: । पुं॰ कदम्बविशेषे । भूनीपे । भूमिजे । लघुपत्रे । हस्तपुर्षे । विषघ्ने ॥

भूमिकन्दली । स्त्री॰ कन्दल्याम् । द्रोणपर्ण्याम् ॥

भूमिका । स्त्री॰ रचनायाम् ॥ वेशान्तरपरिग्रहे । रूपान्तरस्वीकारे यथा । हेमचन्द्र : । पात्रापिनाट्येऽधिकृतास्तत्तद्वेशास्तुभूमिका : । इति ॥ ज्ञानिनामवस्थाविशेषे ॥ यथाहु : । ज्ञानभूमि : शुभेच्छाख्याप्रथमासमुदाहृता । विचारणा द्वितीयास्यात् तृतीयातनुमानसा । सत्त्वापत्तिश्चतुर्थीस्या ततोऽसंसक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगास्मृतेति । भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकाचितयब्रह्मविद्यासाधनमेव॰ नतुब्रह्मविद्याकोटावन्तर्भावः ॰ भेदसत्वस्थितुर्दृश्यसत्वात् । यश्चतुर्थभूमिकांप्राप्तः सब्रह्मविदित्युच्यते। पञ्चमभूमिनिर्विकल्पाभ्यासदाभ्ययाः स्वयमेवव्युत्तिष्ठति॰ सोयञ्चानीब्रह्मविद्वरः षष्ठभूमौपार्श्वस्थबोधितो व्युत्तिष्ठति॰ सोयंब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयंसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानियोगशास्त्राणियत्सप्तभूमिकाप्राप्तयोगिन्येवमध्यवस्यन्ति॰ सोयमीदृशोयोगीव्युत्थानरहितोनिर्विकल्पकसमाधिस्थः परमहंसः सप्तमभूमौब्रह्मनिष्ठइतिचोच्यते॥ इति ॥ भूमिकापञ्चकमप्याहुः । यथा॥ चिप्तमूढविचिप्तमेकाग्रंनिरुद्धमिति ॥ तत्र॰ आसुरसम्पल्लोकशास्त्रदेहवासनासुवर्त्तमानंचित्तंचिप्तभूमिकानिद्रातन्द्रादिग्रस्तंचित्तंमूढभूमिका कदाचिद्ध्यानयुक्तंचित्तंचिप्ताद्विशिष्टतयाविचिप्तभूमिका । तत्रचिप्तमूढयोः समाधिस्वशङ्कैवनास्ति॰ विचिप्तेतुसमाधिस्वशङ्कातदितरत्भूमिकाद्वयंसमाधिः ॥ एकाग्रेमनसिसद्भूतमर्थंप्रद्योतयति॰ क्लेशान्चिणोति॰ कर्मबन्धनानिश्लथयति॰ निरोधमभिमुखीकरोति॰ इतिसम्प्रज्ञातोयोगः एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधिः॰ निरुद्धभूमिकेति ॥

भूमिकुष्माण्डी । स्त्री॰ लताविशेषे । विदार्याम् ॥

भूमिखर्जूरिका । स्त्री॰ चुद्रखर्जूर्याम् ॥ भूमिखर्जूरिकास्वाद्वीदुरारोहाल्पदुष्पदा । अयस्कान्तफलाकाककर्कटीखादुमस्तका ॥ पिण्डखर्जूरिकास्त्वन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्जूरी । स्त्री॰ भूमिखर्जूरिकायाम् ॥

भूमिगृहम् । न॰ वश्यातलगृहे ॥

भूमिचम्पकः । पुं॰ पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिपर्णे । द्रुघ॰ भुंइचाँपा॰ भू॰ भा॰॥ भूच म्पा॰ इ॰ भा॰ ॥ अस्यमूलंव्रणपाककारकम् ॥

भूमिछत्रम । न॰ शिलीन्ध्रे ॥

भूमिजः । पुं॰ नरकासुरे । मङ्गारके । कुजे । भौमे ॥ भूमिकादम्बे ॥ मनुष्ये ॥ न॰ गौरसुवर्णे ॥ भूमेर्भूमौवाजातः । जनी॰ । डः ॥

भूमिजगुग्गुलु । स्त्री॰ आशापुरसम्भवे । दैत्यमेदजे । महिषासुरसम्भवे । आशापुरीगुग्गुल॰ इ॰ भा॰ ॥

तिक्तोसौकटुरुष्णश्च कफवातहरस्तथा । उमाप्रियश्चभूतघ्नोमेध्यः सौरभ्यदायकः ॥

भूमिजम्बुः । स्त्री० भूमिजम्बुकायाम् । नादेय्याम् ॥ भूमेर्जम्बुः ॥

भूमिजम्बुका । स्त्री० क्षुद्रजम्बाम् । नादेय्याम् ॥ इस्वत्वात्स्वार्थेकन् ॥ यद्वा भूमिलग्नाजम्बुका । शाकपार्थिवादिः । भूमिलग्नफलत्वात् ॥

भूमिजम्बूः । स्त्री० क्षुद्रजम्बाम् । इक्षुफलायाम् । भ्रमरेष्टायाम् । पिकभक्ष्यायाम् । काकजम्बाम् ॥

भूमिजा । स्त्री० जनकात्मजायाम् । सीतादेव्याम् ॥ भूमेर्जाता । जनी० । डः । टाप् ॥

भूमिजीवी । स्त्री० विशि ॥

भूमिदानम् । न० दानोत्तमे ॥ यथा । एतभि : सन्ततांभूमिंयवगोधूमशालिनीम् । ददातिवेदविदुषेयश्च भूयोभिजायते । भूमिदानात्परं दानं नभूतंनभविष्यतीति ॥

भूमिदेवः । पुं० ब्राह्मणे । भूदेवे ॥ भूमेर्भूमौवादेवः ॥

भूमिपः । पुं० राजनि ॥

भूमिपक्षः । पुं० वाताश्वे ॥

भूमिपिशाचः । पुं० तालवृक्षे ॥

भूमिपिशाची । स्त्री० माधवीलतायाम् ॥

भूमिपुत्रः । पुं० चारे । मङ्गले ॥ भूमेःपुत्रः ॥

भूमिमण्डः । पुं० अष्टपादिकायाम् । मदनमाली० माधवमाली० शृ० गो० दे० आ० ॥

भूमिमण्डपभूषा । स्त्री० माधवीलतायाम् । अतिमुक्ते । पुण्ड्रके ॥

भूमिमान् । त्रि० भूमिविशिष्टे । यवादित्वादृत्वं न ॥

भूमिरथकः । पुं० वाताश्वे ॥

भूमिलाभः । पुं० मृत्यौ । भूमेर्लाभेन । भूमिप्राप्तौ ॥

भूमिलेपनम् । न० गोमये ॥ भूमेर्लेपः । अनेन ॥ भूमेर्लेपे ॥

भूमिवर्द्धनः । पुं० न० शवे ।

भूमिसम्भवा । स्त्री० सीतायाम् ।

भूमिसुतः । पुं० मङ्गलग्रहे । नरकासुरे ॥ भूमेः सुतः ॥

भूमिसुता । स्त्री० जानक्याम् ॥

भूमिस्पृक् । पुं० मानवे । वैश्ये । चौरविशेषे । पङ्गौ । खञ्जे ॥ भूमिं स्पृशति । स्पृशस्पर्शने । स्पृशोऽनुदकेक्विन् ॥

भूमी । स्त्री० भूमौ । क्षितौ ॥ भवति । भू० भुवः किदितिमिः । कृदिकारादक्तिनइतिङीष् ॥

भूमीन्द्रः । पुं० नृपे । राजनि ॥

भूमिरुह् । पुं० वृक्षे ॥ यथा । दीर्घायुतापदविरहितयेखिलायामायासरायामिन्नयपलायनयाकुलस्य

दृष्टि : सरोषाप्रिये । छायावाञ्छा
तमानवोढवनितावाणीवभूमीरुहा
निष्पन्दाः सुचिरादथामिलितयो
र्यूनोर्मिथोदृष्टय : ॥

भूमीसह : । पुं॰ द्रुमान्तरे । हारस्त
ती ॥ भूमीसहस्तुशिशिरोरक्तपित्त
प्रसादन : ॥

भूम्यामलकी । स्त्री॰ क्षुपविशेषे । बहु
पुष्पाम् । जटायाम् । अध्यण्डाया
म् । तामलक्याम् । भूम्यामला
द्यू॰ भा॰ ॥

भूम्यामली । स्त्री॰ तमालाख्याम् । चा
रव्याम् । भूम्यामलक्याम् । मुद्गर्या
मलाद्यू॰गौ॰दे॰भा॰ ॥ चक्रमेली॰
दू॰ भा॰ ॥

भूम्याहुल्यम् । न॰ कुष्ठभेदे । क्षुपे
। मार्कण्डीये । मद्यौषधे । भुजित
खड॰ । द्रू॰ भा॰ ॥

भूय : । अ॰ अधिकारे ॥ पुनरर्थे ॥

भूयान् । त्रि॰ बहुतरे । प्रचुरे ॥ अ-
परिमितमहिमनि ॥ अयमनयोर
तिशयेनबहु : । द्विवचनविभज्योप
पदेतरबीयसुनाविति॰ईयसुन् । ब
होर्लोपोभूचबहो : ॥ स्त्री॰ भूयसी
अतिशयस्याम् । ङीप् ॥

भूयिष्ठ : । त्रि॰ प्रचुरे । बहुतमे ॥ अ
यमेषामतिशयेनबहु : । अतिशायने
तमबिष्ठन् । इष्ठस्ययिट्चेति॰ बहोःपर
स्येष्ठस्य लोप : ॰ यिडागमश्च॰बहो :
स्थाने भूरादेशश्च ॥

भूयुक्ता । स्त्री॰ भूमिखर्जूर्याम् ॥

भूयोभूय : । बारंबारमर्थे ॥ यथा । भू
योभूयोभाविनोभूमिपालान्नत्वान
त्वायाचतेरामचन्द्र : । सामान्योयं
धर्मसेतुर्नृपाणां कालेकालेपालनी
योभवद्भिरिति ॥

भू : । अ॰ रेफान्तमव्ययम् । भूर्लोके ॥

भूरि : । पुं॰ वासुदेवे ॥ हरे ॥ परमे
ष्ठिनि ॥ न॰ सुवर्णे ॥ त्रि॰ प्राज्ये
। प्रचुरे ॥ भवति॰ भूयतेवा । भूस
त्तायाम्॰ प्राप्तौवा । अदिशदिभूशु
भिभ्य : क्रिन् ॥

भूरिगन्धा । स्त्री॰ मुरानामगन्धद्र-
व्ये । गन्धाख्यायाम् ॥

भूरिगम : । पुं॰ खरे । गर्दभे ॥

भूरिदावा । पुं॰ बहुदातरि ॥

भूरिपथ : । पुं॰ उरुपथाढ्ये ॥

भूरिपलितदा । स्त्री॰ पाण्डुरफल्या
म् ॥

भूरिपुष्पा । स्त्री॰ शतपुष्पायाम् ॥

भूरिप्रेमा । पुं॰ चक्रवाके ॥

भूरिफेना । स्त्री॰ सप्तलायाम् । च
र्मकषौषधौ । भूरय : फेनाय
स्या : ॥

भूरिबला । स्त्री॰ अतिबलायाम् ॥
भूरिबलंसामर्थ्यंयस्याम् ॥

भूरिभाग : । त्रि॰ महद्भाग्ये ॥

भूरिमल्ली । स्त्री॰ अम्बष्ठायाम् ॥

लिप्राङ्मुखःकृत्वाप्रतिभिषज्ञे मही
दधेरिति ॥

भूभिलु : । पुं० भूकर्बुदारे ॥

भूषणम् । न० अलङ्कारे । तत्कारणफलंयथा
भूषणंभूषयेदङ्गं यथायोग्यविधान-
तः । शुचिसौभाग्यसन्तोषदायकं
काञ्चनंस्मृतम् ॥ ग्रहदृष्टिहरंपुष्टि-
करंदुःखप्रणाशनम् । पापदौर्भा
ग्यशमनंरत्नाभरणधारणम् ॥ माणि
क्यं तरणेः सुजात्यममलंमुक्ताफलं
शीतगोर्माहेयस्यचविद्रुमोनिगदि-
तः । सौम्यस्यगारुत्मतम् । देवेज्य
स्यचपुष्परागमसुराचार्यस्यवज्रं शने
र्नीलंनिर्मलमन्ययोश्चगदिते गोमेद-
वैदूर्यकं ॥ वास : स्वगग्रत्नानां
धारणं प्रीतिवर्द्धनम् । रक्षोघ्नमर्घ्यं
मोदश्च सौभाग्यकरमुत्तमम् ॥ भू
ष्यते ऽनेन । भूषअलङ्कारे । ल्यु
ट् । भूषयतिवा । कृधमण्डार्थे
भ्यश्च तिभूषेर्युच् ॥ यतीनांभूषणंज्ञा
नंसन्तोषोहिद्विजन्मनाम् । उद्यमः
शत्रुहननंभूषणंभूतिमिच्छतामिति
पारिभाषिकम् ॥

भूषा । स्त्री० अलङ्क्रियायाम् । अलङ्का
रसाध्यशोभायाम् ॥ भूषणम् । गुरो
श्चहलः ॥

भूषित : । त्रि० अलङ्कृते । मण्डिते ॥
भूष्यतेस्म भूष० । क्त : । इट् ।
भूमावुषिते ॥ भुविउषित : स्थितः

भूषिता । स्त्री० अलङ्कारैरलङ्कृतायाम्
। मण्डितायाम् ॥ टाप् ॥

भूष्णु : । त्रि० भविष्णौ । भवनशीलः
। भू० । ग्लाजिस्थश्चग्स्नुः । ० चाद्
भुवः । क्ङितिचेत्यत्रगकारप्रश्लेषा
. द्गुणाभाव : ॥

भूसुत : । पुं० भौमे । मङ्गलग्रहे ॥ न
रकासुरे ॥

भूसुता । स्त्री० सीतायाम् । जानक्या
म् ॥

भूसुर : । पुं० ब्राह्मणे ॥

भूस्तृणम् । न० भूतृणे । चक्रपर्या
यात्रायाययथा । गुह्यबीजञ्चभूती
कंसुगन्धंगोमयप्रियम् । भूस्तृणन्तु
भवेच्छत्रामालातृणकमित्यपि । भू
स्तृणंकटुकंतिक्तं तीक्ष्णोष्णं रोचनं
लघु । विदाहिदीपनंरुच्यमनिल्यं सु
खशोधनम् । चक्षुष्यं बहुपित्तकृद्
पित्तरक्तप्रदूषणम् ॥ इति ॥ भुवः
तृणम् । पारस्करादित्वात्सुट् ॥
मालवदेशप्रसिद्धे शाकविशेषे ॥

भूस्पृक् । पुं० मर्त्ये । मनुजे । मनु
ष्ये ॥ भुवंस्पृशति । स्पृश० । क्विन् ॥

भूस्वर्ग : । पुं० सुरपर्वते । सुमेरौ ॥

भूस्वामी । पुं० भूपतौ ॥ भुवः स्वा-
मी ॥

भ्रूकुंस : । पुं० स्त्रीवेशधरनर्त्तके ।
भ्रूकुंसे ॥ पटपुटे सिद्धस्योर्ण्णभा .
पणार्थकुंसिधातोर्भ्रूकुटिग्रहणात्०

परच् । भृगवाकुंसोभाषणमस्य । पृषोदरादिः ॥

भ्रुकुटिः । स्त्री० भ्रुकुट्याम् । क्रोधादिनाभ्रुवः कौटिल्ये ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवोः कुटिः । पृषोदरादित्वात्ऋकारः ॥

भृकुटी । स्त्री० भ्रुकौटिल्ये । क्रोधादिनाललाटसङ्कोचने ॥ कुट० । इगुपधादिति० इन् । कृदिकारादितिङीष् । पृषोदरादित्वाद् ऋकारः ॥

भृगुः । पुं० ब्रह्मणस्त्वचोजाते महर्षिविशेषे । महर्षीणांभृगुरहमिति भगवद्वचनाद् भगवद्विभूतौ । मनुपुत्रे ॥ वह्निसमये । यागे भ्रंष्टाद्ग्नितसमुत्पन्नत्वात्भृगुः ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतप्रस्थे । यस्मात् पतने ऽवलम्बनक्रियाविशेषोनास्ति । तत्पर्यायौ । प्रपातः । अतटः । इति ॥ भृज्यति० तपसा० भृज्यते वा । भ्रस्ज पाके । ग्रहिज्यादिभिस्सर्वांसम्प्रसारणसलोपश्चेति० भ्रस्जेः कुप्रत्ययः० सम्प्रसारणं भ्रस्जेः सलोपश्च । न्यङ्क्वादित्वात्कुत्वम् ।

भृगुकच्छः । पुं० शकुकारवानर्लोन्नमस्थानपत्तनविशेषे ॥

भृगुतुङ्गम् । न० तीर्थविशेषे ॥

भृगुपतिः । पुं० परशुरामे ॥

भृगुप्रस्रवणः । पुं० हिमवतः पादे ॥

भृगुभवा । स्त्री० भार्गव्याम् ॥

भृगुषट्कः । पुं० योगविशेषे ॥ लग्नात् षष्ठोभवे षष्ठोभृगुषट्क इतीरितः ।

भृगुसुतः । पुं० शुक्राचार्ये ॥

भृगूणांपतिः । पुं० परशुरामे ॥

भृङ्गः । पुं० भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा० इ० गौ० दे० भा० भृङ्गवत्कृष्णवर्णत्वात्० भृङ्गः ॥ षिङ्गे ॥ न० गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्तिः । डुभृञ्० । भृञः किन्नुट्चेति० गन् ॥

भृङ्गकः । पुं० राजवासनपक्षिणि ॥

भृङ्गजम् । न० अगुरुणि ॥

भृङ्गजा । स्त्री० भार्ग्याम् ॥

भृङ्गपर्णिका । स्त्री० सूक्ष्मैलायाम् ॥

भृङ्गप्रिया । स्त्री० वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणांप्रियेव ॥

भृङ्गमूलिका । स्त्री० भ्रमरच्छल्याम् लतायाम् ॥

भृङ्गरजः । पुं० भृङ्गराजे ॥ भृङ्गरूप

रजोऽस्य ॥

भृङ्गरजाः । पुं॰ भृङ्गराजे । भृङ्ग इवरजोऽस्य ॥

भृङ्गराज : । पुं॰ मार्कवे । कुन्तल वर्द्धने । केशरञ्जने । भंगरा॰ इ॰ भा॰ ॥ भृङ्गराज : कटुस्तिक्तो रूक्षोष्णः कफवातनुत् । केश्यस् त्वच्य : कृमिश्वासकासशोथामपा ण्डुनुत् ॥ दन्त्योरसायनोबल्य: कुष्ठनेत्रशिरोर्त्तिजित् ॥ अस्यप क्षिविशेषे ॥ भ्रमरे ॥ यन्त्रविशेषे ॥ भृङ्गइवराजते । राजृदीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न॰ भैषज्यर त्नावल्युक्ते चूर्णविशेषे ॥ यथा । श्लक्ष्णीकृतंभृङ्गराजस्यचूर्णंति लार्द्धकंचामलकार्द्धकंच । सशर्करं भक्षयतांगुडेर्वानतस्यरोगोनजरा नमृत्यु : ॥ अस्य : पञ्चेन्द्रियनरस्य तेमत्तमातङ्गगामीमृगेन्द्रवाग्मी श्रवणरविशोदूरशब्दानुसारी । नी रुग्भवत्यौभवशिपलितीनीलजीमूत केशोजीर्णादन्ता : पुनरपिनवा:घो रगौराभवन्तीति ॥

भृङ्गरिट : । पुं॰ }<br>भृङ्गरिटि : । पुं॰ } शिवद्वारपाले ॥<br>भृङ्गरीट : पुं॰ }

भृङ्गरोल: । पुं॰ कीटान्तरे । वियष्ट कायाम् । बरोले । दृष्पट्पदे । भीमरुल् इ॰गौ॰भा॰ ॥



भृङ्गवल्लभ : । पुं॰ भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री॰ भूमिजम्ब्वाम् ॥

भृङ्गसोदर : । पुं॰ केशराजे । नाग मारे ॥

भृङ्गानन्दा । स्त्री॰ यूथिकायाम् ॥

भृङ्गाभीष्ट : । पुं॰ आम्रवृक्षे । रसा- ले ॥ न॰आम्रमुकुलफलयो : ॥

भृङ्गार : । पुं॰ कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराजे । मार्कवे॥ बिभर्त्तिजलम् । डु भृ- ञ्॰ । भृङ्गारभृङ्गाराविति सा धु: ॥ न॰लवङ्गे ॥ काञ्चने ॥

भृङ्गारि : । स्त्री॰ केविकापुष्पे ॥

भृङ्गारिका । स्त्री॰ झिल्लिकायाम् ॥

भृङ्गारी । स्त्री॰ झिल्लिकायाम् । झीं गुरइतिख्याते कीटे । भृशम्भृणा् पमारासि । रात्रौ । मूलविभुजा दित्वात्क : । गौरादि : । यद्वा । बिभर्त्ति । डु भृञ्॰ । भृङ्गारभृ- ङ्गाराविति॰भृञश्चारन्॰मुम्॰गुण॰- इत्वश्च ॥ यद्वा । कर्मणिभृङ्गस्यपृ- रि । ऋगतौ । कर्मण्यण् ॥

भृङ्गाह्व : । पुं॰ जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री॰ भ्रमरच्छल्ल्याम् ॥

भृङ्गि : । पुं॰ भृङ्गिणि । शिवद्वा: स्थे॥

भृङ्गिणी । स्त्री॰ वटीवृक्षे ॥

भृङ्गी । पुं॰ शिवद्वारपालविशेषे । ध स्त्रियियरे । नाडीदेहे ॥ वटद्रौ ॥

भृङ्गी । स्त्री० अतिविषायाम् ॥ गौरादित्वान् ङीष् ॥

भृङ्गीफल : । पुं० आम्रातकवृक्षे ॥

भृङ्गीश : । पुं० महादेवे । शिवे ॥

भृङ्गेरिटिः । पुं० भृङ्गरीटे । भृङ्गिरिटि ॥

भृङ्गेष्टा । स्त्री० काकजम्ब्वाम् । घृतकुमार्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन : । पुं० न० अम्बरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भ्रस्जपाके । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

भृत : । त्रि० भरिते । धारिते ॥ वेतनेनक्रीते ॥ भृञ् ० । क्त : ॥ भरणीये । पुष्टे ॥

भृतक : । पुं० वेतनग्राहिकर्मकारि । भृतिभुजि । कर्मकरे । वैतनिके ॥ सचत्रिविध : । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल : । अधमोभारवाहीस्यादित्येवं त्रिविधो भृत : ॥ इति । भ्रियतेस्म । भृञ् भरणे । क्त । स्वार्थे क : ॥ यद्वा । भृतिं करोति । तत्करोतीतिणिजन्तात्न् ॥

भृतकाध्यापक : । पुं० अपाङ्क्तेयेद्विजाधमे ॥ भृतक : सन् योऽध्यापक : ॥ अयञ्चसर्वानर्थहानुत्वात् ॥

भृतकाध्यापित : । पुं० वेतनं दत्त्वाध्यापिते । अपाङ्क्तेयेद्विजाधमे ॥ भृतिर्वेतनम् । तद्दत्त्वाधीभृतक : । भृतक : सन् योऽध्यापित : सतथा ॥

भृति : । स्त्री० भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्ते कर्म कारायनया । भृञ् भरणे । कर्म णि क्तिन्निति निर्देशात्क्तिन् ॥

भृतिभुक् । त्रि० भृतके । वैतनिके ॥ भृतिं वेतनं भुङ्क्ते । भुज० । क्विप् ॥

भृत्य : । पुं० किङ्करे । दासे । भृत्यास्त्रिविधाज्ञेयाउत्तमाधममध्यमा: । नियोक्तव्यायथार्हेषु त्रिविधेष्वेवकर्मसु । भ्रियते । भृञ् ० । भृञोऽसंज्ञायामितिक्यप् ॥ त्रि० पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री० भृतौ । वेतने ॥ भ्रियन्ते कर्मकरा अनया० भरणंवा । भृञ्० । संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरिति रघु : ॥

भृमि : । पुं० वायुविशेषे । घुरन्धा यु० इ० भाषा । जलादिभ्रमणे ॥ भ्रमति० भ्राम्यतिवा । भ्रमुचलने । भ्रमुचलनेवा । भ्रमे : सम्प्रसारणञ्चेति० क्रन्० कित् । भृमिभ्रमणशीलदरिद्रं जनमितिवेदभाष्यम् ॥

भृशम् । न० अतिशये ॥ त्रि० अतिशयान्विते ॥ भृशते । भृशमंशाधः पतने । अन्तर्भावितण्यर्थाद्दिगुपधेतिकः ॥

भृशम् । अ० प्रकर्षार्थे ॥ शोभने ॥

भृषद्-द् । पुं० पाषाणे ॥

भृष्ट : । त्रि० जलोपसेकेनविनापक्वे ॥ भुना० भुजेना० इ० भा० ॥

भृष्टतण्डुल : । पुं० भर्जनविशिष्टधान्यनिकरे । भुनाचावल० इ० भा० सुगन्धिः कफहाऽरुच्यः पित्तलोभृष्टतण्डुलः ॥

भृष्टमांसम् । न० शूल्ये ॥ भृष्टंचतन्मांसंच ॥

भृष्टयव : । पुं० धानासु । बहुरी० इ० भा० ॥ भृष्टश्चासौयवश्च ॥

भृष्टान्नम् । न० भृष्टतण्डुले ॥

भृष्टि : । स्त्री० भर्जने ॥ शून्यवाटिकायाम् ॥

भेक : । पुं० मण्डूके । वर्षाभ्वि ॥ मेघे ॥ त्रि० भीरौ ॥ बिभेति । ञिभी भये । दृणभीकेतिकन् ॥

भेकट : । पुं० मत्स्यवि० ॥

भेकभुक् । पुं० कुम्भीनसे । सर्पे ॥ भेकानभुङ्क्ते । भुज० । क्विप् ॥

भेकरावण : । पुं० मेघे ॥ भेकान्रावयति । रुशब्दे । नन्द्यादित्वाल्ल्युः ॥

भेकल : । पुं० वनस्पतिविशेषे ॥

भेकलि : । पुं० मत्स्यविशेषे । भाङ्गन इ० गौ० दे० भा० प्रसिद्धे ॥ भेकलिर्मधुरः शीतोलघुः श्लेष्मकरोगुरुः ॥

भेकी । स्त्री० भेकस्त्रियाम् । शिल्व्याम् । मण्डूकपर्ण्याम् । वर्षाभ्व्याम् ॥ क्षुद्रमण्डूके ॥ जातेरस्त्रीतिङीष् ॥ मण्डूकपर्ण्याम् ॥

भेड : । पुं० मेषे । भेडा० इ० भा० ॥ वृत्तिद्वि० ॥

भेडी । स्त्री० भेडस्त्रियाम् ॥

भेत्तुग्धम् । न० चर्विषे ॥

भेत्ता । त्रि० भेदकर्त्तरि ॥ भिनत्ति । भिदिर्० । तृच् ॥

भेद : । पुं० उपजापे । शत्रोरमात्यादीनामुपायेन० परतोविश्लिष्यात्मसात्करणे । ऐकमत्यं गमित्वतामात्यामात्यादीनांभयजननादिनापृथक्करणे ॥ तद्विशेषोयथा । मत्स्यपुराणे । परस्परन्तुयेदुष्टाःक्रुद्धाभीतावमानिताः । तेषांभेदंप्रयुञ्जीतभेदसाध्याहितेमताः ॥ येतुयेनैवदोषेणपरस्मादपिशङ्किताः । तेतुतद्दोषपातेनभेदनीयाभृशंततः ॥ आत्मीयंदर्शयेदाशांपरस्माद्दर्शयेद्भयम् । एवंहिदर्शयेद्भिन्नं यथावद्वशमानयेत् ॥ संहताहिविनाभेदंशक्रेणापिसुदुःसहाः । भेदमेवप्रशंसन्तितस्मान्नयविशारदाः ॥ स्वमुखेनाश्रयेद्भेदंभेदंपर

सुखेनच । परीत्त्यसाधुमन्यन्ते भेदं परंसुखाच्छृतम् ॥ भेदा : स्वकार्य सुसिद्धग्रहणलैर्यैर्भिमेदिता :।भेदिता स्ते विनिर्दिष्टाने वराजार्थ वादिभिः ॥ यन्त : कोपोवह्निः कोपोयवस्का सामयौचिताम् । यन्त : कोपोम ह्रांसवनासका : पृथिवीचिताम् ॥ सामन्तकोपोवायुस्तकोपः प्रोक्तो समीप्सिभि : । सचिवीयुवराजाभ्यां तथासेनापतिर्द्दिज : । अमात्याम त्रिणयै वराजपुत्रायार्थ वच । यन्त: कोपोविनिर्दिष्टोद्दाकव : पृथिवी चिताम् ॥ वाद्याकोपे समुत्पन्ने सुम हत्यपियार्थिव : । शुद्धान्तस्तुमहा भागयोग्मनेदयौभयेत् ॥ चनिम्न त्रसमीरराजावन्त : कोपे ननश्वति । यन्त : कोपे समुत्पन्ने तस्माद्रक्ष न्मद्दीचिताम् ॥ परत : कोपमुत्पा द्यार्भे देनविजिगीषुणा । ज्ञातीनां भेदन कार्य परेषांविजिगीषुणा ॥ रक्ष्यश्चै वप्रयत्ने नज्ञातिभिर्दसाधा त्मन : । ज्ञातय : परितप्यन्ति सत तं परितप्ययम् ॥ तथापित याकार्य व्यं सुगंभीरेणचेतसा । ग्रहणंदान मानाभ्यांभेदस्त्वेभयंकर : ॥ नज्ञातिरनुग्रह्णातिनज्ञातिर्दंध मिच्छति । ज्ञातिभिर्भेदनीयास्तु रिपवस्तेनपार्थिव : ॥ भिन्नाहि शक्यारिपव : प्रभूता : स्वल्पेन सैन्येनविहन्तुमाजौ । सुसंहता नाहिततस्तुभेदं कार्यं रिपूणांनय शास्त्रविद्भिः ॥ इतिमात्स्ये राज धर्मे १८७ अध्याय : ॥ द्वैधे ॥ आपद्यात्मीयानात्मीययोर्भेद : ॥ विशेषे ॥ विदारणे ॥ मन्त्रभेदे कार्यहानिरितिविदांमतम् ॥ वे षे ॥ भिदामावभावे। भेदनम् । भिदिर् ० चञ् ॥ विदके ॥

भेदकम् । न० व्यावर्त्तके । विशेष णे ॥ त्रि० नाशके । विदारणे ॥ विरेचकौषधादौ ॥ पृथक्कारके । यथा । भेदयति० अन्यपदार्थ पृथक्करोतीतिभेदकम् । नाम। शिव : गौणे यथार्थ : ॥ अपिच। भेदभेदकयो : श्लिष्टसंबन्धोऽन्यो न्यमिष्यते । विशरयग्निसम्बन्ध : षष्ठ्युत्पत्तिस्तुभेदकादितिभर्तृह- रि: ॥

भेददर्शी । त्रि० अपराधिनि ॥ यथा । यदस्तितत्रज्ञानातियन्नेशा स्तितदीश्वरे । एवंसमपराधोऽस्य विद्यतेभेददर्शिन : ॥ किश्चाय स्तत्प्रयोरवियात्वविभ्रान्त्यवक्ता त्० सुषुप्तिसमाध्योर्भ्रान्त्यभावे ऽ नुपलभ्यात्मिथ्यात्त्वं भेदस्यसिद्धमि त्यनुभवात्समेदर्शिनोमिथ्याशङ्कि तत्वात्तापराधत्वमितिनिश्चय : ॥

भेदनम् । न० विदारणे ॥ भिदेल्युं

टः ॥ हिङ्गुनि ॥ पुं० अम्लवेतसे ॥ शूकरे ॥

भेदनिम्नः । त्रि० संसारानुगे ॥

भेदितः । त्रि० दारिते । भिन्ने ॥ भेदितं अस्य । भिदिर्० । चुरादि णिजन्तः । क्तः ॥

भेदी । पुं० अम्लवेतसे ॥ त्रि० भेदकर्त्तरि । सहिशिष्टे च ॥

भेदुरम् । न० भिदुरे । कुलिशे ॥

भेद्यः । त्रि० व्यावर्त्त्ये । विशेष्ये ॥ अमामितजने ॥ भेत्तुं शक्ये । विघट्टनीये । वाच्ये ॥

भेरः । पुं० पटहे । बिभेत्यस्मात् । ञिभीभये । स्फायितञ्चीत्यादिना रन् ॥ भेरीम् ॥ दुन्दुभौ

भेरिः । पुं० वाद्यप्रभेदे । करणाल- ० इ० भा० ॥ बिभेत्यस्मात् रवात् । ञिभी० । वङ्क्र्यादयश्चेति० क्रिन् । बाहुलकात् गुणः ॥

भेरी । स्त्री० इहड्ढकायाम् । आनके ॥ वाद्यविशेषे । करणाख्यति- ख्याते ॥ कृदिकारादिति पक्षे ङीष् ॥ बिभेतेः स्फायितञ्चीत्यादिना रन् ॥ गौरादित्वान्ङीष्० इतितुरासामसः ॥ वितस्तित्रयदीर्घा ताम्रनिर्मिता चर्मणा नद्धा चतुर्विंशत्यङ्गुलवदना या भेरीति कथ्यते ॥ अन्तस्त्वीकाढका भेरीतिख्याती ॥

भेरुण्डः । पुं स्त्री ॥ त्रि० भयानके

भेरुण्डा । स्त्री० देवतान्तरे । यक्षिणी विशेषे ॥

भेलः । पुं० प्लवे । डोंगा० इ० भा० । जलतरणसाधने । मुनिविशेषे ॥ त्रि० भीरौ । अज्ञे । बुद्धिविवर्जिते । मूर्खे ॥ बिभेत्यस्मात् । ञिभी । स्फायितञ्चीत्यादिना रन् । निपातनाल्लत्वम् । चंचति ॥

भेलकः । पुं० न० उडुपे । प्लवे । स्वल्पे जलतरणसाधने ॥ स्वार्थे कः ॥

भेषजम् । न० औषधे । जायौ ॥ भेषं जयति । भेषृ भये । घञन्तः । अच् भेषं रोगं जयति । जि० । अन्येभ्योपीति डः ॥ भेषं जायति वा । जैक्षये । आतोनुपेति कः ॥ भिषज इदम् । तस्येदमित्यण् । अनन्तावसथेतिह भेषजादिति निर्देशाद्द्वित्वमित्यन्ये ॥ संसाररोगस्य साक्षात्कारे च भेषजवत् भेषजं निवर्त्तकं ब्रह्माभिज्ञातस्थानेम् ॥

भेषजाङ्गम् । न० अनुपाने ॥

भैक्षम् । न० भिक्षानिकुरम्बे ॥ भिक्षाणां समूहः । भिक्षादिभ्योऽण् ॥ ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् । सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥ सर्वं वापि चरेद्ग्रामं पूर्वोक्तानामसम्भवे । अन्यत्वमव महाभागशास्त्रे छिन्त्यं विनिश्चयः ॥ भैक्षे अहरहिर्निरूपवासेसमाम्नाता ।

भैक्षचर्य्या । स्त्री॰ भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री॰ भिक्षयाजीवनोपाये ॥ पैशुन्ये ॥ इतित्रिकाण्डशेषः ॥

भैक्षभुक् । त्रि॰ भैक्षाशिनि ॥ भैक्षंभुनक्ति । भुज॰ । कर्त्तरिक्विप् ॥

भैक्षाणः । पुं॰ परिव्राजि । प्राणसन्धारणार्थंयथाशास्त्रंमाधूकरादिभिक्षांकुर्वाणे ॥

भैक्षुकम् । न॰ भिक्षुकवृन्दे ॥ भिक्षूणांसमूहः । खण्डिकादित्वादञ् ॥

भैमी । स्त्री॰ दमयन्त्याम् ॥ भीमतिथौ । माघशुक्लैकादश्याम् ॥ भीमोत्तापसिकाप्रभेदे ॥ यथा । श्रेष्ठंगोधूमचूर्णंप्रचुरघृतयुतंतनासिक्तेरीसा- शंद्राक्षाखर्ज्जूरशुण्ठीत्वचमरिचयु- तंशर्करापूर्णगर्भम् । पक्वंताम्रेक- टाहेकठिनघटलेपावकेमन्ददीप्तौ धन्यैर्भक्तकालेसुजनपरिवृतैर्भुज्यतेलापनश्रीः । भीमस्येयम् । अण् । ङीप् ॥

भैरवः । पुं॰ शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्य्यन्तइतिप्रसिद्धं ॥ भैरवासंभैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि॰ भयानके । भीषणे ॥ भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री॰ देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरवरागपत्न्याम् ॥

भैषजम् । न॰ भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् । न॰ औषधे ॥ भेषजमेव । अनन्तावसथेतिहभेषजाञ्ञ्यः ।

भो । अ॰ सम्बोधने ॥

भोक्तव्यः । त्रि॰ भोजनीये ॥ भोज्ये । यथा॰ । यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनम् ॥

भोक्ता । पुं॰ पत्यौ ॥ शरीरेन्द्रियमनोभिःसंयुक्तआत्मनि॰संसारिणि । अवस्थात्रयविशिष्टजीवे ॥ भोक्तात्मामनस्तर्त्तिसाङ्ख्याः ॥ सुखादिभोगकर्त्ता॰ यथा । कल्पान्तदेवीभोक्ताचपात्माभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र॰ वै॰ पु॰ प्रज्ञानरेग्नौ ॥ सर्व्वेषांयज्ञानांतपसाञ्चकर्मणांयदेवतारूपेणभोगकर्त्तरि ॥ आनन्दमये ॥ युक्तः सुखदुःखमोहात्मकान्प्रत्ययान्स्वरूपचेतन्येनप्रकाशयतीतिनिर्विकारएवोपलब्धरि । त्रि॰ पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतभेदेयदत्तादौ ॥ तस्य प्रकारोयथा । स्नातःशुद्धीसमुद्दृस्त्रदरगुरुक्षधासास्तकालधौतचरणः सहपुत्रमित्रैः । स्वच्छोप्रसन्नहृदयोरसपाकवेत्ताभोक्ताविशेषसरलंहिमच्छायमेघैः । मृदुलक्षणयेच्छ मेधारुत्र

स्थावगुरुशिष्ठते । आसनेप्राङ्मुखो-भोक्तोपविशेद्वाप्युदङ्मुखः ॥ भुङ्क्ते । भुज० । टच् ॥

भोग : । पुं० सुखे ॥ क्षुद्रसुखलवानुभवे ॥ सुखसाधनविषये० पञ्चग्राहिरण्यादौ ॥ मद्धानुष्ठाश्ववतामननुतिष्ठतामलसानांभोगप्राप्तिर्लोकिद्दृष्टेतिपूज्यपादाः ॥ सुखादिग्रहणे ॥ सुखदुःखानुभवे ॥ धने ॥ अहेः शरीरे ॥ अहेरितिप्रयोगबाहुल्याभिप्रायम्० भोगशब्दस्यशक्तिस्तुशरीरमात्रे० इत्याकरः ॥ अहेः फणायाम् ॥ पालने । अभ्यवहारे योषिदादिभृतौ । वेश्यादिवेतने ॥ आदिना हस्त्यश्वादिकर्मकराणांभृतौभाडा०-इ०भा० ॥ विषये । राज्ये ॥ भोजनम्० भुज्यतेवा। भुजपालनाभ्यवहारयोः । भुजोकौटिल्येवा । भावेकर्मणिवाघञ् ॥ योगिनोजीवनवृत्तौभिक्षाव्यापारे० वर्णाश्रमोचितव्यापारेच ॥ यथा । चित्तस्यभोगैर्हीभागौशास्त्रे वैकंप्रपूरयेत् । गुरुशुश्रूषयाभागमव्युत्पन्नस्यसक्रमः ॥ किञ्चिद्व्युत्पत्तियुक्तस्य भागंभोगेनपूरयेत् । गुरुशुश्रूषयाभागौभागंशास्त्रार्थचिन्तया ॥ व्युत्पत्तिमनुयाततस्यपूरयेच्चेतसोन्वहम् । द्वौभागौशास्त्रवैराग्यैर्द्वौध्यानगुरुपूजयोरितिवशिष्ठः ॥ भूम्यादीनांभोगो यथा । त्रिपुरुषभोगमाहव्यासः । प्रपितामहेनयद्भुक्तं तत्पुत्रेणविनाद्दतम् । तौविनायस्यपित्राचतस्यभोगस्त्रिपौरुषः ॥ पितापितामहोयस्यजीवेच्चप्रपितामहः । त्रयाणांजीवतांभोगोविज्ञेयस्त्वेकपूरुषः ॥ नारदः । तथारूढविवादस्यप्रेतस्य व्यवहारिणः । पुत्रेणसोऽर्थः संशोध्योनतंभोगोनिवर्त्तयेत् ॥ विभवभेदे ॥ य० । कर्त्ताचदेहीभोक्ताचकर्त्ताभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम् । न० वासगृहे ॥

भोगदेह । पुं० स्वर्गनरकादिभोगार्थे सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डीकरणेनरः संवत्सरात्परम् । प्रेतदेहंपरित्यज्यभोगदेहंप्रपद्यते० इति ॥

भोगपाल : । पुं० अश्वरक्षके ॥ त्रि० भोगरक्षके ।

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि : । स्त्री० सुखस्थाने ॥ भारतवर्षातिरिक्तवर्षे ॥ यथा । सन्तापिभारतंश्रेष्ठंजम्बुद्वीपेमहामुने । यतोहिकर्मभूरेषाततोन्याभोगभूमयः ॥

भोगवान् । पुं० अहौ । सर्पे ॥ भोगोस्त्यस्य । मतुप् । नाट्ये । त्रि० भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगंगायाम् ॥ ङीप् ॥ वासुकितीर्थे ॥

भोगसद्म । न॰ वासगृहे । भोगायसद्म ॥

भोगार्हम् । न॰ धने ॥ भोगायअर्हम् ।

भोगार्ह्यम् । न॰ धान्ये ॥

भोगावली । स्त्री॰ नागपुर्याम् ।. वन्दिमागधस्तुतौ । वन्दिपाठे ॥

भोगावास : । पु॰ वासगृहे ॥ भोगस्यावास : ॥

भोगिक : । पु॰ भोगपालौ । अश्वरक्षके ॥

भोगिकान्त : । पुं॰ कम्पवत्क्षयि । वायौ ॥

भोगी । पुं॰ जिह्मगे । भुजङ्गे । सर्पे ॥ भोग : फणोवक्रगतिर्वाऽस्यास्ति । अतइनिठनाविति इनि : ॥ ग्रामपाले । ग्रामण्याम् । ग्रामाधिपतौ ॥ नृपे । राज्ञि ॥ नापिते ॥ वैयावृत्तिकरे ॥ त्रि॰सर्वे भोगोपकरणे रूपेते ।

भोगिनी । स्त्री॰ महिषीभिन्नायान्यराजयोषिति ॥ अतिशयितोभोगोस्यया : । इन्नन्तान्नान्तलक्षणोङीप् ॥

भोगिवल्लभम् । न॰ चन्दने ॥

भोगीन्द्र : । पुं॰ )

भोगीश : । पुं॰ ) अनन्ते । नागराजे । शेषे ॥ वासुकौ ॥ भोगिनाम् ॰इन्द्र : ॰ ईशोवा ॥

भोग्यम् । न॰ धने ॥ धान्ये ॥ फले ॥ आधिविशेषे । फलभोग्ये ॥ त्रि॰भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्ह : । भुजेर्ण्यत् ॥

भोग्या । स्त्री॰ वेश्यायाम् ॥ भोक्तुमर्हायाम् ॥ टाप् ॥

भोज : । पुं॰ यादवे ॥ दूरेऽभवम्भोजनत्वमगच्छतद्वृतिमाघ : ॥ देशविशेषे ॥ धारानगरीपतौ॰कलिप्रसिद्धेन्नृपविशेषे ॥ देशविशेषे । भोजकटे ॥

भोजकट : । पुं॰ रुक्मिनिर्मितपुरे रुक्मिभोजकटंनामपुरंकृत्वाऽवसत्तदेतिवि॰पु॰ ॥ देशविशेषे ॥

भोजकटीय : । त्रि॰ भोजकटदेशोद्भवे ॥ छश्चाच्छ : ॥

भोजनम् । न॰ आहारे । निघसे । जेमने । जीवन॰इ॰भा॰ ॥ बहूनां पङ्क्त्यावशने ॥ भुज्यते । भुज॰ । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ पथ्यभोजनगुणविधानादियथा । भोजनाग्रेसदापथ्यंजिह्वाकण्ठविशोधनम् । अग्निसन्दीपनंहृद्यंलवणार्द्रकभक्षणम् ॥ आयुष्यंतेगुडे रोगोसच्युतौ नोविदाहिपु । आरोग्यंकटुतिक्तेपुपलंमांसेपयसुच ॥ अन्नाद्दृष्टगुणंपिष्टंपिष्टादष्टगु

गं पयः । पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ॥ घृतादष्टगुणं तैलं मर्द्दनान्न च भक्षणात् । आहारः प्रीणनः सद्योबलकृद्देहधारकः । फलमादौ हि चाश्नीयाद्भोजनस्य नरोत्तमः । विना मोचाफलं तद्वद्वर्ज्जनीया च कर्कटी ॥ मृणालं बिसशालूककन्देक्षुप्रभृतीन्यपि । पूर्व्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन ॥ याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् । याममध्ये रसोत्पत्तिर्युग्मेऽतीते बलक्षयः ॥ आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ कुक्षेरन्नभागौ द्वावेकं पानेन पूरयेत् । वायोः सञ्चारणार्थं च चतुर्थमवशेषयेत् ॥ दत्ते चावगतं चान्नं शौचेनावहरेज्जलैः । कुर्य्याददिग्धं त त्विमुखस्यानिष्टगन्धताम् ॥ भुक्त्वापायितलं घृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ भुक्त्वाचम्य करं वामं दत्त्वा कुक्षौ ततः पठेत् । भुक्तं मयेन्द्रहस्तेन वैश्वानरमुखेन च ॥ गरुडस्य च कण्ठेन समुद्रस्य च वह्निना । वातापिर्भक्षितो येन पीतो येन महोदधिः ॥ यन्मया खादितं पीतं तदगस्त्यो जरिष्यति । पठित्वैतत्सुखासीनः शतं तिष्ठेदनाकुलः । भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् । एवं ह्यधोगतं चान्नं सुखं तिष्ठति जीर्य्यति ॥ भुक्त्वा संविशतस्तुन्दं बलमुत्तानशायिनः । आयुर्वामकसुप्तस्य मृत्युर्धावति धावतः ॥ अपि च । ततो भोजनवेलायां कुर्य्यान्मङ्गलदर्शनम् । तत्प्रदक्षिणं नित्यमायुर्द्धर्मविवर्द्धनम् । लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥ पादुकारोहणं कुर्य्यात्पूर्व्वं भोजनतः परम् । पादरोगहरं वृष्यं चक्षुष्यं चायुषे हितम् ॥ अश्नीयात्तन्मना भूत्वा पूर्व्वन्तु मधुरं रसम् । मध्ये लवणाम्लौ पश्चात्कटुतिक्तकषायकान् ॥ विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् ॥ एवं भुक्त्वा समाचामेत्तृणग्रहणपूर्व्वकम् । भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥ दन्तलग्नमनिर्हार्य्यं लेपं मन्ये तदन्तवत् । न तत्र बहुशः कुर्य्याद्यत्नं निर्हरणं प्रति विस्तरस्त्वनाग्न ॥ अस्नाताशी मलं भुङ्क्ते ह्यजपी पूयशोणितम् । अहुत्वा तु कृमिं भुङ्क्ते अदत्त्वा विड्विभोजनम् ॥ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । इन्द्रियप्रीतिजननं

द्यापाकविवर्ज्जयेदितिनाशाद्धि : ॥ वालंसुवासिनीवृद्धगर्भिण्यातुरकन्यका : । सम्भोज्यातिथिभृत्यांश्चदम्पत्यो : शेषभोजनम् इतियाज्ञवल्क्य : ॥ नभोजनार्थेस्वे विप्र : कुलगोत्रे निवेदयेत् भोजनार्थंहितेशंसन्वान्ताशीत्युच्यतेबुधैरितिमनुः॥

भोजनमाधम् । पुं॰ आहारभाजने ॥ हैमंदीयकरंपात्रं चचुष्यं राजतंशुचि । कांस्यं बुद्धिप्रदंरम्यं पालाशंकचियाक्षम् ॥

भोजपति : । पुं॰ कंसासुरे ॥ भोजानांक्षत्रियविशेषाणांपति : ॥

भोजपुरम् । न॰ स्वनामप्रसिद्धे देशवि॰ ॥

भोजयिता । त्रि॰भोजनकारयितरि ॥ भोगप्रयोजके । पुं॰ ईश्वरे ॥

भोजविद्या । स्त्री॰ ऐन्द्रजालिकविद्यायाम् ॥

भोजाधिप : । पुं॰ कंसासुरे ॥ भोजानामधिप : ॥

भोज्यम् । न॰ भोजनीयद्रव्ये । यत्कठिनं जिह्वयाविलोड्यनिगीर्य्यते स भोज्यम् । दन्नादिस्तस्मिन् । पायसादौ । विषयमात्रे । भुज्यते । भुज॰ । ण्यत् । चोर्त्तत् । भोज्यं भक्ष्ये इतिनिपातनात् कुत्वाभावोनिपातनात् ॥ आहारादधिकं भोज्यं ब्रह्माण्डविभवेपिन ॥ अभ्युदयार्थं ब्राह्मणभोजने । स्वाराज्यसाम्राज्यवोर्भोगभाक्त्वे ॥ सोने ॥

भोज्यवित् । पुं॰ सूपकारे ॥ सूपकारोहिभोज्यंपक्वत्वेनजानाति ॥

भोज्यसम्भवः । पुं॰ शरीरस्थरसधातौ ॥

भोज्या । स्त्री॰ भोजस्यराज्ञोगोत्रापत्ये स्त्रियां ॥ क्रौड्यादिभ्यश्च त्यष्भोजक्षत्रिये॰ इत्युक्तेः ष्यङादेश : । ष्यङश्चाप् ॥

भोट : । पुं॰ भोटाङ्गे । भोटान्ते ॥

भोटाङ्ग : । पुं॰ स्वनामप्रसिद्धे देशविशे॰ । भोटान्॰ इ॰ भा॰ प्र॰॥

भोटान्त : । पुं॰ देशविशेषे ॥ यथा । काश्मीरन्तुसमारभ्यकामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशिमानसेशासदक्षिणे ॥

भोभो । अ॰ सम्बोधने ॥

भोलि: । पुं॰ क्रमेलके । उष्ट्रे ॥

भो : । अ॰ सम्बोधने । विषादे ॥ प्रश्ने ॥ भाति । भा॰ । बाहुलकात् डोस् ॥

भौत : । पुं॰ देवले॰ भूतयज्ञे । न॰ भूतसङ्घे । भूतानांसमूह : । भिक्षादित्वात् । त्रि॰ भूतसम्बन्धिनि ॥

भौतिक : । पुं॰ स्वामौ ॥ शिवे ॥ सर्गविशेषे । यथा । अष्टविकल्पोदैवस्तैर्यग्योनिश्चपञ्चधाभवति। मानुष्यश्चैकविध : समासतोभौतिक : सर्ग : ॥ भौतिकाद्याश्चसर्ग

सत्त्वैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेनत्रैविध्यम्। यथा। ऊर्ध्वंसत्त्वविशालस्तमोविशालश्चमूलतः सर्गः। मध्येरजोविशालोब्रह्मादिस्तम्बपर्यन्तः॥ न० मुक्तायाम्॥ त्रि० भूतसम्बन्धिनि॥ रूपादिषु॥ चक्षुरादिषु॥ शरीरादिषु॥

भौती। स्त्री० तस्याम्। रात्रौ। रजन्याम्॥

भौत्य:। पुं० भूतिमुनेः पुत्रे चतुर्दशमनौ॥

भौम:। पुं० कुजग्रहे। मङ्गले। नरकासुरे॥ अम्बरे॥ रक्तपुनर्नवायाम्॥ न० धान्यविशेषे॥ भौममम्भोनिगदितंप्रथमंविविधंबुधैः। जाङ्गलंपरमानूपंततःसाधारणंक्रमात्॥ भौमानामथसांप्रायोयद्गर्भंप्रातरिष्यते। भौमत्वंनिर्मलत्वस्वयतस्तत्रांमहान्गुणः॥ त्रि० भूमिभवे। तत्रे। अन्नमयभूमिकार्ये॥ भूमेरयम्। शिवादित्वादण्। भूमौभवति भौमिकोण्॥ भूमेरिदम्। तस्येदमित्यण्॥

भौमवार:। पुं० मङ्गलवारापरपर्यायम्॥

भौमन:। पुं० विश्वकर्मणि॥

भौमरत्नम्। न० प्रवाले॥

भौमावास्या। स्त्री० गोसहस्रोतिवि-ख्यातायाममायाम्। यथा। अमावास्यांभवेद्वारोयदिभूमिसुतस्यच। गोसहस्रफलंदद्यात्स्नानमात्रेणजाह्नवीतिव्यासः॥

भौमी। स्त्री० सीतायाम्। जानक्याम्॥

भौरिक:। पुं० कनकाध्यक्षे॥ भूरिणि। सुवर्णेनियुक्तः। तत्रनियुक्तइतिठक्॥

भ्रंश:। पुं० अधःपतने॥

भ्रंस:। पुं० भ्रंशे॥

भ्रकुंस:। पुं० स्त्रीवेशधारिणिनर्तके। भ्रुकुंसे॥ पटपुटेतिदण्डकोक्ताभाषार्थकुसिधातोर्भ्रुरादिश्चान्तादेरच्। भ्रुवाकुंसोभाषणमस्य। इकोह्रस्वोऽङ्योगालवस्येतिसूत्रे० च भ्रकुंसादीनामितिवार्त्तिकस्यचकारेणैवविधीयतइतिव्याख्यानान्तराद्० भ्रकुंसः॥

भ्रकुटि:। स्त्री० क्रोधादिनाभ्रुवःकौटिल्ये। भ्रुकुट्याम्॥ कुटकौटिल्ये। इगुपधात्किदिति० इन्। भ्रुवोःकुटिः। इकोह्रस्वइत्यत्र० अभ्रकुंसादीनामितिवार्त्तिकेनाकारोविधीयते॥

भ्रकुटी। स्त्री० भ्रकुटी। कुटेरिन्नन्तात्० कृदिकारादितिङीप्॥ भ्रुवोःकुटी॥ इकोह्रस्वइतिसूत्रे० चभ्रकुंसादीनामितिवार्त्तिकस्य०-

अकारोनेनविधीयतद्रूलर्थाद्दकारः ॥ भ्रमः । पुं॰ भ्रम्नु निर्मंमे । प्राकारगूढ भित्तिषुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख॰ इ॰ भा॰ भ्रमतेि भ्रान्ती। मिथ्याज्ञाने। मिथ्यामतौ। व्यलमहेतो ॥ मार्विनश्यत्स्यं भोमीवईतामुत्तरोत्तरम् । साविघ्न: प्रतिबघ्नुत्मुघन्योप्राऽस्मादितिभ्रमः॥ भ्रमणम् । भ्रमुचनवस्थाने । भावे घञ् ॥ नद्यादावघसलसोर्द्वनिः सरणे ॥ भ्रमन्तिजलान्यनेन । इल चेतिघञ् । नोदात्तोपदेशस्येति इद्धाभावः ॥ देहेन्द्रियाद्याध्यासे ॥ न्यायमतै॰ भ्रमस्तनामान्तरमप्रमा । भ्रमोद्विविधः। विपर्यासः॰ संशयश्च । चाद्योयया । देहेभात्मनुद्धिः॰ शङ्कादौपीततामतिः । सानिश्चयरूपा ॥ द्वितीयोयया । किंस्विन्नरोवा॰ स्थाणुर्वेत्यादिबुद्धिः। तत्सकारणम् । पित्तदूरत्वमोहभयादिनानाविधदोषः। यथा । चप्रमाचप्रमाचेतिज्ञानंद्विविधमुच्यते । तचन्यं तम्मतिर्याखादप्रमासाद्दिरू मिता ॥ तत्प्रपञ्चोविपर्यासः संशयोपिप्रकीर्त्तितः। चाद्योदेहेष्वात्मबुद्धिः शङ्कादौपीततामतिः॥ भवेन्निश्चयरूपासासंशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसंशयः ॥ तदभावाप्रकारा धीस्तत्प्रकारातुनिश्चयः । समंशयोभवेद्वाधीरेकत्राभावभावयोः ॥ साधारणादिधर्मस्यज्ञानंसंशयकारणम् । दोषोऽप्रमायाजनकः प्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविधः स्मृतः। इ॰ भा॰ प॰ ॥

भ्रमणम् । न॰ चनवस्थितौ ॥ गमनविशेषे । पर्यटने ॥

भ्रमणी । स्त्री॰ कावणिडकायाम् । जलौकायाम् ॥ चधीमितुः क्रीडायाम् । चधीमितुः क्रीडादौ॥

भ्रमत्कुटी । स्त्री॰ तृणादिकृते ॥ कावार्थाम् । जङ्गमकुट्याम् ॥

भ्रमरः । पुं॰ कीटविशेषे । मधुपे । मधुव्रते । द्विरेफे । षट्पदीके ॥ चामुखे ॥ वेधकमले । चर्मा॰ इ॰ भा॰॥ भ्रमति । भ्रमु॰ । चर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यरः ॥

भ्रमरकः । पुं॰ भृङ्गे । मधुलिहि ॥ गिरिके । बालमूषिके ॥ चूर्णकेशे । चलकौ । ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव । इवेप्रतिकृताविति कन् ॥ भ्राम्यतिवा । भ्रमु॰ चतिकमीत्यरः । स्वार्थेकन् ॥

भ्रमरकीटः । पुं॰ कीटान्तरे । कुम्भारी॰ इ॰ भा॰ ॥

भ्रमरच्छली । स्त्री॰ लताविशेषे । भृङ्गच्छायाम् ॥ भृङ्गच्छलीचकटुका

विलासदीपनरोचनीति० रा० नि०

भ्रमरप्रिय : । पुं० धाराकदम्बे ॥

भ्रमरमारी । स्त्री० मालवदेशप्रसिद्धपुष्पवृक्षविशेषे । मांसपुष्पिकायाम् ॥

भ्रमरविलसितम् । न० भ्रमरविलसितायाम् । म्भौन्लौगःस्याद्भ्रमरविलसितम् ॥

भ्रमरविलसिता । स्त्री० त्रिष्टुप् ११ छन्दः प्रभेदे ॥ यथा । मोगौनौगो भ्रमरविलसिता ॥ य० मुग्धे मानंपरिहरनचिरात्तत्ताकण्ठ्यन्ते सफलयतुचरि: । फुल्लाकाशेभ्रमरविलसिताभाविश्रीर्भावकलयतिकिमुताम् ॥

भ्रमरा । स्त्री० भ्रमरच्छल्याम् ॥

भ्रमरातिथि : । पुं० चम्पके ॥

भ्रमरानन्द : । पुं० वकुले । अतिमुक्तके । रक्तम्लाने ॥

भ्रमरालक : । पुं० भ्रमरके । कुरले । ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका । स्त्री० भ्रमरावल्याम् ॥

भ्रमरावली । स्त्री० अतिशर्करीप्रभेदे ॥ भुजसस्तगहसुवर्णलसद्वलया०कर पुष्पसुगन्धवरीरसनाकचिरा । कामदयनूपुरचारुरराजयतिभ्रमरावलिकाभुजगाधिपतुल्यशिरा ॥ यथा । सखिसम्प्रतिकम्प्रसिमीनसिदेवि हिताम्० मदनेनधनुः सशरंसुकरे निहितम् । ललितामिनिकिकिधनमालिनिमानकथा० रतिनायकशायक

द्रु : खमुपैतिसुधा ॥

भ्रमरिका । स्त्री० बालानांक्रीडाविशेषे ॥ येनभूरपिभ्रमतीवभाति । भ्रामौमाओ० इ० भा० ॥

भ्रमरी । स्त्री० भ्रमरयोषिति । भौरी० इ० भा० ॥ षट्पदाम् ॥ जतुकायाम् ॥ पुत्रदाल्याम् ॥ भ्रामर्याःस्थाने॥

भ्रमरेष्ट : । पुं० श्योनाकप्रभेदे ॥

भ्रमरेष्टा । स्त्री० भूमिजम्ब्वाम् । भार्ग्याम्॥

भ्रमरोत्सवा । स्त्री० माधव्यांलतायाम् ॥

भ्रमासक्त : । पुं० शस्त्रमार्जके ॥

भ्रमि : । स्त्री० भ्रमणे ॥ जलनि : सरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमणम् । भ्रमु० । इकृष्यादिभ्य : ॥ भ्रमे : सम्प्रसारणञ्चेतीन् । बाहुलकात्सम्प्रसारणाभाव: ॥

भ्रमित : । त्रि० घूर्णिते । भ्रमणकारिते ॥

भ्रमी । त्रि० भ्रमविशिष्टे ॥

भ्रष्ट : । त्रि० गलिते । च्युते । इत्यादित : पतिते ॥ यथाद्भ्रष्टातीर्थयात्राम्पुनश्चेत्तस्माद्भ्रष्टोरौरवंवैव्रजेच्च । योगभ्रष्ट : सच्चधृतिस्वर्गच्छेद्राज्याद्भ्रष्टोमृगयाविनोदेच ॥

भ्राज : । पुं० कात्यायनप्रणीतश्लोके ॥ भ्राजानामश्लोकाइतिमहाभाष्यम् ॥

भ्राजकम् । न० पित्ते ॥

भ्राजमान : । त्रि० दीप्यमाने ॥

भ्राजिष्णु : । त्रि० चलदाराट्ठिनादी

प्रियुक्ते ॥ दीप्तिशालिनि । विभ्राजि ॥ भ्राजते । तच्छील : । भ्राज दीप्तौ । भुवश्चेतिचकारात् ० भ्राजे रपिदृष्यात्च् ॥ स्वप्रकाशचिद्रूपे ॥

भ्राता । पुं० सहोदरे ॥ भ्राजते० वि भर्ति वा । भ्राज् डुभृञ् ० । वा । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ पितृदुहितृ । इतिसाधु : ॥

भ्रातरौ । पुं० द्वि० सहोदराभ्रातृभगिन्यौ : । भ्राताचस्वसाच । । भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेष : स्वसाचभ्राताचेतिवा ॥

भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ ॥ ऋतठञ् ॥ ङीपि० भ्रातृकी ॥ भ्रातृयोग्ये ॥

भ्रातृज : । पुं० भ्रातृपुत्रे ॥ भ्रातुर्जात । पञ्चम्यामितिड : ॥

भ्रातृजा । स्त्री० भ्रातुष्पुत्र्याम् । भ्रात्रीयायाम् ॥ टाप् ॥

भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् । प्रजावत्याम् ॥ भ्रातु : जाया ॥

भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्रातापतिर्यस्याइतिविग्रहे० नित्यंस पत्न्यादिष्विति० भ्रातृपतिशब्दस्य नानादेशे० पत्न्रेभ्यइतिङीप् ॥

भ्रातृपुत्र : । पुं० भ्रातृजे ॥

भ्रातृभगिन्यौ । स्त्री० भ्रात्रौ : ॥ भ्राताचभगिनीच ॥

भ्रातृवल : । त्रि० भ्रातृमति ॥ भ्राताऽस्यास्ति । धन्यभ्योपिदृश्यतइति० वलच् । संज्ञामित्यनुवृत्तेर्वल इतिनदीर्घ : ॥

भ्रातृव्य : । पुं० भ्रातृपुत्रे ॥ भ्रातुरपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥ व्यन्सपत्ने ॥

भ्रातृश्वशुर : । पुं० पतिज्येष्ठभ्रातरि । जेठ० भासुर० इ० भा० ॥

भ्रातृस्थानम् । न० सहोदरस्थे ॥ लग्नात्तृतीयभवने ॥ भ्रातु० स्थानम् ॥

भ्रात्रीय : । पुं० भ्रातृजे । भ्रातुरपत्यम् । भ्रातुर्व्यच्चेति० चाच्छ : ॥

भ्रान्त : । पुं० मत्तहस्तिनि ॥ राजधुस्तूरे ॥ न० भ्रमणे ॥ त्रि० भ्रमान्विते । भ्रान्तिमापन्ने ॥ अद्वितीयं ब्रह्मतत्त्वं नजानन्तियदातदा । भ्रान्ताएवाखिलास्तेषांक्वमुक्ति : क्वेह वासुखम् ॥ भ्रमे : कर्त्तरिक्त : । अनुनासिकस्यक्विझलो : क्ङितिइ० दीर्घ : ॥

भ्रान्ति : । स्त्री० भ्रमे । मिथ्यामतौ । अतस्मिंस्तज्ज्ञाने ॥ युक्तिहीनप्रकाशत्वाद्भ्रान्तेर्नघटितलक्षणम् । यदिस्यात्सलक्षणंकिञ्चिद्भ्रान्तिरेवन-सिध्यति ॥ भ्रान्तिभाजिभवतिक्वविवेक : ॥ भ्रमणे । अनवस्थितौ ॥ भ्रमणम् । भ्रमु० । क्तिन् । अनुनासिकस्येतिदीर्घ : ।

भ्रान्तिदर्शनम् । न० असाधनेसाधनत्व

बुद्धौ ॥ साधनेप्यसाधनत्वबुद्धौ ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायांरजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान् । त्रि० भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति । मतुप् ॥ स्त्रीपि० भ्रान्तिमती ॥ पुं० अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने । तद्दिति० अन्यद्प्राकरणिकंनिर्दिश्यते० तेनसमानम्थर्थादिष्प्राकरणिकमाश्रीयते । तस्यतयाविधप्रहणैसत्यांयद्प्राकरणिकतयासंविदनम्०सभ्रान्तिमान् । नचैषरूपकम्प्रथमातिशयोक्तिर्वा०तत्रवस्तुतोभ्रमस्याभावात् । इदञ्चार्थानुगमेनसंज्ञाया : प्रहणे सहजस्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम् । कपालेमार्जार : पय्इतिकराल्लेढ़िशशिनस्तरुच्छिद्रप्रोतान्विसमितिकरी सङ्कलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमितिप्रभामत्तश्चन्द्रो जगदिदमहोविभ्रमयति ॥

भ्रान्तिहर : । पुं० मन्त्रिणि ॥ त्रि० भ्रमनाशके ॥

भ्रामक : । पुं० जम्बुके । फेरौ ॥ धूर्त्ते ॥ सूर्यावर्त्ते ॥ अश्मप्रभेदे । चुम्बक० इ० भा० प्र० ॥ त्रि० भ्रमजनके ॥

भ्रामर : । पुं० चुम्बक० इ० प्र० पाषाणे । भ्रामके ॥ न० शुक्लवर्णमधुनि ॥ भ्रमरै : कृतम् । क्षुद्राभ्रमरैत्यादिनाऽण् ॥ किञ्चित्सूक्ष्मै :प्रसिद्धेभ्य: षट्पदेभ्योलिभिश्चितम् । निर्मलंस्फटिकाभंयत्तन्मधुभ्रामरंस्मृतम् ॥ भ्रामरंरक्तपित्तघ्नंमूत्रजाड्यकरंगुरु । स्वादुपाकमभिष्यन्दिविशेषात्पिच्छिलंहिमम् ॥ रतबन्धान्तरे । यथा । तत्कटिंसमधिरुह्यवल्लभ : स्वाङ्घ्रियादिपद्मसंस्थितिस्थित : । चक्रवद्भ्रमतिकुञ्चितचिक्रोभ्रामरंनिगदितंसमुत्तमम् ॥ नृत्यविशेषे । रासे । मण्डलनृत्ये । हल्लीसे ॥ त्रि० भ्रमरसम्बन्धिनि ॥ यथ् ॥

भ्रामरी । त्रि० अपस्मारिणि ॥ इति कुल्लूकभट्ट : ॥

भ्रामरी । स्त्री० पार्वत्याम् ॥

भ्रामित : । त्रि० आघूर्णिते ॥

भ्राष्ट्र : । पुं० भर्जनपात्रे । अम्बरीषे । भडसां० इ० भाड० इ० भा० ॥ भृज्ज्यतेऽत्र । भ्रस्जपाके । भ्रस्जिगमिनमिहनिविश्यशांवृद्धिश्चेति० ष्ट्रन्० सचित्र ॥

भ्रियमाण : । पुं० पोष्यमाणे ॥

भ्रुकुंस : । पुं० भ्रूकुंसे ॥ भ्रूकुंसे । स्त्रीवेशधारिणिनर्त्तके । नचनिआ० इ० भा० ॥ भ्रुवाकुंसोभापणमस्य । इकोह्स्वोऽङ्योगालवस्य तिमूर्ध० ह्रयङुवङभाविनामव्ययानाञ्चेति

वक्तव्यमितिनिषेधोपरपठितेन । अभ्रुकुंसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्ध्रस्वः ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटिः । स्त्री० भ्रूकुटी । भ्रूकुट्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन् । भ्रुवोः कुटिः । भ्रुकुंसवत्प्रक्रिया ॥

भ्रुकुटी । स्त्री० भ्रुकुटी । भ्रुवोः कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी ॥ अभ्रुकुंसादीनामितिवा र्त्तिकाद्ध्रस्वः ॥

भ्रूः । स्त्री० नेत्रोपरिभागस्थरोमराज्यां चिह्नितायाम् । भौं० हि० भा० ॥ भ्रमु० । भ्रमेर्डूः । टिलोपः ॥ यद्वा । भ्रमति । भ्रमुचलने । भ्रमेर्डूः ॥ यद्वा । भ्राम्यति । क्विप् । ऊङ् मादीनामिति० गमः क्वाविप्यत्व वार्त्तिकेन० मलोपऊङादेशः ॥

भ्रुकुंसः । पुं० भ्रूकुंसे । भ्रुकुंसे । नर्त्तनिका० हि० भा० ॥ मायया धर्त्तुकरादिधारणात्कुंसेरेच् । भ्रुवा कुंसोभाषणमस्य । ङ्यापोःसंज्ञाछन्दसोर्बहुलमितिसूत्रे० इयङुवङ् भाविनामन्यतमस्यनेतिवार्त्तिकाद्भ्रस्वनिषेधः ॥

भ्रुकुटिः । स्त्री भ्रुकुट्याम् ॥ भ्रुवोः कुटिः इयङुवङ्भाविनामिति निषेधाद्ध्रस्वोनभवति ॥

भ्रुकुटी । स्त्री० भ्रुकुट्याम् । भ्रुकुटी ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी । इयङुवङ्भाविनामितिह्रस्व नि षेधः ॥

भ्रूणः । पुं० स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके ॥ गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूण्यते । भ्रूण आशाविशङ्कयोः । घञ् ॥

भ्रूणहत्या । स्त्री० गर्भस्थबालकहनने ॥ यथा । निर्विवाहकृतंयेनंनकरोति चतुर्थकम् । तस्यानिपातये त्स भ्रूणहत्याव्रतञ्चरेत् ॥

भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि ॥ भ्रूणंहतवान् । हन० । ब्रह्म भ्रूणवृत्रेषु क्विप् ॥ ब्रह्मादयोपि ॥ भ्रूणघ्न० यदिदमाख्यापकंतोच्यत इतिव्याख्यानात् ॥

भ्रूभङ्गः । पुं० भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोर्भङ्गः ॥

भ्रेषः । पुं० अधःपाते । यथोचितात्० भ्रंशे ॥ भ्रेषणम् । भ्रेषृ चलने । घञ् ॥ चलने ॥

भ्रेषणम् । न० चलने ॥

भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातना त्तकारादेशः ॥

† —०— †

मः । पुं॰ मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे ॥ शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ॰ऽऽऽ॰ ॥

मंहिष्ठः । त्रि॰ महनीये । पूजनीये ॥

मकरः । पुं॰ नक्रे । यादःप्रभेदे । मगर॰ इतिभाषाप्रसिद्धे ॰ झषाणांमध्ये भगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आलोकिरे ॥ कृताञ्जलि । कृच्छ्रसायाम् । पचाद्यच् । मनुष्याणांकरः । पृषोदरादिः ॥ यद्वा । मङ्कते । मङ्किमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकंराति । रादाने । आतोनुपसर्गे कः ॥ दर्पकेऽप्युक्तः सारस्वतकोषे ॥ अर्हद्ध्वजे ॥

मकरकुण्डलम् । न॰ मकराकृतिकर्णाभरणे ॥

मकरकेतनः । पुं॰ कामदेवे ॥ मकरः केतनंयस्यसः ॥

मकरध्वजः । पुं॰ कंदर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्यसः ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तद्यथारसप्रकारोन्यत्ररसेन्द्रचिन्तामणौ ॥

मकरन्दः । पुं॰ पुष्परसे ॥ मकरमपिद्यति॰कामजनकत्वात् । दोअवखण्डने । आतोनुपसर्गेकः । पृषोदरादिः ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्मण्यण् । शकन्ध्वादिः ॥ कुन्दपुष्पवृक्षे ॥ न॰ किञ्जल्के ॥

मकरमुखी । स्त्री॰ प्रणाल्याम् । पयसः पद्व्याम् ॥

मकरन्दवती । स्त्री॰ कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूहः । पुं॰ मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्ययेणमकरव्यूहोभवति । तेनाऽयंमया सोभयत्वभयेसतिगच्छेत् ॥

मकराकरः । पुं॰ समुद्रे ॥ मकराणामाकरः ॥

मकराश्वः । पुं॰ महाकरञ्जे । वरुणे ॥

मकराङ्कः । पुं॰ समुद्रे ॥ कामदेवे ॥

मकराधिपः । पुं॰ शनिग्रहे ॥ मकरस्थराशिविशेषस्याधिपः ॥

मकरालयः । पुं॰ समुद्रे ॥ मकराणांमकरोपलक्षितानांजलजन्तूनामालयः ॥

मकरी । पुं॰ समुद्रे ॥ मकराः सन्त्यस्मिन् । अतइनिठनादिति॰इनिः ॥

मकुटम् । न॰ मुकुटे । किरीटे ॥ मङ्कतेऽनेन । मकि॰ । बाहुलकादुटः । आगमशास्त्रस्यानित्यत्वान्नुम् ॥

मकुतिः । स्त्री० शूद्रशासने ॥
मकुर : । पुं० मुकुरे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मङ्कि० । मकुरदर्दुराविलिसाधु : ॥
मकुल : । पुं० न० मुकुले ॥ वकुलद्रुमे ॥
मकुष्ठः । पुं० वनमुद्गे । मौठ० इ० प्र० व्रीहिविशेषे ॥ मकुष्ठोवासलोयाढीकमपित्तहरोलघु : । वर्त्तिजिन्मधुरः पाचिह्नमिक्रमत्तुरनाशनः ॥ चि० मं०बरे ॥
मकुष्ठक : । पुं० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मङ्कयतेवा । मङ्कि० । बाहुलकादुर्भावश्च । तिष्ठति । ष्ठा० । कुन् । मकुष्ठासौष्ठकश्च । पृषोदरादित्वात् ॥
मकूलक : । पुं० मुकुलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मङ्कि० । यजिपिञ्जादिभ्यऊरोलचाविति० - पिञ्जादित्वादूलच् । स्वार्थेकन् ॥
मक्कल : । पुं० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोवस्तिशूलमक्कलसंज्ञितम् । यवक्षारंपिबेत्तत्र - मस्तुनोष्णोदकेनवा ।
मक्का । स्त्री० खुराशाभिधे देशे ॥
मक्कुलम् । न० शिलाजतुनि ॥
मक्षेश : । पुं० ) खुराशानदेशस्थे
मक्षेश्वर : । पुं० ) शिवे ॥
मक्षोल : । पुं० शिलाधातौ । सितोपले । मक्षोल० खडियामाटी० गोलू० इ० भा० ॥
मख : । पुं० स्वदोषाच्छादने ॥
मखवीर्य्य : । पुं० पियालवृक्षे ॥
मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० इ० भा० ॥ मशति । मशशब्दे रोषकृतेच । इनिमशिभ्यांसिकन् ॥ मशतिवा । मशरोषस्तुतौ । वुन् । खलुलवा ॥
मक्षिकामलम् । न० सिक्थके ॥
मक्षीका । स्त्री० मक्षिकायाम् ॥
मख : । पुं० यज्ञे ॥ मखन्तिदेवायत्र अनेनवा । मखगतौ । हलश्चेति० घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिवत्त्वविषयेपिघः । तिघ : ॥ यद्वा । मह्यते । मह० । नहिकोलोपश्च० महेघः तिकोहलोपश्च ॥
मखत्राता । पुं० श्रीरामचन्द्रे ॥ मखानांत्राता ॥
मखवह्निः । पुं० प्रणीते । यज्ञाग्नौ ॥
मखानल : । पुं० महावीरे । यज्ञाग्नौ ॥
मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० इ० भा० ॥ मखान्नंपद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ॥

मखासुहृत् । पुं॰ शिवे । मखस्यदत्त यज्ञस्यचसुहृत्॰शत्रु: ॥

मगण : । पुं॰ त्रिगुरौ॰ऽऽऽ: ॥

मगध : । पुं॰ वन्दिनि ॥ मागधे । वंशपरम्पराशंसके ॥ मगध्यति॰या चते । मगधपरिवेष्टने । कण्ड्वादिर्यं गन्त: । अच् । यस्यहलइतियलोप: ॥ मगधा : पुं॰भूम्नि॰ कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्ययावत्गृध्रकूटकं शिवे । मगधाख्योमहादेशो यात्रायांनहिदुष्यति ॥ दक्षोत्तरक्रमेणैवक्रमात्कीकटमागधौ ॥ मगधा नांनिवासोजनपद : ॰ मगधा : । निवासिऽयोजनपदेलुप् । लुपियुक्त वद्भाव : ॥

मगधा । स्त्री॰ पिप्पल्याम् ॥

मगधेश्वर: । पुं॰ जरासन्धनृपे । म गधदेशाधिपमात्रे ॥ मगधानांदेश विशेषाणामीश्वर : ॥

मगधोत्थ : । त्रि॰ मगधदेशजाते ॥

मगधोद्भवा । स्त्री॰ पिप्पल्याम् ॥ मग धेसम्भवोयस्य ॥

मग्न : । त्रि॰ जलान्त : प्रविष्टे । आ प्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त: । ओदितश्चेति॰निष्ठा नत्वम् । तस्यासिद्धत्वात्॰स्कोरिति सलोप : । चो : कु : ॥

मघ : । पुं॰द्वीपान्तरे ॥ देशान्तरे । म ग्॰नामकर्म्मप्रख्याने ॥ न॰ पुष्प विशेषे ॥

मघवा । पुं॰ इन्द्रे । शक्रे ॥ मह्यतेपू ज्यते । महपूजायाम् । श्वन्नुक्षन् पूषन्प्लीहन्नित्यादिना॰कनिन् । कवि रितिमनोरमायांस्फुटम् ॥ निपा तनात्॰हस्यघोवुगागमश्च । मघवा नौ॰मघवान : ॥ मघवाबहुलमिति मितिवादेशपक्षेतु॰ मघवान्मघ वन्तौ॰ मघवन्त : ॰ इत्यादिबो ध्यम् ॥ त्रिमात्रांशादश्वचक्रमध्यान्त र्गतचक्रवर्त्तिविशेषे ॥

मघवती । स्त्री॰ इन्द्राण्याम् ॥

मघा । स्त्री॰ दशमनक्षत्रे ॥ मघजात स्यफलंयथा । कठोरचित्त: पितृमातृ भक्तस्तीव्रस्वभावस्तनमध्यविद्य : ये ष्वन्मभंयस्यमघाऽनय : स्यान्मति: सदारातिविनाशदक्ष: ॥ बहुवचना न्तोप्यदृश्यते ॥ यथा मघोदकैर्मघा क्षेचवरप्रच्छादनैस्तथा । पितर: स्व इयन्त्वस्मत्कासुमघासुचेति ॥ म घायांपिण्डदानेनज्येष्ठपुत्रोविनश्य तीतिकश्चनमाभ्योपि ॥ औषधविशे षे ॥

मघाभव : । पुं॰ शुक्राचार्ये ॥

मघाभू : । पुं॰ शुक्राचार्ये ॥

मघी स्त्री॰ धान्यविशेषे ।

मघोनी । स्त्री॰ इन्द्राण्याम् ॥

मङ्कुर : । पुं॰ दर्पणे । मुकुरे । मङ्कते मकि॰ । बाहुलकादुरच् ॥

मङ्किः । त्रि० शठे ॥ मङ्कते । मकि० । वङ्क्र्यादित्वात् साधुः ॥

मङ्क्षणम् । न० जङ्घात्राणे ॥ इति हारावली ॥

मङ्क्षु । अ० शीघ्रे ॥ भृशार्थे ॥ मज्जति । टुमस्जो शुद्धौ । बाहुलकात् सुः । मस्जिनशोरिति नुम् । स्कोरिति सलोपः ॥

मङ्क्षुणम् । न० जङ्घात्राणे ॥ इति त्रिकाण्डशेषः ॥

मङ्गः । पुं० नौमस्तके ॥ मङ्गति । मगि सर्पणे । पचाद्यच् ॥

मङ्गलः । पुं० अङ्गारके । कुजे । इत्यमरः ॥ अस्य वारे जातस्य फलं यथा । उग्रः प्रतापी क्षितिपालमान्यो रणप्रियो वक्रवचाः सरोषः । सत्यान्वितः शूरगणप्रणेता कुजस्य वारे प्रभवो मनुष्यः ॥ न० कल्याणे ॥ सर्वार्थरक्षणे ॥ अभीप्सिताभिप्रेतार्थसिद्धौ ॥ यत् खलु क्रियमाणमेव मनःप्रह्लादनं समीहितसाधनञ्च तन्मङ्गलमुच्यतइति व्याख्याकाराः ॥ प्राचीनैर्मङ्गल्यावन्मुनिर्दिष्टं शोधापितम् । अथमित्यालङ्कारिकोक्तेः काव्यादिमुखे क्रियमाणे ॥ यथाह भगवान् भाष्यकारः । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्तीति मङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥ एतानि सततं पश्येन्नमस्येदर्चयेत् तथा । प्रदक्षिणन्तु कुर्वीत तथा ह्यायुर्न हीयते ॥ अपि च । रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरुमग्निं तथा सूर्यं प्रातः पश्येत् सदा बुधः ॥ मङ्गति० दुरदृष्टमनेन । मगि सर्पणे गतौ वा । मङ्गेरलच् ॥ अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुरिति विष्णुपुराणम् ॥ त्रि० कल्याणवति ॥

मङ्गलक्षेत्रम् । न० मेषराशौ । वृश्चिकराशौ ॥ मङ्गलस्य क्षेत्रीयपक्षस्य एम् ॥

मङ्गलचण्डिका । स्त्री० } दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री० } यथा । प्रधानांशस्वरूपा च देवी मङ्गलचण्डिका । प्रकृतेर्मुखसम्भूता सर्वमङ्गलदा सदा ॥ सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी । तेन मङ्गलचण्डी सा पण्डितैः परिकीर्तितेति भागवतम् ॥

मङ्गलच्छायः । पुं० प्रघटे ॥

मङ्गलपाठकः । पुं॰ स्तुतिपाठके । वन्दिनि ॥

मङ्गलप्रदा । पुं॰ दुर्गायाम् ॥ हरिद्रायामितिकश्चित् ॥ त्रि॰ मङ्गलदातरि ॥

मङ्गलप्रस्थः । पुं॰ भारतवर्षस्य पर्वतान्तरे ॥

मङ्गलमालिका । स्त्री॰ सखीभेदे ॥ मङ्गलायामालिका ॥

मङ्गला । स्त्री॰ उमायाम् । कात्यायन्याम् ॥ गयायांमङ्गलास्तीतिदिवीगौरा ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ वृत्ताईंप्यात्नविशेषे ।

मङ्गलागुरु । न॰ अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामंशिकागन्धामङ्गलागुरुवाचकाः । मङ्गल्यागुरुशिंशिपागन्धाख्यायोगवाहिका ॥

मङ्गलाचरणम् । न॰ ग्रन्थादावरम्भे मङ्गलकरणे ॥ मङ्गलाचरणंशिष्टाचारात्फलदर्शनाच्छ्रुतितश्चावश्यं कर्त्तव्यमित्याद्यर्थाख्याकाराः॥

मङ्गलारुदा । स्त्री॰ दूर्वायाम् ॥

मङ्गलिकाक्षीरणम् । न॰ प्रसादस्य कथायाम् ॥

मङ्गल्यः । पुं॰ चायमाणायाम् ॥ अश्वत्थे ॥ बिल्वे ॥ मसूरके क्षीरके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्जे ॥ न॰ दधनि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि॰ शिवकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधुः । तत्र साधुरितियत् ॥

मङ्गल्यकः । पुं॰ मसूरे ॥ स्वार्थे कन् ॥

मङ्गल्यकुसुमा । स्त्री॰ शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्याः ॥

मङ्गल्यनामधेया । स्त्री॰ जीवन्त्याम् । शाकश्रेष्ठायाम् ॥

मङ्गल्या । स्त्री॰ मलिगन्धगुरुणि ॥ शम्याम् ॥ वचः पुष्प्याम् ॥ शिवाम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधी ॥ वचायाम् ॥ हरिद्रायाम् ॥ चीडायाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधुः । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनाभिवर्षप्रानियादेवोद्दत्ते हरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसा स्मृता ॥

मङ्क्षिनी । स्त्री॰ नावि । नौकायाम् ॥

मचर्चिका । स्त्री॰ प्रशस्ते ॥ मांशं चर्चति । चर्च अध्ययने । ण्वु

त् ॥ यथा । प्रशस्तोब्राह्मणः० ब्राह्मणमचर्चिकारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमासः ॥

मच्छः । पुं० मत्स्ये ॥

मच्छिका । स्त्री० मज्जायाम् ॥ मच्छ्यर्थे कः ॥

मज्जकृत् । न० अस्थनि ॥

मज्जा । पुं० वृक्षसारे । हृदादिकस्तम्भ स्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्येहवीर्यंभवतियादृशम् । तस्यतस्यैववीर्येणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगते धातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्स्वाग्निनापक्वंतस्यसारोद्भवोघनः । यः स्नेहवत् पृथग्भूतः समज्जेत्यभिधीयते ॥ स्थानन्तु । स्थूलास्थिषुविशेषेण मज्जात्वभ्यन्तरेस्थितः । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्मे दोमज्जाविवर्धनः । मज्जाविशेषतोऽस्थ्नांचबलकृत्स्नेहनेहितः ॥ मज्जत्यस्मिन् । टुमस्जोशुद्धौ । अन्नन्त्विन्तिसाधुः ॥ शिरोस्थिमध्येपिण्डितस्नेहे । मस्तिष्के ॥

मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । टुमस्जो० । बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥

मज्जसमुद्गम् । न० वीजे । शुक्रे ॥

मज्जसम्भवः । पुं० शुक्रे ॥

मज्जा । स्त्री० वृक्षसारे । अस्थिगत धातौ ॥ मज्जति : पचाद्यजन्तात् टाप् । मज्जोत्तामजयासहेति० द्विरूपः ॥

मजजाजः । पुं० भूमिजम्बूगाली ॥

मजजारसः । पुं० शुक्रे ॥

मजजासारम् । न० जातीफले ॥

मजनिका । स्त्री० मजकायाम् ॥

मञ्चः । पुं० खट्वायाम् ॥ कर्णवंशि । मांचा०मांचा० दू०भो० । उच्चमण्डपविशेषे ॥ दोलायमानंगोविन्दंमञ्चस्थंमधुसूदनम् । रथस्थंवामनंदृष्ट्वापुनर्जन्मनविद्यते इति पुराणम् ॥ मञ्चते । मचिधारणोच्छायपूजनेषु । पचाद्यच् ॥

मञ्चकः । पुं० इन्द्रकीले । उच्चमण्डपे । खट्वायाम् ॥

मञ्चाश्रयः । पुं० मत्कुणे ॥

मञ्चमण्डपः । पुं० शस्यरक्षार्थकुटीरे । क्षुद्रङ्गे ॥

मञ्चिका । स्त्री० आसन्दायाम् ॥

मञ्जरः । पुं० वल्लर्यां । मुक्तायाम् ॥ तिलकद्रुमे । वल्लरीम् । लतायाम् ॥

मञ्जरिः । स्त्री० वल्लर्याम् ॥ मञ्जुत्वमृच्छति । ऋगतौ । अच्इः । शकन्ध्वादिः ॥

मञ्जरी । स्त्री० तिलकद्रुमे । स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामुडो ॥

प् ॥

मञ्जरीनम्र : । पुं॰ वेतसवृक्षे ॥

मञ्जा । स्त्री॰ मञ्जर्याम् ॥

मंजि : । पुं॰ मंजर्याम् ॥

मञ्जिका । स्त्री॰ वारसुन्दर्याम् । वेश्यायाम् ॥

मञ्जिफला । स्त्री॰ कदल्याम् ॥

मञ्जिष्ठा । स्त्री॰ विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मञ्जीठ॰ इ॰ भा॰ प्र॰ औषधी ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वरवर्णकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ मञ्जीशोभनेवर्णे तिष्ठति । ष्ठा॰ । सुपिस्थइति कः । प स्वास्विति षत्वम् ॥ यद्वा । अतिशायनेतमबिष्ठनौ ॥

मञ्जी । स्त्री॰ मञ्जर्याम् ॥

मञ्जीर : । पुं॰ मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं॰ न॰ नूपुरे ॥ मञ्जति । मजिधुनौ॰ सौत्रः । बाहुलकादीरन् ॥ ध्रुवधरे॰ऽ, ॥

मञ्जीरा । स्त्री॰ वर्णवृत्तान्तरे ॥

मञ्जु : । त्रि॰ मनोज्ञे ॥ मञ्ज्यते । मजि॰ । बाहुलकादुः ॥

मञ्जुकेशी । पुं॰ श्रीकृष्णे ॥ त्रि॰ मनोज्ञचिकुरविशिष्टे ॥

मञ्जुकेशी । स्त्री॰ स्वर्गवेश्याभेदे ॥

मञ्जुगमना । स्त्री॰ हंस्याम् ॥ त्रि॰ सुन्दरगामिनि ॥

मञ्जुघोष : । पुं॰ शिवे । उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जु : घोष : शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि॰ शोभनशब्दवति ॥

मञ्जुपाठक : । पुं॰ शुके । कीरे ॥ त्रि॰ सुन्दरपाठकर्त्तरि ॥

मञ्जुप्राण : । पुं॰ ब्रह्मणि ॥

मञ्जुभद्र : । पुं॰ पूर्वजिनविशेषे ॥ ज्ञानदर्पणे । मञ्जुघोषे ॥ शिवे ॥

मञ्जुभाषिणी । स्त्री॰ अतिजगतीछन्द : प्रभेदे ॥ यथा । सजसाजगौ॰ चयदिमञ्जुभाषिणी ॥ अमृतोर्म्मिशीतलकरेणलालयंस्तनुकान्तिरोचितविलोचनोत्करे । नियतंकलानिधिरसौरिमसौसुदमच्युतेव्यधितमञ्जुभाषिणी ॥ सुमन्दिनीतिमर्न्मी॥

मञ्जुमणि : । पुं॰ पुष्परागे । पोखराज॰ इ॰ भा॰ ॥

मञ्जुल : । पुं॰ जलरङ्कौ ॥ न॰ जलाश्रये । शैवाले ॥ निकुञ्जे ॥ त्रि॰ मञ्जौ ॥ मञ्जु॰ मञ्जुलंलाति । ला॰ । कः ॥ मञ्जुमञ्जुत्वमस्त्यस्मिन्वा । सिध्मादित्वाल्लच् ।

मञ्जुवक्त्र : । त्रि॰ सौम्यावनयुक्ते ॥

मंजुवाक् । त्रि॰ मधुरवचने ॥

मञ्जुश्री : । पुं॰ मञ्जुघोषे ॥ म-

अन्तुर्मनोज्ञाश्रीर्यस्य ॥

मञ्जुषा । स्त्री॰ मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री॰ पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिधेराधारे ॥ मज्जत्यस्यां । टुमस्जो मस्जेर्नुमविच्च ऊषन् ॥

मटची । स्त्री॰ मर्द्दनहेतुभूतपाषाणवृष्टौ ॥ अशन्याम् ॥

मटस्फटिः । पुं॰ दर्पारम्भे ॥

मट्टकम् । न॰ खट्टमस्तके ॥

मठः । पुं॰ छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयोः हलश्चेति घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ मांठ॰ इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितामर्दयेदाज्ये र्वर्त्तिनापिचसन्नयेत् । तस्यास्तुमठकं कृत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेततस्तंसमुद्धरेत् ॥ अयंप्रकारः ससिद्धोमठइत्यभिधीयते ॥ मठस्तुवृष्योबल्योबल्यः सुमधुरोगुरुः । पित्तानिलहरोरुच्योदीप्ताग्नीनांसुपूजितः । समिताशर्करासर्पिर्निर्मिताचपरोप्रिये । प्रकाराअमुनातुल्यास्तेपिचैतद्गुणाः स्मृताः ।

मठरः । पुं॰ मुनिविशेषे । शौण्डे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । बाहुलकादरः । नुलोपोमस्य ठश्च ॥ किर्मेतिचरठोन्तादेशश्च ॥

मड्डकः । पुं॰ मड्डुवा॰ इ॰ प्र॰ वाद्ये

मड्डुः । पुं॰ वाद्यप्रभेदे मज्जति॰ सज्जतिशब्दायवा । टुमस्जोशुद्धौ ॥ भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्यउः । पृषोदरादिः ॥ डमरुवमडुम्मड्डुकाख्यति ॥ चुचुवा॰ इ॰ गौडेषुप्रसिद्धि ॥

मड्डुकः । पुं॰ मड्डुवाद्ये ॥ स्वार्थेकः ॥ मर्द्दले ॥

मणिः । पुं॰ स्त्री॰ अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने । लिङ्गाग्रे ॥ अलिञ्जरे ॥ योन्यग्रभागे ॥ स्तने । मणिबन्धे ॥ मणति । मण शब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न॰ अलिञ्जरे । मांट॰ इ॰ भा॰ प्र॰ ॥ मणति । मण॰ । वुन् । स्वार्थेयावादित्वात्कन् । संज्ञायांकोवा ॥

मणिकरः । पुं॰ मणिकारे ॥

मणिकर्णिका । स्त्री॰ काश्यन्तर्गतप्रधानतीर्थे ॥ दृष्टोविश्वेश्वरोदेशो तस्यांमणिकर्णिका ॥

मणिकर्णिकेश्वरः । पुं॰ काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकायाः ॥ मणिकर्णिकायांवाईश्वरः

मणिकाननम् । न॰ कण्ठे ॥ रत्नवने

मणिकार : । पुं॰ वैकटिके । मणिघ टितालङ्कारादिकर्त्तरि । जौंहरी इ॰ भा॰ । मणिकार॰ इतिच ॥ मणिं करोति । कृञ॰ । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥

मणिकूट : । पुं॰ पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्गन्धमादनकस्य च । मध्येसयस्तिलोहित्योत्र ह्मपुत्र : समाश्रित : ॥ प्रभाढोषस्थेगिरिविशेषे ॥

मणिखनि : । स्त्री॰ मणेराकरे ॥ मणे : खनि : ॥

मणिगुणनिकर : । पुं॰ अतिशर्करी १५ प्रभेदे ॥ यथा । ननमुनियति रिति॰ मणिगुणनिकर : । यथा । नरकरिपुरवतु॰ निखिलसुरगति॰ रमितमहिमभरसहजनिवसति : अनिधिमणिगुणनिकरपरिचित: सरिदधिपतिरिवधृततनुविभव : ॥

मणिग्रीव : । पुं॰ कुवेरात्मजे ॥ मणि रिवग्रीवायस्य ॥ त्रि॰ रत्नकन्धरे ॥

मणिच्छिद्रा । स्त्री॰ मेदासाम् ॥ ऋ- षभाख्यौषधौ ॥

मणितम् । न॰ रतिकूजिते । मैथुन- कालीनशब्दे ॥ रतिकालिकस्त्रीणांकं ठकूजितविशेषे ॥ मणनम् । मण॰ । भावेक्त : ॥

मणितारक : । पुं॰ सारसपक्षिणि ॥

मणिद्वीप : । पुं॰ क्षीराब्धिमध्येपद्म रागादिमणिमयान्तरीपे । त्रिपुरसु न्दर्यावासस्थाने ॥ भुवनेश्वर्या : स्थानम् । देवीगीता । ब्रह्मलोकादू र्द्ध्वंभागेसर्वलोकोस्ति य : श्रुत : । मणिद्वीप : सएवास्तियत्रदेवीविरा जते ॥ सर्वस्मादधिकोयस्मात्सर्व- लोकस्तत : स्मृत : । पुरापराम्बये वायंकल्पितोमनसेच्छया । सर्वादौ निजवासार्थंप्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादपि- कोत्तम : । गोलोकादपिसर्वस्मात् सर्वलोकोधिक : स्मृत : । नैतत्स मंत्रिलोक्यांसुसुन्दरंविद्यतेक्वचिद् त्यादिनादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णनंद्रष्टव्यं ॥

मणिभाग : । पुं॰ तीर्थविशेषे ॥

मणिपर्वत : । पुं॰ गिरिविशेषे ॥

मणिपुष्पक: । पुं॰ सहदेवाख्यपाण्डवस्य शङ्खे ॥

मणिपूरम् । न॰ षट्चक्रान्तर्गतना भिमध्यस्थे दशदलेलतीयेचक्रे ॥ म- णिवद्भिन्नंतत्पद्मंमणिपूरंतथोच्य ते ॥ देशविशेषे ॥

मणिबन्ध : । पुं॰ प्रकोष्ठपाण्यो : स- न्धिस्थाने । कारयन्थौ । कलाइ॰इ॰ भा॰ । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्धवंन्धने । करणे विघञ् न॰ ॥ बृहती ६ छन्द : प्रभेदे । यथा ।

श्चादितुरीयं पञ्चमकं पष्टमयान्त्यं स्रग्धरमेतत् । इन्द्रियवेदैर्विरतिस्तन्मणिबन्धं प्राहफणी ॥ मणिमध्यमितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र : । पुं० जिनानां पूर्वयक्षविशेषे । जक्षसे ॥ कुवेरसेनापतौ ॥

मणिभूमि : । स्त्री० कुट्टिमे । रत्नखनौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप : । पुं० रत्नमयगृहे ॥

मणिमध्यम् । न० बृहती ८ छन्दोभेदे । मणिबन्ध ॥ लक्षणंयथा । स्यान्मणिमध्यं चेद्भसजा: । यथा । कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा । चित्रपदाभोनन्दसुतश्चारुनन्नर्तकरसुख : ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्वतविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्नभूषिते ॥ पुं० तीर्थस्थे नगविशेषे पर्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयुक्तगृहे ॥

मणिमाला । स्त्री० हारे । मौक्तिकादिग्रथितहारे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौ मणिमालाछिन्नागुहवक्त्रैः ॥ यथा । प्रह्वामरमौलौरत्नोपलक्लृप्ते ॰ बालप्रतिबिम्बाशोभामणिमाला । गोविन्दपदाब्जे राजीनखराणामास्तांममचित्ते ध्वान्तं शमयन्ती ॥ मणीनां॰ मा ला॰ मालेवया ॥

मणिरागम् न० हिङ्गुले ॥

मणिल : । पुं० नागविशेषे ॥ मणिरस्यास्ति । अस्मिन्नर्थे पिच्छादित्वादिलच् ॥

मणिसर : । पुं० हीरके ॥

मणिबीज : । पुं० दाडिमवृक्षे ॥

मणिसर : । पुं० मुक्ताहारे ॥

मणी । स्त्री० मणी ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्रकान्ते ॥ पुं० मत्स्यरङ्कखगे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसुमे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ : । पुं० पक्वान्नविशेषे । मठे । माठ० इ० भा० ॥ मण्ठते । मठि शोके । शोकाद्याध्यानम् । पचाद्यच् ॥

मण्ड : । पुं० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषायाम् ॥ सारे ॥ पिच्छे । दर्दुरे ॥ भक्तादिभवरसे ॥ तल्लक्षणं यथा भक्तैर्विनाद्रवोमण्ड : पेयं भक्तसमन्वितम् ॥ मण्डिचाम्लमन्नपंतिधि

मण्डनता । स्त्री॰ प्रसाधनत्वे ॥
मण्डप : । पुं॰ न॰ जनाश्रये । जन विश्रामसद्मनि ॥ मण्डनम् मंडि । घञ् । मण्ड पाति । पा रक्षणे । आतोऽनुपसर्गेक : ॥ देवादिद्सद्मनि ॥ त्रि॰ मण्डपानकर्त्तरि ॥ मण्ड पिबति । पा॰ । क : ॥
मण्डपी । स्त्री॰ निष्पाव्याम् ।
मण्डयन्त : । पुं॰ नटे ॥ बधूसमूहे । अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायांहर्षेच । तृभूव हिवसीत्यादिना॰ झच्॰ सचचित्॥
मण्डयन्ती । स्त्री॰ योषिति । बधूाम् । नव्याम् ॥ जित्वात्ङीष् ॥
मण्डयमान : । त्रि॰ मण्डनंकुर्वाणे ॥ मण्डयति॰ तच्छील : । मंडि॰ । ताच्छील्यवयोवचनशक्तिषुचानश् ॥
मंडरी । स्त्री॰ चुर्चुर्याम् ॥
मंडल : । पुं॰ कुक्कुरे ॥ सर्पभेदे ॥ न॰ परिधौ । चन्द्रसूर्ययोर्वेष्टिवेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमंडले ॥ य॰वातेनमंडलीभूता: सूर्या: चन्द्रमसो : करा: । मालाभाव्योम्नितन्वन्ते परिवेश : प्रकीर्तितइति ॥ चक्रवाले । मंडलाकारेणपरिणतिसमूहमात्रे ॥ चतुरस्रादौ ॥ यथा । चतुरस्रंत्रिकोणंवाथवर्त्तुलंचार्द्धचन्द्रकम् । कर्तव्यमानुपूर्व्येणबाह्याणादिषुमंडलमिति ॥ कोठरोगे । मंडलवत् कुष्ठे ॥ देशे । समन्ताद्विंशतियोजने । चत्वारिंशद्योजनेवादेशइतिकेचित् ॥ द्वादशराजके ॥ द्वादशराजमु द्वादशराजमंडलंतुकामन्दकेनोक्तं । यथा । अरिमित्रमरेर्मित्रंमित्रमित्रमत : परम् । तथारिमित्रमित्रश्चविजिगीषो : पुर : स्थिता : ॥ पार्ष्णिग्राह : स्मृत : पश्चात्ताक्रन्दस्तदनन्तरम् । आसारावनयोश्चैवविजिगीषोस्तुपृष्ठत : मंडलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर : । अनुग्रहेसंहतयो : समर्थोव्यस्तयोर्वधे ॥ मंडलाद्वहिरेतेषामुदासीनोबलाधिक : । अनुग्रहेसंहतानांव्यस्तानांचवधेप्रभु : ॥ पश्चविजिगीषो : पुर : सरा : । पार्ष्णिग्राहाक्रान्दपार्ष्णिग्राहासाराक्रान्दासारा श्चेतिपृष्ठतश्चत्वार : । मध्यमोदासीनौद्वौ । विजिगीषुरेकश्चेत्येवंद्वादशराजमंडलम्भवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते । गदायुद्धेगतिभेदे ॥ धन्विनांस्थानपञ्चकान्तर्गतस्थितिविशेषे ॥ यथा । मंडलाकारपादाभ्यांमंडलंस्थानमीरितम्॥ व्यायनसाध्यगन्धद्रव्ये ॥ व्यूहविशेषे ॥ यथा । तिर्यग्वृत्तिस्तुदंड:स्याद्भोगोन्वाहत्तिरेवच । मंडलंसर्वतोवृत्ति:पृथग्वृत्तिरसंहत: ॥ मंडयति । मडि॰ । वृषादित्वात्कल: ॥ मंड

भूषांलाशिवा । मंडते॰ इतिवा ॥ यद्वा । मंडसत्वस्य । सिध्मादित्वा न्लच् ॥ त्रि॰ निघर्षे । विम्बे ॥
मण्डलकम् । न॰ बिंबे ॥ कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पुं॰ कुक्कुरे ॥ मण्डलमिव । इवेप्रतिकृतावितिकन् ॥
मण्डलनृत्यम् । न॰क्लीबे । मण्डलाकारनृत्ये ॥
मण्डलपत्रिका । स्त्री॰ रक्तपुनर्नवायाम् ॥
मंडलसङ्कम : । पुं॰ राशिसङ्क्रमे ॥
मंडलाग्रः । पुं॰ कृपाणे । खड्गे ॥ मंडलमग्रमस्य ॥
मंडलायितम् । न॰ वर्तुले ॥
मंडलाधीशः । पुं॰ मंडलेश्वरे । मध्यमे ॥
मंडलिका । स्त्री॰ परिधौ ॥ मंडलात् स्वार्थिकः । कात्पूर्वस्येकारः । मंडल्याम् ॥ स्वार्थिके॰ वैष : ॥
मण्डली । पुं॰ भुजङ्गे ॥ विडाले ॥ नाग्यके ॥ गोनासे॰ सर्पे ॥ वटवृक्षे ॥
मण्डली । स्त्री॰ मण्डलाकारेणपरिणतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीष् ॥
मण्डलेश : । पुं॰ एकजन्मनि । भवापते । मण्डलेश्वरे ॥ शाण्डवादेव्या : स्थाने ॥ मण्डलस्यईश : ॥
मण्डलेश्वर : । पुं॰ नृपान्तरे ॥ भूम्येकदेशाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपश्चच । वीराजातस्कृतगुण : सएवमण्डलेश्वर : ॥ मण्डलस्यपरिमितादिकुपशदेशस्यईश्वर : ॥
मण्डहारक : । पुं॰ शौण्डिके ॥ मण्डं सुरामरसंहरति । हृञ्॰ । कर्मण्यण् । स्वार्थेक : ॥
मण्डा । स्त्री॰ आमलक्याम् ॥ सुरायाम् ॥ ॥ मण्डि : मचाद्यजन्ताष्टाप् ॥
मण्डित : । पुं॰ बौद्धगणाधिपविशेषे ॥ त्रि॰ भूषिते ॥ मंडते । मण्डि॰ क्त : ॥
मण्डुक : । पुं॰ सद्यसे ॥
मण्डूक : । पुं॰ मूढवर्चसि । दर्दुरे । भेके ॥ शोणके ॥ मुनिविशेषे ॥ न॰ बन्धविशेषे ॥ मण्डयति॰ जलाशयम्॰ मंडतेवा । मडि॰ । शलिमण्डिभ्यामूकण् ॥
मण्डूकपर्ण : । पुं॰ पत्रोर्णे । श्योनाकवृक्षे ॥ शोणके ॥ मंडूकाङ्गवपर्णमस्य ॥ कपीतने ॥
मण्डूकपर्णी । स्त्री॰ मञ्जिष्ठायाम् ॥ ब्राह्म्याम् ॥ मोलिकिन्नाख्यौषधौ ॥ चादित्यभक्तायाम् ॥ मंडूकवत्पर्णमस्या : । पाककर्णेतिङीष् ॥
मण्डूकमाता । स्त्री॰ ब्राह्म्याम् ॥
मंडूका । स्त्री॰ मञ्जिष्ठायाम् ॥
मंडूकी । स्त्री॰ मंडूकपर्ण्याम् । दुष्टायां

पिति । भेकाम् । नाखाम् ॥ सूर्यभक्तायाम् ॥

मण्डूरम् । न० लौहमले । सिंहाणे । शिङ्घाणे ॥ ध्मायमानस्य लौहस्य मलं मण्डूरमुच्यते । यस्मिन्यद्गुणाः प्रोक्तास्तत्किट्टमपि तद्गुणम् ॥ शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम् । अधमं षष्टिवर्षीयं ततो हीनो विषोपमम् ॥ मण्डते । मडि० । खर्जूरादित्वादूरः ॥

मण्डोदकम् । न० चित्तरागे ॥ चारार्पणे । चाणिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाते ॥ अर्च्चिते ॥ शिष्टसम्मते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्गः । पुं० मुनिविशेषे । मेघे ॥

मतङ्गकेदारः । पुं० तीर्थविशेषे ॥

मतङ्गजः । पुं० गजे । हस्तिनि ॥ मतङ्गात्स्वार्थे जातः । जनी० । पञ्चम्यामजातानितिडः ॥

मतल्लिका । स्त्री० प्रशस्ते । मतं० मतिम्० अलति । अलभूषणादौ । ण्वुल् । पृषोदरादित्वात्साधुः । प्रशस्तः पुरुषः । पुरुषमतल्लिका । मतल्लिकायाः रूढिशब्दत्वात् प्रशंसावचनैश्चेति समासः ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तल्लक्षणं यथा । स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा । न्या० गौ० सूत्रम् । ६३ ॥ अस्यार्थः । दोषाभ्युपगमात् दोषमनुद्धृत्येत्यर्थः । यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोयमित्युक्ते शब्दोऽनित्यः कृतकत्वादिति साधितेऽन्येन विपक्षत्वाद्दोष इत्युक्ते असिद्धत्वात्तवापि हेत्वाभासोयमित्युक्ते सोयं मतानुज्ञया निगृहीतः स्यात् प्रतिपक्षमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् ॥ वृत्ति ॥ ६३ ॥

मतिः । स्त्री० इच्छायाम् । धियि । बुद्धौ । यस्य यत्कुशलं न्यस्तं मतिस्तारूपी भवेत् । स्मृत्याम् ॥ ज्ञाते मने ॥ मतिकरौषधं यथा । पाठावशीरकं कुष्ठमश्वगन्धाजमोदकम् । वचा त्रिकटुकस्यैवं समभागं चूर्णमुत्तमम् । ब्राह्मीरसे भावितश्च सर्पिर्मधुसमन्वितम् । मासाद्भक्षितं कुर्यान्मर्त्यं मतिं परामिति गरुडपुराणम् ॥ मन्यतेऽनया । मनज्ञाने । क्तिन् ॥ मतिर्मननं तर्को मन्तव्यविषय आदर इति छान्दोग्यमहाभाष्यम् ॥ अर्थे ॥ शाकभेदे इत्यमरटीकायां भरतः ॥ अतीतानुस्मृतिर्मतिः । शुभाशुभविचारज्ञा प्रज्ञा धीरैरुदाहृतेति विशेषः ॥

मतिगर्भः । त्रि० प्रतिभासारे ॥
मतिदा । स्त्री० ज्योतिष्मत्याम् ॥ शि
मृडीक्षुपे ॥
मतिभ्रम : । पुं० भ्रमे ॥ मतेर्भ्रमः ॥
मतिभ्रान्ति : । स्त्री० मतिभ्रमे । मि-
थ्यामतौ ॥ मतेर्भ्रान्ति : ॥
मतिमान् । त्रि० प्राज्ञे ॥
मतिविभ्रंस : । पुं० उन्मादरोगे ॥
मतेर्भ्रंसोनाशोयेन ॥
मतुवर्थीय: । पुं० मत्वर्थीयप्रत्ययेषु ॥
बाहुलकान्मतुवर्थशब्दाच्छ : ॥ शेषि
कान्मतुवर्थीयादितियथा ॥
मत्कुण : । पुं० मक्कनाइतिख्याते नि-
र्विषाणेभे । कालिकाप्रसादन्तो गजे ॥
नि : श्मश्रुपुरुषे ॥ उद्दंशे । रक्त
पायिनि । रक्ताङ्गे । मत्काश्रये०
कीटविशेषे । उड्डस० मांगुण०
खटमल० इ०भाषा ॥ नारिकेले ॥
जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पुं० निर्लोमयोनौ ॥
मत्कुणारि : । पुं० इन्द्राशने । भङ्गा
याम् ॥
मत्त : । पुं० प्रभिन्ने । घरन्मदेहस्ति
नि । गर्विते ॥ धुस्तूरे ॥ कोकिले ॥
महिषे ॥ त्रि० हृष्टे । मदिरानष्टे
॥ शौण्डे मादतिस्म । मदोहर्ष
: गत्यर्थसिद्धः । नध्याश्चेतिनत्वं ॥
मत्तकाशिनी । स्त्री० उत्तमनार्याम्
। परपर्पिन्याम् ॥ नत्ता० चौते

वकाशतेभाति । काशृदीप्तौ । कर्त्त
र्युपमानइतिणिनि : ॥
मत्तकासिनी । स्त्री० वरारोहायांयो
षिति ॥ मत्ते वकासते । कासृशब्द
कुत्सायाम् ० कासगतिशासनयोर्वा
। कर्त्तर्युपमानइतिणिनि : ॥
मत्तकीश : । पुं० हस्तिनि ॥
मत्तवारण : । पुं० प्रक्षिप्तपटकुञ्जरे ।
मत्तगजे । न० प्रासादवीथीगांवर
ण्डे । कोठिकावरंडा० इ०भा० ॥
अपाश्रये । प्राङ्गनावरणे ॥ पूगचूर्णे॥
मत्तमयूर : । पुं० अतिजगती १३ छ
न्द : प्रभेदे । यथा । वेदैरन्ध्रैर्म्तौस
यगामत्तमयूर : । यथा । लीला
नृत्यन्मत्तमयूरध्वनिकान्तम् ० नृ
त्यद्गोपामोदिपयोदानिलरम्यम् ।
रासक्रीडाइष्टसनागोपवधूभि : ०
कंसध्वंसीनिर्जनवृन्दावनमाप ॥
मत्तमातङ्ग : । पुं० दंडकप्रभेदे ॥ यथा ।
यादितोरागणाःस्त्रे घयायथदत्ता :
सर्वेमत्तमातङ्गनामामहादंडक : स
म्मतै० स्सामरेनं मनादायमोदायचै
तौयिषेक्षिप्रभोभारतीरीतिविश्रान्ति
भूमयंयरा : । थिस्फुरत्सद्गरप्राङ्ग
णेनागराजिमचीत्कारफूत्कारधारासु
मिसावधानोयथा० मन्नगाधीशगुह
प्रवृद्धेकवुद्धिप्रकाशप्रहसेहएद्रूतगा
स्त्वेऽपिनित्यवया ॥
मत्तमातङ्गलीलाकर : । पुं० दंडकप्र

सम्स्यान्दंवसेत् । अज्ञानतस्तदर्द्धम् । मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च । निवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यथा ॥ सफरसिंहतुण्डश्च तथा पाठीनरोहितौ । मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः ॥ प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया । यथाविधिनियुक्तञ्च प्राणानामपि चात्यये ॥ इति कौर्मे उपविभागे १६ अध्यायः ॥ अपि च । पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः । राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥ इति मनुः ॥ अनिवेद्य न भोक्तव्यं मत्स्यमांसञ्च यद्भवेत् । अत्र विष्टापयोमूत्रं यद्विष्णोरनिवेदितम् ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेण्याम् । खालु इ० इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्य मातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्य गन्ध इव गन्धो यस्याः । उपमानाच्चेति इत्त्वाभावश्छान्दसः ॥

मत्स्यगर्भः । पुं० मत्स्याण्डे ॥

मत्स्यघण्टः । पुं० मत्स्यघटितव्यञ्जनविशेषे । गल्लयट ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यण्डिका । स्त्री० मत्स्यण्डाम् । राव० इ० भा० ॥ मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तरा इति वाग्भटः । मत्स्यण्डी व । स्वार्थे कन् ॥

मत्स्यण्डी । स्त्री० फाणिते राज० इ० काशीभाषा । तल्लक्षणम् ॥ यथा । इक्षोरसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः । मन्दं यत् स्यन्दते तस्मान्मत्स्यण्डीति निगद्यते ॥ मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता ॥ मत्स्याण्डाकारत्वात्० मत्स्यण्डी । शकन्ध्वादिः ॥ मदं मुदं वा स्यन्दते । स्यन्द् प्रस्रवणे । कर्म्मण्यण् । ङीप् । पृषोदरादिः ॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेण्याम् ॥ मत्स्या धीयन्ते । करणाधिकरणयोरिति धाञो ल्युट् ॥

मत्स्यध्वजः । पुं० मत्स्याकारे ध्वजे ॥ गिरिकामरूपप्रसिद्धे पर्वते ॥ यथा । मणिकूटाचलात् पूर्वं मत्स्यध्वजकुलाचलः । निर्द्दग्धो यत्र मदनो हरनेत्राग्निनायुनरित्यादि कालिका पुराणे ॥ ८१ अध्यायेऽस्ति ॥

मत्स्यनाशकः । पुं० कुररपक्षिणि । त्रि० मीननाशकर्त्तरि ॥

मत्स्यनाशनः । पुं० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् । क्षणभेदाम् । कटुकाम् ॥ मत्स्यानांपित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह : । पुं० मत्स्यव्यञ्जनान्तरे ॥ विशेष : प्रलेहे ॥

मत्स्यबन्धी । पुं० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमण्डक : । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकांकृत्वापर्यस्यमण्डकाकृतिम् । आसुरेणसमुत्स्विन्नां संयुक्तांधूलनैनतु । मत्स्यमण्डकइत्युक्त : सूदशास्त्रे विचक्षणै : ॥

मत्स्यरङ्क : । पुं० )
मत्स्यरङ्कक: । पुं० ) पक्षिविशेषे । मत्स्याशिनि । जलमद्गौ । मणीचके । माछराङ्गा-इ०गौ०दे०भा० । मछरङ्ग०द०दे०भा० ॥

मत्स्यराज : । पुं० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानांराजा । टच् ।

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानांवेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥

मत्स्यसन्तानिक : । पुं० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोद्गारैर्मनाग्घोवेसशरैस्सपक्तत: । साट्टक : कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उपरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० सोमपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् । यथा ब्राह्मीवयस्यामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरापस्मारव्रणदोषक्षयापहा । दूर्तिरासनिघण्टु : । गण्डदूर्वायाम् । हिलमोचिकायाम् । मत्स्यस्याक्षीवपुष्पमस्या : । मत्स्यशब्द : स्वाक्षाद्यङ्गेषु : । बहुव्रीहाविनिषच् । ङीप् ॥ मत्स्याक्षी० दूतिलोकप्रसिद्धौ यथा ॥ मत्स्याक्षीग्राहिणीशीतलाकुष्ठपित्तकफास्रजित् । लघ्वीतिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥

मत्स्यात्खग : । पुं० मत्स्यान्भक्षति । चट० । क्विप् । मत्स्याशासौखगश्च ॥

मत्स्यादनी । स्त्री० राजबल्याम् । सोमपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अट० । ल्युट् । क्विप् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारुयी०खालुइ०इ०गौ०देशभा० । मत्स्याआधीयन्तेऽत्र । डुधाञ् । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन: । पुं॰ मत्स्यरङ्कविहङ्गमे ॥

मत्स्योदरी । स्त्री॰ मत्स्यगन्धव्यञ्जनानारी ॥ कासमर्दकाचूर्णेनमत्स्यपिष्टैर्निर्योजिता । भर्जिताकटुतैलेनमत्स्योदरीदूतीरिता ॥

मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन: । पुं॰ गणिकारिकायाम् ॥ न॰ दध्यादिविलोडने । विलोडना॰ इ॰भा॰ ॥ मथति । मथ विलोडने । ल्युट् ॥

मथितम् । न॰ निर्जलेसरीवर्जितैर्विलोडितेदधिनि । सरोदकविहीनन्तुमथितं कफपित्तनुत् ॥ त्रि॰ आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म । मथ॰ । क्त: ॥

मन्थ: । पुं॰ मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ घञि : किरत् । कित्त्वान्नलोप: ॥ मन्थामन्थानदण्डेचवज्रे वातेपिस्मृत: ॥

मथुरा । स्त्री॰ मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । म थे॰ । मन्दिराणिमथितमीत्युरच् ॥ मधुरान्तविलोमेनमध्यमोनयदक्षरम् । यौनस्मरतिनोकिञ्चिन्मन्मध्य तन्मखीपरि ॥

मथुरेश: । पुं॰ श्रीकृष्णे ॥

मथूरा । स्त्री॰ मथुरायाम् ॥

मद: । पुं॰ रेतसि ॥ कस्तूर्याम् । गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद: । एतेमदामदान्धानांतएवहिसतांदमा: ॥ हर्षे । आमोदे ॥ इभदाने । गजगण्डस्थे । दाने ॥ यथा । करात्कटाभ्यांमेढ्राच्चनेत्राभ्यांचमदस्रुति: । कराद्वासारन्ध्राभ्याम् ॥ मद्ये । मादकद्रव्यसेवनजन्ये विकारविशेषे ॥ क्षैब्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिहिसर्व: इतिस्वाभाविकधर्मप्रकाशनं मद धर्म: उत्कर्ष: हितत्वं प्युत्कर्षविशेषाध्यारोप ॥ अथास्त्रीयविषयसेवनोन्मुखत्वे ॥ मदनम॰ माद्यत्यनेनवा । मदोऽप । मदोऽनुपसर्गइत्यप् ॥ मद्यतिवा । अच् ॥ मदे ॥ कल्याचप्रसूनि ॥ इतिधरणि: ॥ बुधैर्नीह: समर्थवदहङ्कारादभून्मद: । तल्लक्षणं यथा । अहंमहात्माधनवान्मत्तुल्य: कोऽस्तिभूतले । इतिचर्चात्तैचित्तेमद: प्रोक्त: सकोविदै: ॥

मदक: । पुं॰ मध्यासवे ॥

मदकट: । पुं॰ षण्डे । गोपतौ ॥

मदकार: । पुं॰ आनन्दजनके ॥

मत्स्यायन : । पुं॰ मत्स्यरङ्कविहङ्गमे ॥

मत्स्योदरी । स्त्री॰ मत्स्यस्य व्यञ्जनानारे ॥ कासमर्दं कच र्योनसत्स्यमिष्टिनि योजिता । भर्जिताकटुतैलेनमत्स्योदरीड्तीरिता ॥

मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन : । पुं॰ गणिकारिकायाम् ॥ न॰ दध्यादिविलोडने । विलोडना॰ ड॰भा॰ ॥ मथति । मथे विलोडने । ल्युट् ॥

मथितम् । न॰ निर्जलसरीवर्ज्जिते विलोडितेदधिनि ॥ सरोदकमिहीम न्तुमथितं कफपित्तनुत् ॥ चि॰भा॰ लोडिते ॥ घृष्टे । निघृष्टे ॥ मध्यतेस्म । मथे॰ । क्त : ॥

मन्थ : । पुं॰ मन्थानदण्डे । मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ इनि : कित् । कित्त्वान्नलोप : ॥ मन्थामन्थानदण्डे घञ् वार्तिक सूत्र : ॥

मथुरा । स्त्री॰ मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । मथे॰ । मन्दिवाशिमथिचतीच्छुरच् । मधुराचविलोमेनमध्यमौनयदक्षरम् । योनस्मरतिमीकेक्षि सम्प्राप्य तत्पुरीमरि ॥

मथुरेश : । पुं॰ श्रीकृष्णे ॥

मधूरा । स्त्री॰ मधुरायाम् ॥

मद : । पुं॰ रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद: । एतेमदामदान्धानांतएवहिसतांदमा: ॥ हर्षे । आमोदे ॥ द्रुमदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यांमेढ्राच्चनेत्राभ्यांचमदस्रुति : । कारान्नासारन्ध्राभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्यविकारविशेषे ॥ वैद्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमितिहिसर्व : इतिस्वाभाविकधर्मप्रकाशनंमदधर्म : उत्कर्षरहितत्वेष्युत्कर्षविशेषप्रत्यारोपे ॥ यथास्त्रीयदिवयसैवनोमखत्वं ॥ मदनम्॰ मादयत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गेइत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ आरुणास्यर्णि ॥ इतिधरणि : ॥ बुधे मौन : समभवदहङ्कारादभून्मद : । तस्यलक्षणंयथा । अहंमहात्माधनवान्मत्तुल्य : कोस्तिभूतले । इतियज्ज्ञायतेचित्तेमद: प्रोक्त : सकोविदै : ॥

मदक : । पुं॰ मध्वासवे ॥

मदकट : । पुं॰ षण्डे । गोपतौ ॥

मदकार : । पुं॰ आनन्दजनके ॥

मदकल : । पुं० अत्यर्थं दगजे । मदोत्कटे ॥ त्रि० मदेनाव्यक्तवचने । मदेनकलले । कलशब्दसङ्ख्यानयो : । अच् ॥ मदेसति० कलो ध्वनिर्यस्येतिवा ॥

मदगन्ध : । पुं० सप्तच्छदवृक्षे ॥ मदसदृशोगन्धोऽस्य ॥

मदगन्धा । स्त्री० सुरायाम् ॥ अतस्याम् ॥

मदगमना स्त्री० महिष्याम् ॥

मदघ्नी । स्त्री० पूतिकायाम् ॥

मदच्युत् । पुं० अमृतरसच्यावयितरि० अमृतरूपे सोमे ॥ मदं मदकरमानन्दकरं रसममृतरूपं च्यावयत्वसौ मदच्युत् ॥

मदन : । पुं० मन्मथे । कामदेवे ॥ [illegible] ॥ [illegible]रे ॥ पीतझीतके । मरुबके । वसन्ते । मयनफलइति भाषा ॥ मदनोमधुरस्तिक्तोवीर्योष्णोलेखनोलघु : । वान्तकृद्विद्रधिहर: प्रतिश्यायव्रणान्तक : ॥ रुक्षः कुष्ठकफानाहशोथगुल्मव्रणापह: ॥ सिक्थके । मधूच्छिष्टे । मैण० मोम० इतिचभाषा ॥ मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥ मापे ॥ खदिरे ॥ तस्मात्सम भवने ॥ आलिङ्गनविशेषे । तत्स्वरूपं यथा । नायकोनायिकाया : कण्ठे हस्तं दत्वा० द्वितीयहस्तं तस्या मध्यदेशे दत्वा यदाक्षिपति० इति कामशास्त्रम् ॥ मदयति । मदीहर्षग्लेपनयो : । ल्यु : ॥ म० लि ॥

मदनकाकुरव : । पुं० पारावते ॥

मदनष्टकम् । न० छन्दःसुसप्तमके ॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथमं कुरुषट्कलमत्र कुण्डलमिह मध्ये वसुतुरगधरं सन्तापहरम्० दशवसु भुवनाष्टभिरचरचरणमभिमतविरामोयदिरचितं कविवलयहितम् फणिनायकभणितं जगणविरहितं चत्वारिंशत्कलकलितं भुवनैमहितम्० हसरसनिवहं तन्मदनगृहं नरपतिसदृशपदं गुरुशोकगदम् ॥ यथा । विरहानलतप्तमासीदतिसुमारधितमलिनदलतल्पतले नयनसलिलमलि० करतलकलितकपोलं गलितनिचोलं नयतिसततमतिद्रिनिशाम निमेषदृशा । नसखीमभिनन्दति रतमनुविन्दति निन्दतिहिमकर करनिकरं परितापकरम्० मनुते हृदिभारं मुक्ताहारं दिवसनिशाकरहीनमुखी जीवितविमुखी ॥

मदनगोपाल : । पुं० श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री० चैत्रशुक्लचतुर्दश्याम् ॥

मदनत्रयोदशी । स्त्री० चैत्रशुक्लत्रयो-

दश्याम् ॥

मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्या-
म् ॥

मदनपाठक: । पुं० कोकिले ।

मदनभवनम् । न० लग्नात्सप्तमस्था
ने ॥

मदनमोहन: । पुं० श्रीकृष्णे ॥

मदनरस: । पुं० मल्लारे ॥

मदनललिता । स्त्री० षष्टिसंख्यकच्छ-
न्द: १६ प्रभेदे । म्भौ न्भौ गो मदन
ललिता वेदै: षड्भिर्ऋतुभि: । यथा ।
विभ्रष्टस्रग्गलितचिकुरा धौताधर-
पुटा० म्लायत्पत्रावलिकुचतटोच्छ्व
सोर्मिसरणा । राधात्यर्थं मदन
ललितान्दोलालसवपु: । कंसा-
रातिरतिरससचोचकितचटुलाम् ॥

मदनलव: । पुं० प्रस्तांशे । मदनस्य
लव: ॥

मदनशलाका । स्त्री० कामोद्दीपकभे-
षज्ये । सारिकायाम् । कोकिला
याम् ॥

मदनसारिका । स्त्री० पक्षिप्रभेदे । सा
रिकायाम् । चित्रलोचनायाम् । सा
लिक् । इ० मी० भा०

मदना । स्त्री० सुरायाम् ।

मदनायक: । पुं० कोद्रवे ॥

मदनाङ्कुश: । पुं० नखे ॥ लिङ्गे ।

मदनाडी । स्त्री० गजदानशिरायाम् ॥
तायमानायतास्थास: । करात्कटा-
भ्यां भिद्यान्तनीनाभ्यां सुमदच्युतिरि-
ति ॥

मदनायुध: । पुं० भगे ॥ योनौ ॥

मदनायुध: । पुं० कामदहिशुभे ॥

मदनालय: । पुं० कुसुमधनुषोमन्दि
रे । स्मरागारे । भगे । मदनभव-
ने ॥

मदनावस्था । स्त्री० उद्वेगरूपायांका
मावस्थायाम् ॥ कथंतस्यालाभो भ-
विष्यतीति ॥

मदनी । स्त्री० सुरायाम् ॥ कस्तूर्या-
म् । अतिमुक्तके ॥

मदनीय: । त्रि० मदकारिणि । मदय
ति । मदी० । कृत्यल्युटोबहुलमि
तिकर्तरि अनीयर् ॥

मदनीया । स्त्री० धातक्याम् ॥

मदनेच्छाफल: । पुं० राजाम्रे ॥

मदनोत्सव: । पुं० सुवसन्ताख्ये । दोला
कायाम् । होली० इ० भा० ॥

मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥

मदप्रयोग: । पुं० करिणांमदोद्गमे ।
मदस्रावे ॥

मदनभञ्जनी । स्त्री० शतमूल्याम् ॥

मदमूढबुद्धि: । त्रि० मदेनविपरीतम
तौ ॥ मदमूढबुद्धिषुविवेकिताकु-
त: ॥

मदयन्तिका । स्त्री० मल्लिकायाम् ।

मदयन्ती । स्त्री० मल्लिकायाम् ॥ वनम
ल्लिकायां ।

मदयिता । त्रि॰ मादके । मदयति । मदी॰ । लेट : भव ॥
मदयित्नु : । पुं॰ कामदेवे । शौण्डिके । मेघे ॥ न॰ मद्ये ॥ मदयति । हर्षयति॰ ग्लेपयति वा । मदी॰ । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नु- चिति॰ इत्नु च् । णेरयादेश : ॥
मदलेखा । स्त्री॰ उष्णिक् ७ छन्द : प्रभेदे ॥ सम्गा : स्यात्मदलेखा । यथा : रक्षे बाहुविलम्बाद्दन्तोन्मत्तम दलेखा । लग्नाभूत्सुरभ्यचौकस्तूरी- रसचर्चा ॥
मदविक्षिप्त : । पुं॰ मत्तहस्तिनि ॥
मदव्यायाम : । पुं॰ मदाधिक्ये ॥
मदशाक : । पुं॰ उपोदकाम् ॥
मदसार : । पुं॰ तूलवृक्षे । ब्रह्मकाष्ठे ॥
मदस्थलम् । न॰ )
मदस्थानम् । न॰ )मद्यपानस्थले । शुण्डायाम् । पानगृहे ॥
मदहस्तिनी । स्त्री॰ महाकरञ्जे ॥
मदहेतु : । पुं॰ धातकाम् । मदस्य- कारणे ॥
मदाढ्य : । पुं॰ तालवृक्षे ॥ त्रि॰मद युक्ते ॥
मदाढ्या । स्त्री॰ लोहितक्रियाध्याम् ॥
मदातङ्क : । पुं॰ मदात्ययरोगे ॥
मदात्यय : । पुं॰ मद्यपानजन्यरोगविशेषे । पानात्यये । मदव्याधौ ॥

निदानानितु । विषस्ययेगुणाद्दृष्टा : सन्निपातप्रकोपणा : । तएव- मद्येदृश्यन्ते विषे तुबलवत्तरा : ॥ तस्मादविधिपीतेनतथामात्राधिकेनच । युक्तेनचाहितैरन्नै रकालसेवितेनच. मद्येनखलुजायन्ते मदात्ययमुखागदा : । अविधिप्रयुक्तमद्य- विकारान्तरमप्युत्पादयतीत्याह । निर्भुक्तएकान्ततएवमद्यं निषेव्यमाणं मनुजेननित्यम् । उत्पादयेत्कष्टतमान्विकारानुत्पादयेच्चापिशरीरभेदम् ॥ देव्यन्तरमप्याह । क्रुद्धेनभीतेनपिपासितेनशोकाभितप्तेनबुभुक्षितेन । व्यायामभाराध्वपरिक्षतेनवेगावरोधाभिहतेनचापि । अत्यम्लभक्ष्यावततोदरेणसाजीर्णभुक्तेनतथाऽबलेन । उष्णाभितप्तेनच सेव्यमानं करोतिमद्यं विविधान्विकारान् ॥ तेवविकाराअन्यान्तरेज्ञातव्या : । चिकित्सातु । मद्योत्थानान्तुरोगाणांमद्यमेवहिभेषजम् । यथाद्दहनदग्धानांदहनं स्वेदनं हितम् ॥ मिथ्याविहितमद्येनयोव्याधिरुपजायते । मद्ये नैवनिपीतेनमद्यो नसहशाम्यति ॥ विशेषोन्यत्रद्रष्टव्य : ॥
मदामद : । पुं॰ परमेश्वरे । आत्मनि । आत्माहिसमदोऽमदश्च॰सहर्षोऽहर्षश्च॰विरुद्धधर्मवानतोदेशि

हर्षं च प्रीणनं यस्यां मत्वा शोकप्रमापहम् । प्रागल्भ्यप्रतिभापुष्टिवीर्यतुष्टिस्वरप्रदम् ॥ अपिच । सम्यग्विधिविधानेनसुसमाहितचेतसा । पिबन्तिमदिरांमर्त्त्याअमर्त्त्याएवते क्षितौ ॥ आकृतिच्छन्दः २२ प्रभेदे ॥ यथा । सप्तभकारयुतंच गुरुणंदितियमुदारतरामदिरा । यथा । माधवमासिविकस्वरकेसरपुष्पलसन्मदिरामुदितैर्भ्रमरकुलैरुपगीतनवैनवमालिनमालिकलामिलयम् । कुञ्जगृहोदरपल्लवकल्पितसल्पमनल्पमनोहरमंगभवमाधविकामृदुनर्त्तनयामुनवासकृतोपगमा ॥ माद्यत्यनया । मदीरयं । इषिमदिमुदीत्यादिनाकिरच् ॥ मत्तखञ्जने ॥

मदिराची । स्त्री॰ मत्तनेत्रायाम् । मदिरावदक्षिणीयस्याः सा । यथा । अविदितसुखदुःखं निर्गुणं वस्तु किञ्चिज्जडमतिरिहकश्चिन्मोक्षइत्याचचक्षे । ममतुमतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराचीनीविमोक्षोहिमोक्षः ॥ इतिपिटोक्तिः ॥

मदिरागृहम् । न॰ गञ्जायाम् । मद्यसंधानगृहे ॥ मदिरायाः गृहम् ॥

मदिरासखः । पुं॰ आम्रवृक्षे ॥

मदिष्ठा । स्त्री॰ मदिरायाम् ॥

मदी । स्त्री॰ चषकवस्तुनि ॥ कृष्यङ्गे ॥

मदीयम् । त्रि॰ मदकरे । हर्षोत्पादके । मदीयं सरः इतिवेदवर्णनात् । मामके ॥ ममेदम् । छः । मपर्यन्तस्यमादेशः ॥

मदोत्कटः । पुं॰ अनामदेहस्तिनि । मदकले ॥ मदेनदानेनाम्बुना॰ उत्कटः मत्तः ॥ त्रि॰ मदमत्ते ॥

मदोत्कटा । स्त्री॰ मदिरायाम् । मदेनोन्मत्तायाम् । मदेनउत्कटा ॥

मदोदग्रः । त्रि॰ मदोन्मत्ते ॥

मदोद्या । स्त्री॰ आर्यायाम् ॥

मद्गलप्रायः । त्रि॰ मद्गलनायजीवने ॥ मद्गलाः प्रायायस्य ॥

मदोद्धतः । त्रि॰ मत्ते ॥ मदः पौरुषादिधर्मः तेनउद्धतः ॥

मद्गुः । पुं॰ कारण्डवे ॥ जलकाके ॥ मज्जति । टुमस्जोशुद्धौ । मस्जेर्गुः । न्यङ्क्वादित्वात्कुत्वम् । संप्रसारणमेव वा । ब्राह्मणेनअम्बष्ठभार्यायांजनिते ॥

मद्गुरः । पुं॰ मगुरी॰ मागुर॰ इ॰ ख्यातेमत्स्ये । मज्जति । टुमस्जो॰ । मद्गुरादयश्चेतिनिपातितः । यद्वा । माद्यति । मदी॰ । मद्गुरादयश्चेत्युरच्॰ धातोर्गुरादेशः ; मद्गुरोवातघ्नश्चोवृष्य : कफकरोलघुः ॥ मद्गुरः खण्डरहितः कटुतैलेसुभर्जितः । माणिमन्थनिशायुक्तोहिङ्गुनाधूपितोरसः । मद्गुरो॰

मधुकृत् । पुं॰ भ्रमरे ॥ मधुकरोति । कृ॰क्विप् ॥ मधुकर मक्षिकायाम् ॥

मधुकीटः । पुं॰ भृङ्गे । भ्रमरे ॥

मधुकोषः । पुं॰ मधुमक्षिकाभिः कृतमध्वाधारे । मधुचक्रे॰इ॰भा॰ ॥

मधुक्रमः । पुं॰ मधुपानाहृत्तौ । श्वनमधुपानक्रमे । मधुवारे । मधुनः क्रमः ॥

मधुक्षीरः । पुं॰ खर्जूरवृक्षे ॥

मधुखर्जूरिका । स्त्री॰ मधुकर्कटिकायाम् । कोलकर्कटिकायाम् । माध्वीमधुरायाम् ॥

मधुगन्धः । पुं॰ बकुले ॥

मधुगायनः । पुं॰ कोकिले ॥

मधुगुञ्जनः । पुं॰ शोभाञ्जनवृक्षे ॥

मधुघोषः । पुं॰ कोकिले ॥

मधुच्छदा । स्त्री॰ मयूरशिखायाम् ॥

मधुच्छन्दाः । पुं॰ ऋषिविशेषे । विश्वामित्रपुत्रे ॥

मधुच्युत् । त्रि॰ मकरन्दस्राविणि ॥

मधुजम् । न॰ सिक्थके ॥

मधुजम्बीरः । पुं॰ मधुरजम्बीरे ॥

मधुजा । स्त्री॰ पृथिव्याम् ॥ मधोर्जाता । जनी॰ । डः ॥ मधुरात्वेतायाम् । सितायाम् ॥

मधुजित् । पुं॰ विष्णौ । मधुंदैत्यविशेषम्॰ यजैषीत् । जि॰ । भूतस्-

द्विषतिक्विप् । तुक् ॥

मधुतृणः । पुं॰ न॰ इक्षौ ॥

मधुत्रयम् । न॰ मधुत्रये ॥

मधुदीपः । पुं॰ कामदेवे ॥

मधुदूतः । पुं॰ आम्रवृक्षे ॥

मधुदूती । स्त्री॰ पाटलावृक्षे ॥

मधुद्रुः । पुं॰ भ्रमरे ॥

मधुद्रवः । पुं॰ रक्तशिग्रौ ॥

मधुद्रुमः । पुं॰ मधूके । गुडपुष्पे । महुवा॰इ॰भा॰ ॥ मधुनामाद्रुमः ॥

मधुद्विट् । पुं॰ विष्णौ ॥

मधुधातुः । पुं॰ स्वर्णमाक्षिके ॥

मधुधूलिः । स्त्री॰ खण्डे । खांड॰इ॰भा॰ ॥

मधुधेनुः । स्त्री॰ दानार्थमध्वादिनिर्मितसवत्सायां गवि ॥

मधुनाडी । स्त्री॰ मध्वाधारच्छिद्रे ॥

मधुनारिकेलः । पुं॰ माध्वीकफले । मधुफले । बहुकूर्चे । दृढफले । मीठानारल॰इ॰गौ॰दे॰भा॰ । एरनारिकेल॰इ॰कोंकणदेशभा॰ ॥ माध्वीकनारिकेरं फलमतिमधुरं दुर्जरं जन्तुकारि स्निग्धं वातातिसारभ्रमशमनमथध्वंसनं वह्निदीप्तेः । आमश्लेष्मप्रकोपं जनयति कुरुते चारुकान्तिं बलपुष्टिं यद् देहस्य धत्ते घनमदनकलावर्धनं पित्तनाशम् ॥

मधुनी । स्त्री॰ क्षुपविशेषे । धृतमण्डायाम् । वायसोल्याम् । सुमधु-

पतम् । मनन्नाने । फणिपाटीच्यु: धत्वान्तादेश : ॥ पुं०न०सार्द्धीकम- र्थे ॥ पुष्परसे । मकरन्दे । कुसुमा सवे । चौद्रे । माचिके । पुष्पास- वे । पवित्रे । मिल्ये । भरटीधान्ये ॥ मचिकाभरटीभङ्गवातपुष्परसोद्भव- म् । मधुशीतलघुस्वादुरूक्षं ग्राहि- विलेखनम् ॥ चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् ॥ सौकुमार्यकरं- सूक्ष्मं परं स्रोतोविशोधनम् । कषा यामुरसंह्लादिप्रसादजनकं परम् ॥ वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं ह- रेत् । कुष्ठार्शः कासपित्तास्रकफ- मेहक्लमक्रमीन् ॥ मेदस्तृष्णावमि- श्वासहिक्कातीसारविग्रहान् । दाह चतचयांस्तत्तु योगवाह्यल्पवातल- म् ॥ माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं- छात्रमित्यपि । चार्घ्यमौद्दालकं दा लमित्यष्टौ मधुजातय : ॥ पद्मास्य- रूपं विस्मयं स्वस्थानेभ्यो मिभिः ॥ नवं मधु भवेत्पुष्टौ नातिश्लेष्म परं स रम् । पुराणं ग्राहकं रूक्षं मेदोघ्नमति लेखनम् मधुन: शर्करायाश्च गुड- स्यापि विशेषत : । एकसंवत्सरेतीते पुराणत्वं स्मृतं बुधै : ॥ विषपुष्पाद- पिरसं सविषा भ्रमरादय : । गृहीत्वा मधुकुर्वन्ति तच्छीतं गुणवन्मधु । वि पान्वयात्तदुष्णत्वे शोष्णेन वा- सर । उष्णार्त्तं कोपकानि च या तं-

विषसमं मधु ॥ मकरन्दस्यमद्यस्यमा चिकस्यापिवाचक : । अर्द्धर्चादिग णे पाठात्पुन्नपुंसकयोर्मधु : ॥

मधु : । स्त्री० जीवन्तीवृक्षे ॥

मधुक : । पुं० खगविशेषे । औवदम चिचि ॥ वल्लभ्यन्तरे । मधुयष्ट्या म् ॥ वंशपरम्पराशंसके । मागधे ॥ न० क्लीतके । मधुयष्टिकायाम् । त्रपुणि ॥ मध्विव । इवे प्रतिकृता विति कन् ॥ यद्वा । मधु० मधुरं- कायति । कै० घातुकृतिक : ॥

मधुकण्ठ : । पुं० कोकिले ।

मधुकार : । पुं० भ्रमरे । मधुपे । म धु करोति० तच्छील: । कृञोहेतुता च्छील्यानुलोम्येषु टः ॥ भृङ्गराजे । भङ्गरा० भृ० भा० ॥ कामिनि ॥

मधुकर्कटिका । स्त्री० मिष्टबीजपूरे । मधुकर्कट्याम् । मधुकर्कटिकास्वा द्वीरोचनी शीतलागुरु : । रक्तपित्त- क्षयश्वासकासहिक्काभ्रमापहा ॥ म धु खर्जूरिकायाम् ॥

मधुकर्कटी । स्त्री० मधुकर्कटिकाया म् मधुकाकरीति०भाषा ॥

मधुका । स्त्री० मधुपाल्याम् मधु पर्ण्याम् । मधुयष्ट्याम् । टाप् ।

मधुकुक्कुटिका । स्त्री० )
मधुकुक्कुटी । स्त्री० ) जम्बीरविशे षे । मातुलुङ्गायाम् । सुगन्धायाम् । गिरिजायाम् । पूतिपुष्पिकायाम् ॥

मधुकृत्। पुं॰ भ्रमरे ॥ मधु करोति । कृञ्॰ । क्विप् ॥ मधुकरमक्षिकायाम् ॥

मधुकैटभः । पुं॰ भ्रङ्गे । भ्रमरे ॥

मधुकोषः । पुं॰ मधुमक्षिकाभिः कृतमध्वाधारे । मधुछत्तो॰इ॰ भा॰ ॥

मधुक्रमः । पुं॰ मधुपानाहव्ये । श श्वन्मधुपानक्रमे । मधुवारे। मधुनः क्रमः ॥

मधुक्षीरः । पुं॰ खर्जूरवृक्षे ॥

मधुखर्जूरिका । स्त्री॰ मधुखर्जूरिकायाम् । कोलकर्कटिकायाम् । माधवीमधुरायाम् ॥

मधुगन्धः । पुं॰ बकुले ॥

मधुगायनः । पुं॰ कोकिले ॥

मधुगुञ्जनः । पुं॰ शोभाञ्जनवृक्षे ॥

मधुघोषः । पुं॰ कोकिले ॥

मधुच्छदा । स्त्री॰ मयूरशिखायाम् ॥

मधुच्छन्दाः । पुं॰ ऋषिविशेषे । विश्वामित्रपुत्रे ॥

मधुच्युत् । त्रि॰ अमृतस्राविणि ॥

मधुजम् । न॰ सिक्थके ॥

मधुजम्बीरः । पुं॰ मधुरजम्बीरे ।

मधुजा । स्त्री॰ पृथिव्याम् ॥ मधोर्जाता । जनी॰ । डः ॥ मधुखर्जूराम् । सितायाम् ॥

मधुजित् । पुं॰ विष्णौ ॥ मधुंदैत्यविशेषम् जयति । जि॰ । सत्सु-

द्विषेतिक्विप् । तुक् ॥

मधुतृणः । पुं॰ न॰ इक्षौ ॥

मधुत्रयम् । न॰ मधुत्रये ॥

मधुदीपः । पुं॰ कामदेवे ॥

मधुद्रुमः । पुं॰ आम्रवृक्षे ॥

मधुदूती । स्त्री॰ पाटलावृक्षे ॥

मधुद्रुः । पुं॰ भ्रमरे ॥

मधुद्रवः । पुं॰ रक्तशिग्रौ ॥

मधुद्रुमः । पुं॰ मधूके । गुडपुष्पे । महुवा॰इ॰भा॰ ॥ मधुनामाद्रुमः ॥

मधुद्विट् । पुं॰ विष्णौ ॥

मधुधातुः । पुं॰ स्वर्णमाक्षिके ॥

मधुधूलिः । स्त्री॰ खण्डे । खांडइ॰भा॰ ॥

मधुधेनुः । स्त्री॰ दानार्थमध्वादिनिर्मितसवत्सायांगवि ॥

मधुनाडी । स्त्री॰ मध्वाधारच्छिद्रे ।

मधुनारिकेलः । पुं॰ माधवीफले । मधुफले । मधुकूर्चे । दृश्यफले । सोहानारल॰इ॰गौ॰दे॰भा॰ । एतन्नारिकेल॰इ॰कोकणदेशभा॰ ॥ माधवीकनारिकेरंफलमतिमधुरंदृढं रंजनसंकारिस्निग्धंवातातिसारभ्रमशमनमथध्वंसनंवह्निदोषैः । बालक्षयप्रकोपं जनयतिकुरुतेचारुकान्तिंवलक्षस्थैर्यदेहस्यधत्तेधनमदनकलावर्धनंपित्तनाशनम् ॥

मधुनी । स्त्री॰ क्षुपविशेषे । घृतमण्डायाम् । वायसोल्याम् । सुमङ्ग

लायाम् । माकण्डहाता॰इ॰माक चाउली॰इ॰च॰गौ॰दे॰मा॰ ॥

मधुनेता । पुं॰ भ्रमरे ॥

मधुपः । पुं॰ भ्रमरे ॥ मद्यपे ॥ मधु-पिबति । पा॰ । आतोनुपसर्गे॰इ तिक: । पिबते: सुरासीध्वोरिति-नियमाङ्गटच् ॥

मधुपति: । पुं॰ श्रीकृष्णचन्द्रे ॥

मधुपर्क: । पुं॰ षोडशोपचारपूजा-ङ्गतषष्ठोपचारे ॥ तस्यप्रमाणं य था । दधिसर्पिर्जलंक्षौद्रं सितैताभि स्तुपञ्चभि: । प्रोच्यतेमधुपर्कस्तुस-र्वदेवौघतुष्टये ॥ असम्पुसर्वत : स त्य' सितादधिघृतंसमम् । सर्वेषा-मधिकंक्षौद्रं मधुपर्कंप्रयोजयेत् ॥ त ब्रवित्वाप्यपात्रे वारौकाश्ये तभवेन वा । ज्योतिष्टोमाश्वमेधादौपूर्वेचे-ष्टे प्रपूजने ॥ मधुपर्क: प्रतिष्ठोयं-सर्वदेवौघतुष्टिद: । धर्मार्थकाममो क्षासाधक: परिकीर्त्तित: ॥ मधु पर्क: सौख्यभोग्यतुष्टिपुष्टिप्रदाय-क: ॥ आज्यं दधिमधुमिश्रं मधुप र्कं निर्दुर्बुधा: । इतिच ॥ न॰दधि-संयुक्तमधुनि । महोदये ॥ मधुना पृच्यते । पृची॰ । घञ् ॥

मधुपर्क्य: । त्रि॰ मधुपर्कार्हे ॥ मधु पर्कमर्हति । दण्डादिभ्यइतियत् ॥

मधुपर्णिका । स्त्री॰ गम्भार्याम् ॥ नी लीवृक्षे ॥ मध्विव॰मधुरावित्वा॰-पर्णान्यस्या: । पाककर्णेतिङीष् । स्वार्थेकन् । ह्रस्व: ॥ सुदर्शनायाम् ॥

मधुपर्णी । स्त्री॰ गम्भार्याम् । नी-ल्योषधौ ॥ गुडूच्याम् ॥ मधुबीज पूरे ॥ वराहक्रान्तायाम् ॥

मधुपा । स्त्री॰ मद्यमायाम् ॥

मधुपाका । स्त्री॰ षड्भुजायाम् । खर्बूजा॰इ॰भा॰ ॥

मधुपायी । पुं॰ भ्रमरे ॥ त्रि॰मधुपा नकर्त्तरि ॥

मधुपालिका । स्त्री॰ गम्भार्याम् ॥

मधुपिपासु: । त्रि॰ मधुपातुमिच्छौ ॥ मधुपिपासु: । गम्यादित्वाद्वि-तीयासमास: ॥

मधुपीलु: । पुं॰ महापीलौ । राजपी लौ । महावृक्षे ॥

मधुपुरी । स्त्री॰ मथुरायाम् ॥

मधुपुष्प: । पुं॰ मधुद्रुमे ॥ रोध्रे ॥ शिरीषवृक्षे ॥ अशोकवृक्षे ॥ वकु-लवृक्षे ॥

मधुपुष्पा । स्त्री॰ दन्तीवृक्षे ॥ नाग-दन्तीवृक्षे ॥

मधुप्रिय: । पुं॰ बलदेवे । अच्युता-ग्रजे ॥ मधुमद्यंप्रियंयस्य: । भू मिजम्बाम् ॥ त्रि॰मद्यप्रिये ॥

मधुफल: । पुं॰ मधुनारिकेरे ॥ वि-कङ्कतवृक्षे ॥

मधुफलिका । स्त्री॰ मधुखर्ज्जूरिका-याम् ॥

मधुबहुला । स्त्री॰ वासन्तीलतायाम् ॥

मधुमार : । पुं॰ मात्रावृत्तान्तरे । सगणं विधायकगणं निधाय सुखसौख्यवाममधुमारनाम ॥ यथा । अयिमुञ्चमानमवहीवधान । भुजगाधिपेनभयनाशकेन ॥

मधुभित् । पुं॰ विष्णौ ॥

मधुमक्ष । त्रि॰ मधुपे ॥

मधुमक्षिका । स्त्री॰ सरघायाम् ॥ मधुमक्षिका ॥

मधुमज्जा । पुं॰ आखोटवृक्षे ॥

मधुमान् । त्रि॰ माधुर्यान्विते ॥

मधुमती । स्त्री॰ मूर्वायाम् । काश्मर्याम् ॥ नदीविशेषे ॥ तस्याजलगुणास्तु । चन्द्रभागगुणसाम्यदं च शं शिस्वमाधुमतमग्निदीपनम् । इति ॥ मध्वस्तिअस्याम् । मध्वादिभ्यश्चेतिमतुप् ॥ उपास्यनायिकाविशेषे ॥ यथा । तयामधुमतीसिद्धिर्यासिनाचसंशय : । देवर्षिटीधतभतं तद्यवधश्रामवल्लिधि । स्वर्गेमर्त्येचपातालेलयघमनुसिघ्नति । तस्यैवचेटिकाः सत्रनियन्ति नात्रसंशय : ॥ अपिच । यन्त्रानेषशृणोतियोजनशतादाविर्भवन्त्यग्रतालोतिवेदपुराणभारतकथागाथादयोनाङ्मया : । यत्नातिस्वयमिच्छयाशुचिपदै : शास्त्राविकाव्याविवालोकान्भ्राम्यतिपश्यतिस्फुट

रुचीरसमस्त्रलीभैरवी : । उष्णिक्छन्द : ७ प्रभेदे ॥ यथा । ननगिमधुमती । यथा । रविदुहितृतटे॰वनकुसुमतति : । व्यधतमधुमती॰मधुमथनमुदम् ॥

मधुमत् । पुं॰ विष्णौ । मधुं मथ्नाति । मदे॰ । क्विप्चेतिक्विप् ॥

मधुमथन : । पुं॰ विष्णौ ॥

मधुमल्ली । स्त्री॰ मालत्याम् ॥

मधुमस्तकम् । न॰ खाद्यविशेषे । परिभाष्यमेंं ॥

मधुमाक्षिकम् । न॰ स्वर्णमाक्षिके ॥

मधुमाध्वीकम् । न॰ मद्ये ॥

मधुमारक : । पुं॰ भ्रमरे ॥

मधुमूलम् । न॰ आलुके । मीठाआलु॰ गौ॰दे॰भा॰प्रसिद्धे । पिण्डमूले ॥

मधुयष्टि : । स्त्री॰ इक्षौ ॥

मधुयष्टिका । स्त्री॰ मधुकायाम् । मधुयष्ट्याम् । मुलहठी॰मुलेठी॰इतिख्यातौषधौ । मधुयष्टीव । इवे॰ तिकन् ॥

मधुयष्टी । स्त्री॰ मधुयष्टिकायाम् ॥ मधुनोयष्टी । गुणाम्पञ्चवत्याम् ॥

मधुर : । पुं॰ मिष्टरसे, गौल्ये । स्वादौ । रसज्ञेषु । गुल्ये ॥ तस्यगुणा : मधुर : पिच्छल : शीतोधातुस्तन्यबलप्रद : । चक्षुष्योवातपित्तघ्न : कुर्यान्नृल्यवजकमीन्

सोतियुक्तोज्वरश्वासगलगगंडादिरो
गकृत् ॥ अपिच । मधुरस्तुरसस्निग्धो
तिकेशान्वपुषः स्थौर्य्यबलौजवीर्यं
दायी । अतिसेवनतः प्रमेहशैत्य-
जडतामान्द्यमुखान्करोतिदोषा-
न् जीवकौषधौ ॥ रक्ताधियौ ॥
राजाम्रे ॥ रसोषौ । गुडे ॥ शाली
हैमन्तधान्ये । न० विषे ॥ वङ्गे ॥
त्रि० रसनाकर्षिणि । स्वादौ । म-
धुररसयुक्ते ॥ मधुमाधुर्य्यमस्यास्ति ।
ऊषसुषीतिरः ॥ मधुमाधुर्य्यं राति
वा । आतोनुपेतिकः ॥ प्रिये ॥
इक्षिमधुरंमधुमधुरंद्राक्षामधुरासि-
तातुमधुरैव । तस्यतदेवहिमधुरंय-
स्यमनोयत्रसंलग्नम् ॥
मधुरकः । पुं० जीवकौषधौ ॥ स्वा
र्थेकः ॥
मधुरकण्टकः । पुं० मत्स्यविशेषे । क
णायाम् ।
मधुरजम्बीरः । पुं० मधुजम्बीरे । रस-
द्राविणि , शर्करके ॥
मधुरत्वचः । पुं० धवे । पीतफले ॥
मधुरत्रयम् । न० दुग्धसितामाक्षिके-
षु ॥ सितामाक्षिकसर्पिःषु ॥
मधुरत्रिफला । स्त्री० द्राक्षाकाश्मर्य्यख
र्ज्जूरिफलेषु ॥
मधुरनिस्वना । स्त्री० मधुरस्वरयुक्ता
यांनार्याम् । मधुरोनिस्वनोय-
स्याः ॥



मधुरफलः । पुं० राजवदरे ।
मधुरमांसम् । न० क्षीरास्रते ॥ तद्वि
धानंयथा । घृताम्बुसेदितेमांसेश
ष्ठीचूर्णैविमि : क्षिपेत् । दुग्धस्वश
र्करोपेतंपश्चात्सौगन्धिकंक्षिपेत् ।
नातिसार्द्रं नातिशुष्कमिदंक्षीरास्र
तस्मृतम् ॥ क्षीरमृतंवृष्यरसंरोचनं
चातिशीतलम् । वातपित्तहरंब-
ल्यं सुस्निग्धमतिकोमलम् ॥
मधुरवल्ली । स्त्री० मधुबीजपूरे ॥
मधुरसः । पुं० इक्षौ । मधुमधुरो
रसोस्यास्मिन्वा ॥ तालवृक्षे ॥
मधुरसा । स्त्री० मूर्वायाम् ॥ द्राक्षा-
याम् ॥ दुग्धिकायाम् ॥ गम्भा
र्य्याम् ॥ मधुरसोस्याः ॥
मधुरस्रवा । स्त्री० पिण्डखर्ज्जूर्य्याम् ॥
मधुरा । स्त्री० शतपुष्पायाम् । सौं.
फ० इ० भा० ॥ मिश्रेयायाम् । शा
लिये । शीतशिवे । सलूफा० इ०
गौ० दे० भा० ॥ मधुरोरसोस्य
स्याः । अर्शआद्यच् ॥ मथुरापुर्य्या
म् ॥ यथा । इक्ष्वाकुकुलधर्मोयं मधुपु
रं मथुरावतः । शत्रुघ्नोमधुरांनाम पुरीं
तत्रचकारसः इति रघुवंशटीका
याम् ॥ मेदायाम् ॥ मधूल्याम्,
यष्टिकायाम् ॥ काकोल्याम् ॥ श
तावर्य्याम् ॥ वृहज्जीवन्त्याम् ॥ पा
लङ्कशाके ॥ मनोहरायाम् ॥
टाप् ॥

मधुराकृतिः । त्रि० सौम्यरूपे ॥

मधुराम्ल : । पुं० ) आम्रातके ॥
मधुराम्लक : । पुं० )

मधुराम्लफलः । पुं० रैफले । आरे ॥

मधुरालापा । स्त्री० शारिकायाम् ॥

मधुरालाबुनी । स्त्री० राजालाब्वाम् ।

मधुरिका । स्त्री० मिश्याम् । शालेये । शीतशिवे । भमसौफ० इ० भा० ॥ मधुरोरसोऽस्यस्याः : अच् । स्वार्थे कन् ॥

मधुरिपु : । पुं० विष्णौ ॥ मधोरसुरविशेषस्यरिपु : ॥

मधुरेणु : । पुं० कटभीवृक्षे ॥

मधुरोदक : । पुं० सप्तसमुद्रान्यतमसमुद्रे । जलसमुद्रे । स्वादूदके ॥

मधुलम् । न० आसवे । मद्ये ॥

मधुलग्न : । पुं० रक्तशोभाञ्जने ॥

मधुलता । स्त्री० शूलीतृणे ॥

मधूलिका । स्त्री० राजिकायाम् ॥

मधुलिट् । पुं० भ्रमरे ॥ मधुलेढि । लिह आस्वादने । क्विप् ॥

मधुलेही । पुं० भृङ्गे । भ्रमरे ॥

मधुलोलुप : । पुं० भ्रमरे ॥

मधुवटी । स्त्री० तीर्थविशेषे ॥

मधुवनम् । न० मथुरायाम् ॥ कदाचिन्मधुसंज्ञिनदैत्येनाधिष्ठितंयतः । ततोमधुवनंनामाख्यातमत्रमहीतले । पुण्यंमधुवनंतत्रसान्निध्यंनित्यदाहरेः ॥ मधोःवनम् ॥ किष्किन्धायां सुग्रीवस्यवनविशेषे ॥

मधुवल : । पुं० कोकिले ॥

मधुवल्ली । स्त्री० यष्टीमधुनि ॥ क्लीतनके ॥

मधुवार : । पुं० मधुक्रमे । पुन : पुनर्मधुपानपरिपाट्याम् । मधुपानावसरे ॥ मधुनोमद्यस्यवारोऽवसरः । मधुपानावृत्तिरित्यर्थः ॥

मधुवारुणी । स्त्री० मधुरूपायांवारुण्याम् ॥

मधुवीज : । पुं० दाडिमे ॥

मधुवीजपूरः । पुं० मधुरफलायाम् । महाफलायाम् । मधुकर्कट्याम् । मीठाबिजौरा० इ०भा० ॥

मधुवृक्ष : । पुं० मधुके । महुवा० इ० प्रसिद्धे ॥ मधुनामावृक्ष : ॥

मधुव्रत : । पुं० भ्रमरे ॥ मधुव्रतंभक्ष्यंयस्य ॥ यद्वा । मधुभक्षणव्रतयति भुङ्क्ते । कर्मण्यण् ॥

मधुशर्करा । स्त्री० मधुजातशर्करायाम् । सिताखण्ड० इ० गौ० दे० भा० प्र० द्रव्ये यथा । माध्वीसुतामधूत्पन्नामधुजामधुशर्करा । माक्षीकशर्कराचैवक्षौद्रजाक्षौद्रशर्करा ॥ यन्मधुयंयन्त्रसंपीडं तन्मधुपात्रात्शर्करा । विशेषादलवृष्याचसर्पिषंछर्दिर्वदिनाम् अपिच । मधुजाशर्करारूक्षाकफपित्तहरीगुरु : । छर्दीतीसारतृड्दाहरक्तघ्नतुवराहि

मीयः ॥

मध्यमेश्वरः । पुं॰ काशीस्थे शिवलिङ्गविशेषे ॥ शर्वाणीमध्यमाभिधे ॥ अचपर्वतीस्थानम् ॥

मध्ययवः । पुं॰ षट्श्वेतसर्षपपरिमाणे ॥

मध्यरात्रः । पुं॰ निशीथे । अर्धरात्रे ॥ मध्यरात्रिः । पूर्वापरार्धेतिसू॰ सर्वैकदेशः कालेनसमस्य ते नत्वक्षीव॰व्यापकस्य सामान्यार्थे ऽव्ययादिस्युक्तेः समासे॰ अहः सर्वैकदेशेत्यच् ॥

मध्यलोकः । पुं॰ पृथिव्याम् ॥

मध्यलोकेशः । पुं॰ नृपे । राज्ञि ॥ मध्यलोकानांमर्त्यानामीशः ॥

मध्यस्थः । त्रि॰ निकटे । मध्यवर्तिनि । विवदमानयोरुभयोरपिहितैषिणि ॥ उभयपक्षरहिते ॥ स्वार्थानिरोधेनपरार्थघटके ॥ यथा । एके सत्पुरुषाः परार्थघटकाः स्वार्थस्याविरोधेनमध्यस्थाः परकीयकार्यकुशलाः स्वार्थाविरोधिनये । तेऽमीमानुषराक्षसाः परहितंयैःस्वार्थतोऽन्यन्ते॰येतुघ्नन्तिनिरर्थकंपरहितंतेकेन जानीमहे । पुं॰ पुरुषे । अनेनुरुणा सुखदोःखमध्यस्थः । सुखेऽपिसुखेना ... [illegible]

मध्ये तिष्ठति । स्था॰ । कः ॥

मध्यस्थलम् । न॰ कटिदेशे ॥ यथा । कुचौमरिचसन्निभौनुरजमध्यमध्यस्थली यस्येतिमिरमञ्जरीसहचरीन रीनृत्यते । इति ॥

मध्या । स्त्री॰ मध्यमायाम् ॥ व्यवहारायाम् वृत्तौ ॥ नायिकाभेदे ॥

मध्याह्नः । पुं॰ अह्नोमध्यभागे । त्रिधाविभक्तदिनस्य मध्यभागे । पञ्चधा विभक्तस्याह्नस्तृतीयभागेवा ॥ अह्नो मध्यम् । सङ्ख्याविसायेतिज्ञापका त्समासः ॥

मध्येचित्तम् । अ॰ चित्तमध्ये ॥ मध्ये चित्तस्येतिविग्रहे॰ पारेमध्येषष्ठ्या वेति॰अव्ययीभावः॰ निपातनादेदंतत्वम् ॥

मध्वदः । पुं॰ कर्मफलभुजिजीवे ॥ मधुकर्मफलम् ॰ अत्ति । अद॰ । कर्मण्यण् ॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

मध्वाधारः । पुं॰ सिक्थके ॥

मध्वालुः । } न॰ कन्दविशेषे । मधुमध्वालुकम् । } न॰ रक्तालुकेरोमान्विते । दीर्घसुषिरेति॰ भा॰ । मोचालु इ॰ गौ॰ भा॰ ॥

मध्वासवः । पुं॰ मधूकपुष्पजातमद्ये । माधवके । मधुनि । माध्वीके ॥ मधूकपुष्पमधु । तस्यासवः ॥

मध्वासवणिक् । पुं॰ शौण्डिके ॥

सा । मधुनःशर्करा ॥
मधुशाख : । पुं० मधुष्ठीले ॥
मधुशिग्रु : । पुं० रक्तशोभाञ्जनवृक्षे । सुनगा० द्र० कार्ष्णादीव्याति ॥ मधुः मधुर: शिग्रु : ॥ मधुप्रधान : शिग्रुर्वा ॥
मधुशीर्षकम् । न० समितासिर्मितेप क्वानविशेषे ॥
मधुशेषम् । न० सिक्थके ॥
मधुश्रेणी । स्त्री० मूर्वायाम् । मधुम : श्रेणिरस्य ॥
मधुश्वासा । स्त्री० जीवन्तीवृक्षे ॥
मधुष्ठीलः । पुं० मधूकवृक्षे । महुवा इ० विख्याते ॥ मधष्ठीवति । ष्ठिवु निरसने । इगुपधेतिकः । पृषोदरादिः ॥ मधुष्ठीले गर्भेऽस्येतिवा ॥
मधुसख: । पुं० कामदेवे ॥
मधुसारथि : । पुं० कामदेवे ॥
मधुसिक्थकः । पुं० स्थावरविषभेदे ॥
मधुसुहृत । पुं० कामदेवे ॥
मधुसूदन: । पुं० भ्रमरे । वनमालिनि । श्रीकृष्णे । वैदिककर्ममार्गके भगवति० दुष्टनिग्रहकर्तरि ॥ मधुनामानमसुरंसूदितवान् ० सूदयति स्मवा । सूदक्षरणे । नन्द्यादित्वाल्ल्युः ॥ विष्णुकर्णमलोद्भवंतंमधुनामसहासुरम् । ब्रह्मणोपचितिंकुर्वन्नुजघानपुरुषोत्तमः ॥ तस्यतावद्धादेवतदासर्वेविमानवा : । मधु-

सूदनमित्याहुर्ऋषयश्चजनार्दनमिति भारते ॥
मधुसूदनी । स्त्री० पालक्कीशाके ॥
मधुस्रवः । पुं० मधूकवृक्षे ॥ मोरटलतायाम् ॥ न० तीर्थविशेषे ॥
मधुस्रवा । पुं० मधूकवृक्षे ॥
मधुस्रवा । स्त्री० जीवन्त्याम् । डोडीतिगुर्जरदेशभाषयाप्रसिद्धायाम् ॥ मूर्वायाम् ॥ हंसपद्याम् ॥ मधुयष्टिकायाम् ॥
मधुस्वर : । पुं० कोकिले ॥ मधुरःस्वरोयस्य : ॥ मधौस्वरोयस्यवा ॥
मधुहा । पुं० विष्णौ ॥ मधुंदैत्यविशेषं हन्ति । हन० । क्विप् चेतिक्विप् । ब्रह्मभ्रूणवृत्रेषुक्विबितिनियमस्प्रायिकत्वात् ॥
मधूक : । पुं० गुडपुष्पे । मधुद्रुमे । महुवा० इतिख्यातेवृक्षे ॥ अस्यगुणा : मधूकपुष्पंमधुरंशीतलंगुरुबृंहणम् । बलशुक्रकरंप्रोक्तंवातपित्तविनाशनम् ॥ फलंशीतंगुरुस्वादुशुक्रलंवातपित्तनुत् । अहृद्यंहन्तितृष्णास्रदाहश्वासक्षतक्षयान् ॥ तन्मस्यगुणास्तत्फलवत् । यथा । यस्ययस्यफलस्येहवीर्यंभवतियादृशं- म् । तस्यतस्यैववीर्येणमज्जानमभिनिर्दिशेत् ॥ तस्यलक्षणा : । मधुत्त्वक्लापिसमोन्नयग्रोधनरोपयो ॥ मधुरो० मन्यसेवा । मधु जायां

न० मलज्ञाने । उलूकादयश्चेमा धुः ॥ न० यष्टीमधुनि ॥ इ० रा० निर्घण्टः ॥

मधूकपुष्पम् । न० मधुद्रुमस्य कुसुमे ॥ मधुच्युतं स्याच्च मधूकपुष्पं संशोधितं केसरधूलिवर्जितम् । सम्यग्विलंश भसिताघृताभ्यां सजीरकं जीवनदं हि जीविनाम् ॥ हृद्यं हयोयं सुमधुरं मधूकं वातघ्नं कृ । पित्तप्रकोपशमनं च हृद्यं कच्छमुखप्रियम् ॥

मधूच्छिष्टम् । न० सिक्थके ॥ मधुन उच्छिष्टम् ॥

मधूत्थितम् । न० सिक्थके ॥

मधूत्सवः । पुं० चैत्रावस्थायाम् ॥

मधूपघ्नः । पुं० न० मथुरायाम् । ल वणपुरे ॥

मधूलः । पुं० जलजमधूके । मधू-लके ॥

मधूलकः । पुं० जलजमधूके जल मधुका० इतिभाषा । दीर्घपत्रे ॥ मधुलाति । ला० घातोनुपेतिकः । घन्दीयामपीतिदीर्घः । स्वार्थेक न् । गिरिजातमधूके । गौरशाके । अस्याणुणामधूकगुणतुल्याः ॥ मधु रसे ॥ त्रि० तद्वति ॥

मधूलिका । स्त्री० मूर्वायाम् । प्रस्य यस्मादित्तीत्वम् ॥

मधूली । स्त्री० क्षीतनके ॥ मधुफ-र्कट्याम् ॥ शार्ङ्ग ॥

मध्यः । पुं० अस्फुटसाधकाङ्कविशे षे । पुं० न० विलग्ने । देहमध्यभा गे । मध्यमे । अवलग्ने । हृदयपु ण्डरीकाकाशे ॥ त्रि० न्याय्ये । उत्क र्षापकर्षहीने ॥ यथा० मध्यमः ॥ अन्तरे ॥ अधमे ॥ मध्यमे ॥ यथा । उ त्तमाऽधममध्यानि बुद्ध्वा कार्याणि पार्थिव । उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ॥ मध्यायति । ध्यै० । घातोनुपेतिकः ॥ यथा । मन्यते । मह० । मांगोभांघते वा । मध्न्यादिः ॥ मध्येशरीरादेर्भवम् । यत्प्रत्यये० ऽन्त्यः ॥ सङ्ख्याविशेषे ॥ यथा ॥ १.................. ॥

मध्यगन्धः । पुं० आम्रद्रुमे ॥

मध्यतः । अ० मध्ये इत्यर्थे ॥ आद्यादित्वात्तसिः ॥

मध्यदेशः । पुं० देशविशेषे । मध्यमे ॥ तस्य सीमा यथा । हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ मध्यश्चासौ देशश्चेति कर्मधारयः ॥ शाब्दीयरत्नाकरसंस्कारीजनोमध्यदेश इति व्याख्याकाराः ।

मध्यदेशीयः । त्रि० मध्यदेशोद्भवे ॥ मध्यदेशीयजनपदा यथा । तान्त्रिमेकुरुपाञ्चालाः शाल्वाश्च यस्तनाः । दशाः । ग्रामेनाभट्टकारायोधकाः सपटचराः ॥ मक्याः किराताः

संचाराशुताचैवमनसोनववैगुणाः॥ धैर्यम् १। उपपत्तिः ऊहापोह- कौशलम् २। व्यक्तिः स्मरणम् ३। कल्पनामनोरथवृत्तिः ४। विसर्गः विपरीतसर्गभ्रान्तिः ५। क्षमा ६। सत्॰वैराग्यादि ७। असत्॰राग- द्वेषादि ८। आशुता॰अस्थिरत्व- म् ९। पुस्त्वं : ॥ अस्य : कारणे ॥ अस्यचातुर्विध्यंयथा। मनोबुद्धिरह ङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयोगर्वः स्मरणंविषयाअमी॥ तस्याध्यात्मत्वादियथा। अध्यात्मं मनइत्याहुः पञ्चभूतात्मकार- कम्। अधिभूतञ्चसङ्कल्पश्चन्द्रमाश्चा धिदैवतम्॥ इति॥ तस्यस्वरूपंय- था। अनिरूप्यमदृश्यञ्चज्ञानमेदंम- नःस्मृतमिति। तस्यप्राधान्या- प्राधान्यानुमापकानियथा। जना- नांहृदयंसंध्यःसुव्यक्तंवचमिनवै। शिष्यं कामं कन्यायांदौहित्रेवाथ पीपिच॥ पुत्रे पौत्रे चवसतिप्रतापे यशसिश्रियाम्। बुद्धीधारिविधि- द्यायांज्ञायतेहृदयंनृणामितिवच्च वैवर्त्त पुराणम्। तस्यबन्धमोक्ष प्रति हेतुत्वंयथा। नदेहोनचजीवात्मा नेन्द्रियाणिपरन्तप। मनएवमनुष्या- णांकारणंबन्धमोक्षयोः। बन्धस्य- विषयासक्तिमुक्तेर्निर्विषयन्तथेति॥ तच्चशायवीयपरमाणुरूपमितिशिरो



मणिमतम्। स्पर्शरहितत्वे सति- क्रियावत्त्वमस्यलक्षणम्॥ अस्यक्लो वत्वमेव नपुंसकमितिज्ञात्वाप्रिया- वैप्रोषितंमनः। सस्तुतचैवरमतेह सा:पाणिनिनावयम्॥ सुखदुःखा द्युपलब्धिसाधनं॰इन्द्रियविशेषे॥ सङ्कल्पविकल्पात्मिकाधामन्तःक रणवृत्तौ॥ तच्चप्रत्यात्मनियतत्वा- दनन्तंपरमाणुरूपंनित्यञ्चेतिता- र्किकाः॥ एकैकस्यात्मनएकैकंमन इत्यात्मनामनेकत्वान्मनसोऽनेकत्व म्॥ प्रदीपज्वालासन्तानवृत्तिसन्ता नरूपेणपरिणममानंमनःकरणद्र व्यंमननात्मकत्वान्मनइत्युच्यते॥ ए कादशेन्द्रियाणांमध्येप्रवर्त्तकंमनो वासुदेवविभूतिः॥ उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्चसाध र्म्यात्। एकादशस्विन्द्रियेषुमध्ये मनउभयात्मकम्॰बुद्धीन्द्रियङ्क र्म्मेन्द्रियञ्च। चक्षुरादीनांवागादी नाञ्चमनोधिष्ठितानांस्वविषयेप्रव- र्त्तेः। तदसाधारणेनरूपेणाहसङ्क ल्पकमत्रमनः। आलो चितमिन्द्रियेणवस्त्विदमिति सम्मु- ग्धम्॰इदमेवंनैवमितिसम्यक्कल्प यति॰विशेषणविशेष्यभावेनविवेच यतीतियावत्। यथाहुः। सम्मुग्ध वस्तुमात्रन्तुप्राग्गृह्णात्यविकल्पि तम्। तत्सामान्यविशेषाभ्यांक-

ल्पयन्तिमनीषिण इति ॥ तथा च अस्तिह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मतेति॥ सोऽयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति॥ स्यादेतत् । असाधारणव्यापारयोगिनो यथा चक्षुरादय इन्द्रियम् एवं मनोऽप्यसाधारणव्यापारमिन्द्रियं भवितुमर्हतीत्यत आह इन्द्रियञ्च तु तः साधर्म्म्यात् इन्द्रियान्तरैः । सात्त्विकाहङ्कारोपादानत्वसाधर्म्म्यम् । नत्विन्द्रलिङ्गत्वम् महत्तत्त्वादीनामपि इन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्तिनिमित्तमाचमिन्द्रलिङ्गत्वं न प्रवृत्तिनिमित्तम् ॥ मनुतेऽनेनेति विज्ञाननिमित्तान्तःकरणे ॥ युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥ इति गौतमसूत्रम् । युगपत् एककाले एकात्मनीतिपूरणीयम् ज्ञानानामनुत्पत्तिर्यत एष धर्म्मो ज्ञानकरणायुत्वं मनसो लिङ्गं लक्षणमित्यर्थः । तथाहि । चक्षुरादिषु विषयसम्बन्धेऽपि यस्यासत्त्वभावादेकज्ञानं जनयति तदन्तःस्यादपरज्ञा



नं जनयति तदेव चाणु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणं तदेकमेव लाघवात् सिद्धं मन इत्यर्थः ॥ तन्मात्रमभवने ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ यतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा । निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि यदायात्युन्मनीभावं तदा तत्परमं पदम् ॥ तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् । एतज्ज्ञानञ्च ध्यानञ्च शेषोन्यायञ्च विस्तरः ॥ मन्यते नेन मनुते नेन वा । मनज्ञाने मनुञ्चबोधने वा असुन् मनसो नैर्मल्यन्तस्य श्रवणकीर्त्तनम् यथोक्तं श्रीदेवीभागवते । भ्रमन्तु सर्व्वेषु तीर्थेषु स्नात्वा स्नात्वा पुनः पुनः । निर्म्मलं न मनो यावत् तावत् सर्व्वं निरर्थकमिति ॥

मनसा । स्त्री॰ विषहर्य्याम् । जरत्कारुमुनेः पत्न्याम् ॥

मनसादेवी । स्त्री॰ कद्रौ । मनसायाम् ॥ अस्याः प्रणाममन्त्रो यथा । आस्तीकस्य मुनेः माता भगिनी वासुकेस्तथा । जरत्कारुमुनेः पत्नी मनसादेवी नमोऽस्तु ते ॥ अस्या ध्यानं यथा । देवीमम्बामहीनां शशधरवदनां चारुकान्तिं वदान्यां हंसारूढामुदारामरुणितवसनां सर्व्वदां स

वंदैव । ॥ रास्यांमणिडताङ्गीश्चन कमयिगर्णैर्नागरवैरनेकैर्वन्देहं ः साष्टनागामुरुकुचयुगलांभोगिनीं कामरूपामितितिथ्यादितत्त्वम् ॥

मनसिज । पुं॰कामदेवे । शृङ्गाररूपे । मनसिजायते स । मनौ॰ सप्त -म्यांजनेड : सप्तम्या हलदन्तादितिवा ॥

मनसिशय : । पुं॰ स्मरे । कामदेवे । मनसिशेते । शीङ् । अधिकरणे शेते रित्यच् । हलदन्तादित्यलुक् ॥

मनस्कार : । पुं॰ चित्ताभोगे । मनस : सुखादौ । एकस्मिन्विषयेपि सक्तेर्वे ॥ मनस : कारोव्यापार विशेष : । डुकृञ् । भावे घञ् । अत : कृकमीतिसत्वम् ॥

मनस्ताप : । पुं॰ मन : पीडायाम् । अनुतापे । पश्चात्तापे ॥ यथा । परनिन्दात्मिनोत्कर्षव्यसनायुक्त भाषणम् । अयुक्तं कर्मं कुर्वाणोमनस्तापेविशुद्ध्यतीतिमहानिर्वाणतन्त्रम् ॥ ब्राह्मणं नयदादैवाच्छिन्नयज्ञोपवीतकाम् । मनस्तापेनशुद्धि : स्यादापस्तम्बोऽब्रवीन् मुनि : ॥

मनस्ताल : । पुं॰ दुर्गाया : सिंहे ।

मनस्थ : । त्रि॰ मनसिस्थितवस्तुनि॥

मनश्शनम् । न॰ विवचायुद्धौ ।

मनस्वी । पुं॰ शूरे ॥ अभिमानिनि ॥ मनोऽस्यास्ति । असन्तत्वादिनि : । शरभे ॥ त्रि॰ सुमनसि । प्रशस्तमनोयुक्ते ॥ प्रशंसायांविनि : ॥ क्वचिन्भूमौशय्याक्वचिदपिचपर्यङ्कशयन : क्वचिच्छाकाहार : क्वचिदपिचशाल्योदनरुचि : । क्वचित्कन्थाधारीक्वचिदपिचदिव्याम्बरधरोमनस्वीकार्यार्थी नगणयतिदु : खंनचसुखम् ॥

मनस्विनी । स्त्री॰ प्रशस्तमनस्विस्त्रियाम् ॥ मान्तलयघोडीप् ॥

मनहंस : । पुं॰ अतिशर्करीच्छन्द : १५ प्रभेदे ॥ सगणं विधायपयोधरवसुन्दरम्॰ भमयं ततोपिविधायचारतोमरम् । मनहंसइत्तमिदमुपस्थलाचरम् भवितसुजनमानसकमनोहरम् ॥ यथा । नवमञ्जुमञ्जुलकुञ्जक्विलतकोकिले॰ मधुमत्तचञ्चलचञ्चरीककुलाकुलि । समयेतिधीरसमीरकम्पितमानसे॰ किमुखण्डमानमनोरथेनविखिद्यसे ॥

मनाक् । अ॰ अल्पे ॥ मन्दे ॥ मननम् । मनज्ञाने । आक् प्रत्यय: ॥

मनाका । स्त्री॰ करिण्याम् । हस्तिन्याम् ॥ मन्यते । मन॰ । बलाकादयश्चेतिसाधु : ॥

मनाक्करम् । न॰ मंगल्यायाम् । मञ्जिष्ठागन्धयुक्तागुरुणि ॥ त्रि॰ दुं-

घल्करे ॥

मनायी । स्त्री० मनो : पत्न्याम् ॥ मनुशब्दं योगे० मनोरौवे स्वैकारा देशस्ततोऽपि च ॥

मनावी । स्त्री० मनाय्याम् ॥ मनो : स्त्रीति पुंयोगेमनुशब्दस्यमनोरौवेत्यौ कारादेशस्ततोऽपि च ॥

मनित । त्रि० बुद्धे । ज्ञाते॥ मन्यते स्म । मनुयवबोधने । क्त : । यस्य-विभाषेत्यस्यानित्यत्वादिट् ।

मनीकम् । न० चक्षुषि ॥

मनीषा । स्त्री० बुद्धौ धिषणायाम् । प्रेमुष्याम् ॥ ईषणम् ० ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय: । टाप । मनसईषा । श-कन्ध्वादि : ॥

मनीषिका । स्त्री० मनीषायाम् ॥

मनीषितम् । न० मनीषायामभिनिवि ष्ट मनीषितम् । प्रातिपदिकाद्धात्व र्थेबहुलमिष्ठवच्चे ति० णिच्० तद न्तात्० क्त : ॥ इच्छायाम् ॥

मनीषी । पुं० ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति० व्रीह्या दित्वादिनि ॥ यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता ॥ मनसईषितरिसवंर्णदीर्घदे । पृषोद राद्दि ० । ब्रह्मविदि ॥ यस्तत्परा भिसन्धौ । सतत्त्वशुद्धिदार्ढ्यमहावा-क्यजन्यात्ममनीषावति ॥ विविक्ति नि ॥ प्रमाणकुशले ॥

मनु : । पुं० ब्रह्मण : पुत्रे । सचप्र-जापतिर्धर्मशास्त्रवक्ताच ॥ स्वाय म्भुवादिषु ॥ प्रतिकल्पे चतुर्दशम-नवोभवन्ति । तेषांनामानियथा । स्वायम्भुव : १ सचशतरूपायांब्रह्मणो जात : । स्वारोचिष: २ । उत्तम: ३ । तामस : ४ । रैवत : ५ । चा क्षुष : ६ । सचषड्मवोचात्रिमुक्त-यातब्रह्मदेविल्यांमोरप्यन्यायांवैरि ण्यांजात : । एतेषडतीता : । वैव स्वत : ७ । अयस्वसूर्यात्सञ्ज्ञायां जातोवर्त्तमानएव ॥ सावर्णि: ८। सतुसूर्याच्छायायांभविष्यति । द क्षसावर्णि : ९ । ब्रह्मसावर्णि: १० । धर्मसावर्णि : ११ । रुद्रसावर्णि : १२ । देवसावर्णि : १३ । इन्द्रसावर्णि : १४ । एतेभ विष्यन्ति । माक्र्ये नवमादिमनूनां नामान्तराण्युक्तानि । यथा० रौ-च्य: ९ असौरुचिप्रजापते : पुत्र. । भौत्य . १० । असौभूतिप्रजाप-ते : पुत्र. । मेरुसावर्णि : ११ अ सौब्रह्मण : पुत्र : । ऋतु: १२ ऋत धामा १३ । विष्वक्सेन : १४ ॥ इतिमाक्र्ये नवसाध्यायमारभ्य कवि शत्त्यध्यायपर्यन्तचतुर्दशमनूनांनि-रूपणमस्ति ॥ ब्रह्मणोदिवसे प्रत्य-न् मनवश्चतुर्दश । भवन्तिपरिमा

यास्तेषांकालकृतंशृणु ॥ सप्तर्षय: सुरा : शक्रोमनुस्तत्सूनवोनृपा : । एककालेहिसृज्यन्ते संह्रियन्ते चपूर्ववत् ॥ चतुर्युगाणांसंख्याताऽधिकाह्येकसप्तति : । मन्वन्तरमनो : काल : सुरादीनाञ्चसत्तम ॥ अष्टौशतसहस्राणिदिव्ययासंख्ययास्मृता : । द्वापञ्चाशत्तथान्यानिसहस्राण्यधिकानिच ॥ त्रिंशत्कोट्यस्तुसम्पूर्णा : संख्याता : संख्यया द्विज । सप्तषष्टिस्तथान्यानिनियुतानिमहामुने ॥ विंशतिश्चसहस्राणिकालोऽयमधिकंविना । मन्वन्तरस्यसंख्येयंमानुषैर्वत्सरैर्द्विज ॥ मन्त्रे । मनुष्ये । जिनभेदे ॥ प्रजापतौ ॥ ऋषिविशेषे ॥ स्वायम्भुवप्रणीतस्मृतिविशेषे ॥ मनुते । मनुअवबोधने । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च : । मन्यते । मनज्ञाने । पूर्वेण० उ : ॥

मनु : । स्त्री० मनो : पत्न्याम् ॥ मनोस्त्रीतिविग्रहे० पुंयोगे० मनोरौवेत्यौकारैकाराभावे० तत्सन्नियोगशिष्टोङीप्‌चनभवति ॥ पृक्कायाम् ॥

मनुज : । पुं० मनुष्ये ॥ मनोर्जात : । जनी० । पञ्चम्यामितिड : ॥

मनुजपति : । पुं० नरेन्द्रे । मनुजानांपति : ॥ सव्यगुरुसंज्ञायाम्० । ६ । ० ॥



मनुजी । स्त्री० मनुष्याम् ॥

मनुभू : । पुं० मनुष्ये ॥

मनुराट् । पुं० कुवेरे । निधिनाथे । श्वेतोदरे ॥

मनुषी । स्त्री० मानुषस्त्रियाम् । मनुष्यस्त्रीजातौ । योपधप्रतिषेधे० गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधइतियोपधात्वातिङीष् । हलस्तद्धितस्येतियलोप : ॥

मनुष्य : । पुं० मानुषे । मर्त्ये । मनुजे । मानवे । नरे ॥ अथमनुष्यसर्गोऽर्वाक्स्रोतोब्रह्मणोनवम : सर्गएकविधश्च । यथा । अर्वाक्स्रोतस्तुनवम : सप्तदैकविधोनृणाम् । रजोधिका : कर्मपरादु : खेचसुखमानिन : ॥ अपिच । तथाभिध्यायत : सर्गंसत्याभिध्यायिनस्तत : । प्रादुर्बभूवचाव्यक्तादर्वाक्स्रोतस्तुसाधक : ॥ यस्मादर्वाक्प्रवर्त्तन्ते ततोऽर्वाक्स्रोतसस्तुते । तेचप्रकाशबहुलास्तमोद्रिक्तारजोधिका : । तस्मात्ते दु : खबहुलाभूयोभूयश्चकारिण : । प्रकाशाबहिरन्तश्चमनुष्यासाधकास्तुते इतिवह्निपुराणम् ॥ शास्त्रीयज्ञानकर्मयोग्योऽयम् ॥ अथपञ्चमनुष्यविभागोवाराहाम् ६७ अध्याये । मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥

मनुष्यतीर्थम् । न० प्रजापतितीर्थे । कनिष्ठामूले ॥

पत्कारे ।

मनायी । स्त्री॰ मनो : पत्न्याम् ॥ मनुशब्दपुंयोगे॰मनोरौवे त्यैकारा देशस्ततोङीप्‌ च ॥

मनावी । स्त्री॰ मनाय्याम् ॥ मनो : स्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौ कारादेशस्ततोङीप्‌च ॥

मनित । त्रि॰ बुद्धे । ज्ञाते॥ मन्यते स्म । मनुघवबोधने । क्त : । यस्य- विभाषेत्यस्यानित्यत्वादिट्‌ ।

मनीषम् । न॰ अश्मनि ॥

मनीषा । स्त्री॰ बुद्धौ धिषणायाम् । शेमुष्याम् ॥ ईषणम्॰ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय : । टाप । मनसईषा । शकन्ध्वादि : ॥

मनीषिका । स्त्री॰ मनीषायाम् ॥

मनीषितम् । न॰ मनीषायामभिनिविष्ट मनीषितम् । प्रातिपदिकाद्धात्वर्थेवहुलमिष्ठवच्चेति॰ णिचि॰ तद् न्तात्॰ क्त : ॥ इष्टायाम् ॥

मनीषी । पुं॰ ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्या दित्वादिनि : । यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता । मनसईषितरिसर्वज्ञईश्वरे । पृषोदरादि : । सक्षाविदि ॥ पक्षतफला भिमन्त्री । सत्वशुद्धिद्वारेणमन्त्राना- धयन्त्यात्ममनीषावति ॥ विवेकि

नि ॥ प्रभावकुशले ॥

मनु : । पुं॰ ब्रह्मण : पुत्रे । सचप्रजापतिर्धर्मशास्त्रवक्ताच ॥ स्वायम्भुवादिषु ॥ प्रतिकल्पे चतुर्दशमनवोभवन्ति । तेषांनामानियथा । स्वायम्भुव : १ सचब्रह्मणोब्रह्मणो जात : । स्वारोचिष : २ । उत्तम : ३ । तामस : ४ । रैवत : ५ । चाक्षुष : ६ । सचप्रथमौचात्रिपुत्र्यात्ब्रह्मादीह्ल्यावीरणकन्यायांवैरिण्याजात : । एतेषडतीता : । वैवस्वत : ७ । अयञ्चसूर्यात्सञ्ज्ञायां जातोवर्त्तमानएव ॥ सावर्णि : ८ । सतुसूर्याच्छायायांभविष्यति । दक्षसावर्णि : ९ । ब्रह्मसावर्णि : १० । धर्मसावर्णि : ११ । रुद्रसावर्णि : १२ । देवसावर्णि : १३ । इन्द्रसावर्णि : १४ । एतेभविष्यन्ति ॥ मात्स्ये नवमादिमनूनां नामान्तराण्युक्तानि । यथा॰ रौच्य : ९ असौरुचिप्रजापते : पुत्र । भौत्य । १० । असौभूतिप्रजापते : पुत्र । मेरुसावर्णि : ११ ब्रह्मण : पुत्र : । ऋतु : १२ ऋतुधामा १३ । विष्वक्सेन : १४ ॥ इतिमात्स्ये नवमाध्यायमारभ्यैकविंशत्यध्यायपर्यन्तचतुर्दशमनूनांनिरूपणमस्ति ॥ ब्रह्मणोदिवसे ब्रह्मन्‌ मनवश्चचतुर्दश । भवन्तिपरिमा

न्यद्रूवहेमन्तं पीयन्तं भोगवासना : ॥ हस्तं हस्तेन सम्पीड्यदन्तैर्दन्तान् विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मन : ॥ एतावतिभूमितलेसुभगास्ते साधुचेतना : पुरुषाः । पुरुषकथासु च गण्या नजिता येचेतसाखेन ॥ हृदयबिलेकृतकुण्डलवलयकजनाविषो मनोभुजग : । यस्यौपवागिमागतमुद्वितं तसव्यायंबन्दे ॥ इति ॥ दोक्ष्मीचित्तनाशस्य योगोज्ञानम्वराघव । योगस्तद्वृत्तिरोधोहिज्ञानं सम्यगवेक्षणम् ॥ असाध्य : कस्यचिद्योग : कस्यचिद्तत्वनिश्चय : । प्रकारौद्वौततोदेवो जगादपरमेश्वर : ॥ इति च ॥ मनोनाशाभ्यासस्तु॰ अत्यन्ताभावसम्पत्तौज्ञातुर्ज्ञेयस्य वस्तुन : । युक्त्याशास्त्रैर्यतन्ते ये तेप्यत्राभ्यासिन : स्थिता : ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्पत्ति : ॥ स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति : । युक्तिर्योग : । सोयंमनोनाशाभ्यास : ॥

मनोन्मनी । स्त्री॰ योगिनोऽवस्थाविशेषे ॥ यथाहुर्योगतारावल्यांश्रीशङ्कराचार्या : । नेत्रेयथोन्मेषनिमेषशून्ये वायुर्यथावर्जितरेचपूर : मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनीसामधिसन्निधत्ताम् ॥ चित्तेन्द्रियाणां चिरनिग्रहेण श्वासप्रचारेशमितेसमस्ते । निवातदीपायुतनिश्चलाङ्गा- मनोन्मनीसामयिसन्निधत्तामिति ॥

मनोभव: । पुं॰ कामदेवे ॥ मनसिभवोऽस्य ।

मनोभू: । पुं॰ कन्दर्पे । मनसा॰ मनस: मनसिवाभवति भुव: क्विप् ॥

मनोमय: । पुं॰ पञ्चकोषान्तर्गततृतीयकोषे । इच्छाशक्तिमति॰ करणरूपि मनस्तुकर्मेन्द्रियै : सहितंमनोमयकोषोभवतीति ॥ अहन्ताममतांदेहेगृहादौचकरोतिय : । कामाद्यवस्थयाभ्रान्तोनासावात्मामनोमय : ॥ आत्मनि ॥ मनोहसिभिर्विभाव्यमानत्वात् । त्रि॰ मन : प्राये ॥

मनोयोनि : । पुं॰ कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ : । पुं॰ इच्छायाम् । स्पृहायाम् ॥ मनएवरथोऽत्र । मनसोरथ इववा ॥ मनोरथानानसमाप्तिरस्तियर्षायुतेनाप्ययथाब्दलक्षै : । पूर्णेषुपूर्णेषुपुनर्नवानामुत्पत्तय : सन्तिमनोरथानाम् । त्रि॰ मनस्तुष्टिकरे । चित्तपरिकल्पिते॰ चित्तपरिच्छेदोमनस्यन्तर्वर्तमाने ॥

मनोरम : । त्रि॰ सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनोरमयति । रम्॰ । ण्यन्त : । कर्मण्यण् ॥ दक्षिणपश्चिमद्वारद्वे ॥

मनुष्यधर्मा । पुं० धनदे । श्रीदे । कुबेरे ॥ मनुष्यस्येवधर्माचारः । मनुष्यत्वादिर्वास्य । धर्मादनिच्केवलात् ॥

मनुष्ययज्ञः । पुं० अतिथिपूजने, । नृयज्ञे ॥

मनुष्यलोकः । पुं० अधिकृतत्राह्मणादिविशिष्टदेशे ॥

मनोगुप्ता । स्त्री० नागजिह्वायाम् । मनः शिलायाम् ॥ मनसागुप्ता । कर्तृकरणसमासः ॥ द्रुपभेदे । मनोगुप्तावातहरीदृश्यामयविनाशिनी । सुशीतामधुरातीवरक्तपित्तप्रणाशिनी ॥

मनोज । पुं० कामदेवे ॥ मनसिजायते अन्तराद्रिरूपेणप्रादुर्भवति । जनी० । सप्तम्यांजनेर्डः । तत्पुरुषेकृतिबहुलमितिबहुलग्रहणात्लुगभावाभावः ॥

मनोजन्मा । पुं० कामदेवे ॥ मनसोजन्मयस्य ॥

मनोजव । पुं० हरौ ॥ मनसोवेगइवबलवेगसर्वगतत्वात् ॥ हनुमति । मनसोवेगे ॥ त्रि० पितृसन्निभे । पितृतुल्ये । अतिशयवेगवति ॥ जवति । जु । सौत्रः । ऋदु । मनोजवेगवदास्मिन् ॥

मनोजवस : । पुं० पितृसन्निभे ॥ मनोजवतेस्मिन् । चौर्यादिकोऽसः ॥

मनोजवृद्धि : । पुं० कामवृद्धिक्षुपे ॥

मनोज्ञम् । न० सरलकाष्ठे ॥ त्रि० शोभने । मनोहरे । सुन्दरे । रुचिरे ॥ मनसाजानाति । इगुपधेतिकः । निहतमेवमनोजानाति : ॥

मनोज्ञा । स्त्री० मनः शिलायाम् ॥ राजपुत्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ जात्याम् ॥ मदिरायाम् ॥ स्थूलजीरके ॥

मनोनाश : । पुं० मनसोलये ॥ मनसोनाशोनामहर्षितरूपपरिणामसंपरिणामव्यस्तसर्ववृत्तिविरोधिनानिरोधाकारेणपरिणाम : ॥ सहस्रांकुरशाखात्मफलपल्लवशालिन : । अस्यसंसाररूक्षस्यमनोमूलमितिस्थितम् ॥ सकल्पमेवतन्मन्ये संकल्पोपशमेनतत् । शोषयामियथाशोषमेतिससारपादप : ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिदुष्टश्चौरोमनात्मन : । मनोनामनिहन्म्येनंमनसाहचिरंहृत : ॥ इतिजनक : ॥ वशिष्ठोप्याह । अस्यसंसारवृक्षस्यसर्वोपद्रवदायिन : । उपायएकएवास्तिमनस : स्वस्यनिग्रह : ॥ मनसोभ्युदयोनाशोमनोनाशोमहोदय : । ज्ञोमनोनाशमभ्येतिमनोज्ञस्यहिशृङ्खला ॥ तावन्निशीथवेतालावल्गन्तिहृदिवासना : । एकतत्त्वदृढाभ्यासायावन्नविजितमन : ॥ प्रक्षीणचित्तदर्पस्यनिगृहीतेन्द्रियद्विष : । पद्मि

 

न्यङ्कुवद्देहमन्तर्धीयन्ते भोगवासनाः ॥ हस्तं हस्तेन सम्पीड्य दन्तैर्दन्तान्विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ एतावति भूमितले सुभगास्ते साधुचेतनाः पुरुषाः । पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन ॥ हृदयबिलकृतकुण्डलवलयः कलनाविषो मनोभुजगः । यस्योपशान्तिमागतमुदितं तमहं नमामि चन्द्रम् ॥ इति ॥ टीकायां चित्तनाशस्य योगो ज्ञानञ्च द्वाविव । योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमेश्वरः ॥ इति च ॥ मनोनाशाभ्यासस्तु० अत्यन्ताभावसम्पत्तौ तुरीयस्य वस्तुनः । युक्त्या शास्त्रैर्यतन्ते ये ते स्थिताभ्यासिनः स्थिताः ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्पत्तिः । स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्तिः ॥ युक्तियोग : । सोऽयमनोनाशाभ्यास : ॥

मनोन्मनी । स्त्री० योगिनोऽवस्थाविशेषे ॥ यथाह योगतारावल्यां श्रीशङ्कराचार्याः । नेत्रे ययोन्मेषनिमेषशून्ये वायुर्यया वर्जितरेचपूरः । मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनी सा मयि सन्निधत्ताम् ॥ चित्तेन्द्रियाणां चिरनिग्रहेण श्वासप्रवाहे शमिते समस्ते । निवातदीपा इव निश्चलाङ्गा मनोन्मनी सा मयि सन्निधत्तामिति ॥

मनोभवः । पुं० कामदेवे ॥ मनसि भवोऽस्य ।

मनोभूः । पुं० कन्दर्पे । मनसा० मनस : मनसि वा भवति । भुवः क्विप् ॥

मनोमयः । पुं० पञ्चकोषान्तर्गततृतीयकोषे । इच्छाशक्तिमति० कर्मरूपे मनस्तु कर्मेन्द्रियैः सहितं मनोमयकोषो भवतीति ॥ अहन्तां ममतादिं देहगृहादौ च करोतीति । कामाद्यवस्थया भ्रान्तोऽसावात्मा मनोमयः ॥ आत्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् ॥ त्रि० मन : प्राये ॥

मनोयोनि : । पुं० कामदेवे ॥ मनो योनिरस्य ॥

मनोरथ : । पुं० इच्छायाम् । स्पृहायाम् ॥ मन एव रथोऽत्र । मनसो रथ इव वा ॥ मनोरथानामगतिर्न विद्यते । अर्थार्थिनां वा पुरुषार्थ : । पूर्णेषु पूर्वेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम् । त्रि० मनस्तुष्टिकरे । चित्तपरिकल्पिते । चित्तपरिच्छेदो मनस्य कार्यवर्तमाने ॥

मनोरम : । त्रि० सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनो रमयति । रम० । ण्यन्त : । कर्मण्यण् ॥ दक्षिणपश्चिमद्वारगृहे ॥

मनोरमा । स्त्री॰ मनोज्ञायाम् । कान्तायाम् । मञ्जुलायाम् । मनोहरायाम् । सुंदर्याम् ॥ बुद्धशक्तिविशेषे । तारायाम् । लोकेश्वरात्मजायाम् ॥ पङ्क्तिच्छन्द : १० प्रभेदे । यथानरजगैर्भवेन्मनोरमा । यथा । तरणिजातटे विहारिणी॰ व्रजविलासिनीविलासत : । मुररिपुरनु : पुनातु व : ॰ सुकृतशालिनांमनोरमा ॥

मनोवती स्त्री॰ ब्रह्मण : पुर्याम् ॥ यथा । चतुर्दशसहस्राणियोजनानां स्वयम्भुव : । मध्ये मनोवतीनामपुरीलोकेशवन्दिता ॥ यावत्कारापथानुवर्तियन्मार्गान्महः श्रिया । सावित्र्या : स्वर्गमानेषस्वर्गकामप्रतिवर्तिनी ॥ तस्यामुपासतेदेवामुनयश्चमहौजस : । महायोगेश्वरंसिद्धा यमाद्यं भूतवेधसम् ॥ मध्ये ॰ इन्द्राद्यष्टदिक्पाला ममरावत्याद्यष्टपुरीणांमध्यवृत्त्यर्थ : ॥ इतिमृगेन्द्रसंहिता ॥

मनोयित् । पुं॰ लोकायतभेदे । सहिम्नानृत्यामनएवात्मेतिनिश्चिनोति । मनस : स्वातन्त्र्योच ॰ घटवदनात्मत्वात् ॰ करणत्वात्प्रदीपवद्दात्मत्वायोगात् ॥

मनोहत : । त्रि॰ प्रतिहते । हतमनोभङ्गे ॥ मनोहतंयस्यस : ॥

मनोहर : । पुं॰ कुन्दवृक्षे ॥ न॰ सुवर्णे ॥ त्रि॰ मनोज्ञे ॥ मनोहरति हरतेरनुद्यमने॰ इत्यच् ॥

मनोहरा । स्त्री॰ जातीभेदे ॥ स्वर्णयूथ्याम् ॥ मनोज्ञायाम् ॥ टाप् ॥

मनोहर्त्ता । त्रि॰ मनोहरणकर्त्तरि ॥

मनोहारि । न॰ सुन्दरवाक्ये ॥ त्रि॰ मनोहरे ॥ प्रिये ॥

मनोज्ञा । स्त्री॰ मन : शिलायाम् ॥ मन : शब्दे ज्ञायते । ज्ञाशब्दे । चातश्चोपसर्गेऽकड् । टाप् ॥

मन्तव्य : । त्रि॰ ज्ञेये ॥ मननीये । भाव्ये । विभावनीये ॥ मन्तव्यश्चोपपत्तिभि : ॥

मन्तु : । पुं॰ अपराधे ॥ मनुष्ये ॥ प्रजापतौ ॥ न॰ मन्त्रणायाम् ॥ मन्यते । मनज्ञाने । कमिमनिजनी त्यादिना॰ तु : ॥

मन्ता । पुं॰ मन्त्रिणि ॥ मन्यते मन । बहुलमन्यत्रापीति॰ तृच् ।

मन्त्र : । पुं॰ वेदविशेषे ब्राह्मणभिन्ने वेदभागे । याज्यापुरोनुवाक्यादौ । देवेभ्योयेनोद्दिश्यहविर्दीयतेतत्र । स्वरतोवर्णतोवाहीनस्यमन्त्रस्यानिष्टफलजनकत्वमुक्तं शिक्षायांमहाभाष्ये च । मन्त्रोहीन : स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रु : स्वरतोपराधादितिशिक्षा । दुष्ट :

च ॥

मन्त्रगण्डक : । पुं॰ विद्यायाम् ॥

मन्त्रगूढ : । पुं॰ चरे ॥ मन्त्रोगूढोऽस्मिन् ॥

मन्त्रगृहम् । न॰ मन्त्रणागारे ।

मन्त्रणा । स्त्री॰ मन्त्रशक्तौ ॥

मन्त्रजिह्व : । पुं॰ वह्नौ ॥

मन्त्रज्ञ : । पुं॰ चरे ॥ त्रि॰ । मन्त्रविदि ॥

मन्त्रज्वाल : । पुं॰ वह्नौ ॥

मन्त्रणम् । न॰ मन्त्रे ॥ मन्त्रि॰ । भावेल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री॰ मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्ज्जनीयानि यथा । मन्त्रे पश्चाद्गतामात्रिपाड्गुण्योपायसिद्धय : । उदयाश्चिन्तनीयाश्चैर्मन्त्र्यादिसूक्तय : ॥

मन्त्रणागारम् । न॰ मन्त्रगृहे ॥

मन्त्रद : । त्रि॰ मन्त्रदातरि ॥

मन्त्रदाता । त्रि॰ मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ यदीक्षितस्यमूर्खस्यनिष्ठानिर्नास्तिनिश्चितम् । सर्वकर्मस्वनर्हस्यनरकेतत्पशो : स्थिति : ॥ जन्मदातान्नदातावामातान्येगुरवस्तथा । पारेकर्त्तुंन शक्ताश्चघोरेसंसारसागरे ॥ विद्यामन्त्रज्ञानदातानिपुण : पारकर्मणि । नशक्त : शिष्यमुद्धर्त्तुमीश्वरएवपर : ॥

मन्त्रदीधिति : । पुं॰ अग्नौ ॥

मन्त्रनिर्णय : । पुं॰ मन्त्रनिश्चये ॥ यथा । मन्त्रमूलंयतोराज्यंततोमन्त्रंसुरक्षितम् । कुर्याद्यथातन्नविदु : कर्माणामाफलोदयात् ॥ अर्थानर्थौविचार्याथमौसंशयस्यपरीक्ष्यते । समंचद्धतिर्विर्ज्ञेय : शेषाश्चखलुविभ्रमा : ॥ एकमेवविपक्षन्निश्चयमेणकश्यवक्ष्यते । सराष्ट्रसम्पद्धन्तिराज्ञामंत्रविभ्रय : ॥ कारिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्मार्थकामकार्याणि कृतेमंत्रोन भिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादंवारहोगत : ॥ अरण्येनि : शलाकेशातत्रमंत्रोविधीयते ॥ तत्रसामप्रयोक्तव्यं कार्येष्वपवत्स्वपि । दानंलुब्धेषिभेदस्थभक्तेष्वपिनिश्चय : । दण्डम्बांधवविरोस्थिर्येष्वोमीन्वथाधिकान् । स्त्रीम्लेच्छव्याधितव्यहान्मंचकालेनिषेधयेत् ॥ इतिसम्यक्कृत : प्रोक्ताराजनीतिर्विंमया । यत्त्रिवर्गाविरुद्धंस्यादाजनीतिस्तदुच्यते ॥ इति युक्तिवाक्यतरौनीतियुक्ति : ॥

मंत्रपूत : । त्रि॰ मंत्रेणपवित्रीकृते ॥

मंत्रपूतात्मा । पुं॰ गरुडे ॥ त्रि॰ मंत्रेणपवित्रात्मनि ॥

मंत्रवित् । पुं॰ चरे ॥ मंत्र-

नेत्ररोगे । नेत्रमले ॥ मारणे ॥ म
थ्यतेऽनेन । मथिहिंसासंक्लेशनयोः
। हलश्चेतिघञ् ॥ मन्थने ॥
मन्थजम् । न० नवनीते ॥
मन्थदण्ड : । पुं० मन्थाने । मन्थान-
दण्डे । रई० इ० भा० ॥
मन्थनम् । न० विलोडने । क्षुब्धने ।
पुं० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे
॥ मथ्यतेऽस्याम् । मन्थविलोडने ।
करणेतिल्युट् ॥
मन्थर : । पुं० कोपे ॥ फले ॥ वाधे ।
मन्थाने ॥ सूचके मन्दगामिनि ।
शैशवे ॥ कोषे ॥ केशे ॥ न० कुसु
म्भाम् ॥ त्रि० मन्दे । पृथौ ॥ वक्रे
॥ मन्दगामिनि जडे ॥ सूचके ॥
नीचे ॥ मन्थतिमाद्ये । मथि० ।
वाहुलकादरन् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थस : । पुं० कुठेरे । चामरवाते ॥
मन्थशैल : । पुं० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थान : । पुं० मन्थदण्डे । वैशाखे
रई० इ० भा० ॥ आरग्वधे ॥ न०
गायत्रीछन्द : ६ प्रभेदे ॥ यथा ।
कर्णध्वजानन्दमाधायनिच्चस्त । व-
ीरमैत्रस्तु मन्थानमेतत् ॥ यथा ।
गोशांगमकतायपार्श्वेनवाय ।

वन्दस्वनन्दस्वभव्यायमुताय ॥ मन्थ
ति । मथि० । वाहुलकादानच् ॥
मन्थानक : । पुं० तृणभेदे । रहिते ।
हृढमूले । तृणाद्भिये ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे ।
गर्गर्याम् । कलशाम् । मधानी०
इ० भा० ॥
मन्द : । पुं० शनैश्चरे । हस्तिजात्य
न्तरे ॥ धीर्यपादे । यमे ॥ प्रलये ॥
त्रि० अतीक्ष्णे । अलसे । शोतके ॥
मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यर
हिते ॥ रोगिणि ॥ अल्पे ॥ मदर
ते ॥ खले ॥ अशुश्चितत्त्वे मशाना
धिकारमप्राप्ते ॥ मन्दते । मदिस्तु
तिमोदमदस्वप्नकान्तिगतिषु । पचा
द्यच् ॥ न० दैवदर्थे ॥
मन्दग : । त्रि० मृदुगामिनि । अशीघ्र
गे ॥
मन्दगति : । पुं० शनौ ॥ त्रि० मन्द
गामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले ।
मन्थरे ॥ मन्दशब्दोपप० गम्धातो :
। अमृत० । सुप्यजातौणिनिस्ता० ॥
मन्दजननी । स्त्री०सूर्यपत्न्याम् । शनि
मातरि । छायायाम् । तपत्याम् ॥
मन्दट : । पुं० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे । मन्दते । मदि
। कृपूर्वलिमन्दीत्यादिनाकः ।

मन्दप्रज्ञ : । त्रि० जडबुद्धौ ॥ मन्दाल्पप्रज्ञाधीर्यस्य स : ॥

मंदभाग्य : । त्रि० विघ्नाकुले ॥

मंदभू : । पुं० मन्दभूमौ ॥

मन्दर : । पुं० मन्थशैले ॥ मन्दारपादपे ॥ स्वर्गे ॥ हारभेदे ॥ मेरोर्दक्षिणेप्राच्यांदिशिपश्चिमतस्तथापश्चिमायेन्ध्याचलशैले ॥ तच्चयोजनसहस्रोन्नतिमान्कल्पपादपोऽस्ति । सुराङ्गनाक्रीडाप्रधानोऽपि मन्दर : । न० वर्णवृत्तान्तरे ॥ छन्दसिभोयदि । मन्दरमस्ति ॥ घटुयमक्षर । वैरिभयङ्कर ॥ त्रि० बहुले ॥ मन्दे ॥

मन्दिरहरिण : । पुं० जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान : । पुं० वह्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । क्विष्ठधिमन्दिसहिभ्य : किदित्यसानच् ॥ वेदभाष्येयौगिकार्थएवपुरस्कृत : ॥

मन्दा । स्त्री० सङ्क्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाक्षम् । न० त्रपने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्णद्याम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्वर्गेसाचमन्दाकिनीस्मृता । योजनायुतविस्तीर्णाप्रस्थेनयोजनास्मृता ॥ क्षीरतुल्यजलाश्रयदत्युत्कृष्टतरङ्गिणी । वैकुण्ठाद्ब्रह्मलोकस्ततत : स्वर्गंसमागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । ध्रुवेमैत्रसंज्ञे तुमन्दाकिनीसानृपाणांसुखीस्यं भवेत्तत्रमासे ॥ जगतीच्छन्द: १२ प्रभेदे ॥ ननररघटितातुमंदाकिनी । यथा । बलिदमनविधौवभौसङ्गता० पदनखलवियस्थमंदाकिनीसुरनिहितसिताम्बुजाद्‌गिभास्वरतुजगदघसपीताम्बर : ॥ मंदमवति० तष्ठीला । वक्रकुटिलायागसौ । सुधीतिस्थिति : । ङीप् ॥

मंदाक्रान्ता । स्त्री० अत्यष्टिच्छंद : १७ प्रभेदे ॥ मंदाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम् । यथा । प्रेमालापै : प्रियवितरणै : प्रीणितालिङ्गनाद्यै मंदाक्रान्तातदनुनियतंवश्यताकेतियाषा । एवंभिक्षावचनसुधयासाधिकाया : सखीनांप्रीत: पायात्स्मितसुवदनोदेवकीनन्दनोन : ॥

मंदाक्षम् । न० लज्जायाम् ॥ मदमक्षंवागाक्षम ॥

मंदाग्नि: । पुं० अर्कनिष्कासनाथाग्निविशेषे ॥ कफद्वाराल्पजठरानले ॥ तल्लनिदानादियथा । मदस्तीक्ष्णोथविषम : समश्चेतिचतुर्विध : । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल : ॥ विषमोवातजान्रोगांस्तीक्ष्ण : पित्तसमुन्नतान् । करो

नेत्ररोगे । नेत्रमले ॥ मारक्षे ॥ म
थ्यतेऽनेन । मथिर्हिंसासंक्लेशनयोः
। इलश्चेतिघञ् ॥ मन्थने ॥
मन्थजम् । न० नवनीते ॥
मन्थदण्ड : । पुं० मन्थाने । मन्थान-
दण्डे । रई० इ० भा० ॥
मन्थनम् । न० विलोडने । कुम्थने ।
पुं० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे
॥ मथ्यतेऽस्याम् । मन्थविलोडने।
करणेतिल्युट् ॥
मन्थर : । पुं० कोपे । फले ॥ बाधे ।
मन्थाने । सूचके मन्दगामिनि ।
वैशाखे ॥ कोपे । केशे ॥ न० कुसु
म्भाम् ॥ त्रि० मन्दे । पृथौ ॥ वक्रे
॥ मन्दगामिनि जडे ॥ सूचके ॥
नीचे । मन्थिपादौ । मथि० ।
बाहुलकादरन् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थक : । पुं० कुठेरे । चामरवाते ॥
मन्थशैल : । पुं० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थान : । पुं० मन्थदण्डे । वैशाखि
रई० इ० भा० ॥ आरग्वधे ॥ न०
गायत्रीछन्द : ६ प्रभेदे ॥ यथा ।
कर्णध्वजानन्दमाधायनित्यम् । व-
गैरस्त्यस्तमन्थानमेतत् ॥ यथा ।
गीतांशुवक्त्रायपाथोजनेत्राय ।
वन्दस्तनन्दस्तमव्यायपुत्राय ॥ मथ्न
ति । मथि० । बाहुलकादानच् ॥
मन्थानक : । पुं० तृणभेदे । रुचिते ।
दृढमूले । तृणाङ्घ्रिपे ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे ।
गर्गर्याम् । कलश्याम् । मथानी०
इ० भा० ॥
मन्द : । पुं० शनैश्चरे । हस्तिजात्य
न्तरे ॥ शौर्यपादे । यमे ॥ प्रलये ॥
त्रि० अतीक्ष्णे । अलसे । श्रोतके ॥
मूर्खे ॥ स्वैरे ॥ अभाग्ये । आग्यर
हिते ॥ रोगिणि ॥ अल्पे ॥ मद्र
ते ॥ खले ॥ अशुभचित्तत्वे नक्षाना
धिकारसमाप्ते ॥ मन्दते । मदिस्तु
तिमोदमदस्वप्नकान्तिगतिषु । पचा
द्यच् ॥ न० ईषदर्थे ॥
मन्दग : । त्रि० मृदुगामिनि । अशीघ्र
गे ॥
मन्दगति : । पुं० शनौ ॥ त्रि० मन्द
गामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले ।
मन्थरे ॥ मन्दं गच्छति० तच्छील :
। गमन्न० । सुप्यजातौणिनिस्ता०
मन्दजननी । स्त्री०सूर्यपत्न्याम् । शनि
मातरि । छायायाम् । तपत्याम् ॥
मन्दट : । पुं० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे । मन्दते । मदि
। कृपृवृजिमन्दीत्यादिनाक्युः ॥

मन्दप्रज्ञ : । वि० जडबुद्धौ ॥ मन्दाज्ञाप्रज्ञाधीर्यस्य : ॥

मंदभाग्य : । वि० विघ्नाकुले ॥

मंदभू : । पुं० मन्दभूमौ ॥

मन्दर : । पुं० मन्थशैले ॥ मन्दारपादपे ॥ स्वर्गे ॥ हारभेदे ॥ मेरोर्दक्षिणपूर्वाद्रिविशेषे तथा पश्चात्सहस्रोच्छ्रायविष्कम्भशैले ॥ तत्र शीलनसहस्रं द्वात्रिंशन्मान्मदस्यपादपोपि । सुराङ्गनाक्रीडाप्रधानोपि मन्दर : । न० मणिस्तम्भान्तरे ॥ छन्दसिभीयदि । मन्दरमस्पृति ॥ शङ्करयन्दर । वैरिभयङ्कर । वि० बहुले ॥ मन्दे ॥

मन्दिरहरिण : । पुं० जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान : । पुं० वह्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । बाहुलकादसानच् । मन्दिसङ्गिभ्य : किदित्यसानच् ॥ वेदभाष्येयौगिकार्थएवपुरस्कृत : ॥

मन्दा । स्त्री० संक्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाक्षम् । न० लज्जने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्गगायाम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्सैवसाचमन्दाकिनी स्मृता । योजनायुतविस्तीर्णाप्रस्त्रे नयोजनायता ॥ क्षीरतुल्यजलाप्रवहत्युदुत्तरङ्गिणी । वैकुण्ठाद्ब्रह्मलोकस्ततः स्वर्गं समागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । बुधेमेवसंज्ञेतुमन्दाकिनीसानृपाणांसुखं भवेत्तत्समासे ॥ जगतीछन्दः १२ प्रभेदे ॥ ननररघटितातुमंदाकिनी । यथा । वलिदमनविधौबभौसङ्गता० मदजलरुचियमंदाकिनी सुरनिहितसिताम्बुजस्रङ्निभाहरतुजगदयं सपीताम्बरः ॥ मंदमवति० तन्वीला । वक्रकुटिलायागसौ । सुधीतिर्धिनि : । ङीप् ॥

मंदाक्रान्ता । स्त्री० अत्यष्टिच्छंद : १७ प्रभेदे ॥ मंदाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम् । यथा । प्रेमालापै : प्रियवितरणै : प्रीणिताशिक्ष्नार्यै मंदाक्रान्तातदनुनियतंवश्यतामेतियास्या । एवंमित्त्रावचनसुधयाराधिकायाः सखीनांप्रीत : पायात् स्मितसुवदनोदेवकीनन्दनो न : ॥

मंदाक्षम् । न० लज्जायाम् ॥ मदमक्षणागातात् ॥

मंदाग्नि : । पुं० अन्नेनिष्कासनायाग्निविशेषे ॥ कफदारास्थजठरानले ॥ तल्लनिदानादिमथा । मदस्तीक्ष्णोधविषम : समश्चेतिचतुर्विध : । कफपित्तानिलाधिक्यात्तत्साम्याज्जठरोऽनल : ॥ विषमोवातजान्रोगांस्तीक्ष्ण : पित्तसमुद्भवान् । करो

त्यग्निस्तथामंदोविकारान्नामसम्भवान् ॥ समासमाग्ने रशितामात्रा सम्यग्विपच्यते । यत्यापिनैवमंदाग्ने र्दिक्षमाग्ने सुदेहिन : ॥ कदाचित्पच्यतेसम्यक् कदाचिन्नपच्यते ॥ इति ॥ तस्यौषधंयथा । चित्रकस्याष्टभागानिशूरणस्यचषोडश । शुण्ठ्याश्चत्वारिभागानिमरिचानांद्वयंतथा ॥ पिप्पलीपिप्पलीमूलविडङ्गानांचतुष्टयम् । भल्लातकस्यभागा अग्निफलायाश्चतुष्टयम् ॥ द्विगुणेनगुडेनैषांमोदकानिविकारयेत् । तद्भक्षणमजीर्णं हिपाण्डु रोगस्यकामलाम् ॥ अतिशीघ्रतमन्दाग्निश्लीपदाद्याश्चनिवारयेत् । इ० ॥

मन्दायु : । त्रि० अल्पायुषि ॥

मन्दार : । पुं० सुरद्रुमविशेषे । पारिभद्रे । निम्बतरौ । चक्रायन० इ० भा० ॥ अर्कपर्णे । शाक० इ० भा० ॥ मन्दते० मोदयति । मन्दिस्तुत्या दौ । अङ्गिमदिमन्दिभ्यआरन् ॥ मन्दायरायश्च । यद्वा । मन्दाभारा भाराश्यसरलत्वात् । मन्दस्थकुत्सिता कृगतौ ॥ कर्म्मण्यण् । मन्दानियर्त्ति । अण् । मन्दैरर्य्यतेवा । घञ् । तीर्थविशेषे ॥

मन्दार : । पुं० पारिजाते । मन्दते । मदि० । वाहुलकादारु ॥

मन्दिकुकुर : । पुं० मत्स्यविशेषे ॥

मन्दिर : । पुं० मकरावासे । समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ अगारे । निशान्ते । वस्त्ये । सदने ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्रवा । मदि० । इषिमदिमुदीतिकिरच् ॥

मन्दिरपशु : । पुं० बिडाले ॥

मन्दिरा । स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा । स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि । मादरी० इ० भा० ॥ मंदतेऽत्र । मदिस्तुत्यादौ । मन्दिवाशीत्युरच् ॥

मंदेह : । पुं० राक्षसविशेषाणांसंज्ञायाम् ॥ यथा । सन्ध्याकालेतुसम्प्राप्तेरौद्रेपरमदारुणे । मंदेहाराक्षसाघोरा : सूर्य्यमिच्छन्तिखादितुम् ॥ प्रजापतिकृत : शापस्तेषांमैत्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणांमरणञ्चदिनेदिने ॥ तत : सूर्य्यस्यतैर्युद्धंभवत्यत्यन्तदारुणम् । ततोद्विजोत्तमास्तोयंप्रक्षिपन्तिमहामुने ॥ ॐकारब्रह्मसंयुक्तं गायत्र्याभिमन्त्रितम् । तेनदह्यन्तितेपापावज्रीभूतेनवारिणा इत्यादिविष्णुपुराणेद्रष्टव्यम् ॥

मंदोदरी । स्त्री० रावणस्यपत्न्याम् । मयासुरदुहितरि ॥

मंदोदरीश : । पुं० रावणे ॥ मंदो

दर्पा : ईश : ॥

मन्दोदरीसुत : । पुं० इन्द्रजिति ।

मन्दोष्णम् । न० ईषदुष्णे ॥ मंदञ्च तदुष्णञ्च ॥ त्रि० तद्वति ॥

मन्द्र : । पुं० गम्भीरध्वनौ ॥ मेघादिशब्दे ॥ मन्दते । मदि० । स्फायितञ्चीतिरक् । वाद्यविशेषे । मृदङ्गे ॥ त्रि० गम्भीरध्वनिवति ॥

मन्मथ : । पुं० कामदेवे । कुसुमायुधे । कपित्थे ॥ मननंमत्० चेतना । मन० । सम्पदादित्वात्क्विप् । गमादीनांक्वाविति नलोप: ह्रस्वस्येतितुक् । मथ्नातीतिमथ: । मथि० । पचाद्यच् । मतोऽज्ञानम्मथ: मन्मथ: । मनोमथ्नातीतिवा । पृषोदरादि: । मिथुनलग्ने ॥ वत्सरविशेषे । २८ । सरोगचतुष्पादैर्विड्डाड्ज्वरसमन्वितम् । अभिभूतंजगत्सर्वंमन्मथेसुरपूजिते ॥

मन्मथानन्द : । पुं० महाराजचूते ॥

मन्मथालय : । पुं० आम्रे ॥

मन्मन : । पुं० गद्गदध्वनौ ॥ न०दम्पत्यो: शनैर्भाषणे ॥ सुरतेकर्णमूलेपुरुषदेशीयभाषया । दम्पत्योर्जल्पितंमन्दंमन्मनंतद्विदुर्बुधा: ॥

मन्मनस्क : । त्रि० मन्मनसि ॥ मय्येवमन: सङ्कल्पात्मकंयस्य ॥

मन्मय : । त्रि० मदेकचित्ते । मामपरमात्मानं तत्पदार्थं त्वंपदार्थाभेदेनसाक्षात्करणशीले ॥

मन्या । स्त्री० ग्रीवाया: पश्चाद्भागे०-स्थितायांशिरायाम् ॥ गलपार्श्वशिरायाम् ॥ मन्यतेऽनया । संज्ञायां समजेतिक्यप् ॥

मन्याका । स्त्री० मन्यायाम् ॥

मन्यु : । पुं० क्रुधि ॥ दैन्ये ॥ शोके ॥ यज्ञे ॥ मन्यते । मनज्ञाने । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥ मृ-गय्वादिर्वा ॥

मन्ये । अ० वितर्के ॥

मन्वन्तरम् । न० दिव्यानांयुगानामेकसप्ततौ । किञ्चिदधिकैकसप्ततियुगात्मकेमनो: कालविशेषे । एवंचतुर्युगाख्यानामाधिक्येह्येकसप्तति: । कृतत्रेतादियुक्तानांमनोरन्तरमुच्यते । मनव: स्वायम्भुवाद्यस्तेषामन्तरमवकाश: स्थितिरितियावत् । एकसप्ततिरित्यमरोक्ति: । अयंयद्यपिगणनया० चतुर्युगेनाधिकामेकांस्पृशति० । यत: । दैविकानांयुगानांसहस्रंब्राह्मणोदिनम् । मन्वन्तराणिचैवेह तस्यभागाश्चतुर्दश । तत्किञ्चिदधिकादिव्ययुगानामेकसप्ततिरिति० नामर्धिधानेसर्वत्रानारायणोक्तत्वात् । तथापि० अल्पत्वादिह तथानोक्तमितिबोध्यम् । मन्वन्तरमङ्ख्यातत्पर्यायियत् । त्रिंश-

त्कोऽन्यस्तुश्वर्यां शांमानुषे यविजोत्त- मा : । सप्तर्षयस्तथान्यानिमियुता न्यधिकानितु ॥ विंशतिस्तुसहस्रा- णिकालोय : साधिकांविना । मन्व न्तरस्यसङ्ख्येयालिङ्गेऽस्मिन् क- थिताद्विजा : ॥ ययाब्दा : ॥ ३०६७२०००० । एवंचतुर्दशमन्व न्तैर्ब्रह्मदिनं भवति ॥ ब्रह्मणोदिन मध्ये चतुर्दशमन्वन्तराणिभवन्ति- । एकोमनुर्यावदधिकारीभवतिस च कालोमन्वन्तरसंज्ञकोभवति । तत्र मनूनांनामानि यथा । स्वायम्भुवो मनु : पूर्वस्तत: स्वारोचिषोमनु : । उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्त था ॥ षडेते मनवोऽतीताश्चय वैवस्वतोमनु : । सावर्णा . पञ्चरौ च्यश्चभौच्यश्चागामिनस्त्वमी ॥ पुरा णसर्व ॥ मन्वन्तरंमनुर्देवामनु पुत्रा : सुरेश्वर : । ऋषयोंऽशाव तारश्चहरे : षड्विधमुच्यते ॥

मन्वादि : । स्त्री॰ मासविशेषेषुतिथि विशेषे ॥ अश्वयुक्शुक्लनवमी॰ कार्त्तिकेद्वादशीसिता । तृतीया चैत्रमासस्य॰ तथाभाद्रपदस्यच ॥ श्रावणस्याष्टमीकृष्णा पौषस्यैकाद शीतथा । आषाढस्यापिदशमी मा घमासस्यसप्तमी ॥ कार्त्तिकीफा ल्गुनीचैत्री ज्यैष्ठीपञ्चदशीसिता । माघमासे शुद्धेचकार्त्तिकीचतथै

वच ॥ एतामन्वादय : प्रोक्तादत्त स्याक्षयकारिका : ॥

मपष्ट : । पुं॰ )
मपष्टक : । पुं॰ ) वनमुद्गे ॥
मपुष्टक : । पुं॰ )

मम । अ॰ षष्ठ्यन्तकप्रतिरूपकमव्यय म् । ममेत्यभिमाने ॥

ममता । स्त्री॰ मदीयत्वाभिमाने ॥ भावेतल् । ममत्वे ॥

ममतायुक्त : । वि॰ कृपणे ॥

ममत्वम् । न॰ ममतायाम् ॥ भावे त्व : ॥

ममापताल : । पुं॰ विषये ॥ मन्य ति । मन्यबन्धने । मन्यते यंलोपो मश्चापतुट्चागमश्चेतिमन्यते रासप्र त्ययस्तस्यापतुट्॰चागमोधातोर्यलो पोमकारश्चान्त्यस्य ॥

मय : । पुं॰ दैत्यानांशिल्पिनि । मा याविनांशिल्पिनाञ्चाचार्ये ॥ वेसरे । अश्वतरे ॥ उष्ट्रे । करभे ॥ मीनाति॰ मयते वा । मीङ्हिंसा याम्॰ मयगतौवा । पचाद्यच् ॥

मयट : । पुं॰ तृणहर्म्ये । तृणयुक्त हर्म्ये ॥

मया स्त्री॰ चिकित्सायाम् ।

मयु : । पुं॰ किन्नरे ॥ मृगे ॥ मिनो ति । डुमिञ्प्रक्षेपणे । भृमृशीङ् चरित्सरितनिधनिमिमस्जिभ्यउ : सूत्रु : । मीनातीत्यात्यन्तुयागुल कान ॥

मयुराज : । पुं० कुवेरे ॥ मयूनांराजा टच् ॥

मयुष्टक : । पुं० वनमुद्गे । मकुष्टके । मौठ० इ० भा० ॥ त्रिपुटि । छा० । कुंम् । मयुष्टासौख्यकाय ! पूर्वपदादितिपत्वम् ।

मयूख : । पुं० किरणे । मौख० इ० भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमीते । माङ् माने । माङ् ऊखोमयश्च व्युत्पत्त्योमया देशश्च ॥

मयूर : पुं । बर्हिणे । नीलकण्ठे । शिखावले । केकिनि । मोर० इ० भा० ॥ अस्यमांसगुणा : । यथा । मयूर : श्रोत्रनेत्राग्निमेधाशर्करायुषाम् । हितोवल्योगुरुश्चोष्णोवातघ्न : शुक्रमांसद : ॥ हेमन्तकालेगिरिगेहवस्तीसेव्य हिमायूरमुशन्तिमांसम् । अर्थोऽपिवर्हिर्हितभोजनेनयवयोगरश्रीपासुखप्रपथ्य : । एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् । बर्हिचूडाख्यौषधौ । खराश्वायाम् । कारव्याम् ॥ अपामार्गे ॥ मिनातिरोगम् । मीञ् हिंसायाम् । मिनातेरुरन् ॥ यद्वा । मयते । मयगतौ । खर्जादित्वादूर : ॥ मह्यांरौतिवा । अन्येभ्योऽपीतिड : । पृषोदरादि : ॥

मयूरक : । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न० तुत्थाञ्जने ॥

मयूरप्रतिकृति : ॥ कन् । मयूरंकायतिवासादृश्यात् । कै० । आतइतिक : ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक : । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ : । पुं० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपदकम् । न० स्तनादौनखाघाते ॥

मयूरविद्वा । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० बर्हिचूडायाम् । शिखिन्याम् । शिखावलाख्यक्षुपे ॥ मयूरस्यशिखापीतासहस्तडिमिवास्य । नीलकण्ठशिखालक्ष्मीपिसाद्यं पातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोरनी० इतिभाषा ॥

मरक : । पुं० मार्याम् । मारके । मारी० इतिभाषाप्रसिद्धे मरणे ॥ तस्यकारणादियथा । यावन्मार्तण्डसूनुर्गविधनुषिभयेमध्ये शक्तिनार्यौतावद्दुर्भिक्षपीडाभयमिति च सरसंशयंयांतिलोका : । शाहाकारातयोर्भिमनुजभयकरीकेकरावैरौद्रभौमै : शून्यग्रामाभवेयुर्नरपतिरहिताभूरिवक्ष्यालका : । वक्रकारी

मरहट्टा । पुं॰ मात्राछन्दःप्रभेदे ॥ यथा । आदौकुरुषट्कलमथचतुष्कलयस्तानन्दमितोपि॰दृशवसुकादश भवतिवशमधिकशुभासवर्णोपि ॥ विंशतिनवसङ्ख्यंभणितसुमुख्यंन्लितगुणगणकोटिमरहट्टाछन्दांकि लनयकलतिलकतरिपुमिमतकरोटि ॥ यथा । अभिमतधनदातासिद्धिविधाताखगदम्भारगतगौल॰दुरितद्वमहाग्नीविघ्नविनाशीकल्पपयशात कीज॰भुवनत्रयवन्दितहरशिरसिस्थितवास॰दृष्टगुणदशार्पदेष्टिदुरापंन सुखततिमिरविलास ॥

मराकाली । स्त्री॰ दक्षिकाल्याम् ॥

मराल : । पुं॰ राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गे ॥ दाडिमीविपिने ॥ त्रि॰ खले । त्रि॰ मसृणे ॥

मरालक : । पुं॰ कलहंसे ॥

मरिचम् । न॰ चोलके । कृष्णे । ऊषणे । धर्मपत्तने । काचीमिरच॰ इतिभाषा॰ ॥ मरिचकटुकं तीक्ष्णंदीपनकफवातजित् । उष्णं पित्तहररूक्षंश्वासशूलकमीन्हरेत्॥ तदार्द्रंमधुरपाकिनात्युष्णंकटुकगुरु । किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकिस्यादपितलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलका दिच : ॥ कक्कोले । पुं॰ मरुवक वृक्षे ॥

मरिचपत्रक : । पुं॰ सर्जकवृक्षे । सालतरो : प्रभेदे ॥

मरिमा । पुं॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण : । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । ह्रस्वमरिच॰ इ॰ भा॰ । म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच : ॥

मरीचि : । पुं॰ ब्रह्मणोऽध्यमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ । मरुतांमध्येभगवद्विभूतौ ॥ पुं॰ स्त्री॰ चन्द्रसूर्ययो : किरणे । गभस्तौ । षट्त्रसरेणुपरिमाणे॰ इति वैद्या : । म्रियतेतमोऽस्मिन् । मृङ्॰ मृकणिभ्यामीचि : ॥ त्रि॰ कृपणे ॥

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादायमर्करा : प्रतिफलिता : दूरस्थानांजलत्वेना- भांति॰ तदाचिकाम्मृगतृष्णेति॰ टीकाकार : ॥ मरीचिरिव । इवे- प्रतिकृतावितिकन् ॥

मरीचिप : । पुं॰ तपोविशेषात्सूर्य- किरणपायिनि तापसान्तरे ॥ चन्द्रिकापायिनि ॥

मरु : । पुं॰ गिरौ । पर्वते ॥ धन्वनि । दृशिरुके । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरात्प दक्षिणोत्तरिकातोऽन्दिदिवसे । म

रुदेशीमहेशानिउष्ट्रोत्पत्तिपरायणः ॥ म्रियन्तेप्राणिनोयत्र । रूढ० । भ्रमशीर्ष्य् : ॥ मरुधन्वनि ॥ सूर्यवंशीयभाविनृपविशेषे ॥

मरुक : । पुं० मृगविशेषे ॥ मयूरे ॥

मरुकान्तारम् । न० रामबाणेनशोषितदेशविशेषे ॥ पाञ्चिका० ड० इङ्क्लभा० ॥

मरुज : । पुं० नखीनामगन्धद्रव्ये । व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजाते ॥

मरुजा । स्त्री० कर्कटी ॥

मरुटा । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायाम्स्त्रियाम् ॥

मरुत् । पुं० समीरे । वायौ ॥ म्रियते ऽनेन० इति न० विनावा । रूढ० । म्रियोरुति : ॥ देवे । सुरे ॥ सप्तसप्तकगणे ॥ मरुवके । न० ग्रन्थिपर्णे ॥ स्त्री० पृक्कायाम् ॥ मरुद्भिप्रदोल्यन्तिशोण्ठ : पित्तलोलघु : । वृश्चिकादिविषघ्ने वातातकुष्ठकृमिप्रणुत् ॥

मरुत : । पुं० वायौ ॥ अव्युत्पन्नोयम् । मरुत : स्पर्शन : प्राणइतिविक्रमादित्यादिकोषात् । कोयंवातिसदागतिरामरुतइतिकविराज : ॥ घण्टापाटलिवृक्षे ॥

मरुत्कर : । पुं० राजमाषे ॥

मरुत्त : । त्रि० वायुविशिष्टे । मरुतसन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥

मरुत्तक : । पुं० मरुवके ॥

मरुत्पथ : । पुं० आकाशे ॥

मरुत्पुत्र : । पुं० हनुमति ॥ भीमसेने ॥ मरुत : वायो : पुत्र : ॥

मरुत्प्लव : । पुं० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ॥

मरुत्वान् । पुं० इन्द्रे । शचीपतौ ॥ मरुतोदेवता : सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभत्वाज्जश्त्वाभाव : ॥

मरुत्वतीयम् । न० मरुत्वत्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छचेति० छ० : ॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीत्यनस्यचकारात्०यत् ॥

मरुत्सख : । पुं० इन्द्रे ॥ अग्नौ ॥

मरुदान्दोल : । पुं० धवित्रे ॥

मरुद्दिष्ट : । पुं० गुग्गुलौ ॥

मरुद्रथ : । पुं० आवहप्रवाहादिवायुसमूहे ॥

मरुद्रुमम् । न० वाततूले । ग्रीष्मह्रासे । वुढियाकीसूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खिराइ इ० गौ० दे० भा० ॥

मरुद्रथ : । पुं॰ अश्वे । देवरथे ॥
मरुद्रुम : । पुं॰ विट्खदिरे । अरिमेदे ॥
मरुद्वर्त्म । न॰ आकाशे ॥
मरुद्वाह : । पुं॰ धूमे ॥ वह्नौ ॥
मरुद्विप : । पुं॰ उष्ट्रे ॥
मरुन्माला । स्त्री॰ पृक्कायाम् । मरुद्भिर्मल्यते । मलधारणे । घञ् ॥
मरुप्रिय : । पुं॰ उष्ट्रे ॥ मरुदेशविशिष : प्रियोऽस्य ॥
मरुभू : । स्त्री॰ दशैरकमारवाड॰- द्र॰ प्र॰ ॥ निर्जलदेशे ॥
मरुभूरुह : । पुं॰ करीरवृक्षे ॥
मरुल : । पुं॰ कारण्डवपक्षिणि ॥
मरुला । स्त्री॰ केरलदेशप्रसिद्धायां नद्याम् ॥
मरुव : । पुं॰ मरुवके ॥
मरुवक: । पुं॰ समीरणे । प्रस्थपुष्पे । फणिज्झके मरुवा॰ द्र॰ भा॰- प्र॰पुष्पे ॥ पिण्डीतके । श्वसने । खरपाटये । मदनद्रुमे । मयनफल द्र॰ भाषा ॥ मरुं वाति । वा॰ । धा॒न्थिल्पिसंज्ञयो: ॥ व्याघ्रे ॥ राहौ । खरपत्रे । नागदौना॰ द्र॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ त्रि॰ भयानके ॥
मरुसम्भवम् । न॰ चाणक्यमूलके ॥
मरुसम्भवा । स्त्री॰ महेन्द्रवारुण्याम् । क्षुद्रदुरालभायाम् ॥

मरुस्था । स्त्री॰ क्षुद्रदुरालभायाम् ॥
मरूक : । पुं॰ मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति॰ म्रियतेवा । मृङ्॰ । मृकणिभ्यामूकोकणाविष्यत: ॥
मरूवरा । स्त्री॰ कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥
मरोखि : । पुं॰ मकरे । पक्षिदंष्ट्रके । मगर॰ द्र॰ भा॰ प्र॰ यादसि ॥
मरोलिक : । पुं॰ मकरे ॥
मर्क : । पुं॰ देहे । शरीरे ॥ वानरे ॥ वायौ ॥ मर्कति॰ मर्कयतिवा । मर्कि : सौत्रोधातुरितिकश्चन । मर्कशब्दे॰ चौरादिकइति॰ सिद्धौ स्यात्सूचेकैयट: । घृणभीकापाश स्यतिमर्चिभ्य : कन् । नचैवंणिलोपश्रुयानिवन्धनात्॰ गुणंनस्यादिति वाच्यम्॰ पूर्वत्रासिद्ध मितदभावात् ॥
मर्कक : । पुं॰ गलिगण्डखगे । ढाङ्गिल॰ द्र॰ गौ॰ दे॰ भा॰ ॥
मर्कट : । पुं॰ वानरे । लूतायाम् । ऊर्णनाभे ॥ चौकारधान्तरे ॥ गलिगण्डे । ढाङ्गिल॰ द्र॰ भा॰ प्र॰ खगे ॥ मर्कति । मर्क: सौत्रोधातुर्ग्रहणे । शकादिभ्योऽटन् ॥ स्थावर विषभेदे ॥
मर्कटक : । पुं॰ शस्यप्रभेदे ॥ वानरे॰ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

ग्रीवे ॥ संज्ञायांकन् ॥
मर्कटतिन्दुकः । पुं॰ कुपीलौ ।
मर्कटपिप्पली । स्त्री॰ अपामार्गे ॥
मर्कटप्रियः । पुं॰ क्षीरवृक्षे ॥
मर्कटवासः । पुं॰ आथाबन्धे ॥ लूतातन्तौ । मकड़ीकाजाल॰ इ॰ भा॰ ॥
मर्कटशीर्षम् । न॰ हिङ्गुले ॥
मर्कटास्यम् । न॰ ताम्रे ॥ वानरमुखे ॥ पुं॰ मीनविशेषे ॥ त्रि॰ वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री॰ करञ्जप्रभेदे । मकड़ा इत्युपा॰ इ॰ भा॰ ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् ॥ अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दुः । पुं॰ काकतिन्दुके ॥
मर्करः । पुं॰ भृङ्गराजे ॥
मर्करा । स्त्री॰ निष्फलायाम् ॥ दर्व्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्गूः । पुं॰ धावके । रजके ॥ प्रौढ मर्द । स्त्री॰ शठी । मार्ष्टि । मृजुशुद्धौ । मृजेर्गुणश्चेत्यू ॥ मार्जनंवा ॥
मर्त्तः । पुं॰ मर्त्यलोके ॥ मानुषे । म्रियन्तेऽत्र । मृङ्॰ । हसिमृग्रि॰ इत्यादिना । इदमिदमिलूधूर्वि॰ अस्तन् । ।
मर्त्यः । पुं॰ मनुष्ये ॥ म्रियते । मृङ्॰ । हसिमृग्रिणिवाममि॰ इति तन् । ततः स्वार्थेयत् । प्राक्प्रबोधात्॰ सर्वहिमर्त्यः ॥ मध्यलोके ॥ म्रियन्तेऽत्र वेतिमर्त्यः । हसिमृग्रिणि॰ मृङ् धातोस्तन्॰ मर्त्तः । ततोनवस्तु रमस्तं यविष्ट स्यः स्वार्थेयत् ॥ मर्त्तं भवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्यमुखः । पुं॰ यक्षे ॥
मर्त्या । स्त्री॰ मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री॰ भातरि ॥ धनिदम्न्याम् ॥ राजमातरि ॥
मर्दनम् । न॰ चक्रमर्दने । पादमर्दनादौ । संवाहने ॥ मृद्यौदे । क्षुट् । कदने ॥ चूर्णने । त्रि॰ मर्दयितरि ॥ मर्दयति । मृदक्षोदे॰ मृदमर्दनेवा । हेतुमत्त्विचप्रत्ययात् [illegible] ॥
मर्दलः । पुं॰ वाद्यभेदे ॥ मर्दलो [illegible] इति ॥ [illegible] ॥ मर्दयुपमर्दलाति॰ । ला॰ । घोरादित्वात् ॥
मर्दितः । त्रि॰ चूर्णिते ॥ मथिते ॥
मर्दिता । त्रि॰ मर्दयितरि ॥
मर्दी । त्रि॰ मर्दितरि ॥
मर्मकीलः । पुं॰ भर्त्तरि ॥
मर्मज्ञः । त्रि॰ मर्मविदि । तत्त्वज्ञे ॥
मर्म । न॰ स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानभिगीयचेत्यैरपिधर्मागम-
मर्म्मपारगैः। स्मरसुन्दरमांयद्-
च्यजनस्तवधर्मः सदयोदयोज्ज्वलाः॥
सन्धिस्थाने॥ जीवस्थाने॥ परघे-
चगोचरत्नोमिघाथजीतकश्चित्।
नसंवसितुसुतघोषमकंवेममंषिस्पृ-
शित्॥ चवधि॥

मर्म्मरः। पुं॰ वस्त्रविशेषे॥ शुष्कप
र्णध्वनौ॥ वस्त्रपर्णानांस्वनिते।
मर्मर्मरड्मरड्॰ इतिचभाषा॥
मर्मरासि। रा॰ वा॥ अनुकरण-
शब्दोयम्॥

मर्म्मरी। स्त्री॰ पीतदारुणि॥

मर्म्मरीकः। त्रि॰ दीनजने॥ म्रियते।
मृङ्॰। पर्फरीकादित्वादीकन्॰धा
तोरित्वंनपूचाभ्यासस्य॥

मर्म्मवित्। पुं॰ मर्म्मज्ञे। कार्पटि-
के॥

मर्म्मवेदी। पुं॰ मर्मविदि॥

मर्म्मस्पृक्। त्रि॰ मर्मपीडके। अरु-
न्तुदे॥ मर्म्मस्पृशति। स्पृशउपता
पे। स्पृशोऽनुदकइति॰ क्विन्॥

मर्म्माविध्॰द्। त्रि॰ सन्धिस्थानवेधक
र्त्तरि॥ मर्म्मज्ञे॥ मर्म्माणिविध्य
ति। व्यधताडने। क्विप्। ग्रहिज्ये
तिसम्प्रसारणम्। नहिवृतीतिदी-
र्घः॥

मर्म्मिकः। त्रि॰ मर्मज्ञे।

मर्म्मुरः। पुं॰ तुषानले।

मर्य्यः। पुं॰ मरणधर्म्मणि। मनु-
ष्ये॥

मर्य्या। अ॰ सीमायाम्॥

मर्य्यादा। स्त्री॰ सीमनि। अवधौ।
तेनविनेत्यर्थे॥ स्थितौ। धारणा-
याम्। सत्पथस्थितौ॥ अनुल्लङ्घनी
यायांव्यवस्थायाम्॥ स्थित्यनतिक्र
मे॥ कूलभूमौ॥ मर्य्येतिसीमार्थेऽ-
व्ययम्। तद्दीयते। डुदाञ्॰।
आतश्चोपसर्गइत्यङ्॥

मर्षः। पुं॰ क्षान्तौ॥ मर्षणम्। अ-
पतितिक्षायाम्॥ घञ्॥

मर्षणम्। न॰ अपराधेसत्यपिक्रोधा-
नाविष्करणे। क्षमायाम्। मृष॰
भावेल्युट्॥

मर्षितः। त्रि॰ क्षान्तियुक्ते॥ मृषेः
कर्त्तरिक्तः। भावेक्तेक्लीबम्॥

मर्षितवान्। त्रि॰ क्षान्ते॥ मृषेः
कर्त्तरिक्तवतुः॥

मर्षी। त्रि॰ क्षमाशीले।

मलः। पुं॰ न॰ पापे। किल्बिषे॥
विष्ठि। विष्ठायाम्। यथा। मला
यत्तं वलं पुंसांशुक्रायत्तञ्चजीवनम्।
तस्माद्यत्नेनसंरक्षेद्यक्ष्मिणोमलरे-
तसीइति॥ किट्टे। मण्डूरादौ॥
स्वेदादौ॥ वसाशुक्रमसृङ्मज्जामूत्र-
विट्कर्णविण्नखाः। श्लेष्माश्रु-
दूषिकास्वेदोद्वादशैतेनृणांमलाः॥
वातादिषु। यथा। [illegible]

षामलिनीकरणान्मला : । धारणा
द्वातवर्च्च श्च वातपित्तकफास्त्रय: ॥
सर्वेषामेवरोगाणांनिदानंकुपिता-
मला : । तत्प्रकोपस्यतुप्रोक्तं विवि-
धाहितसेवनम् । हरिद्रसन्देशेप्याथ
पित्त शरदिनिर्हरेत् वपांसुशमये
वायुंप्राग्विकारसमुच्छ्रयात् ॥ अथ-
विशेषमाहमाधव : कफपित्तानि
ला : पूर्वमध्यान्ते पुव्यवस्थिता : ।
देहाहोराविषयसांसन्धिव्यपिकफा
निलाविति ॥ अस्यार्थ : । कफपि-
त्तानिला : देहाहोराविवयसांपूर्व
मध्यान्तेषुयथासंख्यंव्यवस्थिता : ।
देहस्यपूर्वभागेशिरमारभ्यवक्षोन्त-
कफोव्यवस्थित : । मध्येचामाशय-
मारभ्यनाभ्यन्तं पित्त व्यवस्थितम् ।
अन्ते नाभ्यधोभागेवायुर्व्यवस्थित:
। शिरोमूलत्त्वात्देहस्य वपूर्वादिक
ल्पना । अह्नस्त्रिधाविभक्तस्यपूर्व-
भागेकफोमध्ये पित्तमन्ते वायु : ।
एवंरात्रेरपिवयसोपिपूर्वभागेबाल्या
वस्थायांश्लेष्मामध्ये तरुणावस्थायां-
पित्तमन्ते वृद्धावस्थायांवायु : ।
सन्धिष्विति । देहाहोराविवयसा-
मित्यं च । तत्रदेहस्यपूर्वभागमध्य-
भागयो : सन्धौकफोव्यवस्थित. म
ध्यभागान्त्यभागयो : सन्धौपक्वाश-
याख्योवायु : एतत्त्रयंचासदृशमि
त्यतोलभ्यते । अह : सन्धौरात्र्या-

साकमह : सन्धि : प्रात : संज्ञक
स्तस्मिन्कफ : । अह्नासाकंरात्रे :
सन्धि : सायंतस्मिन्वात : । वय:
सन्धौबाल्यतारुण्ययो: सन्धौश्लेष्मा
तारुण्यवृद्धत्वयो : सन्धौवायुरिति
॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टि
लोपश्चेतिपाल : ॥ मलयति । मल
तल्कृतौ० अद्न्त : । मलतेवा ।
मलधारणे । पचाद्यच् ॥ कर्पूरे ॥
त्रि० कृपणे । कदर्ये ॥

मलघ्न : । पुं० शाल्मलीकन्दे । त्रि०
मलनाशके ॥

मलघ्नी । स्त्री० नागदमन्याम् ॥

मलजम् । न० पूये ॥ त्रि० मलोद्भवे ॥

मलदूषित : । त्रि० मलिने ॥ मलेनदू
षित : । कर्तृकरणेकृतिसमास: ॥

मलद्रावी । पुं० जयपाले ॥

मलधी: । पुं० खनित्रे ॥

मलन : । पुं० पटवासे । पंशुकालये
॥ न० मर्द्दने । पीडना० मलना०
ह्न० भा० ॥

मलपू : । स्त्री० काकोदुम्बरिकाया-
म् ॥ मलपूस्तम्भकृत्तिक्ताशीतला
तुवराजयेत् । कफपित्तव्रणश्वित्रकु
ष्ठपाण्डुर्शकामला : ॥ मलात्पापा
-त् । पुनाति । पूञ्पवने । क्विप् ॥

मलभुक् । पुं० काके ॥

मलभेदिनी । स्त्री० कटुकायाम् ॥

मलमास : । पुं० । अधिमासेमलि-

न्नुचे ॥ यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा । मलमासः स विज्ञेयो मासस्त्रिंशत्तमो भवेत् ॥ गर्गस्तु । अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्जितम् । मलमासः स विज्ञेयो मासः शुद्धाख्य उत्तरः ॥ तथा च ब्रह्मसिद्धान्ते । चान्द्रो मासो ह्यसङ्क्रान्तो मलमासः प्रकीर्त्तितः ॥ सत्यव्रतस्तु । राशिद्वयं यत्र मासि सङ्क्रामेत् दिवाकरः । नाधिमासो भवेदेष मलमासस्तु केवलम् ॥ एकचमासवितयं यदि स्यादर्कवर्जितं तत्र परोऽधिमासः । अयोदयस्तु स्मृतिराहमासं चतुर्दश क्वापि न चाभिदृष्टम् ॥ अथ मासश्चान्द्रश्च सौरः । अनयोर्द्वयोर्मासः सम्बन्धाल्लिङ्गयते । असौ चान्द्रोऽनयोः स्वाभाविकसौरस्वयोद्वयः ॥

मलमासत्वम् । न० रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासत्वे ॥

मलय : । पुं० रम्यमूलप्रदेशान्तरे । खनामप्रसिद्धेऽद्रिविशेषे । पाथरि । दक्षिणाचले । चन्दनाद्रौ ॥ तातमालातामपर्णी प्रसुत्रा मलयोद्भवा : ॥ शैलाद्रौ ॥ देशविशेषे । मलैवार० इ० भा० ॥ आरामे । नन्दनवने ॥ अष्टद्वीपोपद्वीपान्तर्गतोपद्वीपविशेषे ॥ मलते । मलधारणे । वसिमल्लितविम्बः : कयन् ॥



ऋषभदेवस्य पत्न्यां पुत्रे ॥

मलयगन्धिनी । स्त्री० उमायाः सखीविशेषे ॥

मलयज : । पुं० राहुपद्दे ॥ पुं० न० चन्दने ॥ मलयेऽजातः । सप्तम्यां जनेर्ड : ॥

मलया । स्त्री० विवृतायामोषधौ ।

मलयाचल : । पुं० सह्याद्रिसमीपस्थे० शैलविशेषे । दक्षिणाचले ॥ सर्तानिसिव्योऽस्मिवान् भोगिनां सलयाचल : ॥

मलयानिल : । पुं० वासन्ते । वसन्तकालिकवायौ ॥

मलयाख : । पुं० देशविशेषे । यथा । सुराम्बिकासमारभ्य मन्थयाद्यन्तगं शिवे । मलयाखाभिधो देशो मन्त्रसिद्धिप्रदायक : ॥

मलयू : । स्त्री० मलय्याम् । काकोदुम्बरिकायाम् ॥ मलं यवति । युञ् गुप्तायाम् । क्विप् । बाहुलकाद्दीर्घ : ॥ यद्वा । मलते । मलधारणे । बाहुलकाद्यू : ॥

मलयोद्भवम् । न० चन्दने ।

मलवक्त्रं । न० गुदे ॥

मलविलासिनी । स्त्री० मङ्खपुष्पाम् ॥

मलहन्ता । पुं० मालतीपाकन्दे ।

मला । स्त्री० भुम्यामलक्याम् ॥

मलाका । स्त्री० दूत्याम् । कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्य दूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा । मलापहाभीमरथीचघट्टगायथावक्ता व्याकलसाम्यगासुधे : । मलापहा घट्टगयोस्तथाधिपथ्यं साक्षात्सुतरं सुकारिदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैध : कुसुमस्तेयमधैर्यं च मलावहम् ॥

मलारि : । पुं० सर्वक्षारे । सामग० ए० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्ते वस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनं मलिनं मलै : । तथाभवत्यबुद्धानामात्मापिमलिनोमलैरिति ॥ मलै : कृपणमर्मपालैरात्मा । यथावमलैर्घनरजोधूमादिभिराकाशवृत्ते : ॥ निष्पन्नैर्मिलिष्कृक्रियाव्याप्तिनि ॥ कृष्णे । दूषिते ॥ मलोस्यास्ति । ज्योत्स्नादिभ्येतिसाधु : ॥ यदा । मलते । मल० । वहुलमन्यत्रापीतीनच् ॥

मलिनमुख : । पुं० वह्नौ ॥ गोलाङ्गूले० स्त्री ॥ प्रेते ॥ त्रि० क्रूरे ॥ खले ॥

मलिनात्मा । पुं० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मनां प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य : । त्रि० खले ॥

मलिनिमा । पुं० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्वभाव : । इमनिच् ॥

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या : । अतइनिठनौ ।

मलिनीकरणम् । न० मलाकर्षे ॥

मलिम्लुच : । पुं० मलमासे ॥ यथा । समतिक्रम्यतुरविर्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय : प्रकृत : स्मृत : ॥ यदा दर्शान्तसमतिक्रम्यतत्पूर्वमासान्त्यपक्षस्तिराशिस्थ : सन्सूर्योऽतिचारागच्छेत् मासान्तरे राश्यन्तरसंयोगं गच्छेत्० तदाद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय : । मलो मलम्लोचति० गच्छतीति० मलिम्लुच : । द्वितीयस्तुप्रकृत : शुद्ध : कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मल्यते । मल० । इष् । मलिं धृतं म्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क : ॥

मलिष्ठा । स्त्री० ऋतुमत्यांनार्याम् ॥

मलीमस : । पुं॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु : ।

मलूक : । पुं॰ कृमिविशेषे ।

मल्ल : । पुं॰ पात्रे ॥ कपोले ॥ मल्लभेदे ॥ बलीयसि ॥ कल्लु । लिच्छिवी । वाहुयोधिनि॰ मल्लतिनात्मामसिद्धे । चयचवात्यात् क्षत्रियात्सवर्णायांजात : । यथा मनु : । भल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच । इति । देशविशेषे । यथा । दृग्राणानंवराएष्वमल्ला : शाल्वा : युगन्धरा : । इति । विराटपर्व्वणि १ अध्याय : । वर्णसङ्करजातिविशेषे । मल्ला॰ इ॰ गी॰ दे॰ भा॰ प्रसिद्धे ॥ चयच । लेटात्तीवरकन्यायांजात : । ब्र॰ व॰ वै॰ पु॰ । तन्त्रवाय्यांकुम्भकाराज्जात : । ब्र॰ पु॰ पु॰ । मियुद्धकुशलोमल्ल : सदृत्तिस्तपरायण : ।

मल्लक : । पुं॰ दन्ते । पुं॰ स्त्री॰ दपाधारे । कौषिकायाम् । नारिकेलफलनिर्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । क्वन् ।

मल्लतूर्य्यम् । न॰ वाद्यविशेषे । मल्लरणे ॥

मल्लनाग : । पुं॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ।

मल्लभू : । स्त्री॰ मल्लभूमौ ।

मल्लभूमि : । स्त्री॰ रङ्गभूमौ । वचवाटि । अखाड़ा॰ इ॰ भा॰ । देशविशेषे ॥

मल्लयात्रा । स्त्री॰ मालव्याम् । मल्लानांयुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ मियुद्धे । वाहुयुद्धे । मल्लानांसङ्ग्रामे ।

मल्ला । स्त्री॰ नार्य्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ।

मल्लार : । पुं॰ वर्षारागाणांसम्बन्धिनिरागे । मेघमल्लाररागस्यगानंवर्षासुसर्वदा ।

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् । यथा । आन्दोलितापदेशाख्यालीलाप्रथममञ्जरी । मल्लारीचेतिराग्ण्योवसन्तस्यसदानुगा: । मेघरागस्यरागिण्याम् ।

मल्लि : । पुं॰ धारणेदेशविशेषे । स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्वधातुभ्यइन् ।

मल्लिक : । पुं॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे । किञ्चिद्धूम्रवर्णेषु चञ्चुचरणेष्वपक्षचितेहंसप्रभेदे । मल्लते । मल्ल॰ । क्वन् । स्वार्थेक : ।

मल्लिका । स्त्री॰ तयशून्ये । भूपद्याम् ।

म०भपलम् ॥ अथचिकित्सायथा । पम कीलंशतुमर्षिंमशकांस्तिलका लकान् । उत्क्षत्यशस्त्रेणदहेत्तथा क्षारेणवामशोपत : ॥ अपिच । स मुशानान्तुसर्पं त्वचपोंमशकमायम: ॥ इति ॥

मशकी । पु॰ उडुम्बरहवे ॥

मशहरी । स्त्री॰ मतुपद्धाम् । शयन तिरस्करिण्याम् ॥

मशुन : । पु॰ कुक्कुरे ॥

मसनम् । न॰ सोमराजौषधे ॥

मसरा । स्त्री॰ मसूरे ॥

मसार : । ) पु॰ इन्द्रनील

मसारक : । ) पु॰ मणौ ॥

मसि : । स्त्री॰ लिपिप्रयोजनायाम् । पयाङ्गणि । मध्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका हुन्तौ ॥

मसिकूपी । ) स्त्री॰ मस्या-

मसिधानम् । ) न॰ धा-

मसीधाना । ) स्त्री॰ रे ।

मसिद्गुपिकायाम्

मसिमम् । न॰ सपिंडके ॥

मसिपथ : । पुं॰ लेखके ॥

मसिप्रसू: । स्त्री॰ मस्याधारे ॥ मस्या: प्रसू : ॥ लेखन्याम् ॥

मसिमणि : । पुं॰ मस्याधारे ।

मसिवर्धनम् । न॰ रसगन्धे ॥

मसी । स्त्री॰ मेलायाम् । लिपिसाधन विशेषे । खारो॰ द्र॰ गौ॰ धा॰ । स्वादौ॰ द्र॰ भाषा॰ ॥ शेफालिका वृक्षे । मस्यति । मसौ॰ । पचाद्यच् । गौरादित्वात् ङीष् ॥

मसीजलम् । न॰ मस्याम् ॥

मसीधानम् । न॰ मस्याधारे ॥

मसीधानी । स्त्री॰ मस्याधारे ॥

मसीना । स्त्री॰ समाख्याख्यातधान्ये । उमायाम् ॥

मसीय : । पुं॰ कायस्थे ॥ मस्यार्हः ॥

मसुर : । पुं॰ मसूरे । मसृण्ये ॥ म स्यति॰ मसावेश । मसौ॰ । मसे रुरन् ॥ उपधामि ॥ मसुरा । स्त्री॰ वेश्यायाम् । व्रीहिभेदे दे । टाप् ॥

मसुरी । स्त्री॰ पापरोगे । मसूर्याम् ॥

मसूर : । पुं॰ व्रीहिभेदे । मङ्गल्य- के । मसूरोमधुर : पाकेसङ्ग्राही शीतलोलघु : । कफपित्तास्रजिद्रू क्षोवातलोज्वरनाशन : ॥ मस्यति॰ मसावेश । मसौ॰ । मसेरूरन्निति पाश्चिमिकाक्षरन् । उपधामि ॥

मसूरक : । पुं॰ उपधर्षविशेषे । चातु रे । चक्रमाही । गोधूमिर्ना॰ द्र॰ भा॰ ॥ मसूरे । स्वार्थे क : ॥

मसूरविदला । स्त्री॰ कृष्णत्रिवृतायाम् ॥ मसूरस्यविदलमस्या : ।

मसूरा । स्त्री॰ मसूर॰ इ॰ प्रसिद्धे व्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाःपिडकाःस्युर्मसूरिकाः ॥ चतोसारे ॥ मशहर्याम् ॥ यथोक्तंपाद्मेक्रियायोगसारे । दंशांश्चमशकांश्चैवमशकाक्षेनिवारयेत् । मसूरिकाभिः प्राक्षत्यमत्र शायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवव्याम् । शीतलाख्यरोगे ॥ पिहति ॥ रक्ता विहति ॥

मसृण : । पुं॰ सोमे ॥ त्रि॰ चाकचक्ये । अकठिने । स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ ऋण : ॥ यद्वा । सम्ऋच्छतीति । ऋच्छगतौ ॥ इगुपधेतिक : । पृषोदरादिः ।

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्कर : । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेनत्र । मस्कगतौ । बाहुलकादरः । यद्वा । मद्यतेऽमस्मिमण्डने । चर : । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रघुवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादरः । मस्करोज्ञानं गतिर्वाऽस्यास्ति । मस्करमस्करिणाविति णिनिः ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनि : ॥ यद्वा । माकर्त्तुं कर्मनिषेद्धुंशीलमस्य । मस्करमस्करिणाविति साधु : ॥ यद्वा । मस्करस्तद्वदमस्त : करणमस्यास्ति । प्रागवनिपात : ॥ यद्वा । मस्कते । मस्कि॰ । बाहुलकादर : आगम शास्त्रस्यानित्यत्वान्नुम् ॥ मस्करोनिधिर्गोऽस्यास्ति । पूर्वनिपात : ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके । मस्यतेस्म । मसी॰ । क्त : ॥

मस्तक : । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि । स्वार्थेकन् ॥

मस्तकस्नेह : । पुं॰ शिरोमज्जनि ॥

मस्तकाख्य : । पुं॰ शिखरे । वृक्षशिरसि । मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे । मस्यते॰ मसनं वा॰ । मसी॰ । क्तिन् । मस्तिंमस्कते । मस्कगतौ । घञर्थेघ । पृषोदरादिः ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोढ॰ इ॰ माथा । दध्नस्तुपरियोभागोघन : क्षीरसमन्वितः । स लोकेसरडस्तुद्दध्नोमण्डस्तुमस्त्विति ॥ मस्तुकमपरंमस्तुमस्तुलुङ्गा-

षाभारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुश्चवीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिःस्मृतिः ॥ पर्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तरः । पुं० शूद्रविशेषे । ग्रामकू
टे । महत्ता० इ० भा० ॥ इ० चि०
क्षात्रश्रेय : ॥

महत्सुक्थम् । न० हस्तीसहस्राख्य
यज्ञे ॥

महत्त्वम् । न० महतोभावे । यथा ।
महत्त्वंबहुविधेतुरिन्द्रियकारणंमतम्
। इ० भा० प० । महत्त्वंषड्विधबु
ति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम
बन्धेनकारणम् । द्रव्यसमवेतानां
गुणकर्मसामान्यानांप्रत्यक्षे० स्वाश्र
यसमवेतसमवायसम्बन्धेनकारणम्
। इ० सिद्धान्तमुक्तावली ॥ खाध्यक्ष
सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥

महत्पुष्पा । स्त्री० हस्तिघोषायाम् ॥

महद्ब्रह्म । न० अव्याकृते० प्रकृतौ०
त्रिगुणात्मिकायांमायायाम् । स-
र्वकार्यापेक्षयाधिकत्वात्कारणंमह
त् ०सर्वकार्याणांवृद्धिहेतुत्वरूपात्०
बृंहणत्वाद्वा० ब्रह्मणत्वाद्वा० ब्रह्मच
भवत्यव्याकृतम् । महच्चतद्ब्रह्मचे
तिविग्रहः ॥

महदृतम् । न० परमात्मनि । महत्
ब्रह्मविद्योत्कर्षेणवर्तमानत्वात् ०भू
तंपरमार्थसत्यम् । महच्चतदृतञ्च ॥

महनीयः । त्रि० पूजनीये ।

महर्घता । स्त्री० अधिकान्यूनत्वे ॥

महर्द्धिः । स्त्री० समृद्धौ । अतिराधि
क्ये ॥

महर्लोकः । पुं० भूरादिसप्तलोकान्त
र्गतचतुर्थलोके । चतुर्मुखदिनक्षा
लेजगदेतच्चराचरम् । दह्यादिदह्य
तेसर्वेषु लोकंभूर्भुवादिकम् ॥ अन
म्ययाग्नितापार्तामहर्लोकनिवासि
नः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्प
वासिनः ॥ अपिच । महोहिकोटि
र्येषान्तेमरीच्यादिमुनिव्रजः ॥ भू
पृष्ठादिक्रोश्यूछ्रायोमरीच्यादिमुनि
वृन्दस्थानंमहर्लोकउत्पर्थः ॥

महर्षभी । स्त्री० कपिकच्छ्वाम् ।

महर्षिः । पुं० व्यासादिषु । भगवा
दिसप्तसु ॥ वेदतदर्थद्रष्टृषु० सर्वेषु
षु० विद्यासम्प्रदायप्रवर्तकेषु ॥ भृ
गुंमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतु
म् । वसिष्ठञ्चमहातेजाः सोऽसृजन्
मनसासुतान् ॥ सप्तब्रह्माणइत्येते
पुराणेनिश्चयङ्गताः ॥ महांश्चासौ०
ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् ।
। अन्येतुवेदैकदेशदर्शनादृषयः ॥

महल्लकः । पुं० अन्तःपुरचरे ।
सौविदल्ले । कञ्चुकिनि ॥ महती
खशि । ख० । अ० । कः ॥

महल्लिकः । पुं० अन्तःपुरचरे ।

चन्द्र : पुरस्थायिजने ॥ तदुक्तंयथा । मुक्तगुन्थोऽनुपखोव : सो स्वभावोमहर्त्विक : ॥ इति ॥

मह : । न॰ उत्सवे ॥ तेजसि ॥ महनम्॰महतेवा । महपूजायाम् । सर्वधातुभ्योऽसुन् ।

महसम् । न॰ ज्ञाने ॥ महति॰मह्यतेवा । मह॰ । अत्यविचमितमिन सिरभियभिनभितयियत्तिपखिप-निमदिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री॰ गोपवज्ञाम् । पुष्पिपर्णीविशेषे ॥ धेनौ । मह्यतेपूज्यते । मह॰ । खनोवचेति॰घ : ॥

महाकच्छ : । पुं॰ समुद्रे ॥ मन्त्रेतसि । वरुणे ॥ पर्वते ॥ महान्कच्छोयस्यास : । बाहुव्रीहिसमासम् ।

महाकण्टकिनी । स्त्री॰ स्नुहीभेदे । विश्वसारके । नागफणीवृक्ष॰इ॰भा॰ । फणिमनसा॰दुर्गो॰दे॰भा॰ ।

महाकन्द : । पुं॰ लशुने ॥ धावकर मूलके । मूलके ॥ रक्तलशुने । राजपलाण्डौ ॥

महाकपित्थ : । पुं॰ विल्ववृक्षे ॥ महांश्चासौकपित्थश्च । बाहुव्रत : ॥

महाकपित्थाख्य : । पुं॰ बिल्वे ॥

महाकपर्द : । पुं॰ शनिकारत्नके ॥

महाकपिंजार : । पुं॰ धारस्वर्णे ॥

महाकान्ता । स्त्री॰ पृथिव्याम् ।

महाकाय : । पुं॰ वृषापाके । प्रमथविशेषे । शिवद्वारपाले ॥ हस्तशरीरे ॥ त्रि॰तद्वति ॥

महाकार्त्तिकी । स्त्री॰ रोहिणीनक्षत्रयुक्तायांकार्त्तिक्यपूर्णिमायाम् ॥

महाकाल : । पुं॰ महादेवे ॥ प्रमथविशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ धवलउद्गडायमान विष्णुस्वरूपसमये ॥ ब्रह्मयिन्त्यांमहाकाल : शाङ्करीतदेवता ॥

महाकाली । स्त्री॰ परदेवतायाम् । महाकालपत्न्याम् ॥ जिनानांचतुर्विंशतिशासनदेवतान्तर्गतदेवीविशेषे ॥

महाकाव्यम् । न॰ सर्गबन्धे ॥

महाकुमुदा । स्त्री॰ काश्मर्याम् ॥

महाकुम्भी । स्त्री॰ कट्फले ॥

महाकुल : । त्रि॰ कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महच्चतत्कुलञ्चमहाकुलम् । बाहुव्रीहित्वात्वम् । महाकुलमस्यास्ति । अच् ॥ महत्कुलमस्येतिविग्रहेवा । न॰सत्कुले ॥

महाकुलीन : । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । कुलात्ख : ॥ दुष्कुलाड्ढक् । महाकुलाद्ञ्खञौ इतिपक्षेख : ॥

महाकूप : । पुं॰ पाताधर्मे ॥

महाकूल : । पुं॰ मल्लने ॥

महाकोशफला । स्त्री॰ देवदालीलतायाम् ॥

महाकोशलः । पुं॰ देशविशेषे ॥ यथा । गोकर्णेशात् पूर्वभागे चार्यावर्त्तात्तथोत्तरे । तीरभुक्तात् पश्चिमे तु महाकोशलसंज्ञकः । महाकोशलदेशस्य सूर्यवंशमहारथः ॥

महाकोशातकी । स्त्री॰ हस्तिघोषायाम् । हिन्दी॰ घीयातोरई॰ इ॰ भा॰ प्र॰ धात्री । महाकोशातकी स्निग्धा सरा पित्तानिलापहा ॥

महाक्रतुः । पुं॰ अश्वमेधे । महांश्चासौ क्रतुश्च ॥

महाखरः । पुं॰ अश्वतरे ॥

महागदः । पुं॰ ज्वरे ॥

महागन्धः । पुं॰ कुटजवृक्षे ॥ अम्बुवेतसे ॥ न॰ हरिचन्दने ॥ महान् गन्धो यस्य ब॰ यस्मिन् वा ॥ बोले ॥

महागन्धा । स्त्री॰ चामुण्डायां देव्याम् ॥ कैवर्त्तीमुस्ते ॥ नागबलायाम् ।

महागरः । पुं॰ गवये । वनगवे ॥

महागिरिः । पुं॰ वीरभेदे ॥ बृहत्पर्वते ॥

महागुरुः । पुं॰ मातरि । पितरि ॥ आचार्ये ॥ यथा । माता पिता ब्रह्मदाता महान्तो गुरवः स्मृताः । इति । महांश्चासौ गुरुश्च । यान्यद् तद्गृहाणाम् । स्त्रियाः पतिरेव स रुगुरुः ॥

महागुल्मा । स्त्री॰ सोमवल्ल्याम् ॥

महागुहा । स्त्री॰ पृश्निपर्ण्याम् ॥

महागोधूमः । पुं॰ पश्चाद्देशभवगोधूमविशेषे । बड़ा॰ गोहूँ॰ इ॰ भाषा ॥

महाग्रहः । पुं॰ सूर्ये ॥

महाग्रीवः । पुं॰ उष्ट्रे । त्रि॰ बृहद्ग्रीवायुक्ते ।

महाघूर्णा । स्त्री॰ सुरायाम् । महती घूर्णा यस्याः ॥

महाघोरः । त्रि॰ अतिशयभयानके ।

महाघोषः । पुं॰ अतिघोषणे । महाशब्दे । न॰ हट्टे । आपणे ॥ त्रि॰ महच्छब्दयुक्ते ॥

महाघोषा । स्त्री॰ कर्कटशृङ्ग्याम् । कुन्दुरुक्याम् ॥

महाङ्गः । पुं॰ उष्ट्रे । महान्त्यङ्गान्यस्य । वनीकमिति शब्दरत्नावलिः । गोक्षुरके ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि॰ बृहदवयवयुक्ते ॥

महाचञ्चुः । पुं॰ बृहच्चञ्चुमति खगे । शाकविशेषे । सुपत्रकायाम् । दीर्घपत्र्याम् । दिव्यगन्धायाम् ।

महाचण्डः । पुं॰ कालभैरवे ॥ त्रि॰ प्रचण्डे ।

महाचीनः । पुं॰ देशविशेषे । यथा कैलासोत्तरसमारभ्य सरयूपरितः प-

महाढ्यः । पुं॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपाः । पुं॰ विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यं प्रतापो वा महदस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरुः । पुं॰ स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानां देवीविशेषे ॥

महातालो । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्तः । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ॥

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजाः । पुं॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा, ते नस्तिग्मीयदीयेनरोजसा भास्करादयः । तस्मै नोमहदस्त्वेतिमहातेजाः महेश्वरः ॥ शौर्यशौर्यादिभिर्धर्म्मैः रहितः समलङ्कृतः । इतिवास्या न्महातेजाः मधुघातनईश्वरः ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकृष्टं तेजो यस्य स न्यतच्चयामस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्तःकरणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अथ प्रवृत्तौ ॥ महान्नपनीकजन्मसुकृतैः संस्कारः प्रक्षमावादमभिभूतः । आत्मा । अन्तःकरणं यस्य सः । महाश्चासावात्मा चेति वा ॥

महात्ययः । पुं॰ चतुर्थक्ष॰ विपमज्वरे ॥ गम्भीरे ॥ सर्वातिकष्टे ॥

महादण्डः । पुं॰ यमदूतप्रभेदे ॥

महादन्तः । पुं॰ गजदन्ते । दीर्घदन्ते ॥ वृहद्दन्तसमावे ॥ त्रि॰ तद्वति ॥

महादानम् । न॰ श्रेष्ठदाने ॥ तुलापुरुषादिषोडशप्रकारे ॥ यथा । आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम् । हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च । पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च । हिरण्याश्वरथस्तद्वत् हस्तिरथस्तथा ॥ द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैव च । महाभूतघटस्तद्

नृपोत्तम : परिकीर्त्तित : ॥

महादारु । न॰ देवदारुणि ॥

महादाह : । पुं॰ नरकान्तरे ॥

महादेव : । पुं॰ शिवे ॥ महांश्चासौ-देवश्च । चान्महत्तद्रूत्वात्त्वम् । महान्देवोन्द्रत्यादिरूपाक्रीडायस्येतिवा ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्मवादिनाम् । तेषाञ्चमहतोदेवोमहादेवःप्रकीर्त्तितः ॥ महतीपूजितावि श्वे मूलप्रकृतिरीश्वरी । तस्यादेवः पूजितश्चमहादेव : सपस्मृतः ॥ ब्र॰ ब्र॰ वै॰ पु॰ ॥ सर्वदेशानांमहनीयत्वाञ्चमहादेवः । तथोक्तंसाम्बपुराणे । पूज्यतेयत्सुरै : सर्वैर्महांश्चैव प्रमाणत : । धातुर्महेतिपूजायांमहादेवस्ततस्मृत : ॥ स्कांदेपि । महतामपिदेवानामहमेवमहान्यत : । नतुमत्तोमहानन्योमहादेवस्ततोह्यहमिति ॥ कोटयोब्रह्मणांनामगण्यागमकोटय : । सदा : प्रलयमायान्तिमहादेवेतिकीर्त्तनात् ॥ महादेवमहादेवमहादेवेतिवादिनम् । वत्सं गौरिवगौरीशोधावन्तमनुधावति ॥ अथोक्तमथर्वशिरसि । सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महतिमहीयतेतस्मादुच्यतेमहादेवइति । अस्यार्थोविष्णुसहस्रनामभाष्यटीकायांद्रष्टव्य : ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महतो-ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यवहारयति॰ इतिमहादेवी । दिव्॰ । अच् । टित्वान्ङीप् ॥ पूज्यतेयासुरै : सर्वैर्महतीचप्रमाणत: । धातुर्महेतिपूजायांमहादेवीततःस्मृते तिदेवीपुराणम् । सर्वेषुसर्वमहादेवी द्रष्टासाक्षीवसैवहीतिदेवीभागवतम् । द्रष्टाजीव : साक्षी॰ ईश्वरः॰ दृश्यंसर्वंजगत्॰ इदंचय सैवभगवती भवतीत्यर्थः ॥ राज्ञ्याम् । महिष्याम् । पट्टदेव्याम् ॥

महादैत्य : । पुं॰ भौत्यमन्वन्तरीयदैत्यविशेषे ॥ तस्यकृष्टदैत्ये ॥

महाद्युति : । त्रि॰ ईश्वरे ॥ भगवतोयाज्ञवल्क्यव्याचिनोद्युतिवन्त्य लक्षणस्यश्रामाश्चिराभवेनत्वचिर साधनोन्मुखे॰ पुरुषर्षभे । महती द्युतिरस्य ॥

महाद्रिधृक् । पुं॰ हरीमहतामद्रिं-मन्दरंगोवर्द्धनंचाऽमृतमथनेगोरक्षणेचाधृतवानितिव्युत्पत्तिः फलितार्थंकथनपरा । वस्तुतस्तुमहाद्रयेधृष्णोति॰ धर्षमुपगल्भते । ञिधृषाप्रागल्भ्ये । क्विप् । क्विन्प्रत्यय स्पृश : ॥

महाद्रुम : । पुं॰ पाश्वत्थे ॥ महांश्चासौद्रुमश्च ॥ तत्पर्यायः ॥

महाद्रोणा । स्त्री॰ देवकुसुम्भायाम् । दिव्यपुष्पायाम् ॥

यथा । महानिशातुविज्ञेया मध्यस्थंप्रहरद्वयम् । तत्रस्नानंनकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमिति रघुनन्दनः । देवलोक्तमहानिशाविमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीचः । पुं॰ रजके । अतिशयहीनवर्णे ॥

महानीलः । पुं॰ भृङ्गराजे ॥ नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृता(इत्युक्तगरुडोक्तेः) तल्लक्षणं यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थितः । नीलतांतनुयात्सर्वंमहानील : सउच्यते ॥ इति गारुडे॰ ७२ अध्यायः ॥

महानीला । स्त्री॰ महाजम्ब्वाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ इन्द्रनील्याम् । श्रीफलिकायाम् । क्षिमाढ्याम् ॥

महानुभाव : । पुं॰ श्रोत्रिये ॥ महाशये । सुकृतिनि ॥ महासात्त्विके ॥ महान्श्रुताध्ययनतपआचारादिनियमजोऽनुभावः प्रभावोयस्य सः ॥

महान्तक : । पुं॰ महेन्द्राचलपीठस्थे शिवे । स्त्री॰ देवीविशेषे ॥ महेन्द्राचलस्थान्तका ॥

महापघः । पुं॰ बहुपुत्रादिपरिक्षे ॥

महापञ्चमूलम् । न॰ बृहत्पञ्चमूले । तद्यथा । बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटलास्तथा । सर्वैस्तुमिलितैरेतैः स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ बृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चहलाहली वत्सनाभश्च । शङ्खकर्णीतियो योयंमहापञ्चविषाभिधः ॥

महापञ्चाङ्गुलः । पुं॰ स्थूलैरण्डे ॥

महापद्मः । पुं॰ नागराजे ॥ मानके । मानकच्॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ सिद्धे ॥ चि॰ ग्रहणपर्युक्ते ॥ महानिधिविशेषः ॥

महापद्मा । स्त्री॰ महाजम्ब्वाम् ॥

महापथः । पुं॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ पितृतीर्थपथि ॥ श्मशाने ॥ महापन्थाः॰ प॰ ॥

महापथगमः । पुं॰ मरणे ॥

महापद्मः । पुं॰ अष्टनागान्तर्गतनागविशेषे । पतिशुक्ले । दशविन्दुपरमसंख्ये ॥ कुबेरस्यनवनिधान्तर्गतनिधिविशेषे ॥ शतकोटिसङ्ख्यायाम् । १०००००००००००० न॰ सितपद्मे ॥

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानंस्तेयंगुर्वंङ्गनागमः । महान्तिपातकान्याहुः संसर्गश्चापितैः सह ॥ महापातकानांचिह्नं सप्तजन्मसुजायते । बाधतैव्याधिरूपेणतस्मात्कृच्छ्रादिभिः श्रमः ॥ मद्यमतत्पातकम् ॥

महापातकी । स्त्री॰ ब्रह्महत्याद्यन्यतमपातकयुक्ते ॥वीरहननाद्यन्यतममहापातकयुक्ते ॥ यथा । वीरहात्मीऽथवापायोवीरार्थांस्तीगमस्तथा । स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चमः ॥ सचपतितः ॥ यथा । महापातकिनोयेचपतितास्तेप्रकीर्त्तिताः । पतितानांनदाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । नचाश्रुपातः पिण्डोवाकार्यंश्राद्धादिकं क्वचित् ॥ एतानिपतितानांयः करोतिविमोहितः । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ इतिग्राजितस्वधृतंविष्णुपुराणवचनम् ॥ महापातकिनोजीवतएवप्रेतकोदककियावश्यमापरोच्यासपिण्डैः समानोदकैर्यथा मातृर्गिस्त्वाद्याख्यत्विग्गुरुसन्निधानेरित्रायांनयन्त्यांतिजौद्दिनान्तेवर्त्तेव्यारूमनुः ॥ पतितस्योदकंकार्यंसपिण्डैर्बान्धवैर्बहिः । निन्दितेऽहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचंबांधवैःसह ॥ निवर्त्तेरंश्चतस्मात्तुसंभाषणसहासने । दायाद्यस्यप्रदानञ्चयात्राचैवहिलौकिकी ॥ ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्धनम् । ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गुणतोधिकः ॥ प्रायश्चित्ते तुचरितेपूर्णकुम्भमपांनवम् । तेनैवसार्द्धंप्रास्येयुः स्नात्वापुण्येजलाशये ॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकम् । सर्वाणिज्ञातिकार्याणियथापूर्वंसमाचरेत् ॥ एतदेवविधिंकुर्याद्योषित्सुपतितास्वपि । वस्त्रान्नपानंदेयन्तुवसेयुश्चगृहान्तिके ॥ महापातकमस्यत्वाक्षिप्ता । दूनिः ॥ पारिभाषिकमहापातकीयथा ॥ क्षत्रप्रायप्रतिष्ठाप्यचैवैप्रतिमांहिरण्यांगीनप्रणमेयस्तुसमहापातकीस्मृ-तः ॥ अपिच । पितरंमातरंभार्यांगुरुपत्नींगुरुंपरम् । योनपुष्णातिकापव्यात्समहापातकीमिति न॰ वै॰ पु॰ ॥

महापापम् । न॰ महापातके ॥ पर्युत्कटपापे ॥

महापाप्मा । पुं॰ पाप्मधे ॥ पामे ॥ महतः पापसूरेतुस्वात् ॥

महापारेवतम् । न॰ वृहत्पारेवते । द्वीपखर्जूरे ॥

महापाश: । पुं॰ यमदूतविशेषे । उग्रपाशे ।

महापासक : । पुं॰ गोमिनि । चेलु के । बुद्धभिक्षुशिष्ये ॥

महापिण्डीतक : । पुं॰ कृष्णवर्णमद नद्रुमे । वाराहे ॥

महापिण्डीतक : । पुं॰ वृक्षविशेषे । श्वेतपिण्डीतके । माक्षकोषतरौ । घरे । पिण्डीतरौ । पेंडिरा॰ इ॰ भा॰ ॥

महापीठम् । न॰ एकपञ्चाशत्पीठे ॥

महापीलु : । पुं॰ बृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न॰ एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच ॥ वर्णनं प्रलयानाञ्चमोक्षस्यनिरूपणम् । उत्कीर्त्तनं हरेरेवदेवानाञ्चपृथक् पृथक् ॥ दशाधिकं लक्षणञ्चमहतांपरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे १३२ अध्याय : ॥

महापुरुष : । पुं॰ नारायणे । श्रेष्ठ नरे ॥ लक्षणं पाराशरा ६७ अ॰ ॥ ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते ॥ महांश्चासौपुरुषश्च । सन्महदिति समास : । आन्महतइत्यात्वम् ॥

महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री॰ शतावर्य्याम् ॥

महापुष्पा । स्त्री॰ अपराजितायाम् ॥

महापृष्ठ : । पुं॰ उष्ट्रे त्रि॰ बृहत्पृष्ठे ॥

महापोरुषिक : । पुं॰ वैकुण्ठनाथानुचरे ॥

महाप्रकृति : । स्त्री॰ दुर्गायाम् ॥

महाप्रपञ्च : । पुं॰ स्थूलसूक्ष्मकारणप्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरवनानांसमष्टिरेकं महद्वनम्॰ यथाऽवान्तरजलाशयानांसमष्टिरेकोमहान् जलाशयोभवति॰ तथस्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ : । त्रि॰ अतिशयदीप्तियुक्ते ॥

महाप्रभाव : । त्रि॰ अतिशयतेज : शक्तिविशिष्टे ॥

महाप्रभु : । पुं॰ जगन्नाथे ॥

महाप्रलय : । पुं॰ सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे ॥ महांश्चासौप्रलयश्च ॥ न्यायमते च न्यभावानधिकरणकालोमहाप्रलय : ॰ सचचरमध्वंसरूप : ॥

महाप्रसाद : । पुं॰ विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्यं नैवेद्यञ्चविशेषत : । महाप्रसादइत्युक्त्वाग्राह्यं विष्णो : प्रयत्नत : ॥ ब्राह्मणस्याग्रसंन्निधावग्राह्यमितिवस्तुनि । तन्माहात्म्यं महानिर्वाणतन्त्रेसम्यक्

निरूपितम् ।

महाप्रस्थानम् , न० शास्त्रोक्तदेहत्या गविशेषे ॥ महत्०चावृत्तिशून्यंप्र स्थानम्०सर्पहृयिकर्सिंहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमनं याव च्छरीरपातं तन्महाप्रस्थानम्०इत्यु च्यते ॥

महाप्राण : । पुं० द्रोणकाके ॥

महाप्रेत : । पुं० ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि वः । एतेपञ्चमहाप्रेताभूताधिपतयो मताः ॥ चत्वारोमञ्चचरणाः पञ्चमः प्रच्छदःपटः । सच्चित्प्रकाशरूपेणवि वेनाभिन्नविग्रहः । तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल : । पुं० मालूरे । विल्वे ॥ त्रि० उत्कृष्टफले ॥ न० दृहत्फले ॥

महाफला । स्त्री० इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ मधु पोशातक्याम् ॥ मधुवीजपूरे ॥

महाफेना । स्त्री० अब्धिफेने । हिण्डी रे ॥

महावल : । पुं० वायौ ॥ बुद्धे ॥ न० सीसके ॥ त्रि० बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्टं बलमस्य ॥

महावला । स्त्री० अतिवलायाम् ॥ पी तपुष्पाम् । पीतसहाचरके ॥

महावोधि : । पुं० बुद्धे ॥

महाब्राह्मण : । पुं० निन्दितब्राह्मणे । कात्या० अयाचक० कृ० भा० ॥

महाभद्रा । स्त्री० काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट : । पुं० अतिशययोद्धरि ॥

महाभाग : । त्रि० अतिधन्ये ॥ इयाद्य च्छगुणयोगोमहाभागता० तद्विशिष्टे । महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री० महालयतीर्थस्थायां देव्याम् ॥

महाभारतम् । न० व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारणं यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकतः । पुराकिलसुरैः सर्वैः समस्ततुलया धृतम् ॥ चतुर्भ्यः सरहस्येभ्योदेवे भ्योह्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्त्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् , न० पातञ्जलव्याकरण भाष्ये ॥

महाभिलाप : । त्रि० महेच्छे ॥ महा नभिलापोऽस्य ॥

महाभिष: । पुं० राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोह्यासीत् प्रतीपश्चसुतस्तदा । शन्तनुर्नामसगर्वर्षिधर्मात्मासत्यसङ्ग रइति ॥

। इत्यहं ज्ञानरहितंकुरुवैयानिरन्त रम् । पूर्वाजिप्वैसम्बन्धसंस्कारेण नियोक्ष्यथ । आहारादीनतोमोहं ममत्वं ज्ञानसंशयम् ॥ क्रोधोपरोध लोभेषुक्षिप्त्वाक्षिप्त्वापुनः पुनः । प श्चात्कामेनसंयोज्यचिन्तायुक्तमहर्नि शम् ॥ आमोदयुक्तं व्यसनासक्तं ज न्तु करोतिया । महामायेतिसाप्रो क्तातेनसाजगदीश्वरी ॥ इति ॥

महामायी । पुं॰ ईश्वरे ॥

महामायी । स्त्री॰ दुर्गायाम् ॥

महामारी । स्त्री॰ महाकाल्याम् ॥ का मयैवभूतायांमहाजनचयकारीदेव तायाम् । संहारणी । महतीमा रयतीतितथा । महतीचासौमारी चेतिवा ॥ व्याप्तंतयैतत्सकलंब्रह्मा ण्डंमनुजेश्वर । महाकाल्यामहा कालेमहामारीस्वरूपया ॥ सैवका लेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थि तिंकरोतिभूतानांसैवकालेसनातनी- तिमार्कण्डेयपुराणम् ॥ अतिशय- मारके ॥

महामार्गः । पुं॰ राजमार्गे ॥

महामालिनी । स्त्री॰ नाराचाभिधेवृ- त्तविशेषे ॥ यदिहनयुगलंततोवेदरे फैर्महामालिनीतिलक्षणम् ॥

महामाष : । पुं॰ राजमाषे । चौरा॰ खोषिया॰ प्र॰ भा॰ ॥

महामुख : । पुं॰ कुम्भीरे । न॰ बृह न्मुखे । त्रि॰ तद्वति ॥

महामुण्डी । स्त्री॰ महाश्रावणिका- याम् ॥

महामुनि : । पुं॰ नारायणे । भग- वति ॥ बुद्धे काले । कृपाचार्ये । व्यासे । महांश्चासौमुनिश्च । सन्म हदितिसमासः । आन्महतइत्या त्वम् । ब्रह्मविदि । तुम्बुरुवृक्षे ॥ न॰ कुस्तुम्बुरुणि । धन्याके ॥

महामूर्त्ता पुं॰ शिवे ॥ त्रि॰ बृहन्मस्त कयुक्ते ॥

महामूल : । पुं॰ राजपलाण्डौ ॥ त्रि॰ विशिष्टे ॥

महामूल्य : । पुं॰ पद्मरागे ॥ न॰ म हार्घे ॥ त्रि॰ तद्वति ॥

महामूषिक : । पुं॰ बृहद्दुन्दुरौ । महा खे ॥

महामृग : । पुं॰ हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय : । पुं॰ मृत्योर्मृत्युञ्ज रे शिवमन्त्रविशेषे ॥ नित्यमष्टशत जप्त्वामृत्युंमृत्युपयंनयेत् ॥

महामेघ : । पुं॰ अतिशयमेघे ॥

महामेद : । पुं॰ अष्टवर्गान्तौषधे । पुरीषधे । बृहन्मेदे ॥

महामेदा । स्त्री॰ अष्टवर्गान्तौषधविशे षे । वसुच्छिद्रायाम् । जीवन्त्याम् । पांशुरागिण्याम् ॥ महामेदाभिधः कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्र कनिभ :कन्दोलताजातःसुपाण्डुर ।

ष्युट् । रजकरजनरञ्जनरजस्सु प
सङ्ख्यानान्नलोपः ॥ रञ्जेः क्युन्
वा ॥ महच्चतद्रजनञ्च । सन्महदिति
समासः ॥

महारण्यम्, न० घोरारण्यम् ॥ मह
च्चतदरण्यञ्च । सन्महत्परमोत्तमो
त्कृष्टाः पूज्यमानैरितिसमासः ।
आन्महतइत्यात्वम् ॥

महारत्नम्, न० मुक्तादिनवकम् ॥ मु-
क्ताफलंहीरकञ्चवैदूर्यंपद्मरागकम् ।
पुष्परागञ्चगोमेदंनीलंगारुत्मतंत-
था ॥ प्रवालयुक्तान्युक्तानिमहार-
त्नानिवैनव ॥

महारथः । पुं० रथिकविशेषे । यस्तु
सधन्विभिः सहयोधति ॥ यथा ।
एकोदशसहस्राणियोधयेद्यस्तुधन्वि
नाम् । शस्त्रशास्त्रप्रवीणश्चमहा
रथइतिस्मृतः ॥ अपिच । आत्मा
नंसारथिञ्चाश्वान् रक्षन्युद्ध्येत
योनरः । समहारथसंज्ञः स्यादि
त्याहुर्नीतिकोविदाः ॥ शिवे ॥ वि
ष्णौ ॥ महान् महात्मा० नन्दी० गरु
डोवारथोयस्य सः ॥

महारम्भम् । न० गण्डवचे । सांभ-
र० इ० भा० ॥

महारसः । पुं० खर्जूरे ॥ कोशका-
रे । इक्षुविशेषे । कोसियार० इ०
भा० ॥ कसेरुणि ॥ पारदे । रसे
न्द्रे ॥ न० काञ्जिके ॥

महारसाष्टकम् । न० हिङ्गुलाद्यष्ट-
सु ॥ यथा । दरदंपारदःसस्यंवै
क्रान्तंकान्तमभ्रकम् । माक्षिकंवि
मलश्चेतिस्युरेतेऽष्टौमहारसाः ॥

महाराजः । पुं० बुद्धभेदे । मञ्जुघो-
षे ॥ असपत्नराज्यवति । नृप-
श्रेष्ठे ॥

महाराजचूतः । पुं० उत्तमाम्रे । म
न्मथानन्दे ॥

महाराजद्रुमः । पुं० आरग्वधे ॥

महाराजिकः । पुं० गणदेवताविशे-
षे ॥ सत्यसुधन्वसवनादयोविंश-
त्यधिकशतद्वयसङ्ख्याताःगौरवा-
प्रदर्शिताः । महाराजिकनामानो
द्विशतेविंशतिस्तथा ॥ महतीराजिः
पङ्क्तिर्येषामितिविग्रहेणिकाद्विभा-
षेतिवाप् ॥

महारात्रिः । स्त्री० महाष्टम्याम् ॥
अर्द्धरात्रात्परंमुहूर्त्तद्वयी ॥ ब्रह्म
लयोपलक्षितायांमहाप्रलयरात्रा-
म् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पो
भवेन्नृप । प्रकीर्त्तितामहारात्रिः
साप्रवचपुरातनैरितिव्र० वै० पु० ॥

महाराष्ट्रः । पुं० देशविशेषे ॥ विप-
श्चिकांसमारभ्यमध्येचाञ्चयिनीशिवे ।
मार्जारतीर्थराजेन्द्रकोलापुरनिवा-
सिनी ॥ तावद्देशोमहाराष्ट्रःक-
र्णाटस्वामिगोचरः । इ० शक्तिसङ्ग
मे ७ पटलः ॥ अपिच । नैषधेद्र

विद्यानन्दमहाराजाश्वरैश्च : । ज- वन : पह्लव : सिन्धु : पारसीकाद् योमता : । द्र० ज्योतिषतत्त्वे कूर्मचक्रं ॥

महाराष्ट्री । स्त्री० जलपिप्पल्याम् ॥ प्राकृतविशेषे । मरैठी० इ० भा० ॥ भाषाप्रभेदे ।

महारिष्ट : । पुं० महानिम्बे । गिरिनिम्बे ।

महारुद्र : । पुं० महादेवे ।

महारूप : । पुं० शिवे ॥

महारूपकम् । न० नाटके ॥

महारोग : । पुं० पापरोगे ॥ स चाष्टविधो यथा । उन्माद : १ । त्वग्दोष: २ । राजयक्ष्मा ३ । श्वास: ४ । मधुमेह : ५ । भगन्दर : ६ । उदर : ७ । अश्मरी ८ । इति ॥

महारोगी । त्रि० महारोगयुक्ते ॥

महारौरव : । पुं० नरकान्तरे ॥ महारौरवसंज्ञस्तु पंचयोजनसम्पुटम् । धम्यतीयखदिराङ्गारैर्यः सदारायमाय क : ॥ देवद्रव्यापहारी च पच्यते कालमघयम् ॥ महान्तो रौरवोऽत्र । अथान्धादित्वात् लोप : । यद्वा । रुरुभीरणमृगास्तोमृग : ० महतोरौरवम् । अण् ॥

महार्घ : । पुं० वार्तकाख्यखगे ॥ त्रि० महामूल्ये ॥

महार्णव : । पुं० महासमुद्रे ॥

महार्थ : । पुं० परमार्थे ॥

महार्ह : । पुं० वृक्षविशेषे । महाजा इ० गौ० दे० भा० ॥

महार्हम् । न० चन्दने ॥

महार्द्रकम् । न० वनार्द्रके ॥

महार्बुदम् । न० दशार्बुदे । शतकोटि १०००००००००० सङ्ख्यायाम् । पद्मे ॥

महार्ह : । पुं० विष्णौ । मह : पूजा० तामर्हति । अर्हस्तिसूत्रात् अर्हते : यार्भख्यु पपदे च प्रत्यय : ॥ न० श्वेतचन्दने ॥

महालक्ष्मी : । नारायणपत्न्याम् । राधायाम् । यस्मायथामोक्षिलाश्च ब्रह्मविष्णुशिवादय : । वैष्णवास्तां महालक्ष्मीं परां राधां वदन्तिते ॥ यद् वाङ्मामहालक्ष्मी : प्रियानारायणस्य चेति ब्र० वै० पुराणम् ॥

महालय : । पुं० विहारे ॥ तीर्थस्थानादेव्याधिष्ठे ॥ परमात्मनि ॥ पितृणामुक्षशय्यैकन्यागतापरपक्षे कन्यागत० इ० भा० ॥

महालसा । स्त्री० देवीविशेषे । दक्षिणदेशे० मल्हारिस्थानमितिविख्याते० देवीस्थाने ॥

महालिकाटभी । स्त्री० श्वेतकिणिही वृक्षे ॥

महानीलसरस्वती । स्त्री० तारादेव्या : प्रभेदे ॥ लीलयावाक्प्रदा चेति तेन

नीलसरस्वती ॥

महालोध्र : । पुं॰ लोध्रे । पटियाख्ये ध॰ दू॰ भा॰ ॥

महालोल : । पुं॰ काके ॥ त्रि॰ अतिचञ्चले ॥

महालोहम् । न॰ अयस्कान्ते ॥

महावनम् । न॰ महारण्ये ॥ वृन्दावनस्य चतुरशीतिमध्यान्तर्गतवनविशेषे ॥

महावप : । पुं॰ महामेदे ॥

महावरा । स्त्री॰ दूर्वायाम् ॥

महावराह : । पुं॰ आदिवराहे ॥ महांश्चासौ वराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोह : । पुं॰ प्लक्षवृक्षे ॥

महावलि : । पुं॰ नरबलौ ॥

महावल्ली । स्त्री॰ माधवीलतायाम् ॥

महावस : । पुं॰ शिशुमारे ॥

महावाक्यम् । न॰ परमार्थबोधकवेदोपदेशवाक्यविशेषे । सद्ब्रह्मपर पर्यायप्रतिपादकावुत्सर्गवाक्ये । बोधार्थकांक्षासत्तियुक्तिवाक्यसमूहे ॥

महावारुणी । स्त्री॰ तिथिविशेषे ॥ सा यथा । शनिवारसमायुक्ता सा महावारुणी स्मृता । गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥ सा॰ वारुणीत्वञ्च ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिःकोटिकुलमुद्धरेत् ॥

महावाहु : । पुं॰ स्कन्दे । श्रीरामे ॥ महान्तौ बाहू यस्य । यस्य बाह्वोर्महत्त्वं श्रीमंयुद्धकाण्डे । विधायान्ता मधान्यथामपृथिव्यां येपरक्षसः । स्त्रयोपवान्दन्त्यामित्युत्तरि गणेश्वरीति ॥

महाविद्या । स्त्री॰ देवताविशेषे ॥ यथा । काली तारा महाविद्या षोडशी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमावती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥ तासामवतारत्वं यथा । प्रकृतिर्विष्णुरूपा च पुंरूपश्च महेश्वरः । एवं प्रकृतिभेदेन भेदास्तु प्रकृतेरिमे ॥ कृष्णरूपा कालिका स्याद्रामरूपा च तारिणी । बगलाकूर्ममूर्तिः स्यान्मीनो धूमावती भवेत् ॥ छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव भैरवी । सुन्दरी जामदग्न्यः स्याद्वामनो भुवनेश्वरी ॥ कमला बौद्धरूपा स्याद्दुर्गा स्यात्कल्किरूपिणी । स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम् ॥ स्वयञ्च भगवान् कृष्णः कालीरूपो भवद्वजे ॥

महाविराट् । पुं॰ महाविष्णौ ॥

महाविलम् । न॰ नभसि । हृच्छिद्रे ॥

महाविष : । पुं॰ द्विमुखसर्पे । काल

महाश्या । स्त्री॰ राजवल्ल्याम् । वृह-च्छ्यायाम् ॥
महाशर : । पुं॰ स्थूलशरे ॥
महाशल्क : । पुं॰ चिङ्गटमत्स्ये ॥
महाशाक : पुं॰ शाकभेदे ॥
महाशाखा । स्त्री॰ नागवलायाम् ॥
महाशाल : । पुं॰ महागृहस्थे । विस्तीर्णाभि : शाखाभिर्युक्ते । सम्पन्ने ॥ महतीविस्तीर्णाशाला॰यस्यसः ॥
महाशालि : । पुं॰ स्थूलशालौ । सुगन्धिकी ॥ महांश्चासौ : शालिः ॥
महाशिव : । पुं॰ महादेवे ॥
महाशीता । स्त्री॰ शतमूल्याम् ॥
महाशुक्ति : । पुं॰ मुक्तामातरि ॥
महाशुक्ला । स्त्री॰ सरस्वत्याम् ॥ त्रि॰ अतिशुक्लवर्णयुक्ते ॥
महाशुभ्र । त्रि॰ अतिशुभ्रवर्णयुक्ते । न॰ रजते ॥
महाशूद्र : पुं॰ आभीरे ॥
महाशूद्रा । स्त्री॰ महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रह : ॥
महाशूद्री । स्त्री॰ आभीर्याम् ॥ महाशूद्रस्यस्त्री॰जातीयावा । पु॰योगादिति॰जातेरितिवाङीष् ॥
महाशीपडी । स्त्री॰ श्वेतकिणिहीवृक्षे ॥
महाशौषिर । पुं॰ दन्तरोगविशेषे ॥ दन्ताश्चलन्तिवेष्टेभ्यस्तालुचाप्यवदीर्यते । दन्तमांसानिपच्यन्तेमुखञ्चपरिपच्यते । यस्मिन्ससर्वजोव्याधिर्महाशौषिरसंज्ञित : ॥
महाश्मशानम् । न॰ आनन्दवने । काश्याम् । महान्त्यपिचभूतानिप्रलये समुपस्थिते । शेरतेऽत्रश्मशानभूत्वाश्मशानमुत्ततोभवेत् । वाराणसीति विख्यातारुद्रावासइतिप्रिय : । महाश्मशानमित्युक्तंशीतमानन्दकाननम् ॥
महाश्यामा । स्त्री॰ शिंशपावृक्षे ॥ श्यामल्याम् ॥
महाश्रम : । पुं॰ तीर्थविशेषे ॥
महाश्रमण : । पुं॰ बुद्धभेदे । शाक्यमुनौ ॥
महाश्रावणिका । स्त्री॰ कदम्बपुष्प्याम् महामुण्ड्याम् ॥
महाश्री : । स्त्री॰ बुद्धमतप्रसिद्धे । तारायाम् ॥
महाश्रोत्रिय : । पुं॰ मनस्विसतिश्रुताऽध्ययनसम्पन्ने । महांश्चासौश्रोत्रियश्च ॥
महाश्वेता । स्त्री॰ शुक्लभूकूष्माण्डे । ऋक्षगन्धिकायाम् । कृष्णभूमिकूष्माण्डे । सरस्वत्याम् । श्वेतापराजितायाम् । सितायाम् । मधुजायाम् । श्वेतकिणिहीवृक्षे । दुर्गायाम् । महतीचासौश्वेताच ॥
महाषष्ठी । स्त्री॰ दुर्गायाम् ॥
महाष्टमी । स्त्री॰ आश्विनशुक्लाष्टम्याम्

चतुर्ध्दविर्धानखोमहाहविः प्र-कीर्तितश्रुति ॥

महासुखः । पुं० बुद्धे ॥ न० क्रीडारते । प्रचुरसुखे ॥ त्रि० तद्वति ॥

महासुगन्धा । स्त्री० गन्धनाकुल्याम् ॥ त्रि० अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री० वालुकायाम् ॥ त्रि० अतिशयसूक्ष्मे ॥

महासेनः । पुं० कार्त्तिकेये ॥ महासैन्यपतौ । नृपभेदे ॥ महती सेना अस्य ॥

महास्कन्धः । पुं० करभे ॥ त्रि० उच्चस्कन्धयुक्ते ॥

महास्कन्धा । स्त्री० जम्बूवृक्षे ॥

महास्कन्धी । पुं० करभे ॥

महास्थली । स्त्री० पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायुः । पुं० कण्डरायाम् ॥

महास्वनी । पुं० शिवे ॥

महास्वनः । पुं० वाद्यप्रभेदे । महत्त्वे ॥ विष्णौ ॥ महान्कम्पितः स्वनः शब्दोऽस्य । यद्वा । महान् स्वनः श्रुतिलक्षणोनादोऽस्य ॥ सम्महदितिसमासे आत्वम् ॥ तत्कल्दे ॥ त्रि० तद्वति ॥

महाहनुः । पुं० शिवे ॥ हनुमति ॥ त्रि० बृहद्धनुयुक्ते ॥

महाहविः । न० गोघृते ॥ ब्रह्मणि ॥ महच्च तद्धविश्च० ब्रह्मात्मनिसर्वजगत्तदात्मतयाहूयतेऽतिमहाहविः । यद्वामहाभिर्हवीर्भिधाज्यपुरोडाशपशुसोमादिरूपाख्यस्य० इन्द्रादिदेवताकस्यस्वयजमानरूपस्यवेतिमहाहविः ॥

महाहासः । पुं० अट्टहासे ॥

महाहिगन्धा । स्त्री० गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री० कपिकच्छ्वाम् । भूकपिकच्छ्वाम् ॥ त्रि० अतिखर्वे ॥

महि । अ० महिमनि ॥

महिः । स्त्री० भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्तः । व्य- आद्यर्थः ॥

महिका । स्त्री० हिमे ॥ मह्यते । मह ० क्वुन्शिल्पिसंज्ञयोः ॥

महितः । त्रि० पूजिते ॥ मह्यतेस्म ॥ मह० । मतिबुद्धिपूजार्थेभ्यश्चेति क्तः ॥

महिनम् । न० राज्ये ॥ त्रि० पूजनीये ॥ मह्यते । मह० । महेरिनण्चेति घञर्थे इनन् ॥

महिमा । पुं० शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति० येनसमस्तब्रह्माण्डेपिनसमवैति ॥ विभूतिविस्तारे ॥ आत्मनः स्वर्गनिमित्तसविधयराहित्ये ॥ महतो भावः । पृथ्वादिभ्यइमनिच् ॥ उत्कर्षे ॥

महिमवत् । त्रि० ऐश्वर्यवति ॥

महिरः । पुं० सौरे । मिहिरे । सूर्ये ॥

द्युतिविसाराडशेष : ॥

महिला । स्त्री० फलिन्याम्। गुन्द्राया म्। प्रियङ्गौ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्ता यामुयोषायाम् । महति० महतीति वा । मह० । सलिलचौति० इलच् । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम् । प्रियङ्गौ ॥ महिलायाआह्वयोयस्या : ॥

महिष : । पुं० तुलायै । कासरे । यमवाहने । भैंसा० इ० भा० ॥ महिषस्यामिषंस्वादुस्निग्धोष्णंवात नाशनम् । निद्राशुक्रप्रदन्त्वन्यतनु दार्व्यकारंगुरु ॥ शुष्यबृंहणंविष्णु मूर्त्यवातपित्तास्त्रनाशनम् ॥ महति ० महीयते । मह ० । अविमह्यो टिषच् । यदामंडलेमहिषीटिषच् । आगमशासनस्यानित्यत्वान्नुम् ॥ यज्ञध्वजविशेषे ॥ असुराधिप विशेषे । महिषासुरे ॥ शम्भुधारि णिरुद्र कलानिविशेषे ॥ पुराचंद्र मियमासीत्सगरेणाश्वमेधावनधि कारेविणान्यस्यधर्मनाशयकृत: ॥

महिषकन्द : । पुं० महाकन्दविशेषे । – शुभालौ ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज : । पुं० यमे ॥ यज्ञविशेषे ॥ महिषोध्वजोयस्यस : ॥

महिषमर्द्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सौ म्यायाम् ॥

महिषवाहन : । पुं० यमे ॥

महिषाक्ष : । पुं० )

महिषाख्य : । पुं० ) गुग्गुलौ । भृङ्गा ञ्जनसमप्रभे ॥

महिषाद्यादि । न० महिषाद्यादिपञ्चा ङ्गागणे ॥ यथा । महिषाक्षस्तथा राजनिर्यास : सर्जकस्तथा । अभ्या गुरु:कादम्बमहिषाद्यादिपञ्चकम् ॥

महिषासुर : । पुं० महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव : । पुं० भूमिजगुग्गुलौ ॥

महिषासुरघ्नी । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायांराज्ञ : पत्न्याम् ॥ महति । मह० । अविम ह्योटिषच् । टित्त्वान्ङीप् ॥ औष धीभेदे ॥ सैरिभ्याम् । मन्दगमना याम् । महाक्षीरायाम् । भैंस० इ० भा० ॥

महिषीगोष्ठम् । न० महिषीशालाया म् । भैंसवाडा० इ० भा० ॥ महि षीणास्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या : दुग्धे ॥ माहिषंमधुरं गव्यात्स्निग्धंशुक्रकरंगुरु । निद्रा करमभिष्यन्दिक्षुधाधिक्यकरंहिम म् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे। शूल्या
म्। शूलपत्र्याम्। जलाश्रयायाम्॥
महिष्मान्। पुं॰ देशविशेषे॥ महि
षाः सन्त्यस्मिन्। महिषाद्देशे इति
वक्तव्यमिति॰ ड्मतुप्॥
मही। स्त्री॰ भूमौ। पृथिव्याम्॥
मह्यते। मह॰। चुरादावदन्तः।
अन्तादच्। कृदिकारादिति
ङीष्॥ यद्वा। महीयते। महीङ्
पूजायाम्॰ कण्ड्वादियगन्तः।
क्विप्चेति क्विप्। अतोलोपयलोपौ
। कृदिकारादिति ङीष्। तदभावे
विसर्गः। त्यम्याङ्ः। मालवदेशवि
हारिनदीनाम्॥ महीनलपुत्र
स्तादुद्भव्य विसङ्गं गच्छ॥ नवि॥
हिलमोजिकायाम्॥ वर्णवृत्तेष्व
न्युष्प्रभेदे॥ यथा। गधुरं च:
। महोत्सवा॥ यथा। हरोऽस्तुमे।
समोमुदे॥
महीक्षित्। पुं॰ नृपे। राजनि॥
मही॰ क्षयते॰ ईष्टे। क्षिनिवास
गत्योः। महीं क्षयतिवा। क्षिय
र्यैश्वर्ययोः। क्विप्। तुक्॥
महीज:। पुं॰ भौमे। मङ्गलग्रहे॥
न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम्। न॰ मदापायवेष्टित
नद्याविस्ताराद्दुर्गमोच्छ्रायसदादृश
हस्ताद्युच्छ्रितनदुरावधनुपरिभ्रमाया
क्षीनसौवर्णागवाघादियुक्ते नगराकारे
पर्वतादिविशालांबासस्थाने॥
महीधर:। पुं॰ विष्णौ॥ महींगिरि
रूपेणधत्ते। धरति। धृञ्॰।
महाधर:॥ अच्॥
महीध्र:। पुं॰ शिखरिणि। पर्वते॥
महींधरतिधारयतिवा। धृञ्॰।
मूलविभुजादित्वात्क:॥
महीपाल:। पुं॰ राजनि। महींपाल
यति। पाल॰। कर्मण्यण्॥
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पुं॰ पर्वते॥ नृपे॥
महीमय:। त्रि॰ मृत्तिकानिर्मिते॥
महाविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह:। पुं॰ शाखिनि। पादपे। वृक्षे
॥ शाखावृक्षे॰ महीरोहयति। रुहबीज
जन्मनिप्रादुर्भावे। इगुपधेतिक:॥
महीलता। स्त्री॰ किञ्चुलुके। कें
चा॰ इतिख्याते॥ आगस्त्वदीर्घत्वा
भ्यांमहालतेव॥
महीसुत:। पुं॰ मङ्गलग्रहे। योषि
ताख्ये॥ मह्या: सुत:॥
महेच्छ:। त्रि॰ महाशये। महाभि
लाषे॥ महतीइच्छाऽस्य॥
महेन्द्र:। पुं॰ कलिङ्गदेशस्थकुलपर्व
तविशेषे॥ सिद्धपीठोयमद्रि:।
यथा। महान्तश्चोमहेन्द्रेचपार्वती
चमहाचलेति॥ चितामांस्यपि
वृन्दाद्यामहेन्द्रप्रभवा: स्मृता:॥

द्वन्द्वे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा यममभूयोद्रचमयधीदितिश्रुते : । ईश्वरे । विष्णौ ॥
महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥
महेन्द्रतनया । स्त्री॰ सरिद्विशेषे ॥
महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥
महेन्द्रपर्वत : । पुं॰ तीर्थविशेषे ॥
महेन्द्रमद्भित् । पुं॰ मौक्तपर्णे ॥
महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाकालायाम् ॥ महीमाकाल॰ इ॰ गौ॰ दे॰ भा॰ ॥
महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्यस्त्री । महतीचासाविन्द्राणीचेतिवा ॥
महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवता ॥ महेन्द्राद्घाणौचेतिघः ॥
महेन्द्रीयम् । त्रि॰ माहेन्द्रे ॥ हविरादौ ॥ महेन्द्रोदेवताऽस्य ॥ महेन्द्राद्घाणौचेतिचकाराच्छ : ॥
महेरणा । स्त्री॰ कुन्दुरुकयाम् । शल्लकीवृक्षे ॥ मह्यामीरणमस्या : ॥ मह मुत्सवमीरयतिवा । ईर॰ । ल्यु : ॥
महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महत्साउत्सवस्य॰ इला भूमि: ॥ यद्वा । महति॰ अह्नेलया । सलिलसौलीत्यच । पृषोदरादि: ॥ माया : हेलाक्रीडाया । परमेष्ठा रत्नोप्यमादरादिकइतिदमयन्ती काव्यम् ॥
महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥
महेश : । पुं॰ शिवे ॥ महेशान्नापरो देव : ॥
महेशबंधु : । पुं॰ श्रीफलवृक्षे । बिल्वे । महेशस्यबन्धुरिव ॥
महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम् ॥ महांश्चासावीशिताच । सम्महदितिसमास : ॥
महेश्वर : । पुं॰ शिवे । महादेवे । महेश्वरस्त्र्यम्बकएवनापरइतिरघु : ॥ विश्वस्यानाद्यसर्वे प्रांमहतामीश्वर : स्वयम् । महेश्वरस्तेनेर्मप्रवदन्तिमनीषिण : ॥ महांश्चासावीश्वरश्च । सन्महदितिसमास : ॥ त्रि॰ अधीश्वरे ॥
महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । अपिवायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥
महेष्वास : । पुं॰ हरौ ॥ शिवे ॥ महानिषवद्ध्यासन्दुधुर्पोयस्य स : ॥ त्रि॰ उत्तमधानुष्के ॥
महैरण्ड : । पुं॰ स्थूलैरण्डे ॥
महैला । स्त्री॰ स्थूलैलायाम् ॥
महोक्ष : । पुं॰ उरुवृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेति साधु : ॥

सौषधप्रभावेण गतक्लमाभाविधास्यता ॥

महौजाः । त्रि० वीर्यवति । महानुभावे ॥ महत् ओजो यस्येति विग्रहः ॥

महौषधम् । न० शुण्ठ्याम् । विषायाम् । अतिविषायाम् । अतीस इति भाषा । लशुने । भूम्याहुल्यां । वाराहीकन्दे । वत्सनाभे । पिप्पल्याम् । सुरायाम् । महौषधं यज्जीवनाद्दुःखविस्मारकं मतम् । आनन्दजनकं यत्तदाद्यातत्त्वलक्षणम् ॥ महच्च तत् औषधञ्च ॥

महौषधिः । स्त्री० दूर्वायाम् । लज्जालुक्षुपे ॥

महौषधिगणः । पुं० पृश्निपर्ण्यादिषु । यथा । पृश्निपर्णी श्यामलता भृङ्गराजशतावरी । गुडूची सहदेवा च महौषधिगणः स्मृतः ॥

महौषधी । स्त्री० हिलमोचिकायाम् । श्वेतकण्टकार्याम् । कटुकायाम् । अतिविषायाम् ॥

महौषध्यष्टकम् । न० महाभागीयद्रव्यविशेषे । यथा । सहदेवी वचा व्याघ्री मत्स्यापातिबलाबला । महापुष्पी तथा विष्णुक्रान्ता च सुवर्चला । महौषध्यष्टकं प्रोक्तं महाभागे नियोजयेत् ॥

मा । अ० वारणे । विकल्पे ॥

मा । स्त्री० लक्ष्म्याम् । पञ्चालवायाम् ॥ शिखायाम् । मानि । मातरि ॥ मानम् । माधातोः सम्पदादित्वात् क्विप् ॥

मांसम् । न० पिशिते । तरसे । पलले । आमिषे । क्रव्ये । रक्तधातौ । मांस इति भाषा ॥ मांसं वातहरं सर्वं बृंहणं बलपुष्टिकृत् । प्रीणनं गुरु हृद्यञ्च मधुरं रसपाकयोः ॥ मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः । तत्र सद्योहतादिमांसेषु विशेषस्तु कथ्यते । यथा । सद्योहतस्य मांसं स्याद्व्याधिघाति यथामृतम् । वयस्थं बृंहणं सात्म्यमन्यथा तद्विवर्जयेत् ॥ स्वयंमृतञ्च वातघ्नमतीसारकरं गुरु ॥ व्यानादोषजं मांसं बालानाञ्च लघु । त्रिदोषकृद्व्यालघुष्टं शुष्कं शूलकरं गुरु ॥ विषाम्बुवह्निमृतस्यैतन्मृत्युदोषकराकरम् ॥ क्लिन्नमुत्क्लेदजनकं क्षामं वातप्रकोपनम् ॥ तोयपूर्णं गिराचार्द्रं स्तम्भसुविदोषकृत् ॥ स्त्रियः पुमान् स्वेषु पीतचतुष्पदादिषु । परार्द्धं लघु पुंसां स्यात् स्त्रीणां पूर्वार्द्धमादिशेत् ॥ देहमध्यं गुरुप्रायः सर्वेषां प्राणिनां मतम् । पक्षोत्क्षेपात् पक्षिणां मध्यं लघु मध्यरी । गुरुस्कन्धादि सर्वेषां गुर्वी योषा च पक्षिणाम् । उरःस्कन्धोदरं मूर्द्धा पादौ कटिगता । पृष्ठतुल्यस्यकादि

दाचन। मन्त्रैस्तुसंस्कृतानद्याच्छा
श्वतंविधिमास्थित:॥ कुर्याद्घृतप
शुंसङ्गे कुर्यात्पिष्टपशुंतथा। नत्वे
वतुवृथाहन्तुंपशुमिच्छेत्कदाचन
॥ यावन्तिपशुरोमाणितावत्कृत्वोह
मारणम्। वृथापशुघ्न: प्राप्नोति
प्रेत्यजन्मनिजन्मनि॥ यज्ञार्थंप
शव: सृष्टा: स्वयमेवस्वयम्भुवा।
यज्ञोऽस्यभूत्यैसर्वस्यतस्माद्यज्ञेवधो
ऽवध:। औषध्य: पशवोवृक्षास्ति
र्यञ्च: पक्षिणस्तथा। यज्ञार्थंनिधनं
प्राप्ता: प्राप्नुवन्त्युत्सृती: पुन:॥
मधुपर्केचयज्ञेचपितृदैवतकर्मणि।
अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी
न्मनु:॥ एष्वर्थेषुपशून्हिंसन्वेद
तत्त्वार्थविद्द्विज:। आत्मानंचपशुं
चैवगमयत्युत्तमांगतिम्॥ गृहेगुरा
वरण्येवानिवसन्नात्मवान्द्विज:।
नावेदविहितांहिंसामापद्यपिसमा
चरेत्॥ यावेदविहिताहिंसानि
यतास्मिंश्चराचरे। अहिंसामेवतां
विद्याद्वेदाद्धर्मोहिनिर्बभौ॥ योऽहिं
सकानिभूतानिहिनस्त्यात्मसुखेच्छ
या। सजीवंश्चमृतश्चैवनक्वचित्सु
खमेधते॥ योबन्धनवधक्लेशान्प्रा
णिनांनचिकीर्षति। ससर्वस्यहित
प्रेप्सु: सुखमत्यन्तमश्नुते। यद्ध्या
यतियत्कुरुतेधृतिंबध्नातियत्रच।
तदवाप्नोत्ययत्नेनयोहिनस्तिनकि-



ञ्चन। नाकृत्वाप्राणिनांहिंसांमांस
मुत्पद्यतेक्वचित्। नचप्राणिवध:
स्वर्ग्यस्तस्मान्मांसंविवर्जयेत्॥ स
मुत्पत्तिंचमांसस्यवधबन्धौचदेहि
नाम्। प्रसमीक्ष्यनिवर्तेतसर्वमां
सस्यभक्षणात्॥ नभक्षयतियोमां-
संविधिंहित्वापिशाचवत्। सलोके
प्रियतांयातिव्याधिभिश्चनपीड्यते॥
अनुमन्ताविशसितानिहन्ताक्रयवि
क्रयी। संस्कर्ताचोपहर्ताचखाद-
कश्चेतिघातका:॥ स्वमांसंपरमां
सेनयोवर्धयितुमिच्छति। अनभ्यर्च्य
पितॄन्देवांस्ततोऽन्योनास्त्यपुण्यकृ
त्॥ वर्षेवर्षेऽश्वमेधेनयोयजेतशतंस
मा:। मांसानिचनखादेद्यस्तयो:
पुण्यफलंसमम्॥ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानांचभोजनै:। नतत्-
फलमवाप्नोतियन्मांसपरिवर्जना-
त्॥ ५४॥ मांसभक्षयितामुत्रय
स्यमांसमिहाद्म्यहम्। एतन्मांसस्य
मांसत्वंप्रवदन्तिमनीषिण:॥ न-
मांसभक्षणेदोषोनमद्येनचमैथुने।
प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा-
फला॥ अपिच। चौमधानिर्वापित
स्ये। मांसन्त्रिविधंप्रोक्तंघतभूय
स्त्वेपरम्। यस्मात्तस्मात्समाप्नो
तिर्यग्योनिमपिघातितम्॥ तत्सर्वई-
श्वराप्रीत्यैभवेदत्रनसंशय:। साध
वोऽप्याययमनोर्देयंवस्तुनिर्दैवरी॥ य

स्वादात्प्रिय द्रव्यंतत्तदिष्टाय्कल्प येत् ॥ बलिदानविधौदेविविहि-त : पुरुष: पशु: । स्त्रीपशुर्नचहन्त व्यस्तत्रशांभवशासनात् ॥ सन्थये-देवादिप्रीत्यर्थम् । गलकाले । म मेर्द्दीर्घेविसि : ॥

मांस : । पुं॰ काले । कीटे ॥

मांसकारि । न॰ रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री॰ मांसरोहिणीविशे षे । मांसाम् । सुलोमायाम् ॥

मांसजम् । न॰ मेदसि ॥

मांसतेज : । न॰ मेदसि ॥

मांसदलन : । पुं॰ भीष्मतरौ ॥

मांसद्रावी । पुं॰ अम्लवेतसे

मांसपचनम् । न॰ मांसपाके ॥

मांसपेशी । स्त्री॰ गर्भस्यावयवविशेषे॥ यथा । सुश्रुत: सप्तरात्रे यमांसपेशी भवेत्तत : । द्विसप्ताहात्भवेत्पेशी रक्तमांसमिलादृढा ॥ पीजस्यैवा-ङ्कुरा : पेश्य : पञ्चविंशतिराथ-रा : ॥

मांसप्रलेह : । पुं॰ प्रलेहविशेषे ॥ प-थ्यप्रलेहम् ॥

मांसफला । स्त्री॰ वार्त्ताक्याम् ॥

मांसभक्ष : । त्रि॰ मांसभक्षणकर्त्त-रि ।

मांसमाषा । स्त्री॰ माषपर्ण्याम् ॥

मांसरस : पुं॰ भोज॰ रसा॰ तृप्ति स्यात्तेमांसरसादरो ॥ सिद्धमांसरसो रुच्य : श्रमश्वासक्षयापह : । प्रीण नोवातपित्तघ्न : क्षीणानामल्परेत-साम् ॥ विश्लिष्टभग्नसन्धीनांशुष्का-णांशुक्रकाङ्क्षिणाम् । स्त्रीलोलोप सहीनानांज्वरक्षीणबलोरसाम् ॥ शस्त्रतिक्षतहीनानांदृष्ट्यायु: श्रवणा र्थिनाम् ॥

मांसरोहिणी । स्त्री॰ सुगन्धिद्रव्यविशे षे । चर्मकषायाम् । चर्मकषाया म् । विकषायाम् । स्यान्मांसरो हिणीवृष्यासराद्दोषत्रयापहा ॥

मांसलम् । न॰ काव्यस्यगौडीरीत्यन्त र्गतस्त्रौजोगुणस्याङ्गविशेषे ॥ यथा । ओज : समासभूयस्त्वं मांसलंपदड म्बरम् ॥ त्रि॰ बलवति । बलयति ॥ स्थूले ॥ यथा । निखातवज्रुरेखा : स्युर्निर्दव्याधियुते : क्षते : । मां सलेयत्रमोपेतात्रपञ्चरथमेन्दुमा : ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पुं॰ माषे ॥

मांसलफला । स्त्री॰ वृन्ताक्याम् ॥

मांसविक्रयी । त्रि॰ वैतंसिके । कौ-टिके ॥ सकृदपिमांसविक्रयकारि-णि ॥ सद्य : पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध : । त्रि॰ मांसखण्डने ॥ मां सस्यव्यधनम् ॥ व्यधजपोरनुपस र्गे॰ इत्यप् ॥

मांसशृङ्गाटकम् । न॰ मांसप्रकारवि

दाचन । मन्त्रैस्तु संस्कृतानद्याच्छा
श्वतं विधिमास्थितः ॥ कुर्याद्घृतप
शुं सङ्गे कुर्यात् पिष्टपशुं तथा । न त्वे
व तु वृथा हन्तुं पशुमिच्छेत् कदाचन
॥ यावन्ति पशुरोमाणि तावत् कृत्वो ह
मारणम् । वृथापशुघ्नः प्राप्नोति
प्रेत्य जन्मनि जन्मनि ॥ यज्ञार्थं प
शवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधो
ऽवधः ॥ ओषध्यः पशवो वृक्षास्ति
र्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं
प्राप्ताः प्राप्नुवन्त्युत्सृतीः पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवी
न्मनुः ॥ एष्वर्थेषु पशून् हिंसन् वेद
तत्त्वार्थविद्द्विजः । आत्मानञ्च पशुञ्चै
व गमयत्युत्तमां गतिम् ॥ गृहे गुरा
वरण्ये वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समा
चरेत् ॥ या वेदविहिता हिंसा नि
यतास्मिंश्चराचरे । अहिंसामेव तां
विद्याद्वेदाद्धर्मो हि निर्बभौ ॥ योऽहिं
सकानि भूतानि हिनस्त्यात्मसुखेच्छ
या । स जीवंश्च मृतश्चैव न क्वचित् सु
खमेधते ॥ यो बन्धनवधक्लेशान् प्रा
णिनां न चिकीर्षति । स सर्वस्य हित
प्रेप्सुः सुखमत्यन्तमश्नुते ॥ यद्ध्या
यति यत् कुरुते धृतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न कि-



ञ्चन ॥ नाकृत्वा प्राणिनां हिंसां मांस
मुत्पद्यते क्वचित् । न च प्राणिवधः
स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ स
मुत्पत्तिञ्च मांसस्य वधबन्धौ च देहि
नाम् । प्रसमीक्ष्य निवर्त्तेत सर्वमां
सस्य भक्षणात् ॥ न भक्षयति यो मां-
सं विधिं हित्वा पिशाचवत् । स लोके
प्रियतां याति व्याधिभिश्च न पीड्यते ॥
अनुमन्ता विशसिता निहन्ता क्रयवि
क्रयी । संस्कर्त्ता चोपहर्त्ता च खाद-
कश्चेति घातकाः ॥ स्वमांसं परमां
सेन यो वर्द्धयितुमिच्छति । अनभ्यर्च्य
पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यकृ
त् ॥ वर्षे वर्षेऽश्वमेधेन यो यजेत शतं स
माः । मांसानि च न खादेद्यस्तयोः
पुण्यफलं समम् ॥ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानाञ्च भोजनैः । न तत्
फलमवाप्नोति यन्मांसपरिवर्ज्जना-
त् ॥ ५४ ॥ मांस भक्षयितामुत्र य
स्य मांसमिहाद्म्यहम् । एतन्मांसस्य
मांसत्वं प्रवदन्ति मनीषिणः ॥ न
मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महा-
फला ॥ अपि च । योमधानिर्वापेत
ऽपि । मांसन्तु विविधं प्राप्तं पलमुप
रवेषरम् । यस्मात् तस्मात् समानी
तंयमदेशादिघातितम् ॥ तत्सर्वं दै-
वतार्थं वै भवेद्यत्र न संशयः । साध
यित्वा समुद्दिश्य देवेभ्यस्तु निवेदयेत् ॥ य

श्राद्धात्प्रियं द्रव्यंसमन्ददिष्टाक्ष्कल्प येत् ॥ यज्ञिदानविधौदेवविविहि- त: पुरुष.पशु: । स्त्रीपशुर्नचहन्त व्यस्तवधोभवशासनात् ॥ मन्यो- देवादिप्रीत्यर्थम् । राजन्ये । म मेर्दाविवे लिप्त : ॥

मांस: । पुं॰ काले । कीटे ॥

मांसकारि । न॰ रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री॰ मांसरोहिणीविशे षे । मांसाम् । सुलोमायाम् ॥

मांसजम् । न॰ मेदसि ॥

मांसतेज: । न॰ मेदसि ॥

मांसदलन: । पुं॰ ग्रीष्मवृक्षे ॥

मांसद्रावी । पुं॰ अम्लवेतसे

मांसपचनम् । न॰ मांसपाके ॥

मांसपेशी । स्त्री॰ गर्भस्थावयवविशेषे ॥ यथा । सुश्रुत: सप्तरात्रे गर्भांसपेशी भवेत्तत: । द्विसप्ताहात्भवेत्पेशी रक्तमांसन्विताढृढा ॥ बीजस्यैवा- ङ्कुरा: पेश्य: पञ्चविंशतिरात्र- त: ॥

मांसप्रवेश: । पुं॰ प्रवेशविशेषे । प- श्यप्रवेशम् ॥

मांसफला । स्त्री॰ वार्त्ताक्याम् ॥

मांसभक्ष: । त्रि॰ मांसभक्षणकर्त्त- रि ॥

मांसमाषा स्त्री॰ माषपर्ण्याम् ॥

मांसरस: पुं॰ क्लीव॰ रसा॰ इति ख्यातेमांसद्रवे ॥ सिद्धमांसरसो वृष्य: श्रमश्वासक्षयापह: । प्रीण नोवातपित्तघ्न: क्षीणानामल्परेत- साम् ॥ विश्लिष्टभग्नसन्धीनांशुद्धा- नांशुक्रकाङ्क्षिणाम् । स्मृत्योजोब लहीनानांज्वरक्षीणक्षतोरसाम् ॥ शस्तमेस्वरहीनानांदृष्ट्यायु: श्रवणा र्थिनाम् ॥

मांसरोहिणी । स्त्री॰ सुगन्धिद्रव्यविशे षे । चर्मिरुहायाम् । चर्मकषाया म् । विकषायाम् । स्यान्मांसरो हिणीवृष्यासरादोषत्रयापहा ॥

मांसलम् । न॰ काव्यस्यगौडीरीत्यन्त र्गतस्त्रौजोगुणस्याङ्गविशेषे ॥ यथा । ओज: समासभूयस्त्वं मांसलंपदड म्बरम् ॥ त्रि॰ मांसले । बलवति ॥ स्थूले ॥ यथा । निस्त्रायवस्कुरेखा: स्नुनिद्रव्याधिमुखे: कृषै: । मां सलैरधमोपेतापथका रथनेन्द्र या: ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पुं॰ माषे ॥

मांसलफला । स्त्री॰ वृन्ताक्याम् ॥

मांसविक्रयी । त्रि॰ वैतंसिके । कौ- टिके ॥ सकृदपिमांसविक्रयकारि- णि ॥ सद्य: पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध: । त्रि॰ मांसखण्डने ॥ मां सस्यव्यधनम् ॥ व्यधजपोरनुपस र्गे॰ इत्यप् ॥

मांसशृङ्गाटकम् । न॰ मांसप्रकारवि

स्रज् ॥

माणव्यम् । न॰ माणवकवृन्दे ॥ माणवानांसमूहः । ब्राह्मणमाणववाडवाद्यन् ॥ माणवत्वे ॥ माणवस्यकर्मभावोवा । ब्राह्मणादित्वात्ष्यञ् ॥

माणिका । स्त्री॰ अष्टपलपरिमाणे ॥

माणिक्यम् । न॰ रत्नविशेषे । शोणरत्ने । रत्नराजि । रविरत्नके । पद्मरागे । कुरुविन्दे । माणिक॰माणक्य॰इतिभाषा ॥ तल्लक्षणं यथा स्निग्धं गुरुत्वयुतं दीप्तं स्वच्छं सुरङ्गं समाङ्गम् । वृत्तिचारु माणिक्यं चारूयाय धारणात्कुरुते ॥ तस्यदोषायथा । द्विच्छायमभ्रपिहितं च सशर्करं चिल्लिभिन्नमुखञ्च । विरूपं रागविसरं लघुमाणिक्यं नधारयेद्धीमान् ॥ तच्चचतुर्विधंजातिर्यथा । तत्रकं यदिभपद्मरागमपरन्नीलातिरक्तं द्विभाजनीयात्कुरुविन्दकंयदत्तं स्वादिमसौगन्धिकम् । तन्नीलं यदिनीलगन्धिकमितिद्वेधं चतुर्धा पुनर्माणिक्यंकपयपर्यं पविशलंरागेणलाखंलघुः ॥ विशेषोन्यत्र युक्तिकल्पतरौद्रष्टव्यः ॥ माणिक्यमेव । चतुर्वर्गादीनांस्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री॰ ज्येष्ठायाम् । मुसल्याम् । गृहगोधायाम् । पल्लीगा

म् ॥

माणिमन्थम् । न॰ सैन्धवलवणे ॥ मणिमन्थाख्ये पर्वतेभवम् । तत्रभव इ॰ अण् ॥

माण्डलिकः । पुं॰ ग्रामसमष्टि ॥ मण्डलपत्य । अध्यात्मादिभ्यष्ठक् ॥

माण्डूक्यम् । न॰ उपनिषद्विशेषे ॥

मातङ्गः । पुं॰ श्वपचे । गजे । हस्तिनि । अर्हदुपासकविशेषे ॥ मतङ्गस्यायम् । तस्येदमित्यण् ॥ मतङ्गस्यापत्यम् । शिवाद्यण् वा ॥

मातङ्गनक्रः । पुं॰ मातङ्गाकारेग्राहे ॥

मातङ्गमकरः । पुं॰ मत्स्यप्रभेदे । मातङ्गाकारेनक्रे ॥

मातङ्गी । स्त्री॰ महाविद्याविशेषे मतङ्गस्यमुनेः कन्यामातङ्गीसाप्रकीर्त्तिता ॥

मातरपितरौ । पुं॰ द्विवचनान्तोयम् । स्त्रीपुंसामातापितरौ ॥ मातापिता च । मातरपितरावुदीचामिति पूर्वपदे॰ ऋकारस्याररादेशोनिपातनात् ॥

मातरि । अ॰ अम्बायाम् ॥ सप्तम्यन्तप्रतिरूपकमव्ययम् ॥

मातरिश्वा । पुं॰ वायौ । सर्वप्राणभृतांक्रियाहेतुभूते ॥ मातरि॰ अन्तरिक्षेश्वयतिवर्द्धतेगच्छतिवा । टुओश्वि गतिवृद्ध्योः । यद्वा । मातरि॰

त्रिरासांयत : सा शेति ॥ पिण्डिभ्य स्वस्थिकांमाषामितिच ॥

मात्राकाल : । पुं० कालविशेषे । नि मेषानन्तरं यावताकालेनस्वभावत- उन्मेषोभवतितावतिकाले ॥ निमे षोन्मेषणं मात्राकालोलघ्वक्षरंतथे- तिपुराणम् ॥

माषायाम् । न० चल्पपरिमाणे ॥

माषीय : । त्रि० माषेहिते ॥ तस्मै हितमितिच्छ : ॥

मात्सर्य्यम् । न० चन्यशुभद्वेषे ॥ मत्सरएव । ष्यञ् ॥

मात्स्यिक : । त्रि० मत्स्यघातिनि ॥ मत्स्यान्हन्ति । पक्षिमत्स्यमृगान् हन्तीतिठक् । मत्स्यस्यङ्यामिति- परिगणनात्० सूर्यतिष्ये तियलो- पोन ॥

माथ : । पुं० अध्वनि । पथि ॥

माथुर : । त्रि० मथुरायांजाते ॥ तत्र जातइत्यण् ॥ शैषिकेष्वर्थेष्वणेव ॥

माद : । पुं० दर्पे । हर्षे ॥ मदे ॥ मद नम् । मदीहर्षे । समुदोरपइति ज्ञापकात्० क्वचिदपवादेविन्याया द्वा० घञ् ॥

मादक : । पुं० दात्यूहपक्षिणि ॥ त्रि० मत्ततजनके ॥

मादन : । पुं० कामदेवे ॥ मदनवृ- क्षे ॥ धत्तूरे ॥ न० लवङ्गे ॥ त्रि० हर्षकारयितरि ॥

मादनी । स्त्री० भङ्गायाम् । विजया याम् ॥ माकन्द्याम् ॥

मादृश : । त्रि० मत्सदृशे ॥ अहमिव दृश्यते । त्यदादिष्विव्यादिनाकञ् । प्रत्ययोत्तरपदयोश्च : ॥

माद्री । स्त्री० चतिविषायाम् ॥ न कुलसहदेवयोर्मातरि । मद्रपुत्र्या म् ॥ भर्गादित्वात्तद्राजस्यनलु- क् ॥

माद्रीपति : । पुं० पाण्डुनृपे ॥

माद्रीसुत : । पुं० नकुले ॥ सहदेवे ॥

माधव : । पुं० विष्णौ । नारायणे । वासुदेवे ॥ मधुविद्यायाऽवबुध्यते० इतिमाधव : । शैषिकोऽण् । चा दिवृद्धि : गुणायादेशौ ॥ मायायाः- लक्ष्म्याः ० विद्याया० धव : प- ति : ॥ यथा । यद्योज्झित : पुरोम धु: ० तस्मायत्र माधवस्तत्र श्रूयत त् । मधोर्वंशे तिथा । प्रिये ० प्रत्य य् । ॥ माधवलक्षस्वरूपायामूलमहा- विरेश्वरी । नारायणीतिविख्याता विष्णुमायासनातनी ॥ महालक्ष्मी स्वरूपायेदमावासारसवी । राधा वसुन्धरागङ्गातासांस्वामीचमाधव: ॥ मधौ । वसन्ते ॥ राधे । वैशाखे ॥ मधुमदारम्भ:० सोऽस्मिन्नस्ति । म- धोर्ञ्चेतिञ : ॥ यादवे ॥ मधूकवृ क्षे ॥ दात्यामुहे ॥

माधवक : । पुं० मधूकपुष्पमद्ये । न

ध्वासवे ॥ मधूकपुष्पंमधु । मधुना क्वत : सन्धित : । कुलालादिभ्यो- वुञ् ॥

माधवद्रुम : । पुं॰ धाम्नवृचे ॥ माधवप्रियसन्तर्वोद्रुम : ॥

माधवप्रियम् । न॰ पीतचन्दने ॥

माधवि : । पुं॰ प्रद्युम्ने ॥ माधवस्यापत्यम् । अतइञ् ॥

माधविका । स्त्री॰ माधवीलतायाम् ॥ सङ्कुलितवृत्ति २४ प्रभेदे ॥ यथा । भवन्तिपुरोजगथायदिसमततोयगयोष्वितदावारयन्त : प्रकाममतीयसुदेमनुमाधविकामितिताक्षयन्त्यतिसन्त : । तुषारधराधरराजसुतापरिचारकभूमिमलेयमयन्तसमाजयमानयवस्त्रामदोसिमदोयसमवंशरसवामन्त : ॥

माधवी । स्त्री॰ मिसी ॥ मधुशर्करायाम् । सिताखण्डे । कुट्टन्याम् ॥ मदिरायाः प्रभेदे ॥ यथा । पीत्वा दामाधवीमिष्टांशारयामिरथाङ्गये॰ ष्टसिमदिय प्रतिदेवीयावत्र भागवते । गोमश्विप्यादिसम्पत्तौ ॥ दुर्गायाम् ॥ तुलस्याम् ॥ सुभद्रावाम् ॥ पुष्पताराविशेषे । पतिमुक्ते । पुण्ड्रके । वासन्त्याम् । ताराम् ॥ माधवीमधुरामीताक्वोदोयन्त्यापश ॥ मधीपुष्प्यति । कालान्तातुपुष्णरपचमागिधिरिपुष्प्यदर्व-

थ । ङीप् ॥ सर्व्वाम् । भूमौ ॥ स्वमयाहंस्वदाधारात्समृटात्वामुपाश्रिता ॥ माधवीसिचलोकोयमभिधत्तेसतोद्धिमामितिविष्णुपुराणम् ॥

माधवेष्टा । स्त्री॰ याराशीकन्दे ॥

माधवोचितम् । न॰ कक्कोलके ॥

माधवोत्सव : । पुं॰ राजादन्याम् ॥

माधुक : । पुं॰ वर्णसङ्करजातिविशेषे ॥

माधुपर्किकम् । न॰ मधुपर्कोदानकाले पूज्यतयालब्धे धनादौ ॥

माधुमत : । पुं॰ काश्मीरदेशे ॥ काश्मीरास्तुमाधुमता: सारस्वतास्तुविकर्णिका: ॥ इतिहेमचन्द्र : ॥ मधुमदभिजनोऽस्य । सिन्धुतक्षशिलादिभ्योथ णाविश्यण् ॥

माधुरम् । न॰ मल्लिकायाम् ॥ त्रि॰ मधुरसम्बन्धे ॥

माधुरी । स्त्री॰ मद्ये ॥ माधुर्ये ॥ वित्तंसख्यापदारविन्दरसिकासामाधुरी माधुरी ।

माधुर्य्यम् । न॰ निसर्गसौम्यत्वे ॥ रामणीयके ॥ रसिकतायाम् ॥ काव्यगुणभेदे ॥ यथा । चाह्लादकत्वं माधुर्यंशृङ्गारेद्रुतिकारणम् । शृङ्गारे॰ चपांसूमगोगेद्रुतिर्गलितत्वमिव । अव्यत्वंपुनरोज : प्रसादयोरपि । करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् । यस्मादुतिरेतु

मृगगामिनी । स्त्री॰ विडङ्गे ॥ मृगस्य गमनशीलायाम् ॥

मृगघर्म्मजम् । न॰ जवादिनामकगन्धद्रव्ये ॥ त्रि॰ मृगघर्म्मजाते ॥

मृगचेटकः । पुं॰ खट्टासे ॥

मृगचेष्टितम् । न॰ मृगेङ्गिते ॥ यथा । सीमागतान्वन्यमृगान्वधार्त्ताः स्थितान्व्रजन्तोयसमापरान्तः । समन्तात्त्रीस्तीर्व्यथयान्निदाघाः कुर्वन्ति शून्यं प्रतिसीम्नमन्तः ॥ दोषाः भयं कुर्व्वन्ति बाधिर्य्यमौतिसर्व्वमान्त्रीवाध्यः ॥ तेषामन्यसत्त्वैरनुपाद्यतामाभयायरोधायभवन्तिवन्याः । दाभ्यामपिप्रत्यनुभाषितास्ते यन्दिग्रहार्य्यं यन्मृगाकयन्ति ॥ यन्दिसत्त्वे द्वारसंस्थे पुरस्सरोधोवाच्यःसप्रविष्टे विनाशः । सूतिस्त्त्व्युःस्थितंसंस्थितंचगोष्ठंयातेबन्धनंसंप्रदिष्टम् ॥

मृगजः । पुं॰ मृगापत्ये ॥

मृगजालिका । स्त्री॰ वागुरायाम् ॥

मृगजीवनः । पुं॰ व्याधे ॥ मृगाः जीवनमस्य ॥

मृगया । स्त्री॰ अपदद्रव्याक्षेपके ॥ मृग॰ । यासे शियुच् ॥

मृगतट् । स्त्री॰ मृगतृष्णायाम् ॥

मृगतृपा । स्त्री॰ मरीचिकायाम् ॥ मृगाणांतृषाचञ्चलस्मत् । अर्श आद्यच् । टाप् ॥

मृगतृष्णा । स्त्री॰ मरीचिकायाम् ॥ ग्रीष्मे मरुदेशे सिकतासु सूर्य्यरश्मयः प्रतिफलितादूरस्थानांजलमितिबुद्धिविषयास्ताम् मृगतृष्णाअस्त्यस्याम् । अर्श आद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री॰ मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थे कन् ॥ रे चित्तचिन्तयचरं चरणौमुरारेः पारंगमिष्यसियतोभवसागरस्य । पुत्राः कलत्रमितरेसुहृदःसहायाः सर्व्वंविलोकयसखे मृगतृष्णिकाभम् ॥

मृगदंशकः । पुं॰ कुक्कुरे ॥ मृगान्दशति । दंशदशने । कर्म्मण्यण् । कः ॥

मृगधूर्त्तकः । पुं॰ शिवायां । शृगाले ॥ मृगेषुधूर्त्त इव । संज्ञायां कन् ॥

मृगनाभिः । पुं॰ कस्तूर्य्याम् ॥ मृगस्य नाभिः ॥

मृगनाभिजा । स्त्री॰ कस्तूर्य्याम् ॥

मृगनेत्रा । स्त्री॰ रात्रिविशेषे ॥ रवदामुक्तकाधीतास्वपनेधासुराष्टिपुबैलक्ष्यंमिदुपांसध्येपश्चैगोरिवसीदति । मृगेन्द्रचविशेषानेताय राः । नेतुर्नयर्त्येस्यमाव्यः ॥ योषित्प्रभेदे । मृगलोचनावान् ॥ मृगस्यनेत्रे इवनेत्रे यस्याः ॥

मृगपतिः । पुं॰ मृगेन्द्रे । सिंहे ॥

मृगपिप्लुः । पुं॰ मृगाङ्के । चन्द्रे । हि

मांशी ॥

मृगप्रियम् । न० पर्वततृणे ॥

मृगवधाजीव : । पुं० व्याधे ॥ मृगवध आजीवो यस्य स : ॥ मृगवधेनाजीवतियः । जीव० । कर्मण्यण् ॥

मृगवन्धनी । स्त्री० मृगवन्धनार्थजालविशेषे । वागुरा० इ० पर्यन्त भा० ॥ वागुरायाम् ॥ मृगोवध्यते ऽनया । वन्धबन्धने । करणेल्युट् । ङीप् ।

मृगभक्ष्या । स्त्री० जटामांस्याम् ॥

मृगमद : पुं० कस्तूर्याम् ॥ मृगस्य मद : ॥

मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥

मृगमातृक : । पुं० मृगविशेषे ॥ स्वल्प : पृथूदरोऽर्शोय : सस्मात् मृगमातृक : । शुभ्रै: शशेनसदृशोगदितो मृगधमातृक : ॥

मृगया स्त्री० आखेटे । मृगव्ये । पापर्द्धे । खेटे । इडा० इ० भा० ॥ प्रबलशकुनाशिनो आखानृनिजनीडद्रुमपीडिन : रागान् । प्रनवद्यातृणाहिंसीम् गान् मृगयाघोतमुस्तांप्रताम् ॥ इतियोऽर्थ : ॥ मृग्यन्ते मृगा अस्याम् । मृग० । चु० धञ्श : । परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधु : ॥

मृगयु : । पुं० व्याधे । लुब्धके । ऐडिया० इ० भा० प्र० । मांसविक्रयार्थमृगादिपशुहन्तरि ॥ मृगान् वधार्थं याति । या० । मृगय्वादित्वात्कु : ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥

मृगरसा । स्त्री० सहदेव्याम् ॥

मृगराट् । पुं० सिंहे । मृगेषु राजते । राज० । क्विप् ॥

मृगराज : पुं० सिंहे ॥ मृगाणां राजा । राजाहःसखिभ्यष्टच् ॥

मृगराटिका । स्त्री० जीवन्त्याम् ॥

मृगरिपु : । पुं० सिंहे ॥ मृगाणां रिपु: ॥

मृगरोमजम् । न० राङ्कवे । मृगरोमभवेवस्त्रे ॥

मृगलाञ्छन : । पुं० चन्द्रे । शशिनि ॥ मृगोलाञ्छनं यस्य ॥

मृगवल्लभ : । पुं० कुन्दुरुतृणे ॥

मृगवाहन : । पुं० वायौ ॥ मृगोवाहनं यस्य ॥

मृगव्यम् । न० मृगयायाम् ॥ मृगा व्यधन्तेऽत्र । व्यधताडने । घञर्थेकविधानम् ॥ ... ति० :

मृगशिरा : । स्त्री० पञ्चमनक्षत्रे ॥ मृग : शिरोऽस्य ॥

मृगशिर : । न० मृगशीर्षे । पञ्चमे नक्षत्रे । यत्रजातस्यफलम् । गरामनाभ्यामरतोविनीत: सदानुरक्तो गुणिनांगुणेषु । महानुपस्त्रोधरि

थपूर्णः सन्मार्गवर्त्तीमृगजन्मभागी ॥ चाक्षुष्यामृगः शिरोऽस्य ॥

मृगशिरा । स्त्री० आर्द्रायस्याम् ॥ मृगशिरसि ॥

मृगशीर्षम् । न० मृगशिरसिनक्षत्रे ॥ चाक्षुष्यामृगः शीर्षं यस्य ॥

मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥

मृगा । स्त्री० सहदेवीलतायाम् ॥

मृगाक्षी । स्त्री० इन्द्रवारुण्याम् । विशालायाम् ॥ मृगनेत्रायांराशौ ॥ मृगाक्षिसमाक्षीनार्याम् । मृगस्य अक्षिणीइवअक्षिणीयस्याः ॥

मृगाङ्कः । पुं० कलानिधौ हिमांशौ ॥ कर्पूरे ॥ वायौ ॥ मृगचिह्ने ॥ मृगोऽङ्कोयस्यसः ॥ यथादर्पणं प्राप्य परावृत्तानयनरश्मयोग्रीवास्थमेवमुखंदर्पणगतमिवपश्यन्ति०एवं चन्द्रमण्डलंप्राप्यपरावृत्तास्तेदूरत्वदोषात्०पृथिवीमव्यक्तरूपामिवचन्द्रमण्डलगतामिवपश्यन्ति०सएवचन्द्रे मृगचिह्नमित्युपचर्य्यते० इतिव्याख्याकारः ॥ यक्ष्मरोगस्यौषधविशेषे ॥ यथा । स्याद्रसेनसमंहेममौक्तिकंद्विगुणंभवेत् । गन्धकस्तुसमस्तोनरसपादस्तुटङ्कणः ॥ सर्वंतद्गोलकंकृत्वा काञ्जिकेनविशोधयेत् । भाण्डेनपचपूर्वे पचपेयामचतुष्टयम् ॥ मृगाङ्कसंज्ञकोह्येषरोगराजनिकृन्तनः पचपिष्टं रसस्यभस्मनोहेम पिष्टीकृत्यप्रयोजयेत् । गुञ्जाचतुष्टयस्तास्यमरिचैर्भक्षयेन्नरः ॥ इति मधुमती ॥

मृगाजीवः । पुं० व्याधे ॥

मृगाण्डजा । स्त्री० कस्तूर्याम् ॥

मृगादनः । पुं० तरक्षौ । तेंदुवाबाघ० तरक्षु इ० भा० प्र० ॥ मृगमत्ति । अद्० । अण् ॥

मृगादनी । स्त्री० इन्द्रवारुण्याम् । गवादन्याम् ॥ मृगेर्वारौ ॥ सहदेव्याम् ॥

मृगादिः । पुं० मार्गशीर्षे ॥

मृगादी । पुं० सिंहे ॥ मृगानत्तुंशीलंयस्य । णिनिः ॥

मृगाधिपः । पुं० सिंहे ॥

मृगान्तकः । पुं० चित्रव्याघ्रे । चीता० इ० भा० ॥ मृगाणामन्तकः ॥

मृगारातिः । पुं० मृगश्रत्रौ ॥ कुक्कुरे ॥ मृगस्यअरातिः ॥

मृगारिः । पुं० कण्ठीरवे । सिंहे ॥ शार्दूले । व्याघ्रे ॥ मृगस्यअरिः ॥ कुक्कुरे ॥ रक्तशिग्रौ ॥

मृगावित् । पुं० व्याधे ॥

मृगास्यः । पुं० मकरराशौ ॥ मृगस्य आस्यमिवआस्यंयस्य ॥

मृगितः । त्रि० अन्वेषिते । ढूंढा० इ० भा० ॥ मृग्यतेस्म । मृग० । क्तः । इट् ॥

मृगी । स्त्री० वनिताविशेषे ॥ मृग

जातिस्त्रियाम् । मृगीणांजङ्घोत्या नांकःगोचीरसुखं पय : ॥ कश्यपपत्न्यायाम् । पुलहभार्यायाम् । हरिणादिमृगाणांमातरि ॥ मध्याङ्गस्त्रिप्रभेदे । रोमृगी० इतिबचनबलाच्चितै ॥ यथा । साम‍ृगीलोचना । राधिकार्थोपरे : ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री० मृगनेत्रायाम् ॥ मृगेर्वारी ॥

मृगेन्द्र : । पुं० सिंहे ॥ नाभिषेको नसंस्कार : सिंहस्यक्रियतेवने । विक्रमार्जितसत्त्वस्य स्वयमेवमृगेन्द्रता ॥ मृगाणामिन्द्र : ॥ वर्णवृत्तान्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । इथाविलपानि ॥ सध्यकघो: पञ्चमाध्याये० ५ । ३० ॥ याचा योगान्तरे ॥ लग्ने शुक्र : भगीपत्नी कर्मण्यानेगुरुर्यदा । मृगेन्द्रयोगो विख्यातोयातु : सर्वार्थसाधक : ॥

मृगेन्द्रचटक : । पुं० श्येने ॥ चटकानांमृगेन्द्र : ॥ राजदन्तादि : ॥

मृगेन्द्रमुखम् । न० अतिजगती १३ छंदोभेदे ॥ भवतिमृगेन्द्रमुखंनजौ जरौग : । यथा । गुरुभुजवीर्यभरं हरिंमदान्धमुधिसमुपेत्यदानवा जिजीवु : । क्षुधितमृगेन्द्रमुखंमृगा उपेत्यखलुसुखमतिजीवनसयोगम् ॥

मृगेन्द्राणी । स्त्री० वासके ॥

मृगेर्वारु : । स्त्री० श्वेतेन्द्रवारुण्याम् । मृगाक्ष्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट : । पुं० मुद्गरवृक्षे ॥

मृग्य : । त्रि० अन्वेष्ये । मृगितव्ये ॥

मृज : । पुं० वाद्यविशेषे । मर्दले । हारुजे । मार्दल० दू० गी० टी० भा० प्र० ॥

मृजा । स्त्री० मार्जनायाम् । प्रोक्षणादिनाङ्गनिर्मलीकरणे ॥ मार्जनम् । मृजूशुद्धौ । मृजूश्चालङ्करणयोश्चुरादित्वं । भिदाद्यङ् ॥

मृज्य : । त्रि० मार्जनीये ॥

मृड : । पुं० शिवे ॥ मृडति । मृडसुखने । मृडयतिवा । मृडयत् चोदे । इगुपधत्वात्क : ॥

मृडङ्कण : । पुं० बालके ॥ मृडति । मृड० । मृड : कीकच्कङ्कणाविति कङ्कण : प्रत्यय : ॥

मृडा । स्त्री० दुर्गायां ॥

मृडानी । स्त्री० चण्डिकायाम् । अम्बिकायाम् ॥ मृडस्त्री । इन्द्रवरुणेतिङीषानुकौ ॥

मृडी । स्त्री० दुर्गायाम् ॥

मृडीक : । पुं० मृगे । हरिणे ॥ मृडति । मृड : कीकच्कङ्कणावितिकीकच् ॥

मृणालम् । न० नलदे । उशीरे ॥ पुं०

न० बसे। पद्मनाले ॥ मृणालं शीतलं वृष्यं पित्तदाहास्रजिद्गुरु। दुर्जरं स्वादुपाकस्तन्यानलकफप्रदम् ॥ संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम्। बिसाङ्कुरास्तन्द्रफलानुका राविभाविताः सैव्यरनिम्नुशाख्याम्। विदीर्यखण्डोऽष्ठस्तन्द्रनीरान सिमियद्भि लघुदीरयन्ति। मृणाले। मृणहिंसायाम्। तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्य: कालन् ॥

मृणालिनी। स्त्री० पद्मिन्याम् ॥ मृणालानि सन्त्यस्य। पुष्करादिभ्यो देशइतीनि: ॥

मृणाली। स्त्री० विसे। पद्मादिमूले ॥ अपचयविवक्षायाम् गौरादित्वात् ङीप्। स्वल्पमृणालजातौ ॥

मृत:। त्रि० परासौ। प्राप्तपञ्चत्वे। परेते। प्रेते। संस्थिते। प्रमीते। अमरा० इ० भा० ॥ यथा। धर्म: प्रव्रजितस्तप: प्रचलितं सत्यञ्च दूरे गतं पृथ्वी मन्दफला जना: कपटिनो लौल्ये स्थिता ब्राह्मणा:। मर्त्या: स्त्रीवशगा: स्त्रियश्च चपला नीचा जना उन्नता हा कष्टं खलु जीवितं कलियुगे धन्या नरा ये मृता: ॥ इति गारुडे ११५ अध्याय:। न० मृत्यौ ॥ याचिते। मृतन्तु याचितं प्रोक्तमिति मनु:। याचनहत्तिर्हि मरणमिव दु:खजनकत्वान्मृतमुच्यते ॥ म्रियते स्म। मृङ् प्राणत्यागे। गत्यर्थेति क्त: ॥ तनिमृङ्भ्यां किदिति तन्प्रा ॥

मृतकम्। न० शवे। मरणाशौचे ॥ यथा। यदि स्यान्मृतके सूतिर्मृतके सूतिकासु वा। शेषं येव भवेच्छुद्धि: शेषे द्विरात्रकम् ॥

मृतकल्प:। त्रि० मृतप्राये। ईषदूनो मृत:। ईषदसमाप्ताविति कल्पप्प्रत्यय: ॥

मृतनाशक:। पुं० मृगाले ॥

मृतजीव:। पुं० तिल्वकवृक्षे ॥

मृतमत्त:। पुं०)

मृतमत्तक:। पुं०) शृगाले ॥

मृतवत्सा। स्त्री० अजीवत्सन्तानायाम्। मृतापत्यायाम् ॥

मृतसञ्जीवनी। स्त्री० मृतजीवनार्थकविद्यायाम् ॥ गोरक्षदुग्धायाम्। मृत: सञ्जीव्यतेऽनया। जीवप्राणधारणे। ल्युट्। ङीप् ॥

मृतस्नात:। त्रि० अपस्नाते। मृतसुहृत्स्नातवानिति ॥ मृते स्नात:। सप्तमीतिसमास: ॥

मृतस्नानम्। न० अपस्नाने। मृतोद्देशेन स्नाने ॥

मृतसमोत्था। पुं० राजर्षिविशेषे ॥

मृतामदम्। न० तुत्थे ॥

मृतालकम्। न० तुवरिकायाम् ॥

मृतमालयति। अलमूपकादौ।

मृत्यु :

मृत्यु :

मंख्यण । संज्ञायांकन् ॥
मृति : । स्त्री० मरणे ॥ मृङ्प्राण त्यागे । स्त्रियांक्तिन् ॥ मृतिः प्राणवियोगः स्यान्ननुनाशः सतोमतः । मृङ्प्राणत्यागइत्युक्तं स्वयंनष्टः कथंत्यजेत् ॥
मृत्कर : । पुं० कुम्भकारे ॥
मृत्कांस्यम् । न० शरावे ॥
मृत्किरा । स्त्री० जलजन्तुविशेषे । घुर्घुर्याम् ॥
मृत्पचम् । न० मूलके ॥
मृत्पलिनी । स्त्री० सारलायाम् । चमकपायाम् ॥
मृत्सालम् । न० तुवरिकायाम् । सुराष्ट्रमृत्तिकायाम् ॥ मृदितालः प्रतिष्ठाऽस्याः ॥
मृत्सालकम् । न० मृत्साले ॥ स्वार्थेकन् ॥
मृत्तिका । स्त्री० मृदि ॥ माटी० इ० भा० ॥ मृदेव । स्वार्थे० मृत्तिकन् । प्रत्ययस्थात्मिति वत्तिर्थे तकारोच्चारणं प्रक्रियालाघवार्थम् । टापोत्पुल्लमित्यवार्थस्तु । प्रत्यभिर्निर्जितानि : क्षौमः पत्रमृत्तिका : पट : ॥
मृत्फली । स्त्री० कुटीफले ॥
मृत्यु : । पुं० मरणे । यमराजायाम् । निधने । शरीराद्यारम्भककर्मक्षयनिमित्ते । मर्ममर्मच्छेदनरूपे० शरीरादिविच्छेदे ॥ सचसर्वेषांब्रह्मादीनांकालंप्राप्यावश्यमेवभवति । तथाहि । प्राप्तेकालेस्वयंब्रह्मापरार्द्धद्वयसम्मिते । निधनं यातितरसाजगत्कर्त्तास्वयंप्रभुः ॥ चतुर्युगसहस्रे तु ब्रह्मणोदिवसेस्थित । यस्मिन्भवनात्पद्मनवेन्द्रास्तथापुन : । तथैवहिगुणविष्णुर्मरणायोपकल्प्यते ॥ तथैवहिगुणेकालिमहरः शान्तिमेतिच ॥ काचित्तामरणंमूढानियचेदैवनिर्मितं । मत्तीमत्तीधराणास्तनाशः सूर्यंगमात्क्वचो : ॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच । अध्रुवेस्मिन्शरीरेतुरक्षणीयंयशः स्थिरम् ॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्यायः ॥ आसन्नमृत्युर्लीकोयंध्रुवाद्रीन्नहिपश्यति ॥ तथाहि । अरुन्धतींध्रुवञ्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नीयश्येच्चतुर्थंमातृमण्डलम् ॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते । विष्णोः पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्यायः ॥ संसारे । अविद्याकामकर्मसमुदाये । स्वाभाविकेकर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणांमध्ये विनाशरूपेतोभगवतोविभूतौ । यमे । पंचम्यते ॥ मरणम् । मृङ्० । भुजिमृङ्भ्यां

युक्त्युक्तायिसिद्ध्युक् ॥ योगविशेषे ॥ यथा । रवावनुराधा॰ सोमे उत्तराषाढा॰ कुजे शतभिषा॰ बुधे अश्विनी॰ गुरौ मृगशीर्षम्॰ भृगौ श्लेषा॰ शनौ हस्तनक्षत्रे मृत्युयोगो भवति ॥ जन्माष्टमलग्ने । शाखायोगान्तरे ॥ अन्योन्यत्वे च गावेक्षर्षे याकविभास्करौ । मृत्युयोगोऽयमाख्यातो यातुर्मृत्युप्रदायक : ॥

मृत्युजरे । स्त्री॰ हि॰प्रत्याख्यप्रिया प्रियवो : ॥ यथा । कालकन्ये मृत्युजरे प्रत्याख्यप्रियापिये । या भ्यांजगत्समुच्छिन्नं विधानानिमितं विधौ ॥ जरामृत्योरपिकालाद्युत्पन्नत्वात्तान्यासहशस्यात्कन्यात्वम् । तेम्‌ृत्युजरे कालकान्ये प्रत्याख्यप्रत्यक्षरप्रियाप्रियेपत्न्यौभवत : । प्रियातोऽप्रियेऽतिशयितप्रियेइत्यर्थ : ॥

मृत्युञ्जय : । पुं॰ कृत्तिवाससि । शिवे ॥ मृत्युञ्जयान्तिताधपक्षिके न तु कथामम । नमृत्युञ्जित : शम्भु : कल्पेकल्पेऽस्तुतौयुतम् ॥ मृत्युञ्जयति । विजये । संज्ञायांभृतृजिधारिसहितपिदम : । इतिखच् । मुम् ॥ यात्रायोगान्तरे ॥ लाभे भौमोगुरुश्छिद्रे पञ्चस्थानेचभास्कर : । मृत्युञ्जयसमा स्योर्थसर्वशत्रुनिबर्हण : ॥

मृत्युनाशक : । पुं॰ पारदे ॥ त्रि॰ मरणहर्त्तरि ॥

मृत्युपाश : । पुं॰ अधर्माज्ञानराग द्वेषादौ ॥

मृत्युपुष्प : । पुं॰ इक्षौ ॥

मृत्युफल : । पुं॰ महाकालफले ॥

मृत्युफली । स्त्री॰ कदल्याम् ॥

मृत्युमहस्क : । पुं॰ भवकृति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युमत्य : । पुं॰ रोगे ॥

मृत्युमान् । त्रि॰ मृते ॥

मृत्युवञ्चन : । पुं॰ अश्मरी । श्रीफले । द्रोणकाके ॥

मृत्युबीज : । पुं॰ वंशे ॥

मृत्युसूति : । स्त्री॰ कर्कट्याम् । नागमातायाम् ॥ मृत्योस्सूति : प्रसवो यस्या : ॥ यथाकर्कटकीगर्भमाधत्तेमृत्युमात्मन : ॥

मृत्सा । स्त्री॰ प्रशस्तमृदि ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस : । टाप् । तुवरिकायाम् । तूवर॰ इ॰ भा॰ ॥ मृत्साऽस्त्वस्या : पचत्वेन । अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री॰ प्रशस्तायांमृत्तिकायाम् । मृत्सायाम् ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस्न : । टाप् । तुवर्याम् । आढक्याम् । अरहर तूवर॰ इ॰ भा॰ ॥

मृत्०द् । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विनियोगयथाविष्णुपुराणे । वल्मीकमूषकोत्खातांमृदमन्तर्जलां तथा । शौचावशिष्टगेहाच्च नादद्याल्लेपसम्भवाम् ॥ अन्त : प्राण्यवपन्नाच्च हलोत्खातांचपार्थिव । परित्यजेन् मृदस्त्वे ता : सकला शौचसाधनकृति ॥ अन्त : प्राण्यवयन्मासकीटाम् ॥ मृद्नसि० मृद्यतेवा । मृदक्षोदेसम्पदादित्वात्क्विप् । काम्याम् । तुवरिकायाम् ॥

मृदङ्कर : । पुं० हारीतपक्षिणि ॥

मृदङ्ग : । पुं० स्वनामप्रसिद्धे वाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम् । मर्द्दल : खदिर : श्रेष्ठोरीणः स्याद्रक्तचन्दनजो-घायोगम्भीरध्वनिस्तथैः ॥ सार्द्ध-हस्तप्रमाणस्तुदैर्घ्यमस्यविधीयते । अर्धाङ्गाकुलताममथवाद्याङ्गुलम् ॥ दक्षिणस्यभवेद्वीनसेकेनाङ्गुलेनवा । करणादनयन्नोमध्ये चैवयुगभवेत् ॥ मुखमासीयोगवेदक्तात्रस्यावय[illegible]मतम् । मृत्तिकानिर्मितत्वमृदङ्ग : परिकीर्तितः ॥ घातयेत्परलिखद्यवाद्नार्धम-र्द्दलं । विभूतिर्गे रिकभक्तं सेन्दुकेनचर्मयुतम् ॥ यद्वाचिपीटकंदैर्घ्य-मोविर्मीसयर्मिमिश्रितम् । सर्वसेवनपिष्टंतत्रेम : खरलिकरुच्यते ॥ वामास्येपूरिकांकत्वालेपंदद्याच्चदक्षिणे । एवंमर्द्दलक : प्रोक्त : सर्ववाद्योत्तमोमत : ॥ अस्यसंयोगमासाद्यसर्ववाद्यशुभोभते । एतद्-द्वेवीजकाष्ठदलसर्वाङ्गुलंविदु : ॥ इति । विशेष : सङ्गीतशास्त्रे द्रष्टव्य : ॥ पटहे ॥ घोषे ॥ वंशे ॥ मृदार्ते । मृद्० । मिडादिभ्य : किदित्यङ्गच् । मृत्यङ्गस्येतिवा ॥

मृदङ्गबा : । पुं० मृदङ्गे ॥

मृदङ्गफल : । पुं० पनसवृक्षे ॥ मृदङ्गवत्फलान्यस्य ॥

मृदङ्गफलिनी । स्त्री ० कोषातक्याम् ॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषाकृतिभे० दे० भा० ॥

मृदर : । पुं० विधि ॥ त्रि० क्षिणसति ॥ म्रियतेऽनेन० मृद्गातिवा । मृङ् मद्०वा । कृदरादयश्चेति० अरप्रत्ययान्तोनिपातित : ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकर : । पुं० वज्रे ॥

मृदित : । त्रि० अभिनष्टे । विनाशिते ॥ निष्पोडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद्० । क्त : । इट् । कृडितिचे तिनगुण : ॥ चौर्णे ॥

मृदिनी । स्त्री० मृत्तमायाम् ॥

मृदुः । त्रि॰ कोमले । अतीक्ष्णे ॥ मृदुः सर्वत्र बाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिम्रदिभ्रस्जामितिकुः सम्प्रसारणं च ॥ मृदुशब्दोऽमृदुत्व-गुणमुक्तद्रव्यमभिधत्ते इति गुणवचनो मृदुशब्दः । तेन स्त्रियां ङीप-भावे॰ मृदुः ॥ न॰ विशेषणवचा-दी । यथा । चित्रेन्दुमिव चोत्पा-दसमृदुमेव तथाश्रुः । तत्रगोल-स्वरलोऽभिधयार्थस्य शोभनम् ॥ स्त्री॰ घृतकन्यायाम् ॥

मृदुकृष्णायसम् । न॰ सीसके ॥

मृदुगमना । स्त्री॰ हंस्याम् ॥ त्रि॰ मन्दगमने ॥

मृदुचर्म्मी । पुं॰ भूर्जवृक्षे ॥ त्रि॰ कोमलचर्म्मविशिष्टे ॥

मृदुच्छदः । पुं॰ भूर्जे । कुक्कुरद्रुमे ॥ शोभाखे ॥ अक्षोटे ॥

मृदुता । स्त्री॰ मृदुत्वे ॥

मृदुतालः । पुं॰ श्रीतालवृक्षे ॥

मृदुत्वच् । पुं॰ भूर्जपत्रवृक्षे ॥ मृदीत्वगस्य ॥

मृदुत्वचः । पुं॰ मृदुत्वचि । मृदीत्वचावस्य सः ॥

मृदुपत्रम् । न॰ गुण्ड्रे ॥ इति शब्दचन्द्रिका ॥

मृदुपत्रः । पुं॰ नले । न॰ कोमलपत्रे ॥ त्रि॰ कोमलपर्णवति ॥ मृदूनिपत्राणियस्य सः ॥

मृदुपत्री । स्त्री॰ चिल्लीशाके ॥

मृदुपर्वकः । पुं॰ वेत्रे ॥ त्रि॰ कोमलपर्ववति ॥

मृदुपुष्पः । पुं॰ शिरीषवृक्षे ॥ त्रि॰ कोमलकुसुमविशिष्टे । मृदूनिपुष्पाणियस्य सः ॥

मृदुफलः । पुं॰ मधुनारिकेले ॥ विकङ्कते ॥ त्रि॰ कोमलफलवति ॥ मृदूनिफलानियस्य सः ॥

मृदुरम्यः । पुं॰ साक्षिकारावसञ्चितह्रदे ॥

मृदुरेचनी । स्त्री॰ मार्कण्डिकायाम् ॥

मृदुलः । त्रि॰ कोमले । मृदुर्गुणोऽस्यास्ति । सिध्मादिभ्यश्चेति लच् ॥ न॰ जले ॥

मृदुलोमकः । पुं॰ शशके ॥ त्रि॰ कोमलरोमविशिष्टे ॥

मृदूत्पलम् । न॰ नीलपद्मे ॥

मृद्वङ्गम् । न॰ वङ्गे ॥ कोमलगात्रे । त्रि॰ तद्वति ॥ मृदून्यङ्गानियस्य । कर्मधारयो वा ॥

मृद्वी । स्त्री॰ कपिलद्राक्षायाम् ॥ कोमलाङ्ग्याम् ॥ मृदुशब्दो मृदुत्वगुणयुक्त॰मृदुत्वगुणयुक्तद्रव्यमभिधत्ते इतिगुणवचनत्वेन॰ वोतोगुणवचनादितिपाक्षिको ङीप् ॥

मृद्वीका । स्त्री॰ गोस्तन्याम् । द्राक्षायाम् । गुच्छफ॰ इ॰ मा॰ । मृद्नाति । मृद॰ । कर्णीकादयश्चेति-

साधु : ॥ कपिलद्राक्षायाम् ॥

मृधम् । न० युद्धे ॥ मर्द्दनम् । मृधु हिंसायाम् । बाहुलकात्० भावे० घञर्थेवाकः ।

मृन्मय : । त्रि० मृदोविकारे ॥ मयट् ॥ स्त्री० मृन्मयी ॥

मृन्मरः । पुं० अश्मनि । पाषाणे ॥

मृषा । अ० वितथे । मिथ्या भूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्ययः ॥

मृषाध्यायी । पुं० बके ॥

मृषार्थकम् । न० श्राद्धते । अत्यन्ता सम्भवार्थवाक्ये ॥ यथा । एषबन्ध्यासुतोयातिखपुष्पकृतशेखरः ॥ कूर्मक्षीरचयस्नातः शशशृङ्गधनुर्द्धरः ॥ इ० । मृषाऽर्थेयस्यतत् । कप् ।

मृषाभाषक : । पुं० चाक्षुषे ॥

मृषावादः । पुं० मिथ्योदिते । मिथ्यावाक्ये । दृष्टयाम् ॥

मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोऽस्यास्ति । इनिः ॥ मिथ्याभियोक्तरि ।

मृषोद्य : । त्रि० मिथ्यावादिनि ॥ रसत्सूत्सूर्यमृषोद्यं तुल्यादिनामृषोपपदाद्वदेः कर्मणिनित्यं क्यप्निपात्यते ॥ न० मिथ्यावाक्ये ॥

मृष्ट : त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म । मृजूशुद्धौ । क्तः ॥ न० मरिचे ॥

मृष्टि : । स्त्री० अन्नादेः संस्कारविशेषे ।

मृष्टेरुक : । पुं० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेक : । पुं० अजे । छागे ॥

मेकल : । पुं० चैत्यान्तरे ॥ गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदासरिति । रेवायाम् ॥ मेकलस्यपर्वतस्यकन्यका ॥

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम् ॥ मेकलाद्रेर्जाता । जनी० । डः ॥

मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥

मेखलः । पुं० मेकलपर्वते ॥

मेखलकन्यका स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेर्यमादिनिर्मितेकटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमणिबन्धे प्रबध्यमाने चर्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलापः पञ्चविंशकः ॥ इतिपठन्ति०इत्थंभेदात्पर्यायता ॥ स्त्रीकट्यांवस्त्रबन्धने ॥ श्रोणिस्थाने ॥ मेखलितम्बे । उपनयनकाले

धारणीयसूत्रनिर्मितसूत्रत्रये ॥ यथा । मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकबल्वजैः । त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ इ० मनुः ॥ होमकुण्डोपरि दत्तप्रवेष्टनविशेषे ॥ यथोक्तं वशिष्ठसंहितायां । यावान् कुण्डस्य विस्तारः खननं तावदिष्यते । षट्भिरङ्गुलैर्मेखलास्तिस्रो वेदाग्नि-नयनाङ्गुलाः ॥ कुण्डे द्विहस्ते तासां वारसवेदगुणाङ्गुलाः । चतुर्हस्ते तु कुण्डे तासु तर्कयुगाङ्गुलाः ॥ मेखलावप्रसारिमेखलावत् कुण्डवेष्टितास्तु घटिताःतास्वतदेशा-दोषो एकाङ्गुलिकपंक्तस्थ परिस्थध्यो च्छ्रायेश्चविस्तारे श्चेत्यादिक्रमेणवेदाद्यङ्गुलाः एतद्विपरीतास्तस्या-न्तरोत्थाव्यवहारविकला ॥ नितम्बामतेपि । खातादिकाङ्गुलं स्थानात् मेखलानां विधिर्भवेदिति ॥ मखंगिलति । गा० । घातदतिवा । पृषोदरादिः ॥ मां लम्बोमखंईखति ० माईखतिवा । माशब्दोनिषेधेईखगतौ । याङ्कलकारकलच् । यद्वा । माईखलति । खलसञ्चयेसि स्वनेच । मूलविभुजादित्वात्कः । चपितु० वृद्धिः स्यात् ॥ नर्मदा-याम् ॥ अग्निपत्न्यां ॥

मेखलिकः । पुं० मेखलिनि ॥ मेखलास्यास्ति । व्रीह्यादित्वाट्ठन् ॥

मेखली । पुं० मेखलावति । मेखलिके । मेखलास्यास्ति । व्रीह्यादित्वादिनिः ॥

मेघः । पुं० अभ्रे । वारिवाहे । घने । जलदे ॥ मेघास्त्रिविधास्तत्रवह्निजाधूमयोनयः । निश्वासजास्तुनी-मूताश्चैत्रीयापौष्करमिथः ॥ यत्र-वास्तुघनाघोराः पुष्करावर्त्तकाद-यः । इतिविशेषतश्च शब्दार्थचि-॥ मेहतिसिञ्चति । मिहसेचने । घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरवोऽथ वसन्तश्च नटनारायणस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥

मेघकफः । पुं० करकायाम् ॥

मेघकालः । पुं० वर्षासु ॥

मेघचिन्तकः । पुं० चातकपक्षिणि ॥

मेघङ्करः । पुं० मेघगमने ॥ मेघान्करोति । मेघर्त्तिभयेषुकृञः खच् प्रत्ययः । अरुर्द्विषदितिमुम् ।

मेघजः । त्रि० मेघभववस्तुनि ॥

मेघजालम् । न० कादम्बिन्याम् । मेघावली ॥

मेघजीवनः । पुं० चातके ॥ मेघेजीवनमस्य ॥

मेघज्योतिः। पुं॰ इरम्मदे। वज्राग्नौ। मेघस्यज्योतिः॥ अन्योन्यसङ्घट्टनेनमेघाग्निः स्वच्छच्छादीयोज्योतिरग्निः पततिसः॥

मेघडम्बरः। पुं॰ मेघगर्जने॥ मेघस्याडम्बरः॥

मेघतिमिरम्। न॰ मेघाच्छन्नदिने॥

मेघदीपः। पुं॰ विद्युति॥

मेघध्वनिः। पुं॰ गर्जिते। मेघनिर्घोषे॥

मेघनादः। पुं॰ वरुणे॥ रावणात्मजे। इन्द्रजिति॥ मेघस्यनादइव नादोयस्य॥ मेघशब्दे॥ पलाशवृक्षे॥ तण्डुलीयशाके॥ इतिराजनिर्घण्टः॥ मेघस्यनादः॥

मेघनादजित्। पुं॰ रामानुजे। लक्ष्मणे॥ मेघनादमजैषीत्। जि॰। सत्सूद्विषेतिक्विप्। तुक्॥

मेघनादानुलासकः। पुं॰ मयूरे॥

मेघनादानुलासी। पुं॰ मयूरे॥ मेघनादेनअनुलसति॰ तच्छील:। लसश्लेषणक्रीडनयोः। सुप्यजातौणिनिस्ताच्छील्ये इति णिनिः॥

मेघनामा। पुं॰ मुस्तके॥ मेघनामानिनामान्यस्य॥ आदित्यधौपद्यमाहे॰ ।ऽऽ॥

मेघनायकः। पुं॰ चातकपक्षी॥ यथा। त्रिपुरीमारकमर्पण्तृषातुरैः जोषितैः त्वारम्। चातकाधिपति वर्त पुष्करो-

द्रोणमम्बुदम्॥ फलंयथा। चातकोनिर्व्यलीमेघः वर्षयेद्बहुदकः। पुष्करोदुष्करजलोद्रोणः सस्यप्रपूरकइति॥

मेघनिर्घोषः। पुं॰ स्तनिते। गर्जिते॥ मेघस्यनिर्घोषः॥

मेघपर्यायः। पुं॰ आदित्यधौपद्यमावर्ते॰ ।ऽऽ॥ मुस्तके॥ मेघोमेघवाचकः शब्दः पर्यायोऽस्य॥

मेघपुष्पम्। न॰ पिण्डाभ्रे। करकाम्भसि॥ अम्बुनि॥ नदीजले॥ पुं॰ इन्द्रस्याश्वे॥ कृष्णस्यघोटके॥ मेघस्यपुष्पमिव॥

मेघप्रसवः। पुं॰ जले॥

मेघभवः। त्रि॰ मेघोत्पन्नवस्तुनि॥

मेघभूतिः। पुं॰ वज्रे॥

मेघमालः। पुं॰ प्लक्षद्वीपस्थे गिरिविशेषे॥ रमागर्भजातकल्किदेवपुत्रे॥

मेघमाला। स्त्री॰ कादम्बिन्याम्॥ मेघानांमाला॥

मेघयोनिः। पुं॰ धूमे॥

मेघरागः। पुं॰ रागविशेषे॥ मेघसंज्ञकोरागः॥

मेघवर्णा। स्त्री॰ नीलीवृक्षे॥ त्रि॰ घनसमानवर्णवति॥

मेघवर्त्म। न॰ नभसि। गगने॥

मेघवह्निः। पुं॰ वज्राग्नौ। इरम्मदे॥

मेघवाहः । पुं॰ इन्द्रे ॥ यथा । राजा स्वर्यान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रयोसोमेघवाहस्तु महतीं वृष्टिमाहवेद्दितिदण्डनीतिः ॥

मेघवाहनः । पुं॰ इन्द्रे । तुरासाहि ॥ मेघाः महामेघागजरूपधारिणोऐरावतादयोवाहनमस्य ॥ मेघावृताश्वयोवाहनयस्य । स्यः ॥ इन्द्रोऽपिमेघानाधिश्यवर्षतीत्यागमः ॥

मेघविस्फूर्जिता । स्त्री॰ अतिधृतिच्छन्दः १९ प्रभेदे ॥ तस्योदाहरणं यथा । रसत्वैश्चेर्व्योम्नोरवगुरयुतामेघविस्फूर्जितास्यात् ॥ यथा । कदम्बामोदाढ्याविपिनपवनाः केकिनः कान्तकेकाः ॥ विनिद्राः कन्दल्योदिशिदिशिमुदादर्दुराड्यनादाः । निशान्तस्यविद्युद्विलसितवत्सम्मेघविस्फूर्जिताचेत् प्रियः स्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत् ॥

मेघवेश्म । न॰ खे ॥

मेघसारः । पुं॰ चीनकर्पूरे ॥

मेघसुहृत् । पुं॰ मयूरे ॥ मेघः सुहृद्स्य ॥

मेघस्तनितोद्भवः । पुं॰ विषकण्टकवृक्षे ॥

मेघाकाशः । पुं॰ अभ्राकाशे ॥

मेघाख्यम् । न॰ मुस्तके ॥

मेघागमः । पुं॰ प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्यागमने ॥

मेघानन्दा । स्त्री॰ बलाकायाम् ॥

मेघानन्दी पुं॰ मयूरे ॥

मेघान्तः । पुं॰ शरदि ॥ मेघानामन्तोयस्मिन् ॥

मेघास्तः । पुं॰ शरदृतौ ॥

मेघास्थि । न॰ करकायाम्

मेघारूढम् । न॰ आकाशे ॥

मेघोदरः । पुं॰ पर्वतपितरि ॥

मेघ्यः । त्रि॰ मेघभवे ॥ दिगादित्वात्यत् ॥

मेचकः । पुं॰ मयूरपुच्छचन्द्रके ॥ मेचकोवर्णोस्त्यस्य । धर्मआद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचकः कृष्णनीलः स्यादतसीपुष्पसन्निभः । दृतिमन्दाग्नेर्भेदः ॥ वर्त्तिकाप्रसमं वर्णेमेचकाम्बुवत्तेबुधाः इतिकास्यः । मचतिमिश्रीभवतिवर्णान्तरेण । मचमुचिकल्कने । कृञादिभ्यः संज्ञायां वुन् । मचिमच्योरिश्चोपधाया इतीत्वं लघूपधगुणः ॥ धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न॰ सौतोञ्जने ॥ अन्धकारे ॥ नीलाञ्जने ॥ त्रि॰ श्यामवर्णयुक्ते ॥

मेचकाभिधा । स्त्री॰ पातालगरुडीलतायाम् ॥

मेटुला । स्त्री॰ आमलक्याम् ॥

मेठः । पुं॰ हस्तिपके । निषादिनि ॥

मेढ्रः पुं॰ मेहने । शिश्ने ॥ मेहन्त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री॰ मेषशृङ्गीवृक्षे ॥

मेण्ठः । पुं॰ हस्तिपके ॥

मेण्डः पुं॰ मेठे । हस्तिपके ॥

मेण्ढः । पुं॰ मेषे ॥

मेथिः । पुं॰ मेधिकाष्ठे । खलेबाल्याम् । खलेपशुबन्धनार्थकाष्ठे ॥ मेथ्यन्ते पशवोऽत्र । मेधृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका । स्त्री॰ मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धायां ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । ततः स्वल्पगुणायन्याबाजिनांसातुपूजिता ॥ अपिच । मेथिकादीपनीहृद्यावद्धविट्कृमिशूलनुत् ॥ रुचोष्णातत्फलंश्वासानिलघ्नप्रवमीन्नयेत् ।

मेथिनी । स्त्री॰ मेथिकायाम् ॥

मेथी । स्त्री॰ मेथिकायाम् । गौरादित्वात्हारिद्रकारादित्तिवाङीष् ॥

मेदः । पुं॰ मेदसि । वपायाम् । शुक्रमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति । ञिमिदास्नेहने । घञ् ॥ वैदेहेननिषादभार्यायांजनिते॰ऽन्त्यजजातिविशेषे ॥

मेदःपुच्छः । पुं॰ दुम्बके । दुम्बा॰ दुम्बा॰ इ॰ भा॰ प्र॰ मेषविशेषे ॥ मेदःपुच्छोऽस्यवंमांसंहृद्यंवृष्यञ्च मापहम् । पित्तश्लेष्मकरंकिञ्चिद्वातव्याधिविनाशनाम् ॥

मेदःसारा । स्त्री॰ मेदायाम् ॥

मेदकः । पुं॰ जगले । सुराकल्के ॥ मेद्यतिञिमिदा॰ । क्वुनादिभ्यो वुन् ॥

मेदजः । पुं॰ भूमिजगुग्गुलौ ॥ त्रि॰ मेदोजाते ॥

मेदः । न॰ शुक्रमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदसःस्वरूपंयथा । यन्मांसंस्वाग्निनापक्वं तन्मेदइतिकथ्यते । तदतीवगुरुस्निग्धंबलकार्यैलिङ्गवयम् ॥ स्थानंयथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धिः प्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्नश्लेष्माहारसेविनः । मधुरोन्नरसः प्रायः स्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरसः॰ आमद्रवः ॥ अस्यदोषगुणंयथा । मेदसावृतमार्गत्वात्पुष्यन्त्यन्येनधातवः मेदस्तुचीयतेतस्मादशक्तः सर्वकर्मसु ॥ मेद्यति । ञिमिदा॰ । असुन् ॥

मेदस्कृत् । न॰ मांसे ॥

मेदा । स्त्री॰ अष्टवर्गान्तर्गतौषधिविशेषे ।

मेठः । पुं॰ हस्तिपके । निषादिनि ॥

मेढ्रः पुं॰ मेहने । शिश्ने ॥ मेहन्त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री॰ मेषशृङ्गीवृक्षे ॥

मेण्ठः । पुं॰ हस्तिपके ॥

मेण्डः पुं॰ मेण्ठे । हस्तिपके ॥

मेण्ढः । पुं॰ मेषे ॥

मेथिः । पुं॰ मेथिकाष्ठे । खलेवाल्याम् । खले पशुबन्धनार्थं काष्ठे ॥ मेथ्यन्ते पशवोऽत्र । मेथृसङ्गमे । सर्वधातुभ्य इन् ॥

मेथिका । स्त्री॰ मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धायाम् ॥ मेथिकावातशमनी श्लेष्मघ्नी ज्वरनाशिनी । ततः स्वल्पगुणा वन्यावाजिमांसातुपूजिता ॥ अपिच । मेथिकादीपनी हृद्या बद्धविट्‌कृमिशूलनुत् ॥ कृशोष्णा रक्तपित्तघ्नी श्वासकासविनाशिनी । फलं श्वासानिलश्लेष्मशमनी रुच्यमेव च ॥

मेथिनी । स्त्री॰ मेथिकायाम् ॥

मेथी । स्त्री॰ मेथिकायाम् । गौरादित्वात्कृदिकारादक्तिनइति वा ङीष् ॥

मेदः । पुं॰ मेदसि । वपायाम् । शुद्धमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति । ञिमिदास्नेहने । घञ् ॥ वैदेहेन निषादभार्यायां जनिते॰ संकरजातिविशेषे ॥

मेदः पुच्छः । पुं॰ दुम्बके । दुम्बा॰ दुम्बा॰ इ॰ भा॰ प्र॰ मेषविशेषे ॥ मेदः पुच्छोऽल्पमांसं हृद्यं पथ्यञ्च मापहम् । पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम् ॥

मेदःसारा । स्त्री॰ मेदायाम् ॥

मेदकः । पुं॰ जगले । सुराकल्के ॥ मेद्यति ञिमिदा॰ । क्वुनादिभ्यो वुन् ॥

मेदजः । पुं॰ भूमिजगुग्गुलौ ॥ त्रि॰ मेदोभवे ॥

मेदः । न॰ शुद्धमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदसः स्वरूपं यथा । यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते । तदल्पौषधगुरुस्निग्धं बलकार्यतिदृष्यम् ॥ स्थानं यथा । मेदोऽस्ति सर्वभूतानामुदरेष्वस्थिषु स्थिरम् अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ रोगविशेषे ॥ तन्निदानं यथा । अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः । मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्द्धयेत् ॥ अन्नरसः॰ आमद्रवः ॥ अस्य दोषवैगुण्यं यथा । मेदसावृतमार्गत्वात्पुष्यन्त्यन्येन धातवः । मेदस्त्वाचीयते तस्मादशक्तः सर्वकर्मसु ॥ मेद्यति । ञिमिदा॰ । असुन् ॥

मेदस्कृत् । न॰ मांसे ॥

मेदा । स्त्री॰ अष्टवर्गान्तर्गतौषधिविशेषे ।

परशाके । त्रि॰ मेधाकारके ॥

मेधाजित् । पुं॰ कात्यायनमुनौ ।

मेधातिथि: । पुं॰ मुनिविशेषे । कण्व पं : पुत्रे ।

मेधारुद्र: । पुं॰ कालिदासे ॥

मेधावती । स्त्री॰ महाज्योतिष्मत्याम् त्रि॰ मेधाविशिष्टायाम् ॥ मेधावान्॰ मेधावत्॰ द्र॰ पुंनपुंसकयो: ॥

मेधाविक्रम् । न॰ तीर्थविशेषे ॥

मेधावी । पुं॰ शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ ॥ मदिरायाम् । त्रि॰मेधान्विते ॥ प्रज्ञातिशयवति । जडाघोहसमर्थे ॥ शमदमसर्वकर्मोपरम गुरूपसदनादिसाधनचापिकाश्रयुक्त मननननिदिध्यासनाख्यवेदान्तवाक्यविचारेणपरिनिष्पन्नवेदान्तमहावाक्यकरणकनिरस्तसमस्ताप्रमाण्याष्टङ्गचिदन्याविषयकसंशयासंभावनाविपरीतभावनाकबद्धात्मैक्यमेधा ॰तयानित्यंयुक्ते ॰स्थितप्रज्ञे ॰विपश्चिति ॥ मेधास्यास्ति । अस्मायामेधास्रजोविनि: ॥

मेधाविनी । स्त्री॰ब्रह्मण: पत्न्याम् ब्राह्म्याम् ॥

मेधि: । पुं॰ खलेवाल्याम् । खलेपशुवन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि: खलेदारुन्यस्तं यत् पशुबन्धने ॥ मेध्यन्तिपशवोत्र । मेधृ॰ । इन् ॥

मेधिर: । त्रि॰ मेधाविनि ॥

मेध्य: । पुं॰ यवे ॥ छागे ॥ खदिरे ॥ त्रि॰पवित्रे । शुचौ । शुद्धे । यज्ञिये ॥ मेधनार्हम् । मेधृ॰ । ऋहलोर्ण्यत् ॥ मेधायैहितोवा । उगवादिभ्योयत् ॥ मेधामर्हतिवा । दण्डादिभ्योयत् ॥ मेधेभवावा प्राग्वादिभ्योय: ॥ ज्ञामिनमेध्यमखिलमस्यज्ञानतोभवेत् । ब्रह्मज्ञानसमुत्पन्नेमेध्यामेध्यंनविद्यते ॥

मेध्या । स्त्री॰ रजतपत्रायाम् । रोचनायाम् ॥ केतक्याम् ॥ ज्योतिष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्राह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । भार्याम् ॥ सोम:शौचंददौस्त्रीणांगन्धर्वश्चशुभांगिरम् । पावक: सर्वमेध्यत्वंमेध्यावैयोषितोह्यत: ॥

मेनका । स्त्री॰ हिमालयस्यभार्यायाम् । अप्सरोमातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजननिम्याम् ॥

मेनकात्मजा । स्त्री॰ गिरिजायाम् । दुर्गायाम् ॥ मेनकाया: आत्मजा ॥

मेनकापति: । पुं॰ हिमालये ।

मेनकापुत्र: । पुं॰ मैनाके ॥ मेनकाया: पुत्र: ॥

मेनकाप्राणेश: । पुं॰ हिमालये ॥

मेना । स्त्री॰ मेनकायाम् । हिमाद्रे

भगवत ऋषभस्य जनन्याम् ॥

मेरुसावर्णिः । पुं॰ एकादशमनौ ॥

मेलः । पुं॰ सङ्गमे ॥ मेलनम् । मिल संश्लेषे । घञ् ॥

मेलकः । पुं॰ सङ्गे । सङ्गमे ॥ मेलनम् । मिल॰ । घञ् । स्वार्थे कः ॥

मेलयालवणम् । न॰ चौपरेलवणे ॥

मेलनम् । न॰ मैत्रे । सङ्गमे ॥

मेला । स्त्री॰ मसीजले ॥ मेलयति ॥ अञ्जने । मषानीख्याम् ॥ टाप् ॥

मेलानन्दा । स्त्री॰ मस्याधारे । मसीपात्रे ॥

मेलान्धुः । स्त्री॰ मेलानन्दायाम् ॥

मेलाम्बुः । पुं॰ मस्याधारे ।

मेषः । पुं॰ हुडौ । मेढ्रे । उरभ्रे । उरणे । ऊर्णायौ । एडके । मेंढा॰ प्र॰ भा॰ ॥ मेषमांसपुष्टैस्तापि तापि पाकेऽगुरु । मस्तैगाडविशी मलमांसविच्छिद्रपुष्टतम् ॥ अपि चास्यमांसगुणाः । मेषमांसगुरुस्निग्धं बल्यं वातकफप्रदम् । मेदःपुष्टाभिषं हृद्यं कफवातहरं गुरु ॥ मिषति । मिषस्पर्धायाम् । अच् । भैषज्यप्रभेदे । राशिविशेषे । क्रियसंज्ञके ॥ लग्नविशेषे ॥ मेषलग्नोत्पन्नस्य फलं यथा । मेषलग्ने समुत्पन्नः चण्डोमानी धनी शुभः । क्रोधी स्वजनहन्ता च विक्रमी परवत्सलः ॥

मेषकः । पुं॰ जीवशाके ॥

मेषकम्बलः । पुं॰ ऊर्णायौ ॥ मेषलोमकृतः कम्बलः । शाकपार्थिवादिः ॥

मेषलोचनः । पुं॰ चक्रमर्दे ॥ मेषस्य लोचनमिव लोचनमस्य॰ तत्तुल्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिकः ॥ त्रि॰ मेषचक्षुस्तुल्यचक्षुषि ॥

मेषवल्ली । स्त्री॰ मेषशृङ्ग्याम् ॥

मेषविषाणिका । स्त्री॰ मेषशृङ्ग्यां ॥

मेषशृङ्गः । पुं॰ स्थावरविषप्रभेदे ॥

मेषशृङ्गी । स्त्री॰ मन्दीवृक्षे । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसे तिक्ता वातला श्वासकासहृत् । रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत् । दीपनं स्रंसनं कासकृमिव्रणविषापहम् ॥ मेषः शृङ्गमस्याः । मेषशब्दो मेषशृङ्गसदृशलाक्षणिकः ॥ गौरादिः ॥

मेषा । स्त्री॰ त्रुटौ । क्षुद्रैलायाम् ॥

मेषाक्षः । पुं॰ चक्रमर्दके । मेषस्याक्षीवाक्षिवस्य॰ तत्सदृशपुष्पत्वात् । अच्प्रोदर्शनादित्वच् । अक्षिशब्दः पुष्पेलाक्षणिकः ॥

मेषाक्षिकुसुमः । पुं॰ चक्रमर्दके ॥

मेषाण्डः । पुं॰ इन्द्रे ॥

मेषाधिपः । पुं॰ भौमग्रहे ॥ मेषस्य मेषराशेः अधिपः ॥

मेषाक्षी । स्त्री० वत्साक्षीलते ॥

मेषालु : । पुं० वर्व्वरात्यो ॥

मेषाश्रय : । पुं० चक्रमर्द्दे ॥

मेषिका । स्त्री० मेष्याम् ॥

मेषी । स्त्री० मेषस्त्रियाम् । मेड० मेडी० पू० भा० । तिमिशवृक्षे ॥ जटामांस्याम् ॥

मेसूरणम् । न० दृग्मलके ॥ यथा । कार्मस्यामश्वदशमंखमेसूरणमास्पदम् ॥

मेह : । पुं० प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनंवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥

मेहघ्नी । स्त्री० हरिद्रायाम् ॥ मेहंहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ङीप् ॥

मेहत् । त्रि० मूत्रयति ॥ मेहति । मिह० । शतृ ॥

मेहन : । पुं० मुष्ककवृक्षे ॥ न० मूत्रे ॥ शिश्ने ॥ मेहन्त्यनेन । मिह० । करणेल्युट् ॥

मैत्र : । पुं० ब्राह्मणे ॥ सुधन्वाचार्ये ॥ न० अनुराधानक्षत्रे ॥ विशेषनक्षत्रादीयथा । चित्रेन्दुमित्रपौष्णाश्व भट्टमैत्रंतथाश्वयु : । रत्नमौलाम्बर क्रीडामित्रकार्यस्वशोभनम् ॥ अष्टमताराया म् ॥ मित्रदेवताकपायुसत्वान्मूत्रपुरीषोत्सर्गे ॥ अनाद्य प्रस्ताव : । मूत्रपुरीषेकुर्यांदक्षिणां



दिशंदक्षिणापरांवेति । दक्षिणापरां नैर्ऋतीम्० गन्तेतिशेष : । तथा चस्तमितेचवहिर्यामादाराधावसथा न्मूत्रपुरीषयो : कार्मवर्ज्जयेदिति ॥ शुष्कैस्तृणैस्तथाक्षाष्ठै : पर्णैर्वेणुदली नवा । लम्भयैर्भाजनैर्वापिपश्चार्द्धयि वसुन्धरामितिवायुपुराणम् ॥ मूत्रो च्चारसमुत्सर्गंदिवाकुर्यादुदङ्मुख : । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्च यथादिवेतिमनु : ॥ त्रि० मित्रसम्ब न्धिनि ॥ मैत्रीस्निग्धता० सहति ॥ मित्रस्यकर्मभावोवा । युवादित्वा दण् ॥ मित्रोदेवतास्यवा । सास्यदे वतेत्यण् ॥

मैत्रभम् । न० अनुराधानक्षत्रे ॥

मैत्रायणीय : । पुं० यजुर्वेदस्यशाखाभे दे ॥

मैत्रावरुण : । पुं० पुरोनुवाक्यायाव क्तरि० ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणेजपुरोवाक्याचानुवाक्या नत्प्रवाभिरादेषतोऽर्शेनाध्वर्युणो व्वपठितयाप्याशैनपठ्स्वारेवसोमा दिकंजुहोतीति ॥ अगस्त्यमुनौ ॥

मैत्रावरुणि : । पुं० अगस्त्यमुनौ ॥ मित्रश्चवरुणश्च० मित्रावरुणौ । देव तादन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ वौरस्यागर्जन्त्यप त्ये० ॥

मैत्री । स्त्री० सौहार्दे ॥ स्निग्धतायां

म ॥ सर्वप्राणिषु सुखसंयोगापन्ने धु॰ साधौ रागसमन्वितायां सुस्निग्ध मिति मैत्रीभावे चेयश्चत्रीय्याम् ॥ चय त्वाम्नी वधव्वानुलोप ॥ विविष्टप तितोन्नयनवदृशैरातिस्फोटके : । व न्यदीयमस्मीसद्‌गुद्धात्मसधर्य : स ह । तथासिव्यवधीतेयपरीवाह्य रैः मठैः । सुधीभैदीनक्षुर्वीत॰ मैत्र : पच्यमानोटवसीऽव्य : ॥ उत्कृष्टमध्यमानिकृष्टवनीपु मैत्रीयत च्चिवासु भ्रमतास्‌ज्ञवेषु रेखा । वैरज्ञमादधमध्यमसज्ज्ञेपुयडचित्त वासुसिदयासुखपिषु रेखेच दृष्टः ॥ चपच्चारिच्चे । अनुराधाभे ॥

मैत्रीपरः । पुं॰ बुधे । मैत्रीवलंवस सः ॥

मैत्रेयः । पुं॰ व्यासाभिधर्षी । मुनौ । चं सिंहायणौ । मुनिविशेषे । मि नाया : अपत्यम् । स्त्र्यादिभ्यश्चे तिढक् । एाच्चिन्मायिणितिनिपात नाद्‌युलोपः ॥ वैदेहादायोगव्यां जाति॰ सङ्करजातिविशेषे ॥ मैत्रे यकस्तुवैदेहोमाधूकसम्प्रसूयते । नृ नृप्रशंसत्यजस्त्रं योघण्टाताड़ोऽरुणो दये ॥ माधूकंसधुरभाषिणम् ॥ भाविबुद्धिविशेषे ॥

मैत्रेयिका । स्त्री॰ मित्रयुद्धे ॥ मित्रयु नांभावे ॥ गोवघरयाष्टञ्जाद्यात्या धारराद्‌वेतीवृञ्जिवुञ् । चौक्तयमि वयुग्रव्ययानामितियादेश : ॥

मैत्रेयी । स्त्री॰ याज्ञवल्क्यस्यर्षे : पत्न्याम् ॥

मैथिलः । पुं॰ जनकनृपे ॥ त्रि॰ मिथिलायांभवे ॥ अण् ॥

मैथिली । स्त्री॰ जानक्याम् ॥ सीता याम् ॥

मैथिलेयः । पुं॰ सीतापुत्रे । अप त्ये ढक् ॥

मैथुनम् । न॰ मिथुनसाध्ये धन्याधा नपुंसत्वाद्‌नादौ ॥ सङ्गते ॥ रतौ । सुरते । धर्षिते । व्यवाये । या व्यधर्मे । मिथुनमे ॥ मिथुनमेव । प्रज्ञायण् ॥ मिथुनलक्षणं ॥ स्मर णंकीर्त्तनंकेलि : प्रेक्षणंगुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्चक्रियानिर्वृ त्तिरेवच । एतन्मैथुनमष्टाङ्गंप्रवदन्ति मनीषिणः ॥ धर्माज्जीवेत्स्त्रीपुंस व्यतिकरे ॥ भौमंमैथुनगामीदीर्घा युरन्यथाव्यत्यासु : ॥

मैथुनी । पुं॰ सारसे ॥

मैथुन्य : । त्रि॰ मिथुनायहिते । त स्मैहितमितियत् ॥ न॰ मिथुनी भावसुखे ॥

मैनाकः । पुं॰ पर्वतविशेषे । हिमा लयस्यज्येष्ठपुत्रे । हिरण्यनाभे । सुनाभे ॥ क्रौञ्चंगिरिमितिप्रथमं क्रौनामपर्वत : । मयस्यभवनंतत्र दानवस्यस्वयंकृतम् ॥

